KÂVYÂMÂLÂ. 66.



THE

# ALANKÂRA-KAUSTUBHA

OF

VIS'VES'VARA PAṆḌIT

with his own gloss.



EDITED BY

MAHÂMAHOPÂDYÂYA PAṆḌIT S'IVADATTA

Head Paṇḍit and Superintendent, Sanskṛit Department,

Oriental College, Lahore,

AND

KÂSHÎNÂTH PÂṆḌURANG PARAB.

PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRṆAYA-SÂGARA" PRESS.

BOMBAY.

1898.



Price ... Rupees.

काव्यमाला. ६६.



श्रीविश्वेश्वरपण्डितविरचितम्

# अलंकारकौस्तुभम् ।

स्वोपज्ञव्याख्यासंवलितम् ।



यपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा महामहोपाध्याय-
पण्डितशिवदत्तशर्मणा, मुम्बापुरवासिपरबोपाह्व-
पाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधितम् ।



तच्च
निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।



१८९८







मूल्यं [illegible]कत्रयम् ।

## ...लंकारकौस्तुभस्थविषयाणामकारादिक्रमेणानुक्रमणिका ।


| ...ष्यः । | पृष्ठे । | विषयः । | पृष्ठे । |
|---|---|---|---|
| ...भावसंकरः.... .... | ४०९ | एकाश्रयानुप्रवेशसंकरः .... | ४१४ |
| ...ः .... .... .... | ४०५ | कारणमाला .... .... | ३६० |
| ...क्तिः .... .... | २७७ | काव्यलिङ्गम् .... .... | ३३७ |
| ...र.... .... .... | ३७९ | क्रियादीपकम् .... .... | २९१ |
| ...रः .... .... .... | १६८ | तद्गुणः .... .... .... | ४०२ |
| ...कम् .... .... | ३९२ | तुल्ययोगिता .... .... | २९५ |
| ...प् .... .... | ३६० | दीपकम् .... .... .... | २९० |
| ... .... .... | २३५ | दृष्टान्तः .... .... .... | २८८ |
| ...प्रशंसा .... .... | २६८ | धर्मलुप्तोपमाविषयाः .... | १०४ |
| ...न्यासः .... .... | ३१८ | धर्मवाचकलुप्तोपमाविषयाः .... | १३२ |
| ...रोद्देशः .... .... | ३ | धर्मवाचकोपमानलुप्तोपमाविषयाः | १३९ |
| ...... .... .... | ३६६ | धर्मोपमानलुप्तोपमाविषयाः .... | १३४ |
| ...... .... .... | ३०७ | निदर्शना .... .... .... | २६२ |
| आव... .... .... | { ३६२ | परम्परितरूपकद्वैविध्यम् .... | २१७ |
| ...व्याह... | ३६३ | परम्परितरूपकलक्षणम् .... | २१७ |
| करो...... .... .... | १८० | परिकरः .... .... .... | ३५४ |
| ...त्तद... .... .... | ३४५ | परिवृत्तिः .... .... .... | ३३३ |
| ...त्र ...व्यम् .... .... | २८ | परिसंख्या.... .... .... | ३५८ |
| ...लुप्तोपमाविषयः .... | ११० | पर्यायः .... .... .... | ३४९ |
| ...ता...र् .... .... | ४ | पर्यायोक्तम् .... .... | ३४१ |
| ... .... .... | १७५ | पूर्णोपमाभेदाः .... .... | ४७ |
| ...प्र... .... .... | ४१६ | प्रतिवस्तूपमा .... .... | २८५ |
| ...कम् .... | २१५ | प्रतीपम् .... .... .... | ३९० |
| ... .... | ३४... | प्रत्यनीकम् .... .... | ३८० |

| विषयः । | पृष्ठे । |
|---|---|
| प्रेयः .... .... .... | ४१६ |
| भावशबलम् .... .... | ४१६ |
| भाविकम् .... .... .... | ३३९ |
| भावोदयः .... .... .... | ४१६ |
| भ्रान्तिमान् .... .... | ३८७ |
| मङ्गलाचरणम् .... .... | १ |
| मालादीपकम् .... .... | २९४ |
| मालोपमा .... .... .... | १४१ |
| मीलितम् .... .... .... | ३८३ |
| यथासंख्यम् .... .... | ३१७ |
| रशनोपमा .... .... | १४४ |
| रसवत् .... .... .... | ४१६ |
| रूपकभेदाः .... .... | २१४ |
| रूपकम् .... .... .... | २०२ |
| लुप्तोपमा .... .... .... | १०४ |
| लुप्तोपमाभेदाः .... .... | १०४ |
| वाचकलुप्तोपमाविषयाः .... | ११७ |
| वाचकोपमेयलुप्तोपमाविषयाः | १३३ |
| विनोक्तिः .... .... .... | ३३१ |
| विभावना .... .... .... | ३११ |
| विरोधः .... .... .... | ३२१ |
| विशेषः .... .... .... | ३९९ |
| विशेषोक्तिः .... .... | ३१९ |

| विषयः । |
|---|
| विषमः .... .... .... |
| व्यतिरेकः .... .... |
| व्यतिरेकभेदाः .... .... |
| व्याघातः .... .... .... |
| व्याजस्तुतिः .... ... |
| व्याजोक्तिः .... .... |
| श्रौत्यार्थ्युपमाविषयाः .... |
| श्लेषः .... .... .... |
| संदेहसंकरः .... ... |
| संसृष्टिः .... .... ... |
| समम् .... .... ... |
| समाधिः .... .... ... |
| समासोक्तिः .... .. |
| समाहितः .... .. |
| समुच्चयः .... .... ... |
| ससंदेहः .... .... ... |
| ससंदेहभेदाः .... ... |
| सहोक्तिः .... .... . |
| सामान्यम् .... . |
| सारः .... .... . |
| सूक्ष्मम् .... .... |
| स्मरणम् .... .... |
| स्वभावोक्तिः .... |

# काव्यमाला ।

श्रीविश्वेश्वरपण्डितविरचितः

## अलंकारकौस्तुभः ।

स्वोपज्ञव्याख्यालंकृतः ।

दत्तस्तन्यरसं कराग्रिमभुवा वक्त्रान्तरेष्वादरा-
द्दोर्विक्षेपनिषिद्धकुम्भविचरन्मत्तद्विरेफोत्करम् ।
अम्बाया धयतोः पयोधरयुगं तिर्यग्मिथः पश्यतो-
र्बाल्यस्नेहविजृम्भितं विजयते द्वैमातुरस्कन्दयोः ॥

वाग्देवतां द्विरदवक्त्रमपि प्रणम्य लक्ष्मीधरस्य विदुषश्चरणावुपास्य ।
भावानलंकरणकौस्तुभगुम्फितान्स्वान्विश्वेश्वरो विवरितुं यतते समा...

अभिमतकर्मारम्भसमये सदाचारानुमितश्रुतिबोधितकर्तव्यताकं प्रारिप्सि... कदुरितनिवृत्तये कृतं मङ्गलं शिष्यशिक्षार्थं निबध्नाति—दत्तस्तन्येति । ... ण्डाया अग्रिमभुवा पुष्करभागेन स्कन्दस्य षण्मुखत्वेन एकमुखेन स्तनपाने मु... तदलाभकृतवैमनस्यनिवृत्तये तेषु स्तन्यरसदानं भगवतो लम्बोदरस्य च ग... कुम्भलग्नमदलुब्धभ्रमराणां स्कन्देन बहुभुजतया वारणमिति । परस्परस्नेहव... गदर्शनं तदवस्थायां बालकस्वभावः । स्कन्दस्य अल्पाच्त्वेऽपि 'भ्रातुर्ज्यायसः' ... मातुरस्य पूर्वनिपातः । गणेश्वरगुहयोर्विघ्नविनाशकत्वं प्रसिद्धमेव । तथा च... 'आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा । महागणपतेश्चैव कुर्वन्सिद्धि... ...त्प्रसङ्गेन सर्ववाङ्मयरूपिण्या जगदम्बिकाया अपि प्रतिसंधानम् । ... म्. 'शब्दस्वरूपमखिलं धत्ते शर्वस्य वल्लभा । अर्थस्वरूपमखिलं धत्ते... ...रः ॥' अत्रोक्तपरमदेवताविषयकभावध्वनिः प्रधानम्, गणेशगुहयोः ...

लोकस्वान्तघनान्धकारपटलध्वंसप्रदीपाङ्कुरा
विद्याकल्पलताप्रतानजनने बीजं निजासङ्गिनाम् ।
मध्येमौलि ममासतां सुविमला मालायमानाश्चिरं
श्रीलक्ष्मीधरविद्वदङ्घ्रिनलिनोदीताः परागाणवः ॥
अर्थालंकाराणां भूरिग्रन्थस्थितं सारम् ।
संगृह्णाति सुखेन ज्ञप्त्यै विश्वेश्वरोऽन्येषाम् ॥
धियो वैधेयानां भवति विषयोऽसावविषयो
बुधानां स्वाधानं नच कुतुकमेतादृशकृतेः ।

---

तदङ्गम् । स्वभावोक्तिरर्थालंकारः ॥ स्वगुरुप्रणाममाह—लोकेति ।
पदेन वस्तुविवेकप्रतिकूलत्वसाधर्म्येण अज्ञानस्यापि लाभात्तस्य तिमिराभेद-
क्तलक्षणाभ्यामुपस्थितयोरप्यर्थयोः 'गङ्गायां घोषः' इत्यादावभेदप्रत्ययाभ्युपग-
न्निवर्तकत्वेन परागेषु प्रदीपत्वारोपः । विद्यैव कल्पलतानेकदुर्लभार्थप्रदत्वात् ।
दुत्पत्तिहेतुत्वात् । निजपदं परागपरम् । मध्येमौलि शिरोमध्ये । 'पारे मध्ये
इत्यव्ययीभावः । ममेत्यस्य मौलिना सहान्वयः । आसतां तिष्ठन्तु । 'आस
त्यस्य लोटि प्रथमपुरुषे बहुवचनम् । श्रीपदमुत्कर्षसूचकम् । लक्ष्मीः सर्ववा-
वगाहनजन्यातिशयविशेषस्तदन्यापेक्षोत्कर्षधीजनकतयानुभवसिद्धः । यद-
ोभतेऽस्य मुखं य एवं वेद' इति गर्गत्रिरात्रब्राह्मणवाक्ये योग्यानुपलब्धि-
ाय भगवता जैमिनिनार्थवादाधिकरणे 'विद्याप्रशंसा' इति सूत्रितम् ।
वत्साधुत्वम् । एतेन श्लेषोपस्थितनारायणाभेदसूचनम् 'आचार्यं मां विजानी-
त कर्हिचित्' इति श्रीभागवतात् । अङ्घ्रिनलिनेत्युपमितसमासः । उदीतेति
न्तिगतिव्याप्तिक्षेपप्रजनखादने' इति कविकल्पद्रुमपठितस्योत्पूर्वस्य रूपं
स्पष्टमुदीतकण्टकाम्' इत्यादिवत् ॥ चिकीर्षितं प्रतिजानन्नेव प्रयो-
—अर्थेति । अलंकारा द्विधा शब्दार्थभेदात् । शब्दालंकारा यमकादयः,
ा उपमादयः । आद्येषु तथा विचारणीया भावादर्थालंकारा एव विचार्यन्ते ।
तिपत्तिगहनत्वात् । अप्रामाण्यशङ्कानिरासाय भूरिग्रन्थेति । पौनरुक्त्यवारणाय
योजनमाह—सुखेनेति । तद्बोधकामश्चाधिकारीति सामर्थ्यादेव लभ्यते ।
—'सि र्थं सिद्धसंबन्धं श्रोतुं श्रोता प्रवर्तते । शास्त्रादौ तेन वक्तव्यः संबन्धः
प्रयोजनं तु यत्काव्यस्य तदेवास्यापीति बोध्यम् । तच्चान्यत्र काव्यप्र-
नात्र प्रपञ्च्यते ॥ अस्य ग्रन्थस्य मन्ददुर्बोधतामाह—धिय
'मृगलिशाः' इत्यमरः । एतेन मन्दार्थमेतन्निर्माणनिरासः । विनयार्थ-
बुधा । सुखेन आधातुं शक्यं स्वाधानम् । सुकरमित्यर्थः । 'आतो युच्' इति

तथापीदं पारिप्लवयति मनो मे सुमहतां
निबन्धानामेकीभवितुमभिसंधाननिवहः ॥

अथ तेषामुद्देशः—

उपमानन्वय उक्तः स्यादुपमेयोपमोत्प्रेक्षाः ।
संदेहरूपकापह्नुतयः श्लेषः समासोक्तिः ॥ १ ॥
प्रोक्ता निदर्शनाप्रस्तुतप्रशंसा त्वतिशयोक्तिः ।
प्रतिवस्तूपमया सह दृष्टान्तो दीपतुल्ययोगित्वे ॥ २ ॥
व्यतिरेकश्चाक्षेपो विभावनाप्यथ विशेषोक्तिः ।
तदनु यथासंख्यार्थान्तरविन्यासौ विरोधभावोक्ती ॥ ३ ॥
व्याजस्तुतिः सहोक्तिर्विनोक्तिपरिवृत्तिभाविकान्यपि च ।
अथ काव्यलिङ्गपर्यायोक्तोदात्ताः समुच्चयस्तद्वत् ॥ ४ ॥
पर्यायोऽप्यनुमानं परिकरकितवोक्तिपरिसंख्याः ।
कारणमालान्योन्योत्तरसूक्ष्मं सार इत्यसंगत्या ॥ ५ ॥
ससमाधी समविषमावधिकाख्यं प्रत्यनीकमीलितवत् ।
एकावलिस्मृतिभ्रमप्रतीपसामान्यवान्विशेषश्च ॥ ६ ॥

---

आदन्ताद्धातोः शक्यार्थे युच् । बुधानां ज्ञानस्य सिद्धत्वात्तदर्थे तावदेतदारम्भ इति ...्याहतमेव । चमत्कारोऽपि तेषामेतादृशस्वल्पार्थान्न स्यादेवेत्यर्थः । पारिप्लवयति चञ्चलं करोति । ग्रन्थे प्रवर्तयतीत्यर्थः । निबन्धाः काव्यप्रकाशादयः । अभिसंधानमभिप्रायः । ...त्तदभिप्रायाणां तत्तद्ग्रन्थेषु व्यस्तत्वादेकत्र संग्रहः सौकर्यार्थे क्रियत इति भावः । ...त्र 'अर्थोपकारकद्वारा रसोपकारकत्वमर्थालंकारत्वम्' इति सामान्यलक्षणं प्रसिद्धम् । ...क्षाद्रसोपकारकेषु गुणेषु व्यभिचारवारणाय द्वारान्तम् । तत्स्पष्टत्वादुपेक्ष्य काव्यप्रकाश... ...तालंकाराणामेवात्र व्यवस्थापनीयता सूचयन्—'एतदन्यतमत्वरूपम्' लक्षणान्तरमपि ...न्नाह—अथेति । भावोक्तिः स्वभावोक्तिः । कितवोक्तिः व्याजोक्तिः । प्रतीपे... ...ंयोगस्य पादादिगतत्वात् तस्मिन्परतो भ्रमेत्यत्राकारस्य न गुरुत्वम् । तदुक्तं ...करे—'पादादाविह वर्णस्य संयोगः क्रमसंज्ञकः । पुरःस्थितेन तेन स्याल्लघुतापि ... ॥' नन्वलंकारान्तराण्यपि ग्रन्थान्तरेषु दृश्यन्त इति तदनभिधानान्न्यूनते...

---



...व्यात' क-ख. २. 'त्यत्रत्यस्य अको' ख-ग.

**तदतद्गुणवान्स्याद्व्याघातः सृष्टिसंकरौ चेति ।**
**कथ्यन्त एकषष्टिं विद्वत्प्रवरैरलंकाराः ॥ ७ ॥**

तत्र

'यत्किंचित्काव्यबन्धेषु सादृश्येनोपमीयते ।
उपमा नाम सा ज्ञेया वर्णाकृतिगुणाश्रया ॥'

इति भरतः । तत्प्रकृतिभूतत्वेन सर्वालंकारेष्वभ्यर्हितत्वादुपमा तावन्निरूप्यत इति तल्लक्षणमाह—

**तत्रैकवाक्यवाच्यं सादृश्यं भिन्नयोरुपमा ।**

तत्र निरूपणीयेष्वलंकारेष्वित्यर्थः । उपमेयोपमावारणाय—एकेति । व्यङ्ग्योपमावारणाय—वाच्येति । अनन्वयवारणाय—भिन्ने-

---

त्याशङ्क्याह—**विद्वत्प्रवरैरिति** । तेषां तु विद्वद्देशीयैरेवाभ्युपगमान्निरसनीयत्वान्न तथेति भावः । यद्यपि उद्देशक्रमेणैव विभाग इत्युपमानिरूपणप्राथम्यमर्थादेव सिद्धम्, तथापि प्रथमोद्देश एव किं प्रयोजकमित्याक्षेपमाशङ्क्य तत्र नियामकमाह—**तत्र यत्किंचिदित्यादि** । भरतेत्यलंकारशास्त्रस्य प्रामाणिकत्वसूचनम् । अनन्वयादावपि सादृश्यप्रतीतिपर्यवसानं स्पष्टमेव । भङ्गिभेदात्त्वलंकारभेद इति भावः । एवं च भरतशास्त्रेऽपि उपमायाः प्रथमोद्देशे इदमेव नियामकं बोध्यम् । यद्यपि प्रकृतित्वं न वचनसाध्यं तथापि तत्संमतत्वसूचनाय भरतवचनोपन्यासः । **लक्षणमिति** । लक्षणज्ञानाभावे धर्मिण एव सम्यग्बुद्धावनारोहात्सामान्यनिरूपणानन्तरमेव विशेषस्य निरूप्यत्वा[1]दित्यर्थः । आहेत्यत्र कारिकाकृदिति शेषः । कारिकायां तत्रेत्यस्य लक्षणान्तर्भावे प्रयोजनाभावान्निर्धारणपरतया योजयति—**तत्र निरूपणीयेष्विति** । निरूपणं च स्वरूपभेदादिबोधजनकशब्दः । अलंकाराः शिष्यबोधविषयीभवन्त्वित्याकारकेच्छाविशेष्यत्वं विषयत्वरूपेण कृत्यप्रत्ययार्थः । व्यापारानुबन्धिनीं विषयतामादाय प्रकृत्यर्थस्य प्रत्ययार्थेऽन्वयः । 'उपमेयोपमापि लक्ष्यैव' इति । चित्रमीमांसामतनिरासायाह—**उपमेयोपमावारणायेति** । एकपदोपादाने तु तत्र 'चन्द्र इव मुखम्' 'मुखमिव चन्द्रः' इति वाक्यद्वयबोध्यत्वान्न व्यभिचारः । न चैवमपि व्यभिचारतादवस्थ्यम् । प्रत्येकमेकवाक्यवाच्यत्वसत्त्वात्, वाक्यभेदरहितायामुपमेयोपमायां तु सुतरामेव तथा, तत्रैकवाक्यवाच्यत्वसत्त्वादिति वाच्यम् । उपमेयत्वाभिमतप्रतियोगिकोपमानवृत्तिसादृश्याविषयकज्ञानविषयत्वेन तात्पर्यविषयत्वस्य तदर्थत्वात् । **वाच्येतीति** । वाक्यार्थज्ञानविषयीभूतेत्यर्थः । तेन लक्ष्यसादृश्यस्यापि संग्रहः । नन्वेवं सति 'उपमेयत्वाभिमतप्रतियोगिकोपमानवृत्ति-

---

१. 'निरूपणत्वात्' क-ग.

ति । फलितार्थस्तु—यत्सादृश्यप्रतियोगितायामुपमेयतावच्छेदकावच्छिन्नत्वस्वाश्रयमात्रवृत्तिस्वानवच्छेदकधर्मसामानाधिकरण्योभयाभावः सोपमा । यच्छब्दबोध्यायां सादृश्यप्रतियोगितायामित्यर्थः । 'चन्द्र इव मुखम्' इत्यत्र चन्द्रनिष्ठसादृश्यप्रतियोगितायामुभयाभावसत्त्वाल्लक्षणसम-

---

सादृश्याविषयकज्ञानविषयत्वेन तात्पर्यविषयत्वे सति भिन्ननिरूपितसादृश्यमुपमा' इति पर्यवसितम्, तथा च 'शैला इवोन्नताः सन्तः किं तु प्रकृतिकोमलाः' इत्यादौ व्यतिरेके व्यभिचारः । तत्रापि सादृश्यस्य यथोक्ततात्पर्यविषयत्वात् । न च व्यतिरेक एव कवेस्तात्पर्यं न तु सादृश्य इति वाच्यम् । धर्मान्तरप्रयुक्तसादृश्याभावस्यैव व्यतिरेकपदार्थतया सादृश्यस्यापि तद्विषयत्वानपायात् । विधेयतया तात्पर्यविषयत्वनिवेशेऽपि 'स यः प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा' इत्यादावनुवाद्यसादृश्यरूपोपमायामव्याप्तेश्चेत्यादिदोषोद्धारायाह—**फलितार्थस्त्विति** । अर्थालंकारत्वनिर्वाहाय व्याचष्टे—**यच्छब्दबोध्यायामिति** । यस्यां शब्दबोध्यायामिति कर्मधारयः । शब्दबोध्यत्वं च तज्जन्यबोधविषयत्वमात्रम् । तेन 'चन्द्र इव' इत्यादौ प्रतियोगितायाः संसर्गविधयैव भासमानत्वाच्छब्दार्थत्वाभावेऽपि न क्षतिः । यच्छब्दार्थस्य शब्दविशेषणत्वे विधेयपरामर्शिणा तच्छब्देन तस्यैव परामर्षे शब्दोद्देशेनैवोपमात्वविधानापत्तावसंगतिप्रसङ्गात् । उक्तरीत्या तु प्रतियोगिताया एव यच्छब्देनोपादानेनानुपपत्तिः । तथा च शब्दबोध्यत्वमपि प्रतियोगितायां विशेषणं देयमित्यर्थः । 'उपमानवृत्तिसादृश्यप्रतियोगित्वमेवोपमा' इति मतमाश्रित्येदम् । 'सादृश्यमेवोपमा' इति पक्षे तु यत्सादृश्येत्यस्य यस्य सादृश्यस्य प्रतियोगितायामिति यत्पदार्थः सादृश्यविशेषणम्, सादृश्ये च शब्दबोध्यत्वं विशेषणं पूर्ववत् । 'सा उपमा' इत्यत्र सेति स्त्रीत्वं तु विधेयलिङ्गग्राहकत्वात् । तदुक्तं कैयटादिभिः—'उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गमुपाददते' इति । क्वचिदुद्देश्यलिङ्गता, क्वचिच्च विधेयलिङ्गता । विवक्षाभेदादिति तदर्थः । एवमन्यत्राप्यवसेयम् । **उभयाभाव इति** । उभयप्रतियोगिकोऽन्यतरत्वावच्छिन्नप्रतियोगिताकोऽभाव इत्यर्थः । नतूभयत्वावच्छिन्नप्रतियोगिताकः, तथा सत्यनन्वये उपमेयतावच्छेदकावच्छिन्नत्वसत्त्वेऽपि स्वाश्रयमात्रवृत्तिस्वानवच्छेदकधर्मसामानाधिकरण्यं नास्तीत्युभयत्वाद्यवच्छिन्नप्रतियोगिताकाभावसत्त्वात्, व्यतिरेके च स्वाश्रयमात्रवृत्तिस्वानवच्छेदकधर्मसामानाधिकरण्यसत्त्वेऽपि उपमेयतावच्छेदकावच्छिन्नत्वं प्रतियोगितायां नास्तीति तादृशाभावसत्त्वाद्व्यभिचारतादवस्थ्यापत्तेः । अन्यतरत्वावच्छिन्नप्रतियोगिताकस्त्वभावोऽन्यतरवति न संभवति इति न तदुभयत्र व्यभिचारः । न चोभयाभावपदेनोभयत्वस्यैव प्रतियोगितावच्छेदकत्वं लभ्यत इति वाच्यम् । 'भूतत्वमूर्तत्वोभयत्वान्मूर्तत्वादित्यादौ द्वित्वाद्यवच्छिन्नाभावस्य तथात्वेऽपि' इति दीधितिवाक्ये—'द्वयवृत्तिव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावपरतयापि व्याख्यानदर्शनात् । उत्सर्गस्य बाधकत्वे सति अप्रयोजकत्वात्

न्वयः स्फुट एव । अनन्वयेऽतिव्याप्तिवारणाय—उपमेयतावच्छेदकाव-च्छिन्नत्वाभाव उक्तः । तत्र तूपमेयतावच्छेदकचन्द्रत्वावच्छिन्नत्वसत्त्वा-न्नातिव्याप्तिः । व्यतिरेकेऽतिव्याप्तिवारणाय—स्वाश्रयेत्यादि । उभ-यत्र स्वपदं प्रतियोगितापरम् । तत्र तूपमेयापेक्षयोपमानेऽपकर्षवर्णन-नियमात्प्रतियोगिताश्रय उपमानम् । तन्मात्रवृत्तिः प्रतियोगितानवच्छेद-कश्च धर्मोऽपकर्षप्रयोजकः, तत्सामानाधिकरण्यमेव सादृश्यप्रतियोगिता-यामिति न व्यभिचारः ॥ न चैवमप्यनुपात्तापकर्षहेतुधर्मकव्यतिरेके व्य-भिचारः, अलंकारसाक्षाद्विभाजकोपाध्यवच्छेदेन तथात्वस्य विवक्षितत्वात् । उक्तधर्मश्च तद्वाक्योपस्थाप्यो ग्राह्यः, अन्यथासंभवापत्तेः । 'चन्द्र इव मुखम्' इत्यत्रापि चन्द्रमात्रवृत्तिचन्द्रत्वसामानाधिकरण्यं सादृश्यप्रतियोगि-तायामस्तीत्यसंभववारणाय—स्वानवच्छेदकेति । चन्द्रत्वस्य तु सादृश्य-प्रतियोगितावच्छेदकत्वमस्त्येवेति न दोषः । तत्रैव तादृशप्रतियोगितानव-च्छेदकाह्लादकत्वादिधर्मसामानाधिकरण्यं प्रतियोगितायामस्त्येवेत्यसंभव-तादवस्थ्यमेवेत्यत उक्तम्—स्वाश्रयमात्रवृत्तीति । तत्रापि मात्रपदानुपा-

---

**स्फुट इति ।** तत्र चन्द्रत्वस्य सादृश्यप्रतियोगितावच्छेदकतया चन्द्रवृत्तिसादृश्यप्रति-योगितायामुपमेयतावच्छेदकमुखत्वावच्छिन्नत्वाभावस्योक्तप्रतियोगिताश्रयीभूतचन्द्रमात्रवृ-त्तिप्रतियोगितानवच्छेदकधर्मसामानाधिकरण्याभावस्य च सत्त्वादित्यर्थः । ननु स्वाश्र-यमात्रेत्यादिविवक्षायामसंभवापत्तिः, चन्द्रमात्रवृत्तिः प्रतियोगितानवच्छेदकश्च धर्मस्त-न्मात्रवृत्तिभेदव्यक्त्यादिः, तत्सामानाधिकरण्यस्य प्रतियोगितायां सत्त्वादित्यत आह—**उक्तधर्मश्चेति । तद्वाक्येति ।** उपमाश्रयत्वाभिमतवाक्यार्थबोधविषयीभूतेत्यर्थः । तथा च तादृशभेदादेश्चन्द्रमात्रवृत्तित्वेऽपि 'चन्द्र इव मुखम्' इत्येतद्वाक्यबोध्यत्वाभा-वान्न दोष इत्यर्थः । नन्वेवमपि 'चन्द्र इव मुखम्' इत्यत्र चन्द्रमात्रवृत्तिः प्रतियोगिता-नवच्छेदकस्तद्वाक्योपस्थाप्यश्च धर्मोऽप्रसिद्ध एव, मुखत्वसादृश्ययोश्चन्द्रेतरवृत्तित्वात्, चन्द्रत्वस्य सादृश्यप्रतियोगितावच्छेदकत्वात्, अन्यस्य च तद्वाक्यानुपस्थाप्यत्वात् । मैवम् । प्रतियोगितारूपस्यैव तादृशधर्मस्य सुलभत्वात् । न च तस्यां तत्सामानाधि-करण्यस्यैव सत्त्वादसंभव एवेति वाच्यम्, भेदगर्भसामानाधिकरण्यस्य तत्राप्यभावोपपत्तेः । चन्द्रत्वावच्छिन्नप्रतियोगितायाश्चन्द्रेतरावृत्तित्वस्यापि सत्त्वात् । व्यधिकरणधर्मावच्छि-न्नाभावानभ्युपगमात् । अभ्युपगमे वा तस्य संयोगाद्यवच्छिन्नतया सादृश्यप्रतियोगिताया अतथात्वे न तद्भिन्नत्वात् स्वपदेन सादृश्यनिरूपितप्रतियोगिताया एव धारणात् । न

त्ताह्लादकत्वादेरपि चन्द्रवृत्तित्वाद्दोष एवेत्यत उक्तम्—मात्रेति । तस्यो(त्रो)पमेयवृत्तित्वस्यापि सत्त्वान्न प्रतियोगिताश्रयमात्रवृत्तित्वम् । ननु 'चन्द्र इव चन्द्रो मुखं च रमणीयम्' इत्यत्रातिव्याप्तिः, चन्द्रनिष्ठसादृश्यप्रतियोगितायामुपमेयतावच्छेदकावच्छिन्नत्वाभावसत्त्वात् । अत्र ह्येकैव चन्द्रनिष्ठा सादृश्यप्रतियोगिता मुखनिष्ठोपमेयतानिरूपिता चन्द्रनिष्ठोपमेयतानिरूपिता च । न चात्रोपमैवेति वाच्यम्, अनन्वयोपमासमूहालम्बनरूपत्वेनातथात्वात् । न चोपमांशे लक्षणमस्त्येव । अनन्वयांशे तूपमेयतावच्छेदकावच्छिन्नत्वसत्त्वादेव न दोष इति वाच्यम्, प्रतियोगिताया ऐ-

---

चैवमिति । एवं तद्वाक्योपस्थाप्यस्यापि धर्मे विशेषणीकरण इत्यर्थः । अनुपात्तेति । 'व्यतिरेके हि क्वचिदपकर्षहेतुः शब्दोपात्तः, क्वचिदर्थलभ्यः' इत्यग्रे वक्ष्यते । तत्रोपमानवृत्तेरपकर्षहेतुधर्मस्य शब्दोपात्तत्वेन तस्यापि तद्वाक्योपस्थाप्यत्वेन तत्सामानाधिकरण्याभावः सादृश्यप्रतियोगितायां नास्तीति व्यभिचारवारणेऽपि तस्यार्थगम्यत्वे धर्मे तद्वाक्योपस्थाप्यत्वाभावप्रयुक्तस्य तादृशधर्मसामानाधिकरण्याभावस्यैव सत्त्वादतिव्याप्तिरिति भावः । नचा(न्व)पकर्षहेतुधर्मोपादानेऽपि तस्योपमानमात्रवृत्तित्वाभावात्कथं नातिव्याप्तिः, कलङ्कादेरन्यत्रापि सत्त्वात् । मैवम् । तद्वाक्यार्थे उपमानेतरवृत्तित्वेन प्रतीयमानत्वाभावस्यैव तदितरावृत्तित्वस्य विवक्षितत्वात् । यद्वा—उपमेयावृत्तित्वमेव तेन विवक्षणीयम् । तदर्थस्तु विशेष्यत्वप्रकारत्वान्यतरसंबन्धेनोपमेयवृत्तिधर्माभेदारोपवद्यतदन्यत्वम् । अन्यथा चन्द्रमुखादिवृत्तिरमणीयादेर्वस्तुतोऽभिन्नतयासंभवापत्तेः । 'पाण्ड्योऽयम्' इत्यादौ हारनिर्झरादेरभेदारोपस्यावश्यकतया निर्झरस्य यथोक्तोपमेयवृत्तित्वाभावान्नाव्याप्तिः । न चैवमपि सादृश्यप्रतियोगित्वरूपतादृशधर्मसामानाधिकरण्यस्य सादृश्यप्रतियोगितायां सत्त्वादसंभवतादवस्थ्यमिति वाच्यम् । भेदगर्भसामानाधिकरण्यनिवेशस्योक्तत्वात् । **साक्षादिति** । तथा च व्यतिरेकविशेषे तथात्वेऽपि तत्त्वस्यालंकारसाक्षाद्विभाजकत्वाभावाद्व्यतिरेकत्वावच्छिन्नमात्रस्य चोक्तलक्षणानाक्रान्तत्वान्न व्यभिचारः । ततश्च 'यस्यां प्रतियोगितायामलंकारसाक्षाद्विभाजकोपाध्यवच्छेदेन यथोक्ताभावः' इति पर्यवस्यतीति भावः । वस्तुतस्तु—तद्वाक्योपस्थाप्यत्वं तद्वाक्यतात्पर्यविषयत्वमात्रम्, न तु तज्जन्यशाब्दधीविषयत्वमात्रमेव । अतोऽनुपात्तापकर्षहेतावपि व्यतिरेकेऽपकर्षप्रयोजकधर्मस्य तद्वाक्यबोध्यसादृश्याभावप्रयोजकतया तद्वाक्यतात्पर्यविषयत्वसत्त्वात्तादृशधर्मनिष्ठतद्वाक्योपस्थाप्यत्वाभावप्रयुक्तोऽपि तादृशधर्मसामानाधिकरण्याभावो नास्तीति न व्यभिचारः । चन्द्रादिमात्रवृत्तिभेदव्यक्त्यादेश्च वस्तुतश्चन्द्रेतरवृत्तित्वेऽपि तद्वाक्यतात्पर्यविषयत्वाभावात्तत्सामानाधिकरण्यस्य प्रतियोगितायां सत्त्वेऽपि

क्यस्योक्तत्वेन चन्द्रनिष्ठोपमेयतानिरूपितसादृश्यप्रतियोगिताया मुखनि ष्ठोपमेयतानिरूपितसादृश्यप्रतियोगितारूपतया चन्द्रनिष्ठोपमेयतानिरूपि तसादृश्यप्रतियोगितायामप्युपमेयतावच्छेदकावच्छिन्नत्वाभावसत्त्वादतिव्या- प्तेर्दुर्वारत्वात् । अन्यथोपमांशेऽपि लक्षणगमनासंभवाच्च । न च तत्र चन्द्र निष्ठोपमेयतानिरूपिता मुखनिष्ठोपमेयतानिरूपिता च सादृश्यप्रतियोगित भिन्नेति वाच्यम्, प्रतियोगितावच्छेदकभेदादेव प्रतियोगिताभेदात् । भूत लनिष्ठात्यन्तान्योन्याभावनिरूपिताया घटनिष्ठप्रतियोगिताया भेदाभावात् नन्वेवं चन्द्रवृत्तिसादृश्यप्रतियोगितायामुपमेयतावच्छेदकावच्छिन्नत्वाभाव नास्तीत्यसंभव एवेति चेत्, मैवम् । तदुपमावाचकपदान्वयिचन्द्रपदबो ध्याया एव प्रतियोगिताया विवक्षितत्वात् । उक्तस्थले त्वेवंविवक्षायामप्य

---

नासंभवावकाश इति ध्येयम् । **प्रतियोगितावच्छेदकेति** । धर्मसंबन्धोभयपरम् समवायेन घटपटाद्यभावस्य संयोगसमवायाभ्यां घटाभावस्य च प्रतियोगिताया भेदात् न तु स्वनिरूपकाश्रयभेदेनापि तद्भेद इत्याह—**भूतलेति** । तदादीत्यर्थः । भूतल र्वतादिनिष्ठो यो घटात्यन्ताभावस्तादृशश्च यो घटान्योन्याभावः, तत्प्रतियोगितयोः स्व निरूपकाश्रयभूतलपर्वतादिभेदेन भेदाभावात् । संयोगेन घटत्वावच्छिन्नाभावीयप्रतियोगि तायास्तादात्म्येन घटत्वावच्छिन्नभेदीयप्रतियोगितायाश्चाभावाधिकरणभेदेऽपि भेदाभाव दिति यावत् । अत्यन्तान्योन्याभावीयघटत्वाद्यवच्छिन्नप्रतियोगितयोस्तु संयोगादितादा त्म्यरूपावच्छेदकसंबन्धभेदाद्भेदः । भेदीयप्रतियोगितायाः संबन्धानवच्छिन्नत्वपक्षे तदव च्छिन्नत्वानवच्छिन्नत्वाभ्यामेवेत्यन्यदेतत् । प्रकृते च सादृश्यस्य पदार्थान्तरत्वे प्रतियोगि तायाः संबन्धावच्छिन्नत्वमेव नास्ति । तद्भिन्नत्वे सतीत्यादिरूपत्वेऽपि तादात्म्यावच्छिन्नत्व मनवच्छिन्नत्वमेव वा । सर्वथापि अवच्छेदकसंबन्धभेदाभावाच्चन्द्रत्वरूपावच्छेदकधर्मैक्या न सादृश्याश्रयभेदाद्भेदः संभवतीति समुदायार्थः । **नन्वेवमिति** । 'चन्द्र इव चन्द्रः' इत्यत्रो पमेयतावच्छेदकीभूतचन्द्रत्वावच्छिन्नत्वात् 'चन्द्र इव मुखम्' इत्यत्रापि प्रतियोगितायास्तद भावो न स्याद्वाक्यभेदेन प्रतियोगिताभेदाभावादित्यर्थः । **तदुपमेति** । तदिति पदविशेषणम् तथा च इवादिपदं तत्तद्व्यक्तित्वेन धृत्वा यत्पदोपस्थाप्यं सादृश्यं यत्प्रतियोगिकत्वेन गृह्यमाणं सद्यत्र विशेषणीभवति तद्वृत्तिधर्मोऽत्र उपमेयतावच्छेदकपदेन विवक्षित इति नासंभव इत्यर्थः । **उक्तस्थले त्विति** । तदयं पूर्वपक्षस्य फलितार्थः—उक्तस्थले- ऽशतः क्लृप्तालंकारद्वयाभ्युपगमो न युक्तः, उपमेयोपमाया अप्युपमाप्रतीपाभ्यां गतार्थता- पत्तेः । नाप्यत्रांशत उपमा संभवति, उक्तरीत्यानन्वयांशेऽतिव्याप्तेः । इवपदस्यैक्यादा- वृत्तौ च मानाभावात्तेनैवेवपदेनोपस्थाप्यं चन्द्रप्रतियोगिकत्वेन गृह्यमाणं चन्द्रे मुखे च विशेषणम् । एवं च चन्द्रनिष्ठायां प्रतियोगितायां मुख[illegible]मादाय लक्षण-

तिव्याप्तिस्तदवस्थैवेति चेत्, उच्यते—उभयविवक्षितसादृश्यप्रतियोगिताया अत्र भेदाभ्युपगमेन दोषाभावः । न च तदसंभवः, अतिरिक्तप्रतियोगि-

---

नयनेऽशान्तर एतद्दुर्वारम् । चन्द्रत्वावच्छिन्नत्वात्तद्वारणे त्वंशान्तरेऽपि तद्दुर्लभमिति । 'चन्द्र इव मुखम्' इत्यंशे लक्ष्यत्वान्नातिव्याप्तिरिति परिहरति—**उच्यते इति** । उक्त-रीत्या अंशतोऽपि लक्षणाभावमाशङ्क्याह—**अतिरिक्तेति** । मुखनिष्ठोपमेयतानिरूपि-तत्वविशिष्टायां प्रतियोगितायां मुखत्वावच्छिन्नत्वाभावसत्त्वादित्यर्थः । **अनुपपत्त्यभा-वादिति** । अंशतो लक्षणागमनरूपाया अंशान्तरेऽपि लक्षणगमनरूपायाश्च अनुपपत्ते-रभावादित्यर्थः । तेन प्रतियोगित्वमतिरिक्तमिति पक्षेऽप्यवच्छेदकैक्ये तद्भेदानभ्युप-गमादसंगतिरनाशङ्क्या । ननु 'अत एव—' इत्यादिकथनं प्रकृतानुपयुक्तम्, असंबद्धं च । तस्य हि प्रतीयमानायाश्चन्द्रसादृश्यप्रतियोगिताया ऐक्यात्तादृशबाधसत्त्वे मुखनिष्ठसा-दृश्यप्रतियोगित्वेन चन्द्रमवगाहमानं ज्ञानमपि न स्यादित्यर्थः । यथोक्तबाधबुद्धौ च तादृशप्रतियोगिताश्रयभेदः तादृशप्रतियोगितात्यन्ताभावो वा चन्द्रे विशेषणम् । 'चन्द्र इव चन्द्रः' इत्यत्र तु चन्द्रः प्रतियोगितया सादृश्ये, तच्चाश्रयतया चन्द्रे विशेषणम् । चन्द्रविशेष्यकप्रतियोगित्वाभावज्ञानं च सादृश्यविशेष्यकप्रतियोगित्वसंसर्गकचन्द्र-प्रकारकताज्ञाने न प्रतिबन्धकम्, प्रतियोगित्वसंबन्धावच्छिन्नप्रतियोगिताकचन्द्राभाव-प्रकारकसादृश्यविशेष्यकबोधस्यैव तथात्वात् । अत एव उक्तबाधसत्त्वे 'चन्द्र इव चन्द्रः' इत्येतद्वाक्यार्थबोधेऽपि बाधकाभावः । सुतरां तु 'चन्द्र इव मुखम्' इत्यत्रेति चेत्, सत्यम् । प्रकारान्तरेण व्याख्येयत्वात् । तथा हि—'ननु शब्दबोध्यत्वं तावत्प्र-तियोगितायां विशेषणं दत्तमेव, तच्च प्रकृतेः संसर्गतया शाब्दबोधविषयत्वरूपं प्रतियो-गितायां वाच्यम् । तस्याश्च प्रतियोगितात्वेनैव संसर्गत्वम्, न तूक्तविशिष्टप्रतियोगिता-त्वेन मानाभावात् । तथा च 'यन्निष्ठोपमेयत्वनिरूपितत्वविशिष्टायां यस्यां प्रतियोगिता-याम्' इत्युक्तं तादृशरूपेण तस्याः संसर्गतानभ्युपगमेन तस्यां शब्दबोध्यत्वान्वयात् । मै-वम्, निरूपितत्वस्य शब्दबोध्यत्वस्य च तस्याम् 'एकत्र द्वयम्' इति रीत्या लक्षणवाक्या-र्थबोधे बाधकाभावात् वह्निसंयोगत्वस्य संसर्गतानवच्छेदकत्वेऽपि 'पर्वतो वह्निमान्' इत्यादौ 'वह्निसंयोगः 'संयोगत्वेन संसर्गः'' इत्यादि व्यवहारात् । अतस्तत्र चन्द्र इव मुखमि-त्यंशे लक्षणसंगतिर्नान्यत्र । न हि तत्प्रतियोगितानिरूपकानुयोगितावच्छेदकमात्रमुपमेय-तावच्छेदकपदेन विवक्षितम्, त्वदुक्तरीत्या अंशतोऽपि लक्षणं नीयते, येनानन्वयांशेऽपि त-स्यात् । किं तु यन्निष्ठोपमेयतानिरूपितत्वविशिष्टायां प्रतियोगितायामुपमेयतावच्छेद-कावच्छिन्नत्वाभाव इति विवक्षितम् अस्ति चेदुपमांशे, नत्वनन्वयांशे । न हि तस्याश्च-न्द्रनिष्ठोपमेयतानिरूपितत्वविशिष्टप्रतियोगितात्वेन मुखनिष्ठोपमेयतानिरूपकत्वम्, किंतु प्रतियोगितात्वेनैव । तथा च यन्निष्ठोपमेयतानिरूपितत्वावच्छिन्नोक्तप्रतियोगितानिष्ठनिरू-पकानुपयोगितावच्छेदकावच्छिन्नत्वाभावो लक्षणे निविष्ट इति भावः । न चोपमाप्रतीपस-

तापक्षेऽनुपपत्त्यभावात्। अत एव 'चन्द्रो न चन्द्रनिष्ठसादृश्यप्रतियोगी' इति बाधधीसत्त्वेऽपि 'चन्द्र इव चन्द्रो मुखं च रमणीयम्' इति वाक्यात् 'मुखं चन्द्रनिष्ठसादृश्यप्रतियोगी' इति बोधोऽनुभवसिद्ध इति।

उपमानोपमेयत्वं चात्र तत्त्वेन लोकप्रसिद्धत्वम्। अतो न प्रतीपे व्यभिचारः, तत्र मुखप्रतियोगिकसादृश्यस्य चन्द्रे वर्णनीयतया सादृश्यप्रतियोगितायामुपमेयतावच्छेदकत्वसत्त्वात्। एवमुपमेयोपमायामपि नातिव्याप्तिः, उपमानोपमेययोर्लोकप्रसिद्धयोरेवोपादानमित्यस्याभिमतत्वेन तत्र 'मुखमिव चन्द्रः' इत्यंशे उपमेयतावच्छेदकीभूतमुखत्वावच्छिन्नत्वात्सादृश्यप्रतियोगिताया इति दिक्।

---

मूहालम्बनरूपाया उपमेवोपमाया असंग्राह्यत्वम् उपमानन्वयसमूहालम्बनरूपस्योक्तस तु संग्राह्यत्वमित्यत्र किं मानमिति वाच्यम्। तत्रालंकारान्तरत्वं तान्त्रिकैरुक्तं न त्वत्रे त्यस्यैव मानत्वात्। लक्ष्यालक्ष्यत्वव्यवस्थायां च प्रामाणिकव्यवहारस्यैव मानत्वात्। त देतदाह—**अत एवेति**। उक्तरीत्या चन्द्र इव मुखमित्यंशे लक्ष्यत्वादेवेत्यर्थः। चन्द्र इति। 'चन्द्रप्रतियोगिकसादृश्याभाववांश्चन्द्रः' इति बाधस्योपलक्षणम्। अपिशब्दे बाधकाभावसमुच्चयार्थः। तथा च चन्द्रविशेष्यकचन्द्रसादृश्यप्रकारकज्ञानकालीनस्तद भावकालीनो वा मुखं चन्द्रसदृशमिति यत्र बोधस्तत्रोपमैव। उपमेयोपमायां तु मुखसा दृश्यप्रकारकत्वाभाववद्वृत्तिचन्द्रसादृश्यप्रकारकत्ववद्यदा ज्ञानं तदा सैवालंकारः। अन्यतर मात्रप्रकारकत्ववद् ज्ञानस्थले तु उपमाप्रतीपं चाप्ययथायोगं संभवति तथा चोपमात्वप्रयो जकबोधस्य तदुभयज्ञानकालेऽपि सुस्थत्वात्तदंशे लक्षणगमनादिति हेतोर्नातिव्याप्तिरि शेषः। अतएव चन्द्र इव मुखं मुखमिव चन्द्र इत्यत्रोभयांशज्ञाने नोपमा, प्रतीपं वा किंत्वेकांशमात्रज्ञाने इति पूर्वोक्तस्थलाद्वैषम्यमभिप्रेत्य तत्र व्यभिचारवारणायोपायमाह— **उपमानोपमेयत्वं चेति**। त्वप्रत्ययार्थस्योभयत्रान्वयः। 'द्वन्द्वात्परं श्रूयमाणं पदं प्रत्येकमभिसंबध्यते' इति व्युत्पत्तौ पदशब्दस्य शब्दमात्रपरत्वात्। 'व्याप्तिविशिष्टपक्षधर्मता—' इत्यादौ तथा दर्शनात्। 'पट्वीमृदूयते' इत्यादौ द्वन्द्वोत्तरक्यङ्प्रत्ययार्थस्याचारस्योभयान्वयिताया भाष्यादिसंमतत्वाच्च। **तत्त्वेनेति**। तन्निष्ठसादृश्यप्रतियोगित्वेन, तत्प्रतियोगिकसादृश्याश्रयत्वेन चेत्यर्थः। उपमेयोपमायामपि प्रत्येकांशस्य नोपमाप्रतीपलक्षण-

---

१. 'सादृश्यस्य प्र०'. २. 'त्वासत्त्वात्'.

अथैवम्

'चन्द्रविम्बादिव विषं चन्दनादिव चानलः ।
परुषा वागितो वक्रादित्यसंभावितोपमा ॥'

इत्युक्तोपमायामव्याप्तिः, चन्द्रप्रभवविषादेरप्रसिद्धत्वाद्—इति चेत्, न । तत्र चन्द्रप्रभवविषादेर्वागुपमाया अविवक्षितत्वात् । किं तु 'यथा चन्द्रविम्बाद्विषमसंभावितम्, तथा त्वन्मुखात्परुषा वाग्' इत्युपमास्वीकारादिति न्यायपञ्चाननादयः । एवं च 'असंभावितोपमा' इत्यस्य—असंभावितोपमानकत्वं नार्थः, किं तु—असंभावितत्वं तदुपमायां साधारणधर्म इत्येव । तथा च विषपरुषवचनयोरुपमायां चन्द्रचन्दनादेर्मुखस्य च बिम्बप्रतिबिम्बभावः । तेन—'चन्द्रादिनिष्ठकारणताप्रतियोगिककार्यत्वाभावप्रकारकज्ञानविशेष्यविषसदृशी त्वन्मुखनिष्ठकारणताप्रतियोगिककार्यत्वाभावप्रकारकज्ञानविशेष्यभूता परुषोक्तिः' इति पर्यवसितार्थः ।

यत्र तूपमानतावच्छेदकविशिष्टमुपमानमप्रसिद्धम्, तत्रोत्प्रेक्षैव । तदुक्तं चक्रवर्तिना—

'यदायमुपमानांशो लोकतः सिद्धिमृच्छति ।
तदोपमैव येनेवशब्दः सादृश्यवाचकः ॥
यदा पुनरयं लोकादसिद्धः कविकल्पितः ।
तदोत्प्रेक्षैव येनेवशब्दः संभावनापरः ॥' इति ।

---

लक्ष्यत्वमिति पूर्वोक्तयुक्तिबलादाह—**उपमेयोपमायामपीति । अथैवमिति ।** अप्रसिद्धे धर्मिण्युपमानत्वादिप्रसिद्ध्यसंभवादर्थतो धर्मिणोऽपि लोकप्रसिद्धत्वपर्यवसानात् । न च चन्दनप्रभववह्नेर्लोकप्रसिद्धत्वमेवेति वाच्यम् । अनलपदस्य तापपरत्वात् तस्योभाभ्यामप्यादरणीयत्वात् । **तेनेति ।** ज्ञानं तु पूर्वत्र प्रमारूपम् । उत्तरत्र न तथात्वनियम इति विशेषः । उक्तकार्यत्वं च तद्रूपादावेव प्रसिद्धम्, तदभावश्च प्रसिद्धविषादावेव ग्राह्य इति भावः । ननु संभावनाविषयार्थकसंभावितपदेन नञ्समासे असंभावितपदस्यार्थस्यादुक्तजन्यत्वप्रकारकज्ञानविषयत्वाभावस्य साधारणधर्मत्वं युक्तम्, न तूक्तजन्यत्वाभावप्रकारकज्ञानविषयत्वस्य व्यभिचारेण तज्जन्यत्वाभावानाक्षेपकत्वात् ज्ञानविषयत्वाभावस्य च तदाक्षेपकत्वात् । तज्जन्यत्वे कस्यचित्तादृशज्ञानावश्यकत्वात् । मैवम् ।

---

१. 'विनोपमेयादव्याप्तिः' । २. 'भाविता'।

एतेन—

"स्वतःसिद्धेन भिन्नेन संमतेन च धर्मतः।
साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकदोपमा॥'

इति विद्यानाथीयोपमालक्षणमनूद्य 'स्वतःसिद्धेन' इत्यनेनोत्प्रेक्षाय व्यभिचारवारणम्।

'न नित्यमस्मिन्परिपूर्णतेति त्यक्त्वा नभः क्षोणितलावतीर्णः।
आनन्दयन्निन्दुरिव स्वधाम्ना विभाति लोके नवकाकतीन्द्रः॥'

इत्युत्प्रेक्षोदाहरणे उपमानस्येन्दोः स्वतःसिद्धत्वात्। इन्दुः क्षोणित लावतीर्णत्वाकारेण कविकल्पित इति चेत्, तर्हि 'चन्द्रबिम्बादिव विषम इत्याद्युपमायामव्याप्तिः'' इति चित्रमीमांसोक्तदूषणमपास्तम्[2]। तत्र भूत लावतीर्णत्वविशिष्टचन्द्रस्य स्वतःसिद्धत्वाभावात्। चन्द्रबिम्बजन्यविषत्व नोपमानतावच्छेदकमिति[3] व्यवस्थापितत्वाच्च।

यदपि तैरुक्तम्—

'उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम्।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः॥'

इत्यत्रोपमायां विशेष्यस्य[4] कविकल्पितत्वादव्याप्तिः—इति, तदप्य सत्। तत्रातिशयोक्तेरेवाङ्गीकारात्। प्रवाहस्य(योः) स्वतःसिद्धेन पृथक्त्वेन पातस्यैव कविकल्पितत्वात्[5] 'विशेष्यस्यापि कविकल्पितत्वात्—' इत्युक्तेर संगतत्वाच्च।

---

वक्रजन्यत्वाभावज्ञानस्यैव रसानुगुणत्वात्। **एतेनेति**। उपमानावच्छेदकविशिष्ट स्याप्रसिद्धत्वे नोपमेति व्यवस्थापनेनेत्यर्थः। **स्वतःसिद्धत्वादिति**। तथा तत्राप्युपमालक्षणगमनादतिव्याप्तिरित्यर्थः। **व्यवस्थापितत्वाच्चेति**। उपमानत वच्छेदकविशिष्टोपमानस्य स्वतःसिद्धतायामेवोपमेति कथितत्वादित्यर्थः। प्रसङ्गात्प्राच नलक्षणे दीक्षितोक्तदोषान्निराकर्तुमाह—**यदपीत्यादि**। **अतिशयोक्तेरेवेति**। त यथार्थोक्तौ च कल्पनमित्येवंरूपाया इत्यर्थः। **प्रवाहयोरिति**। यद्यप्येक एव प्रवाहः प्रसिद्धः, तथाप्येकप्रवाहोत्पत्त्यनन्तरं प्रवाहान्तराभिप्रायेणेदं वस्तुगत्योक्तम्।

---

१. 'ण एवोपमान'. २. 'चित्रमीमांसायां दीक्षितोक्तदूषण'. ३. 'मित्यस्य'. ४. 'वि ष्यस्यापि'. ५. 'कविकल्पितत्वात्'.

यच्च तत्रैव—'भिन्नेन' इत्यनन्वयव्यावृत्तावपि

'अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥'[1]

इत्युपपादकोपमायामव्याप्तिः, तत्रोपमेयभूतानामङ्ककिरणादीनामुपमानभूतदोषगुणाभिन्नत्वात् । दोषगुणानां च तत्सामान्यत्वात् । अङ्ककिरणानां च तद्विशेषत्वात् । नच—'उपमेयतावच्छेदकभिन्नत्वमुपमानतावच्छेदके विवक्षितम्, अत्र च दोषाङ्कत्वादीनां[2] भेदोऽस्त्येव—' इति वाच्यम्,

'अनवरतकनकवितरणधृतजललवकरतरङ्गितार्थिततेः ।
भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला ॥'

इति रशनोपमायामव्याप्तेः । मतित्वाद्युपमानतावच्छेदकानामुपमेयतावच्छेदकभिन्नत्वाभावात् । उपमेयोपमायामुपमानतावच्छेदकयोर्द्वयोरपि तद्भिन्नत्वाभावादुक्तविशेषणेनैव तद्व्यभिचारवारणे 'एकदा' इत्यस्य वैयर्थ्यापत्तेश्च । न च—'स्वोपमेयतावच्छेदकभिन्नधर्मावच्छिन्नत्वमुपमानस्य विवक्षितम्, 'भणितिरिव मतिः—' इत्यत्र चोपमानाभिन्नत्वादुपमेयतावच्छेदकमतित्वाद्यन्यत्वं भणितित्वादीनामिति न दोषः'—इति वाच्यम्,

'उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा स्वयं निर्मितमातपत्रम् ।
स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग इवोत्तमाङ्गे ॥'

इत्यत्राव्याप्तेः । अत्र शिवत्वस्यैवोपमानोपमेयतावच्छेदकत्वात् । न च—'अत्रापि दुकूलविशिष्टपरमेश्वरत्वमुपमेयतावच्छेदकम्, गङ्गाविशिष्टं तदुपमानतावच्छेदकम्, इति भेद एव'—इति वाच्यम्,

'द्वारं द्वारमटन्भिक्षुः शिक्षत्येवं न याचते ।
अदत्त्वा मादृशो मा भूर्दत्त्वा त्वं त्वादृशो भव ॥'

---

तद्विशेषत्वादिति । अङ्कस्य दोषविशेषत्वात्, किरणानां च गुणविशेषत्वात् । विशेषे च सामान्यावच्छिन्नप्रतियोगिताकभेदाभावात् 'घटः पृथिवी भिन्नः' इत्यप्रत्ययादिर्थः । भेदोऽस्त्येवेति । दोषत्वावच्छिन्नप्रतियोगिताकभेदस्य अङ्के अभावेऽपि दोष-

---

१. 'किरणादीनां'. २. 'दोषत्वाङ्कत्वादीनां'.

इत्यत्राव्याप्तेः । न च—'अयमनन्वय एव—' इति वाच्यम्, तस्य हि द्वितीयसदृशव्यवच्छेदः फलम्, स[1] चात्र बाधान्न—" इति तैरुक्तम् । तदप्यसत्, उपमानतावच्छेदकतापर्याप्त्यधिकरणस्योपमेयतावच्छेदकतापर्याप्त्यनधिकरणत्वस्य विवक्षितत्वात् 'त्वं त्वादृशो भव' इत्यत्र कालादिकृतभेदविवक्षया तद[2]भावात् । अन्यथोपमात्वस्यैवानुपपत्तेः । तथा च—'एतत्कालोत्तरकालवृत्तिस्त्वमेतत्कालीनत्वत्सदृशो भव' इत्यर्थः । अन्यथा—ऐ[3]कस्मिन्नेव काले तत्सादृश्यविधाने सिद्धसाधनापत्तेः ।

यदपि—"श्लेषव्यावृत्त्यर्थं 'धर्मतः' ई[4]ति विशेषणमप्ययुक्तम्,

'सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव ।'

इत्यादि श्लेषेऽपि धर्मसाम्यसत्त्वात् । न च—एकत्र कलासाकल्यम्, अन्यत्र च कोलाहलवत्त्वम्, इत्यनुगतधर्मा[5]लाभः—इति वाच्यम्, तयोरभेदाध्यवसायेन धर्मैक्यसंपत्तेः

'पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन ।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥'

इत्यादौ हारनिर्झरादीनां भेदेऽपि बिम्बप्रतिबिम्बभावेन साधारण्यस्वीकारात् । न च—धर्मसाम्ये 'सकलकलम्' इत्यादावुपमैव स्यात्—इति वाच्यम्, शब्दसाम्येऽप्युप[6]मात्वस्य दुर्वारत्वात्

'यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥'

इत्यादावनुगतार्थ(नामरूप)शब्दसाम्येऽप्युपमादर्शनात्—" इति । तदप्यसत्, धर्मपदस्य 'प्रसिद्धगुणादिसाम्य एवोपमा न त्वन्यत्रापि । यथा 'च-

त्वाङ्कत्वयोर्भेदसत्त्वात् । अन्यथा सामान्यविशेषभावानुपपत्तेरित्यर्थः । बाधान्नेति । ता-दृशदानप्रयुक्तोत्कर्षवति तादृशदानकर्त्रन्यसादृश्यासंभवात्तेनैकजातीयादृष्टस्यैव जननादि-सादृश्यविधानसंभवेन द्वितीयव्यवच्छेदे तात्पर्याभावात्सादृश्यस्य वैयर्थ्य एव तत्कल्पनादि-त्यर्थः । धर्मपदस्येति । शब्दाधिक्यादर्थाधिक्यमिति न्यायेनेत्यर्थः । ननु संमतपदे-

१. 'तस्य चात्र'. २. 'तदनपायात्'. ३. 'एतस्मि'. ४. 'इत्युक्तं तदप्यस-' ५. 'भावः'. ६. 'पमाया'.

न्द्रवत्कलङ्कि मुखम्' इत्येतदर्थकत्वात्। संमतपदेन चोपमानस्यैवासंमतस्य व्यावर्तनात् धर्मपदस्य शब्देतरपरताया विवक्षितुं शक्यत्वाच्च।

यदप्युक्तम्—'अन्येन वर्ण्यस्य' इति प्रतीपव्यावृत्त्यर्थं विशेषणम्, तत्र वर्ण्येन प्रकृतेनान्यसादृश्यवर्णनान्न दोषः। तत्र चान्यपदस्य 'वर्ण्यात्प्रकृतादन्येनाप्रकृतेन' इति यद्यर्थः, तदा

'इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु।
रजांसि समरोत्थानि तच्छोणितनदीष्विव॥'

इति समुचितोपमायामव्याप्तिः, तत्र समराङ्गत्वेन रजसां शोणितेषु पातस्यापि वर्ण्यत्वाद्रजसामप्रकृतत्वाभावात्। यदि तु 'स्वयं वर्ण्येनावर्ण्येन वा कुतश्चिद्वर्ण्यादन्येन' इत्यर्थः, तदात्युत्कृष्टगुणत्वादुपमानभावमप्यसहमानस्योपमानत्वकल्पनात्मके प्रतीपेऽतिव्याप्तिः। यथा—

'अहमेव गुरुः सुदारुणानामिति हालाहल तात मा स्म दृप्यः।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम्॥'

अत्र वर्ण्यानां दुर्जनवचसामप्रकृष्टेन हालाहलेन साम्यवर्णनात्—" इति, तदप्यसत्। सादृश्यप्रयोजकतत्प्रतियोगित्वानुयोगित्वतदवच्छेदक-

---

तद्वारणमित्यत आह—**संमतेति**। तुष्यत्विति न्यायेनाप्याह—**शब्देतरेति**। पूर्वोक्त एव तात्पर्यम्। **अन्येन वर्ण्यस्येति**। प्रतियोगित्वं तृतीयार्थः[1]। अन्यप्रतियोगिकं वर्ण्यनिष्ठं साम्यमित्यर्थः। प्रतीपे व्यभिचारवारणप्रकारं दर्शयति—**तत्रेति**। **वर्ण्येनेति**। 'गर्वमसंभाव्यमिमं लोचनयुगलेन किं वहसि भद्रे। सन्ति सदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि॥' इत्यत्र उपमितिक्रियानिष्पत्तिगर्भे, 'आकर्णय सरोजाक्षि वचनीयमिदं भुवि। शशाङ्कस्तव वक्त्रेण पामरैरुपमीयते॥' इति तदनिष्पत्तिगर्भे च प्रतीपे वर्ण्यप्रतियोगिकसाम्यस्यैवाप्रकृते वर्णनादित्यर्थः। एवं प्रयोजनमनूद्य अन्यपदार्थविकल्पेन दूषयति—**तत्र चेति**। अन्यत्वस्य प्रतियोगिसाकाङ्क्षतया वर्ण्यपदसमभिव्याहाराद्वर्ण्यप्रतियोगिकमेव तल्लभ्यते, वर्ण्यत्वं च प्रकृतत्वमिति। अन्यपदमप्रकृतार्थकमित्यत्र दूषणमाह—**तदेतराण्यपीति**। वर्ण्यत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वं नार्थः, अपि तु वर्ण्यप्रतियोगिकभेदवत्वमेव। ततश्च रजसां स्वतो वर्ण्यत्वेऽपि वर्ण्यरक्षोभिन्नत्वमस्त्येवेति न दोष इत्याशङ्कते—**यदि त्विति**। एवमपि तृतीयप्रतीपभेदेऽतिव्याप्तिरित्याह—**तदेति**। **उपमानभावमिति**। अन्यनिष्ठसादृश्यप्रतियोगित्वमित्यर्थः। उपमानभावमप्यसहमानस्योपमानत्वम्। **सादृश्यप्र-**

---

१. 'पतनस्या'. २. 'धर्मपदस्य'. ३. 'प्रकृतेन'. ४. 'हलसाम्य'.

तदन्यधर्मप्रकारकधीविशेष्यत्वेनाविवक्षितस्यैवान्यपदार्थत्वात् । उक्तप्रती तु दर्पाभावप्रकारकधीवि[1]शेष्यतयापि हालाहलस्य विवक्षितत्वात् । विवक्षो पादानात्तदन्यधर्माणां तत्र सत्त्वेऽपि न क्षतिः, नाप्युक्तोपमायामव्याप्तिः वस्तुतो रजसां वर्ण्यत्वेऽप्युक्तविधान्यत्वस्य तत्रानपायात् ।

यच्चोक्तम्—"'वर्ण्यस्य साम्यं वाच्यम्' इत्यस्य कोऽर्थः=किम्—अन्य प्रतियोगित्वेन वर्ण्यस्य साम्यं वाच्यम्, किं वा—यथाकथंचिद्वर्ण्यावर्ण्यो भयनिरूपितम्, उत—वर्ण्यानुयोगिकत्वेन, इति । नाद्यः—

'सरसिजमिदमाननं च तस्याः सममिति चेतसि संमदं व्यधत्त ।'

इत्युभयंविश्रान्तसादृश्योपमायामव्याप्तेः । न द्वितीयः—प्रतीपेऽतिव्याप्तेः न तृतीयः, 'वर्ण्यस्य साम्यं वाच्यम्' इत्यत एव विवक्षितार्थलाभाद् 'अ न्येन' इत्यस्य वैयर्थ्या[2]पत्तेः—" इति, तदप्यसत् । उक्तविधान्यप्रतियोगि कसादृश्याधिकरणोपमेयकत्वस्यैव तदर्थत्वात्कस्यापि दोषस्याभावात् । 'स रसिजम्' इत्यत्र हि मुखप्रतियोगिकपद्मानुयोगिकस्य पद्मप्रतियोगिकमुखा नुयोगिकस्य च साम्यस्य प्रतीतेः । तत्र निरुक्तमन्यत्वं पद्मत्वेऽस्त्येव । त त्प्रतियोगिकसादृश्याधिकरणं च मुखमिति । प्रतीपे तु तादृशान्यत्वं नाव स्तीत्युक्तमेव । अन्यादिपदकदम्बेनैवैतादृशार्थलाभान्न तद्वैयर्थ्यम्—इति

---

**योजकेति** । तादृशश्च रमणीयत्वादिः । तत्पदद्वयं तादृश्यपरम् । तृतीयतत्पदं प्रतियो गित्वपरम् । 'चन्द्र इव मुखं रमणीयम्' इत्यादौ 'सदृशचन्द्रीयं मुखम्' इति बोधा पगमे प्रतियोगित्वसंबन्धावच्छिन्नसादृश्यप्रकारकश्चन्द्रविशेष्यकः 'यादृशरमणीयत्ववा चन्द्रस्तादृशरमणीयत्ववन्मुखम्' इति बोधे च साधारणधर्मप्रकारकः, 'सरसिजमिदम् च इत्यादौ चानुयोगित्वसंबन्धावच्छिन्नसादृश्यप्रकारकस्तादृशो बोधः सुलभः । चन्द्र इव चन्द्रविशेष्यकचन्द्रत्वादिप्रकारकस्तु स्फुट एव । पक्षान्तरे तु साधारणधर्मनिष्ठ शेष्यतानिरूपितप्रकारकत्वसंबन्धेन सादृश्यनिष्ठविशेष्यतानिरूपितप्रतियोगित्वावच्छि कारत्वसंबन्धेन सादृश्यनिष्ठप्रकारतानिरूपितानुयोगित्वसंबन्धावच्छिन्नविशेष्यतासंबन्धे च बोधवत्त्वेनाविवक्षितत्वमित्यर्थः । वस्तुतस्तु तद्वत्त्वेनाविवक्षितत्वमात्रे तात्पर्यम् । धर्मि विषयत्वविवक्षायां प्रयोजनाभावात् । अत एव तदन्यधर्माभाववत्त्वमेवोच्यतामित्या क्त्याह—**विवक्षेति** । तदन्यद्रव्यत्वादिधर्माणां तत्र सत्त्वादसंगतिरित्यर्थः । **अनपा**

---

१. 'विशेष्यकत्वेनापि', २. 'वैयर्थ्यात्'.

यदप्युक्तम्—'एकदा' इत्युपमेयोपमावारणार्थम्—'उपमेयत्वाभिमत-प्रतियोगिकसादृश्यवर्णनकालानवच्छिन्नं साम्यम्' इत्यर्थकतया निवेशि-

---

तेति । सादृश्यप्रतियोगित्वान्यधर्मवत्त्वेनाविवक्षितत्वस्य तत्र सत्त्वादित्यर्थः । यथा श्रुतै-कदाशब्देनोपमेयोपमायां व्यभिचारवारणात्तदभिप्रायमनुवदन्ति—**उपमेयत्वाभिम-तेति** । तत्र तु पूर्ववाक्य उपमेयत्वाभिमतं यन्मुखं तत्प्रतियोगिकसादृश्यवर्णनं 'मुख-मिव चन्द्रः' इति, तत्समकालीनमेव 'चन्द्र इव मुखम्' इति साम्यमिति न व्यभिचारः। वर्णनमत्र समानाधिकरणं ग्राह्यम् । अन्यथा द्वाभ्यां वक्तृभ्यां यत्रोपमाप्रतीपविवक्षया वाक्यद्वयमुच्चारितं तदुपमायामव्याप्तेः । ननु—तथापि 'चन्द्र इव मुखम्' इत्येतद्वर्णनकाले 'मुखमिव चन्द्रः' इत्येतद्वर्णनाभावादतिव्याप्तिरेव । नच—तद्वक्तृकतादृशवर्णनप्रागभावा-समानकालीनत्वं विवक्षितम्—इति वाच्यम्, तेनैव वक्त्रा प्रतीपाभिप्रायेण तदुत्तरतादृ-शवाक्यप्रयोगे तदुपमायामव्याप्तेः—इति चेत्, सत्यम् । उपमेयत्वाभिमतप्रतियोगिको-पमानवृत्तिसादृश्यविषयकज्ञानविषयत्वेन तात्पर्यविषयत्वस्य विवक्षितत्वान्न कोऽपि दोषः । उपमेयोपमायां परस्परप्रतियोगिकसादृश्याश्रयत्वेन मुखचन्द्रौ प्रतीयेतामिति वक्तृतात्प-र्यस्य सत्त्वान्न व्यभिचारः । 'चन्द्र इव मुखम्' इत्युपमाभिप्रायेण प्रयोगानन्तरं प्रतीपा-भिप्रायेण 'मुखमिव चन्द्रः' इति प्रयोगे तूक्ततात्पर्याभावान्नोपमायामव्याप्तिः, परस्पर-प्रतियोगिकत्वाभावमात्रस्य सादृश्यविशेषणत्वे तु 'चन्द्र इव मुखम्' इत्यादावसं-भव एव स्यात्, तत्रापि वस्तुतो मुखप्रतियोगिकत्वस्यापि चन्द्रवृत्तिसादृश्ये स-त्त्वात् । अत एव परस्परप्रतियोगिकत्वेन प्रतीयमानत्वाभावमात्रमपि न रमणीयम्, मुखप्रतियोगिकत्वेनाप्यर्थतस्तस्य प्रतीयमानत्वात् । तत्प्रतियोगिक सादृश्याश्रयस्य तद्वृत्तिसादृश्यप्रतियोगित्वस्याप्यवगाहनात् । अत एव 'चन्द्र इव मुखम्' इत्येतद्वाक्यादे-रर्थवशान्मुखप्रतियोगिकसादृश्यस्यापि चन्द्रे प्रतीतत्वान्मुखमिव चन्द्र इत्यंशवैयर्थ्य-परिहाराय परस्परातिरिक्तसादृश्यव्यवच्छेदः फलतीति सकलालंकारिकसंप्रदायः । न च शाब्द एव तद्विषयत्वाभावो विवक्षितः चन्द्रप्रतियोगिकसादृश्याश्रयत्वेन मुख-मवगाहमाने शाब्दबोधे वृत्ते मुखप्रतियोगिकसादृश्यप्रकारकचन्द्रविशेष्यकबोधस्तु मानस एवेति सादृश्ये मुखप्रतियोगिकसादृश्यप्रकारकचन्द्रविशेष्यकशाब्दविषयत्वा-भावोऽस्त्येवेति वाच्यम्, मानससादृश्यज्ञानस्याप्युपमात्वस्वीकारेण तादृशविशेषस्या-किंचित्करत्वात् । अथ तस्य बिम्बप्रतिबिम्बभावादावुपमात्वस्वीकारेऽपि उपमेयोपमायां व्यभिचारवारणस्य यथोक्तमात्रेण संभवात् उभयरूपपरस्परांशनिवेशोऽधिक एवेति भाव्यते । एवमपि 'मुखमिव चन्द्रः' इति प्रतीपानन्तरं चन्द्र इव मुखमित्युक्ते तदुपमायामव्याप्तिः । न च योग्यताज्ञानादिना तावत्पर्यन्तं पूर्वशाब्दस्य निवृत्त्या न तत्कालीनसमानाधिकरणशाब्दविषयत्वाभावस्य विवक्षितत्वादिति वा-

तम् । तेन 'खमिव जलं जलमिव खम्' इत्यादिपर्यायप्रवृत्तायामुपमेयोपमायामतिव्याप्तिवारणेऽपि

'तद्वल्गुना युगपदुन्मिषितेन ताव-
त्सद्यः परस्परतुलामधिरोहतां द्वे ।
प्रस्पन्दमानपरुषेतरतारमन्त-
श्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥'

इति युगपत्प्रवृत्तायां तस्यामतिव्याप्त्यनिरासात्—इति ।' तदप्यसत् 'सरसिजमिदम्' इति, 'तद्वल्गुना—' इत्यादेश्चैकशीलतया—'आद्ये-

---

च्यम् । प्रत्येकाभिप्रायेण यत्र वाक्यद्वयं प्रयुक्तं तत्र समूहालम्बनात्मकशाब्दबोधा षयत्वादव्याप्तेः, यत्र च प्रतीपवाक्यार्थबोधोत्पत्तिक्षणे चन्द्र इव मुखमित्येतद्योग्य ज्ञानादिकं जातं तदुत्तरक्षणे चन्द्र इव मुखमित्येतद्वाक्यबोध्यायामुपमायामव्याप्तेश्च यत्र वा मुखमिव चन्द्र इत्येतच्छाब्दसामग्रीप्रत्यक्षात्मकचन्द्र इव मुखमित्येतद्योग्य ज्ञानसामग्री चन्द्रप्रतियोगिकसादृश्यप्रकारकमुखविशेष्यकप्रत्यक्षं जायतामितीच्छा च वृत्ता, तत्र प्रत्यक्षसामग्र्या बलवत्त्वात्प्रत्यक्षात्मकयोग्यताज्ञाने वृत्ते तदुत्तर वाक्यार्थद्वयबोधोत्पत्त्या तत्राप्यव्याप्तेश्च । अतो यथोक्तमेव रमणीयम् । **पर्यायप्र त्तायामिति** । वाक्यभेदसहितायामित्यर्थः । **तद्वल्गुनेति** । रघुवंशे वैतालिकोक्तिः **युगपत्प्रवृत्तायामिति** । वाक्यभेदरहितायामित्यर्थः । **अनिरासादिति** तत्र वर्णनकालभेदाभावादित्यभिमानः । एकदेत्यस्य यथोक्तमर्थमभिसंधाय त मपास्यति—**तदप्यसदिति** । **सरसिजमिति** । न च तत्रापि तेनोपमेयोप स्वीकार्येति वाच्यम् । सकलनिबन्धविरोधात् । पूर्वं तत्रोपमालक्षणाव्याप्तेर्दीक्षि रेवोक्तत्वाच्च । ननु तथापि परस्परप्रतियोगिकत्वेनानयोः सादृश्यं भासतामित्याका तात्पर्यविषयत्वस्य एकदा पदार्थतायास्त्वयोक्तत्वात्सरसिजमित्यादौ तद्वल्गुनेत्य च अव्याप्तिः, तत्र यथोक्ततात्पर्यविषयत्वात् इति चेत् । सत्यम् । तृतीयसदृश वच्छेदफलकत्वाभावस्य विवक्षितत्वात् उक्तस्थले च बीजाभावेन तृतीयसदृश च्छेदप्रत्ययविरहात् । न चैवं भिन्नेत्यादिविशेषणवैयर्थ्यापत्तिः, व्यवच्छेदाफ त्वस्याप्रसिद्धावपि सदृशव्यवच्छेदाफलकं सादृश्यवर्णनमुपमेत्यत एवानन्वयव्या तत्र द्वितीयव्यवच्छेदस्यैव फलत्वात्, तृतीयपदं त्वनन्वयव्यावृत्त्यर्थम्, विशेषणा दानस्य संदर्भविरुद्धत्वादिति वाच्यम् । तस्य लक्षणान्तरत्वेऽपि क्षतिविरहात् । न चै

---

१. 'इति'. २. 'निरस्तात्'.

मा; द्वितीये—उपमेयोपमा' इति विभागे बीजाभावात्तद्भेदस्यापि लक्ष्यत्वात् । अत एव साहित्यदर्पणादौ—उपमेयोपमावारणाय एकवाक्यवाच्यत्वमेव निवेशितम् । अन्यथा त्वदुक्तोदाहरणेऽप्यतिव्याप्तेस्ततोऽप्यनिरासात्तदसंगत्यापत्तेः ।

यदपि—

'ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् ।
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥'

इति भिन्नसाधारणधर्ममालोपमायामव्याप्तिः, तत्रानेकदा साम्यप्रतिपादनात्—इति । तदप्यसत् । उक्तस्यैकदापदार्थस्यात्रापि सत्त्वात् । तस्मात्स्वोक्तमेव विस्मृत्य दूषणमेतदिति न किंचिदेतत् ।

यच्च—

'रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसंनिभैः ।
भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलम् ॥'

इति परस्परोपमायामव्याप्तिः—इति । तदप्यसत् । प्रत्येकं लक्षणसत्त्वादुपमाद्वयस्यैव ततः प्रतीतेः ।

यच्च—"व्यङ्ग्योपमावारणाय 'वाच्यम्' इत्युक्तमप्ययुक्तम्,

'न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे ।
इति विस्पष्टसादृश्यात्तत्त्वाख्यानोपमैव सा ॥'

इत्यत्राव्याप्तेः । अत्र साम्यस्यावाच्यत्वात्—" इति । तदप्यसत् । भ्रान्तापह्नुतावेवैतदन्तर्भावात् । दण्डिना तु(नस्तु) सादृश्यस्य प्रतीयमानतामात्राभिप्रायेणोपमाव्यवहारात् । अन्यथा—

'चन्द्रारविन्दयोः कक्षामतिक्रम्य मुखं तव ।
आत्मनैवाभवत्तुल्यमित्यसाधारणोपमा ॥'

इत्यादेरपि लक्ष्यत्वेऽनन्वयादिविलोपापत्तेः ।

---

तन्निर्मुक्तस्य द्वितीयलक्षणस्योपमेयोपमायामव्याप्तिरेवेति वाच्यम् । अन्येन वाच्यमित्यस्यान्यमात्रप्रतियोगिकत्वेन वाच्यमित्यर्थकत्वात् । उपमेयोपमायां च स्वप्रतियोगि-

१. 'निस्तारः'.

एवं च—

'त्वदाननमधीराक्षमाविर्दशनदीधिति ।
भ्रमद्भृङ्गमिवालक्ष्यकेसरं भाति पङ्कजम् ॥'

इति विशिष्टोपमाक्षिप्तविशेषणोपमायामव्याप्तिः, 'शस्त्री श्यामा' इति वाचकलुप्तायाम्, 'चन्द्रसुहृन्मुखम्' इति साम्यलक्षकपदवदुपमायां च व्याप्तिः—इति यदुक्तम्। तदपि न सत्। भृङ्गनेत्रादीनां बिम्बप्रतिबिम्बभावापन्नतयाभेदस्यैव विवक्षिततया तदुपमाया अविवक्षितत्वात् प्रवाच्यपदस्य व्यञ्जनाभिन्नवृत्तिविषयत्वस्य विवक्षिततया दोषद्वयस्याभावाच्च।

यदपि—साम्यं विधेयतया वाच्यमुच्यते, अनुवाद्यतया वा। आद्ये—

'स कर्षन्महतीं सेनां पूर्वसागरगामिनीम् ।
बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः ॥'

इत्यादावेव लक्षणं स्यात्।

'स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा ।
अहितानिलोद्धूतैस्तर्जयन्निव केतुभिः ॥'

इत्यादौ न स्यात्। अन्त्ये—व्यतिरेकालंकारे

'मुखेन निष्कलङ्केन न समस्तव चन्द्रमाः ।'

इत्यादौ निषेधानुवाददतिव्याप्तिः। न च—निषेधाप्रतियोगित्वेन 'वाच्यम् इति वाच्यम्,

'असिमात्रसहायोऽपि प्रभूतारिपराभवे ।
नैवान्यतुच्छजनवत्सगर्वोऽयं महाधृतिः ॥'

---

कत्वेनापि वाच्यत्वादनतिव्याप्तेः। उपमायां तु स्वप्रतियोगिकत्वस्यार्थादवगाहनेऽपि तस्य वाच्यत्वविरहेणान्यमात्रप्रतियोगिकत्वेन वाच्यत्वसत्वात्। एवमन्यदप्यूह्यम्। तद्वल्गुनेत्यस्य लक्ष्यत्वेऽभियुक्तसंमतिमाह—अत एवेति। स कर्षन्निति। बभाविति भानरूपसामान्यधर्मस्यात्र विधेयत्वात्साम्यस्य च साधारणधर्मरूपत्वादित्यर्थः। स ययाविति। ययाविति गमनस्यैव विधेयत्वादिन्द्रतुल्य इति साम्यस्यानुवाद्यकोटिप्रविष्टत्वादित्यर्थः। अनुवादादिति। प्रतियोगिनं विना तन्निषेधस्याशक्यत्वान्निषेधाप्रतियोगित्वेनेति। न समस्तव चन्द्रमा इत्यत्र तु साम्यस्य निषेध्य-

१. 'विशेषणीयम्' इति चित्रमीमांसा.

इति व्यतिरेके तथाप्यतिव्याप्तेः। न च—निषेधप्रतियोगिकोट्यनुप्रविष्टत्वेन निषेध्यम्—इति वाच्यम्,

'वृथा चरसि किं भृङ्ग तत्र तत्र वनान्तरे।
मालतीसदृशीं क्वापि भ्रमन्नपि न लप्स्यसे॥'

इत्युपमानलुप्तायामतिव्याप्तिः, तत्र सदृशीलाभनिषेधे सादृश्यस्यापि प्रतियोगिकोटिनिविष्टत्वात्—इति। तदप्यसत्। 'स्वाभावप्रयोजकाभावप्रतियोगिकोट्यप्रविष्टत्वे सति' इति विशेषणात्। स्वपदं सादृश्यपरम्। सदृशीलाभनिषेधस्य च न सादृश्याभावप्रयोजकत्वमिति नातिव्याप्तिः। सगर्वत्वनिषेधस्य च तत्र तुच्छसादृश्याभावप्रयोजकत्वमेवेति न व्यभिचारः। एतेन दीक्षितानुयायिनो **रसगङ्गाधरकृतो**ऽपि निरस्ताः। इत्यलं विचारान्तरेण।

**सरस्वतीकण्ठाभरणे** तु—

'प्रसिद्धेरनुरोधेन यः परस्परमर्थयोः।
भूयोऽवयवसामान्ययोगः सेहोपमा मता॥'

इति। तत्रापि दीक्षिता आहुः—

'ससङ्गुरश्चक्षुण्णानामेलानामुत्पतिष्णवः।
तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः॥'

इत्यादिगुणक्रियादीनां परस्परसाम्यवर्णनात्मिकायाम्,

'उद्गर्भहूणरमणीरमणोपमर्द-
भुग्नोन्नतस्तननिवेशसमं[1] हिमांशोः।

---

निषेधप्रतियोगित्वमेवेति नातिव्याप्तिः। तथा च विधेयत्वमनुवाद्यत्वं वा किमपि न विवक्षणीयम्, किं त्वनिषेध्यत्वमेव, तेन नातिव्याप्तिरव्याप्तिर्वेत्यर्थः। **व्यतिरेक इति**। अन्यतुच्छजनवत्सगर्वो नास्तीत्यत्र सगर्वत्वस्यैव निषेधप्रतियोगितया वत्यर्थसादृश्यस्य निषेधप्रतियोगित्वाभावादतिव्याप्तिरित्यर्थः। **निषेधप्रतियोगिकोटीति**। उक्तस्थले च सादृश्यस्य निषेधाभावेऽपि अन्यतुच्छप्रतियोगिकसादृश्याधिकरणसगर्वत्वनिषेधेन सादृश्यस्य निषेधप्रतियोगिकोटावनुप्रवेशोऽस्त्येवेति नातिव्याप्तिरित्यर्थः। **न सादृश्याभावेति**। अलाभेऽपि वस्तुनः सत्वादित्यर्थः। **तुच्छसादृश्येति**। धर्मनिषेधे तत्प्रयुक्तसादृश्यनिषेधस्यार्थसिद्धत्वादित्यर्थः। **गुणक्रियादीनामिति**। तेषां निरवयव-

---

१. 'हिमं'.

बिम्बं कठोरबिसकाण्डकडारगौरै-
र्विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति ॥'

'सद्योमुण्डितमत्तहूणचिबुकप्रस्पर्धिनारङ्गकम्'

इत्यादौ प्रसिद्धिरहितोपमायामव्याप्तिः—'। तदप्यापाततः, सामान्यपदस् धर्ममात्रपरत्वाद्गुणादीनामित्याद्यदोषाभावात्। 'प्रसिद्धेरनुरोधेन' इत्यस् च 'यदुपमायां यस्य प्रतियोगित्वानुयोगित्वादिकं प्रसिद्धं तदनतिक्रमेण इत्यर्थः। अतो न प्रतीपादौ व्यभिचारः। 'उद्गर्भ—' इत्यादौ न हूण रमणीस्तनादिकमप्रसिद्धम्, किं तु तदुपमानत्वमात्रम्। तत्कल्पनेऽपि प्रसि द्ध्यनतिक्रमस्य सत्त्वान्न दोषः। नहि तेषामुपमानत्वाभावोऽपि प्रसिद्धं येन तद्विरोधः स्यात्।

यदपि—"तैः स्वयं लक्षणमुक्तम्,

'व्यापार उपमानाख्यो भवेद्यदि विवक्षितः।
क्रियानिष्पत्तिपर्यन्तमुपमालंकृतिस्तु सा॥' इति।

उपमितिक्रियानिष्पादको व्यापार उपमितिक्रियानिष्पत्तिपर्यन्तं विव क्षितश्चेत्, उपमालंकारः। व्यतिरेके तु साक्षात्परम्परया वोपमितिक्रि

---

त्वेन यवगोधूमादिवदवयवसाम्याभावादित्यर्थः। **प्रसिद्धिरहितेति**। तथा च तत्स प्रसिद्धेरनुरोधेनेत्यंशो नास्तीति भावः। **सामान्यपदस्येति**। अवयवसामान्यपदस्ये त्यर्थः। **धर्ममात्रेति**। ततश्च तत्रापि तत्संभवान्नाव्याप्तिः। यद्यपि गुणादीनां जन्य धर्मा(ना)श्रयत्वाद्धर्मान्तरं तादृशं तत्र नास्त्येव, तथापि तद्वृत्तिवैजात्यमादायैव त साम्यनिर्वाह इति भावः। द्वितीयदोषमुद्धरति—**प्रसिद्धेरिति**। प्रतियोगित्वाद एव प्रसिद्ध्यनुरोध इत्यस्य फलमप्याह—**अतो नेति**। धर्म्यंशप्रसिद्धिपरत्वे तु तत्रा तत्सत्त्वाद्व्यभिचारो दुर्वारः स्यात्। उपमानाख्य इत्यस्य व्याख्यानमाह—**उपमिति क्रियेत्यादि**। क्रियानिष्पत्तीत्यत्रत्यं क्रियापदं व्याचष्टे—**उपमितीति**। व्यभिचा वारणप्रकारमाह—**व्यतिरेके त्विति**। **साक्षादिति**। 'मुखेन निष्कलङ्केन न स स्तव चन्द्रमाः' इत्यत्र साम्यस्यैव निषेधात्। **परम्परयेति**। 'नैवान्यतुच्छज वत्सगर्वोऽयं महाद्युतिः' इत्यत्र सगर्वत्वनिषेधेनार्थतः सादृश्याभावपर्यवसानात्

१. 'वा सादृश्यवर्णनायाः'

प्राया अतिपत्तेर्न व्यभिचारः । अनन्वयेऽपि स्वेतरोपमाननिषेधे वस्तुतोऽनुपमत्व एव तात्पर्यात्तदनिष्पत्तेः । तदुक्तं भामहेन—

'यत्र तेनैव तस्य स्यादुपमानोपमेयता ।
असादृश्यविवक्षातो वदन्ति तमनन्वयम् ॥'

प्रतीपेऽपि—

'आकर्णय सरोजाक्षि वचनीयमिदं भुवि ।
शशाङ्कस्तव वक्त्रेण पामरैरुपमीयते ॥'

इत्यादौ यत्र तदनिष्पत्तिर्न तत्र व्यभिचारः । यत्र तु—

'गर्वसंभाव्यमिमं लोचनयुगलेन किं वहसि भद्रे ।
सन्ति सदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि ॥'

इत्यादौ निष्पत्तिः, तत्रोपमैवेति न तदतिव्याप्तिः । उपमेयोपमायामपि लक्ष्यत्वात्तथैव । न च—सादृश्यवर्णनाया अविशेषात्कथमनन्वयप्रतीपादिवैषम्यम्—इति वाच्यम् । प्रतीपादावुपमितिक्रियाया निष्पत्तेः, अनन्वये च तदनिष्पत्तेः, उपमापदप्रवृत्तिनिमित्तसत्त्वासत्त्वयोरेव वैषम्यप्रयोजकत्वात् । अत एव काव्यप्रकाशादावनन्वयव्यावर्तकमेव विशेषणं दत्तम्, न तु प्रतीपादिव्यावर्तकमपि—" इति ।

अत्र न्यायपञ्चाननादयः—"उपमितिक्रिया नाम सौधर्म्यनिष्पत्तिः । सा चानन्वयेऽप्यस्त्येव । भेदगर्भतत्प्रतीतिश्चेत्, भेदनिवेशेन तद्वारणमेव किंमूलकम् । भेदगर्भतज्ज्ञानादेव विजातीयोपमितिक्रियानिष्पत्तिः—इति चेत्, 'गोसदृशो गवयः, कुमुदमिव मुखम्' इत्यादावपि स्यात् । विलक्षणसाधर्म्यज्ञानात्—इति चेत्, अनन्वयेऽप्यस्तु । नच—तत्र निरुपमत्वप्रती-

---

वस्तुत इति । स्वसादृश्येन तथानुत्कर्षात् । अनुपमत्वतात्पर्यांशे प्राचीनसंमतिमाह—तदुक्तमिति । प्रतीपालंकारे द्वितीयभेदे क्वचित्सादृश्यनिष्पत्तिः क्वचिच्च नेति वक्ष्यते । तत्रान्त्ये लक्षणाभावादेवातिव्याप्तिपरिहारमाह—आकर्णयेति । आद्ये लक्ष्यत्वादेव नातिव्याप्तिरित्याह—यत्र त्विति । तथैवेति । नातिव्याप्तिरित्यर्थः । एवं चित्रमीमांसोक्तदीक्षितलक्षणं सव्याख्यानमुपन्यस्य तत्र जयरामभट्टाचार्योक्तदोषमुपन्यस्यति—अत्र न्यायेति । स्वेतरसाधर्म्यविरहस्य स्वसाधर्म्यस्य च युगपत्प्रतीतिसंभवेऽपि आद्यस्यैव

---

१. 'तत्तथैव'. २. 'साम्य'.

तेनैवम्—' इति वाच्यम् । स्वेतरसाधर्म्यविरहरूपस्य निरुपमत्वस्य स्वसाधर्म्यस्य च युगपत्प्रतीत्यविरोधात् । किंच—उपमितिक्रियावैजात्ये मानाभावः । तद्वैजात्यप्रयोजकाद्रसवैजात्यस्यैवोचितत्वात् । नहि रूपकोत्प्रेक्षादौ क्रियावैजात्यमलंकारत्वप्रयोजकम्—" इति प्राहुः ।

रसगङ्गाधरकृतस्तु—"वर्णनस्य विलक्षणशब्दात्मकस्य विलक्षणज्ञानात्मकस्य वा शब्दवाच्यताविरहेणार्थालंकारताबाधः । वर्णनस्य सर्वथैवाव्यङ्ग्यत्वात् 'स्वनिषेधापर्यवसायि अदुष्टव्यङ्ग्यसादृश्यवर्णनमुपमा' इति तदुक्तफलितलक्षणेऽव्यङ्ग्यत्वविशेषणं व्यर्थमित्यर्थः । यदि तु—वर्णनविषयीभूतं तादृशसाधर्म्यमुपमा—इत्युच्यते, तदापि 'गौरिव गवयः' इत्यादौ 'कालोपसर्जने च तुल्यम्' इति पाणिनिसूत्रोक्तसादृश्यादौ चा

---

चमत्कारजनकत्वादलंकारत्वम्, नान्त्यस्येत्यपरितोषादाह—**किं चेति** । **वैजात्य इति** भेदगर्भसादृश्यज्ञानजन्यतावच्छेदकत्वेन तदभिमत इत्यर्थः । ननु ततो रसवैजात्यस्योपमितिक्रियावैजात्यस्य वा कल्पने विनिगमकाभाव इत्यत आह—**नहीति** । तथा चालंकारत्वानुपपादकक्रियावैजात्यस्य कल्पनानुपयोगाद्रसवैजात्यकल्पनमेवार्हम्, रसस्य सर्वप्रधानतया तदङ्गोपकारापेक्षया प्रधानोपकारस्यैवोचितत्वादिति भावः । घट इव पटो द्रव्यमित्यादिवारणाय **विलक्षणशब्देति** । **ज्ञानेति** । तादृशशब्दप्रयोगहेतुभूतेत्यर्थः । उभयत्रापि वैलक्षण्यं चमत्कारजनकतावच्छेदकत्वेनानुभवसिद्धम् । **बाध इति** । वर्णनस्यैव दीक्षितोक्तरीत्या विशेष्यत्वात्तस्य चार्थालंकारत्वानुपपत्तेः । शब्दव्यापारगम्यस्येवार्थत्वादिति भावः । न च शब्दज्ञानयोरपि तत्पदवाच्यत्वमस्त्येवेति वाच्यम् । तदुपमाप्रतिपादकपदबोध्यत्वविरहात् । **सर्वथैवेति** । वाच्यायां व्यङ्ग्यायां चोपमायामित्यर्थः । **अव्यङ्ग्यत्वादिति** । व्यर्थमिति वक्ष्यमाणे हेतुत्वेनान्वयः । शब्दस्य वक्तृनिष्ठज्ञानस्य वा तद्व्यङ्ग्यत्वविरहात् । **अदुष्टव्यङ्ग्येति** । नञर्थस्योभयत्रान्वयः । उक्तदीक्षितकारिकायामव्यङ्ग्यत्वविशेषणाभावादाह—**फलितेति** । कारिकाव्याख्याने दीक्षितैस्तथा फक्किकालिखनादित्यर्थः । **व्यर्थमिति** । वाच्योपमाव्यावृत्त्यर्थं ह्यव्यङ्ग्येत्युक्तम् । वर्णनस्यैवोपमात्वे तु तस्य सर्वदाप्यवाच्यत्वादतिप्रसक्तेरेवाभावात्तद्वारकमव्यङ्ग्यत्वविशेषणं व्यर्थमित्यर्थः । विशेषणविशेष्यभावव्यत्यासेन लक्षणविवक्षायां दोषाभावमाशङ्क्याह—**यदि त्विति** । ननु न देयमेवोपमितिक्रियानिष्पत्तिविशेषणम्, यद्वा चमत्कारजनकवर्णनविषयीभूतं सादृश्यमुपमितिक्रियानिष्पत्ति-

---

1. 'जात्यप्र'. 2. 'स्य'.

तिव्याप्तिः। न च—'चमत्कारिविषयककविव्यापारस्यैव वर्णनपदार्थत्वात्, प्रकृते च चमत्काराभावान्न दोषः—इति वाच्यम्। चमत्कारित्वस्य निवेशे उपमितिनिष्पत्तिविशेषणवैयर्थ्यात्। अनिष्पन्नेनापाततः प्रतीयमानेन सादृश्येन चमत्कारानुपपत्तेः। किं च।

'स्तनाभोगे पतन्भाति कपोलात्कुटिलोऽलकः।
शशाङ्कबिम्बतो मेरौ लम्बमान इवोरगः॥'

इत्यादौ मुख्यवाक्यार्थभूतत्वेनानलंकारभूतायामुपमायामतिव्याप्तिः, उपमितिक्रियानिष्पत्त्यादिसत्त्वात्। नच—इयं लक्ष्यैव—इति वाच्यम्, ध्वन्यमानोपमावारणप्रयासवैयर्थ्यात्। नह्यत्रोपमानोपमेयसादृश्यादुपमास्वरूपादतिरिक्तो वाक्यार्थः, येनोपमानमलंकुर्यात्। किंच—सादृश्योपादानमनर्थकम्, 'उपमितिक्रियानिष्पतिमद्वर्णनम्' इत्यत एवेष्टसिद्धेः—" इत्याहुः।

तत्रेदं चिन्त्यम्—'स्तनाभोगः–' इत्युत्प्रेक्षैव, उक्तविधोरगस्याप्रसिद्धेः। यत्तु—कविकल्पितोपमाया निर्विषयत्वापत्तिः—इति, तन्न, उपमानतावच्छेदकविशिष्टोपमानत्वाभिमतस्य प्रसिद्धौ तदुपमानत्वकल्पनस्य तद्विषयत्वात्। अत एव सर्वत्र 'ऊद्गर्भहूणरमणी–' इत्यादिकमेव कल्पितोपमोदाहरणं लिखितम्। अन्यथा 'न नित्यमस्मिन्परिपूर्णता–' इत्यादीनामप्युत्प्रेक्षात्वभङ्गापत्तेः। अभ्युपेत्यापि ब्रूमः—"अलंकार्यवाक्यार्थस्याभावादनलंकारत्वम्–' इत्ययुक्तम्। नहि 'वाक्यार्थ एवालंकार्यः' इति नियमे प्रमाणमस्ति। सादृश्येन मुखस्यैवोत्कर्षात्तस्य विभावतया

---

मत्सादृश्यवर्णनम् वा उपमेति लक्षणद्वये तात्पर्यमित्यस्वरसादाह—**किं चेति**। **मुख्यवाक्यार्थेति**। क्रियाया एव वाक्यार्थे मुख्यविशेष्यत्वात् भानरूपसामान्यधर्मात्मकक्रियाया एवात्रोपमात्वाद्वाक्यार्थे तस्याः प्राधान्यमित्यर्थः। **अनलंकारेति**। परोत्कर्षाधायकस्यैवालंकारत्वात्प्राधानस्य च तदभावादित्यर्थः। **वैयर्थ्यादिति**। व्यङ्ग्योपमाया अलक्ष्यत्वे हि प्राधान्यमेव बीजम्। तस्य च वाक्यार्थभूतोपमायामपि सत्वेन वैषम्यस्यायुक्तत्वात्। पदार्थोत्कर्षकत्वेनैवालंकारत्वमित्यत्र बीजमाह—**तस्य**

---

१. 'नापि'।

तदुत्कर्षेणैव रसोत्कर्षात् । अत एव 'यत्रान्यसादृश्यप्रयुक्तोपमेयोत्कर्षविवक्षा, तत्रोपमा' इति न्यायपञ्चाननादयः । किं चैवम्—

'स्वप्नेषु समरेषु त्वां विजयश्रीर्न मुञ्चति ।
प्रभावप्रणतं कान्तं स्वाधीनपतिका यथा ॥'

इति काव्यप्रकाशकारोक्तमप्युदाहरणमसंगतं स्यात् । एवम्—

'हंसीव कृ[1]ष्ण ते कीर्तिः स्वर्गङ्गामवगाहते ।'

इत्याद्यपि । किं बहुना—

'विभाति वदनं तस्या नासाग्रस्थि[2]तमौक्तिकम् ।
अलक्षितबुधाश्लेषं राकेन्दोरिव मण्डलम् ॥'

इति त्वदीयोपमोदाहरणमप्यनुपपन्नं स्यादिति क्रमेण सकलमाकुलं स्यात्, तदाहुः—

'बालस्य दीपकलिकाक्रीडयेव नगरदाहः' इति ।

अथ—'प्राचीनानां व्यङ्ग्योपमाव्यावर्तकविशेषणानुपादानात्प्रधानभूतोपमाया अप्यलंकार[3]त्वं स्वीकर्तुमुचितमिति नानुपपत्तिः, दीक्षितानां तु

---

**विभावतयेति** । रसोत्कर्षो ह्यलंकारेण न साक्षादाधीयते, न वा द्वारान्तरेण, किं तु रसाङ्गभूतोत्कर्षाधानद्वारेणैव तदङ्गभूताश्च विभावानुभावव्यभिचारिण एव, तत्समूहालम्बनत्वाद्रसस्य । तदुक्तं भरतेन—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति । ततश्च विभावादिभूतस्य मुखादेरुपमेयोत्कर्षजनने परम्परया रसोत्कर्षः, अङ्गोत्कर्षेण प्रधानोत्कर्षस्य युक्तत्वात् । 'उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् । हारादिवदलंकारास्तेऽनुप्रासोपमादयः ॥' इति । अर्थोपकारद्वारा रसोपकारकत्वस्यैवार्थालंकारलक्षणस्योक्तत्वादित्यर्थः । तत्रैव प्रामाणिकसंमतिमाह—**अत एवेति** । वाक्यार्थभूतोपमाया अनलंकारत्वे ग्रन्थविरोधमाह—**किं चैवमिति** । काव्यप्रकाशोदाहरणविरोधमुक्त्वा कुवलयानन्दोदाहरणविरोधमप्याह—**एवं हंसीवेति** । ग्रन्थान्तरविरोधमुक्त्वा रसगङ्गाधरोक्ततदीयोदाहरणस्यैव विरोधमाह—**किं बहुनेति** । दीक्षितमतादेषां विशेषमाशङ्कते—**अथ प्राचीनेति** । स्पष्टमन्यत् । यदपि चित्रमीमांसायां प्रतीपस्योपमालक्षणलक्ष्यत्वे प्राचीनसंमतिर्दर्शिता । यत्काव्यप्रकाशे अनन्वयव्यावर्तनाय भेदरूपमेव विशेषणं दत्तम्, न तु प्रतीपव्यावर्तकमपीति । तच्चिन्त्यम्

---

१. 'धवल'. २. 'स्थिति'. ३. 'रत्वमुचितम्'.

व्यङ्ग्योपमाया अलंकारत्वमसंमन्यमानां मुख्यवाक्यार्थभूतोपमाया[1] अपि नालंकारत्वं स्वीकर्तुमर्हम् । उभयोः प्राधान्यविशेषणत्ववैषम्ये प्रमाणाभावात्—' इति चेत्, न, 'मुख्यव्यङ्ग्यस्यानलंकारतयैव धर्मिग्राहकमानेन

---

तद्व्यावृत्तेरप्यवश्यं तदभिमतत्वात् । अन्यथा प्रतीपस्य पृथग्व्युत्पादनानुपपत्तेः । यत्तु तैरुक्तम्—'उपमेयोपमादेरुपमान्तर्गतत्वेऽपि व्यङ्ग्यादिकृतवैचित्र्यविशेषेण पृथग्ग्रहणं न विरुध्यते, परिणामस्य रूपकान्तर्भावेऽपि तस्य पृथगुपादानवदिति । तदप्यसत् । परिणामस्य पृथगुपादानस्य तावत्काव्यप्रकाशकारं प्रति दृष्टान्तयितुमशक्यत्वात् । तेन परिणामस्यालंकारत्वानभ्युपगमात् । ननु परिणामस्यालंकारत्वानभ्युगमादित्ययुक्तम्, पार्थक्यानङ्गीकारेऽपि उपमाद्यन्तर्भावेन तस्यालंकारत्वाभ्युपगमात् । सत्यं अलंकारान्तरत्वानभ्युपगमादित्यर्थे तात्पर्यात् । एवं परिणामस्य पृथगुपादानं काव्यप्रकाशकृतो नास्तीति साध्यवैकल्यं दृष्टान्तस्येति । किं च चित्रमीमांसोक्तलक्षणस्योपमेयोपमालंकारोऽपि लक्ष्य इति तावदसंगतमेव, तस्य तृतीयव्यवच्छेद एव तात्पर्यमिति तत्रैव व्यवस्थापितत्वात् क्रियानिष्पत्तिपर्यन्तं विवक्षितस्य सादृश्यस्य च तैरुपमालक्षणत्वाङ्गीकारात् । कथं हि स्वातिरिक्तोपमानव्यवच्छेदफलकोऽनन्वयो लक्ष्यकक्षाबहिर्भूतः, परस्परातिरिक्तोपमानव्यवच्छेदफलकस्तु उपमेयोपमालंकारो लक्ष्यान्तर्भूत इति वैषम्यं स्यात् । आद्ये मुखे सादृश्यप्रतीतेः, पर्यन्ते त्वन्योपमानव्यवच्छेदप्रतीतेरुभयत्राप्यविशेषात् । व्यवच्छेद्यनिष्ठैक्यानैक्ययोश्चाप्रयोजकत्वात् । यदपि तत्राभिहितम् 'उपमानोपमेयत्वयोग्ययोरर्थयोर्द्वयोः । हृद्यं सा धर्म्यमुपमेत्युच्यते काव्यवेदिभिः॥' इति प्राचीनलक्षणे द्वयोरित्यनेनान्वये व्यभिचारवारणेऽपि उपमानस्योपमेयत्वकल्पनात्मके प्रतीपे द्वयोः पर्यायेणोपमेयत्वकल्पनात्मिकायां उपमेयोपमायां चातिव्याप्तिः, तयोः सादृश्यवर्णनसत्त्वात् । उपमात्वेन संग्राह्यत्वे तथैवानन्वयोऽपि संग्राह्यः स्यादिति तस्य बहिष्करणमनर्हम् । इति । तदप्यसत् । उपमानोपमेयत्वयोग्ययोरिति विशेषणस्य सरस्वतीकण्ठाभरणीयलक्षणोक्तरीत्या प्रसिद्ध्यनुरोधार्थकत्वात्प्रतीपोपमेयोपमयोश्च प्रकृतप्रतियोगिकसादृश्यस्य अप्रकृताश्रयत्वेन वर्णनादुक्तदोषासंभवात् । एतेन काव्यप्रकाशीये 'साधर्म्यमुपमा भेदे' इति लक्षणेऽनन्वयवारकं भेदग्रहणं व्यर्थम्, प्रतीपादावतिव्याप्तेः । तस्य संग्राह्यत्वेऽनन्वयस्यापि तथात्वापत्तेरित्यपि परास्तम्, प्रकृतोत्कर्षप्रयोजकत्वस्याप्यलंकारसामान्यलक्षणगतस्यात्रान्वयात् । प्रतीपे चोपमानतिरस्कारप्रयुक्त एवोत्कर्षो मुखादेः । उपमेयोपमायामपि उभयोः परस्परातिरिक्तोपमानव्यवच्छेदप्रयुक्त एवातिशयः, न तु सादृश्यप्रयुक्त इति दोषानवकाशात् । नन्वेवमनन्वयवारकं भेदपदमपि व्यर्थम्, अनन्वये स्वेतरोपमानव्यवच्छेदस्यैव चमत्कारप्रयोजकतया सादृश्यस्य तथात्वाभावादिति चेत्, स-

---

१. 'वाच्यार्थ'।

प्रसिद्धेः, वाक्यार्थस्य च रसाद्यङ्गतया सर्वाभ्युपगतत्वात्' इति बीजसत्त्व
दित्यादि स्वयमूह्यमिति दिक्।

एतां प्रथमं द्विधा विभजते—

**वाचकधर्मसमत्वप्रतियोग्यनुयोगिनां ग्रहे पूर्णा ॥ ८ ॥**

यथा—'चन्द्र इव मुखं रमणीयम्' इत्यत्र। इह हि—'इवपदमुपमा वाचकम्, रमणीयत्वं साधारणधर्मः, चन्द्रः साम्यप्रतियोगी, मुखं तदनु योगि', इति चतुर्णामप्युपादानम्। अत इयं पूर्णा। तत्र साधारणधर्मस्य क्वचिदनुगामितया प्रयोगः।

यथा—

'उक्खअदुमं व सेलं हिमहअकमलाअरं व लच्छिविमुक्कम्।
पीअमइरं व चसअं बहुलपओसं व मुद्धअन्दविरहिअम् ॥'

उत्खातद्रुमत्वमत्र समुद्रशैलोभयानुगतम्।

---

त्यम्। व्यभिचारवारणमात्रे तात्पर्यात्। यद्वा भिद्यते उत्कर्षवत्तया बोध्यत इति व्यु
त्पत्त्या प्रकृतस्य मुखादेरुपादानम्। ततश्च प्रकृतमात्रानुयोगिकत्वेन प्रतीयमानं सा
म्यमुपमेत्यर्थः। प्रकृतोत्कर्षप्रयोजकत्वं च सामान्यत एव प्राप्तम्। प्रतीपे च प्रकृता
योगिकत्वेन साम्यस्यानवभासात्। उपमेयोपमायां च तदन्यचन्द्राद्यनुयोगिकत्वेना
तस्य प्रत्ययात्। प्रकृतमात्रानुयोगिकत्वेन भानमुभयत्रापि नास्तीति न व्यभिचारः
अनन्वये व्यभिचारवारणं तु साधर्म्यघटकभेदपदार्थेनैव बोध्यम्। नन्वेवं भेदग्रह
मनन्वयव्यवच्छेदायेति तद्ग्रन्थो न संगच्छत इति चेन्न, अनन्वयपदेन न विद्यते लक्षणस्य
न्वयो यत्रेति व्युत्पत्त्या लक्ष्यतावच्छेदकावच्छिन्नत्वानभिमतेत्यर्थकतया प्रतीपादि
त्वेन व्याख्यानात्। अथवास्तु यथोक्तग्रन्थो यथाश्रुत एव, किं तु प्रकृतान्यानुयोगि
त्वेनाप्रतीयमानत्वं प्रतीपादिवारणाय पृथगेव विशेषणं देयम्। इत्यादिसर्वमभिसंधायाह—
**इत्यादीति**। संक्षेपः। **प्रथममिति**। चतुष्टयघटितपूर्णोपमाव्युत्पादने तदन्यतमलो
पिन्या लुप्तायाः सुग्रहत्वात्। तथा च लुप्तोपमाप्रयोजकलोपप्रतियोगिघटितत्वे
पूर्वं तद्व्युत्पादने लाघवमित्यर्थः। **उक्ख इति**। सेतुकाव्ये समुद्रवर्णनम्। 'उ
त्खातद्रुममिव शैलं हिमहतकमलाकरमिव लक्ष्मीविमुक्तम्। पीतमदिरमिव चषकं बहु
लप्रदोषमिव मुग्धचन्द्रविरहितम् ॥' 'अथ प्रेक्षते रघुतनयः' इत्यादिस्कन्धकस्थं समु
मिति पदेनैषां विशेषणानामभेदान्वयः। बहुलः कृष्णपक्षः। तत्रापि रात्रौ भागान्तरा

१. 'गामिप्रयोगः'.

स्यादेतत्—अत्रैकरूपेण धर्मस्योभयान्वयाभावात्कथमनुगामित्वम्। एवम्—

'वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥'

इत्यत्रापि। अत्र हि—वागर्थयोर्वाच्यवाचकभावरूपः संबन्धः, पार्वतीपरमेश्वरयोस्तु संयोगरूपः, इति संबन्धभेदात्[1]। नच—संबन्धत्वेन तत्—इति वाच्यम्, 'येन रूपेण यस्य धर्मस्योपमानगामित्वम्, तेनैव रूपेणोपमेयगामित्वम्' इत्यनुगामित्वलक्षणमवश्यं वाच्यम्। अन्यथोपचारस्य विधान्तरत्वोक्त्यनुपपत्तेः।

'उद्भवन्तमुदितार्चिषं ततो भानुमन्तमिव हेमभूभृतः।
पङ्कजैरिव कुमारमीक्षणैर्विस्मयेन विकचैः पपुर्जनाः॥'

इत्यत्र विकचत्वं पुष्पधर्म ईक्षणेषूपचरितः। न च तत्संभवति। मुख्यलक्ष्योभयसाधारणविकचत्वस्योभयत्रापि सत्त्वात्। तदर्थं च पुष्पेषु विकचत्वं विजातीयपत्रविभागवत्वम्, नेत्रेषु चोपचारान्निमेषराहित्यं[2] वाच्यम्, अत एकेन रूपेण विकचत्वमुभयत्र नास्तीति तद्भेदो वाच्यः। एवं 'संपृक्तौ' इत्यत्रापि येन रूपेण संबन्धस्य वागर्थयोर्बोधः, न तद्रूपेण पार्वतीपरमेश्वरयोरपीति कथमनुगामित्वसंभवः। अथ "संबन्धत्वं 'संबन्धौ' इति धीसाक्षिकः संयोगादिसाधारणो धर्मविशेषः। तथा च पर्यवसितधर्मयोर्यत्रैकधर्मावच्छिन्नत्वं स एवानुगामित्वपदार्थः। अस्ति च वाच्यवाच-

---

च्छेदेन चन्द्रसत्वात्—प्रदोषेति। शुक्लपक्षे प्रदोषेऽवश्यं चन्द्रसत्वात्—बहुलेति। पारिजातलक्ष्मीमदिराचन्द्राणां समुद्रान्मन्थनेन निर्गमो वृत्त इत्येवं वर्णनम्। अनुगामित्वनिर्वचनाय शङ्कामवतारयति—**स्यादेतदिति**। एकत्रोत्खातत्वं विजातीयभूसंयोगरहितत्वं समुद्रपक्षे चोद्धतत्वमिति विशेषात्। चित्रमीमांसोदाहरणमपि विचारयितुमुपन्यस्यति—**एवं वागर्थाविति**। सेतुश्लोके भिन्नधर्मनिबन्धना मालोपमा, अत्र तु शुद्धोपमेति भेदः। अनुगामित्वं तूभयत्र तुल्यम्। ननु विकचैरित्यत्र मिथःसंयोगजनकक्रियाराहित्यस्योभयसाधारणत्वेऽपि तस्य शाब्दबोधे प्रकारत्वाभावान्न दोषः, इत्याशङ्क्य

---

१. 'संबन्धतावच्छेदकभेदात्कथमनुगामित्वम्'. २. 'च निमेष'.

कभावसंयोगसंबन्धयोरपि संबन्धत्वावच्छिन्नत्वम्—' इति चेत्, त 'विकचैः' इत्यत्रापि मिथःसंयोगजनकक्रियाराहित्यमुभयत्रा[1]प्यविशि मिति तद्दोषतादवस्थ्यम् । तत्र संयोगस्य पत्रपक्ष्मादिघटिततया भेदः इ चेत् । संबन्धस्यापि विभागादिनिरूप्यतया तदविशेषात् । किं च—अ गामिधर्मस्य कीदृशेनोभयसाधारणधर्मेणावच्छिन्नत्वं विवक्षितम् । न ता द्येन केनचिदेव, प्रमेयत्वादिना सर्वधर्माणां साजात्यात्प्रकारान्तराणां लयापत्तेः । नापि द्रव्यत्वादिना तत्तद्धर्मेण, विम्बप्रतिविम्बभावस्थले द्र त्वस्य हारनिर्झरोभयवृत्तितया तत्राप्यनुगामित्वापत्तेः । नापि स्वजन्यश ब्दबोधप्रकारीभूतधर्मेण, वस्तुप्रतिवस्तुभावस्थलेऽप्यनुगामित्वापत्तेः ।

'यान्त्या मुहुर्वलितकंधरमाननं त-
दुद्वृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥'

इत्यत्रापि वलनोद्वर्तनयोरभेदेन स्वजन्यशाब्दबोधप्रकारीभूतधर्मावच्छि त्वात् । नाप्येकपदजन्यबोधप्रकारीभूतधर्मेण, तद्दोषानपसरणात् । नच— 'भिन्नवृत्त्येकपदजन्यप्रकारीभूतधर्मेण उक्तस्थले तु वलनोद्वर्तनयोरभे वलनत्वस्य न भिन्नवृत्तित्वम्, भिन्नत्वं च स्वावच्छिन्नप्रतियोगिताकभे

---

तत्रापि दोषमभिधित्समानस्तं पक्षमवतारयितुं विकल्पमुखेनाह—**किं चेत्यादि** **प्रकारान्तराणामिति** । उपचारबिम्बप्रतिबिम्बभावादीनां वक्ष्यमाणानामित्यर्थः **विलयेति** । पृथक्परिगणनानुपपत्तेरित्यर्थः । **तद्दोषानपेति** । वलनत्वस्यैकपद न्यबोधप्रकारत्वसत्त्वात् इत्यर्थः । भिन्नवृत्तीति विशेषणादुक्तव्यभिचारवारणं दर्शयति— **उक्तस्थले त्विति** । **अभेदेनेति** । वलितोद्वृत्तपदाभ्यां बिम्बप्रतिबिम्बभावापन्न धरावृन्तोभयविशेषणत्वेन एकस्यैव पदार्थस्योपस्थापनात् । अन्यथात्र वस्तुप्रतिवस्तु भाव इति दुर्लभं स्यादिति भावः । ननु वलनघटोभयभेदस्य वलनेऽपि सत्वाद्दोषताद स्थ्यमेवेत्यत आह—**भिन्नत्वं चेति** । स्वं धर्मतापर्याप्त्यधिकरणं एवं सत्यव्याप्तिरित्याह

1. 'प्यस्तीति'.

वत्वम्। 'वागर्थाविव' इत्यादौ तु वाच्यवाचकभावसंयोगयोर्भेदः, तदुभयत्र च संबन्धत्वम्—' इति वाच्यम्। संयोगादेरपि संबन्धत्वावच्छिन्नप्रतियोगिताकपरस्परप्रतियोगिकभेदविरहात्। भेदप्रतियोगितावच्छेदकसंयोगत्वादेश्चैकपदजन्यबोधप्रकारत्वाभावाच्च। न च—परस्परवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदभेदवत्वे सति तादृशपदजन्यबोधप्रकारीभूतधर्मावच्छिन्नत्वमेव तथा—इति वाच्यम्, तथापि रमणीयत्वाद्यसंग्रहप्रसङ्गात्। अथ—साधारणधर्मवाचकपदजन्यबोधप्रकारीभूतधर्मस्य साधारणधर्मद्वये सत्त्वेऽनुगामित्वमिति विवेकः। 'संपृक्तौ' इत्यत्र च तादृशप्रकारस्य संबन्धत्वस्योभयत्र वृत्तेः। हारादौ तु हारत्वादेर्निर्झरादाववृत्तेर्नातिव्याप्तिः। द्वयत्वं चाविवक्षितम्। अतो यत्रैकरूपेणैव साधारणधर्मपर्यवसानम्, तत्रापि नातिव्याप्तिः। यथा—'उक्खअदुमं व सेलम्' इत्यादौ त्वदुक्तोदाहरणे। न चैवं श्लेषेऽप्यनुगामिधर्मः स्यात्।

'नरसिंह महीपाल सर्वोपरि गणस्तव।
पारावारसमानत्वं दधाति स्वपदच्युतः॥'

इत्यत्र 'स्वपदच्युतपदजन्यबोधप्रकारीभूतधर्मस्याच्युतत्वस्य पदभ्रष्टत्वस्य च प्रत्येकमुभयत्र सत्त्वादिति वाच्यम्।' प्रतीतेरेकपदजन्यत्वस्य वाच्यत्वात् 'स्वपदच्युतः' इत्यत्र प्रतीतेर्भिन्नभिन्नपदजन्यत्वात्। न चैवमपि

---

**संयोगादेरिति**। वाच्यवाचकभावसंयोगयोर्द्वयोरपि संबन्धत्वावच्छिन्नत्वात्सामान्यस्य स्वावच्छिन्नवृत्तिभेदप्रतियोगितावच्छेदकत्वानुपपत्तेरित्यर्थः। **प्रकारत्वाभावादिति**। एतदनुपादाने तु बिम्बप्रतिबिम्बभावादावुक्तातिव्याप्तितादवस्थादित्यर्थः। एवं शाब्दबोधप्रकारीभूतधर्मावच्छिन्नप्रतियोगिताकत्वमेव भेदविशेषणमिति पक्षे अयं दोष उक्तः, अधुना तदप्रकारीभूतेनापि पर्यवसिततद्वृत्तिना धर्मेणावच्छिन्नप्रतियोगिताकत्वमेव भेदविशेषणमित्यत्र दोषाभावमाशङ्कते—**न चेति**। संयोगत्वावच्छिन्नभेदस्य वाच्यवाचकभावे तत्त्वावच्छिन्नभेदस्य च संयोगे सत्त्वात्। शाब्दबोधप्रकारीभूतसंबन्धावच्छिन्नत्वाच्च द्वयोर्दोषाभावः। बिम्बप्रतिबिम्बभावादौ तु विशेषणसत्वेऽपि शाब्दप्रकारीभूतधर्मावच्छिन्नत्वाभावादेव नातिव्याप्तिः। **तथापीति**। चन्द्रमुखवृत्तिरमणीयत्वयो रमणीयत्वावच्छिन्नप्रतियोगिताकभेदविरहात्तत्रानुगामित्वं न स्यादित्यर्थः। **एकपदजन्यत्वस्येति**। प्रतीतिजनकपदे एकत्वविशेषणस्य देयत्वात्। तथा च साधारणधर्मवाचकैकपदजन्यबोधेत्यादि पर्यवसितम्। पदजन्यत्वस्य प्रतीतौ प्रागेवोक्तत्वेन पुनस्तदुक्तौ प्रयो-

'गते तव भ्रातरि वत्स पञ्चतां चिराय नश्चान्द्रमसं कुलं महत् ।
अदृष्टसंतानतया न शोभते वनं हरेः प्राङ्मथनादिवोदधेः ॥'

इत्यत्र संतानपदजन्यबोधप्रकारीभूतयोरपि धर्मयोस्तथात्वेन तत्रत्यश्लेषध- ऽनुगामित्वप्रसङ्गस्य दुर्वारत्वमिति वाच्यम्, तत्र पुत्रपारिजातयोः साध- रण्यपर्यवसानात्पारिजातत्वपुत्रत्वयोश्च सामानाधिकरण्याभावात् इति पु- न च—द्वयत्वस्याविवक्षितत्वोक्तेः कथमेवम्—इति वाच्यम्, यत्र द्वयव- साधारण्यपर्यवसानं तत्र द्वयत्वस्यापि विवक्षितत्वात् । अतो न दोषः—इ- चेत्, मैवम् । 'पीतघट इव गुणवान्रक्तघटः' इत्यत्रानुगामित्वाभावप्रस- सङ्गात् । गुणत्वजातिमनङ्गीकुर्वतां गुणपदाद्रूपत्वरसत्वादिप्रकारेणैवान्व- यबोधात् । रसे रूपत्वस्य रूपे च रसत्वस्याभावात् । वस्तुप्रतिवस्तुभा- वस्थलेऽप्यनुगामित्वप्रसङ्गाच्च । ननु—पर्यवसितसाधारणधर्मयोर्द्वयोर- यत्रोपमान उपमेये च संभवः । यथा रूपरसयोः, तत्र साधारणध- वच्छेदकीभूतयो रूपत्वरसत्वयोर्मिथः सामानाधिकरण्याभावेऽप्यनुगामि- मेव । यत्र तु पर्यवसितसाधारण्ययोर्नोपमानोपमेयोभयवृत्तित्वम् । यथा- 'संतान' इत्यत्र, पारिजातस्य चन्द्रवंशेऽपत्यस्य नन्दनेऽसत्वात्तत्र ना- गामित्वं किंतु श्लेष एव—इति चेत्, तत्तुच्छम् । तथाहि—द्व- साधारणधर्मयोरुपमानोपमेयोभयवृत्तित्वं किं पर्यवसितसाधारणधर्मनिष्ठ- र्मेण वदसि, उत साधारणधर्मवाचकपदजन्यबोधप्रकारीभूतधर्मेण । प्रथमः, 'वागर्थाविव संपृक्तौ' इत्यत्रापि पर्यवसितसाधारण्ययोर्वाच्यवा- भावसंयोगयोः साधारणधर्मनिष्ठसंयोगत्वादिधर्मेणोभयावृत्तित्वात् । एव न द्वितीयः, संबन्धत्वेनापि संयोगादेर्वागर्थादावव्रृत्तेः । किं च द्वय-

---

जनाभावात् । **भिन्नेति** । स्वपत् शयानोऽच्युतो विष्णुर्यत्र स्वस्य पदाद्राज्यात् इति भिन्नानुपूर्वकशब्दप्रतिसंधानजन्यत्वादित्यर्थः । तथाप्यखण्डश्लेषस्थले व्यभि- स्यादित्याशङ्कते—**न चेति** । एकस्यैव शब्दस्योभयार्थकत्वाभ्युपगमादित्यर्थः । अन- **कुर्वतामिति** । नवीनानामित्यर्थः । ननु चमत्कारजनकस्यैवालंकारत्वात्तत्प्रयोजक- र्मस्यैव चात्र निरूपणीयत्वान्नायं दोष इत्यस्वरसादाह—**वस्तुप्रतिवस्तुभावेति** नन्वेकधर्मवृत्तिशाब्दप्रकारीभूतधर्मावच्छिन्नत्वमात्रं विवक्षितम्, अस्ति च वाच्यव- कभावच्छि[illegible]भूतसंबन्धत्वावच्छिन्नत्वं संयोगस्यापीत्यत आह—किं

विवक्षितं न वा । नाद्यः, 'चन्द्र इव रमणीयं मुखम्' इत्यादावनुगामित्वानुपपत्तेः । नान्त्यः, वस्तुप्रतिवस्तुभावस्थलेऽपि तदापत्तेः । अथ—साधारणधर्मवाचकपदजन्यबोधप्रकारीभूतधर्मावच्छिन्नसाधारणधर्मयोर्यत्र प्रत्येकोभयवृत्तित्वम्, तत्र तावत्तैवानुगामित्वमिति संतानपदजन्यबोधप्रकारीभूतपुत्रत्वपारिजातत्वयोश्च नोभयावच्छेदकत्वम्—इति चेत् । न । द्वयत्वस्यावश्यमविवक्षीणतया वस्तुप्रतिवस्तुभावेऽतिव्याप्तेः । अथ—साधारणधर्मवाचकपदजन्यबोधप्रकारीभूतधर्मावच्छिन्नसाधारणधर्मस्थल एवोक्तविभागः, संतानेत्यत्र तु संतानत्वं न वाच्यतावच्छेदकम्, अपि तु पुत्रत्वाद्येव, संबन्धपदस्य तु संबन्धत्वं वाच्यतावच्छेदकम्, एवं च साधारणधर्मविशेषवाचकपदजन्यबोधप्रकारीभूतसाधारणधर्मस्य यत्र तत्सामान्यवाचकपदजन्यबोधप्रकारीभूतधर्मावच्छिन्नत्वम्, तत्रैवोक्तविभाग इति न दोषः । संतानेत्यत्र हि साधारणधर्मविशेषवाचकपुत्रादिपदजन्यबोधे प्रकारीभूतं पुत्रत्वादिकं तत्सामान्यवाचकसंतानपदजन्यबोधेऽपि प्रकारः, संपृक्तावित्यत्र तु संयोगादिपदजन्यबोधे संयोगत्वम्, संबन्धादिपदबोधे च संबन्धत्वमिति शेषात् । वस्तुप्रतिवस्तुभावे तु धर्मैक्यनियमेन सामान्यविशेषवाचकपदभेदाभावान्न दोषः—इति चेत् । मैवम् । यत्र तु तत्पदं वह्निघटोभयपरतया विवक्षितं यथा 'भूतलमिव पर्वतस्तद्वान्' इति, तत्र वह्निघटपदबोधप्रकारीभूतं वह्नित्वघटत्वादिकमेव तत्पदजन्यबोधे प्रकारः, सर्वनाम्नां बुद्धिस्थत्वरूपेण तेन तेनैव प्रकारेण शक्तेः । ततो घटत्वादिप्रकारकस्यैव बोधस्योदयात् । तथा च तत्रानुगामित्वं न स्यादिति । एवं 'चन्द्र इव मुखं तद्वत्' इत्यादौ रमणीयत्वाह्लादकत्वोभयपरेऽपि । किंच रमणीयत्वा-

---

ति । **न वाच्यतावच्छेदकमिति** । पुत्रत्वादिप्रकारेणैव बोधादुभयसाधारणैकसंतानत्वकल्पने प्रमाणाभावात्सैन्धवादिपदवदिति भावः । **सर्वनाम्नामिति** । बुद्धिस्थत्वस्योपलक्षणीभूयशक्यतावच्छेदकानुगममात्रपरतया तत्प्रकारको बोधो न भवति, किंतु घटत्वादिप्रकारक एवेत्यर्थः । तत्रानुगामित्वाभावेऽपि पूर्वोक्तरीत्या क्षतिविरहादाह—**एवं चन्द्र इवेति** । काव्ये एतादृशचमत्कारस्यानुभवकलहभयादनुगामित्वाभावस्य इष्टापत्त्यापि परिहर्तुं शक्यत्वाच्च । किंचेति । धर्मेति । धर्मावच्छिन्नत्वं सामान्यविशे-

दावनुगामित्वाभावापत्तिरेव दुर्वारैवेति। तस्मात् 'वागर्थाविव संपृक्तौ' इत्यादावनुगामित्वनिर्वचनं दुष्करमिति पर्यवसितम्। उच्यते। धर्मवृत्ति सामान्योपस्थापकपदैक्य एवानुगामित्वमिति व्यवस्था। धर्मत्वं च तद्ध तावच्छेदकतापर्याप्त्याधिकरणत्वम्। अत एकोऽनेको वेत्यत्र नादरः तदिति तत्पदनिर्वाह्येत्यर्थः। अतो बहूनां मिश्रणस्थले नानुपपत्ति बिम्बप्रतिबिम्बभाववारणाय 'एकम्' इति सामान्यविशेषणं देयम्। एव श्लेषस्यापि वारणम्। धर्मश्च पर्यवसितः, चन्द्रविरहितमित्यत्र प वसितस्यैवोपादानम्। 'संपृक्तौ' इत्यत्र तदुत्तरं पर्यवसानमिति तु शेषः। ऐक्येति वस्तुप्रतिवस्तुभावनिरासः, तत्र धर्मैक्येऽपि पदभेदात् अतश्च सामान्येऽप्येकपदं श्लेषवारणायैव देयमित्यलमतिपल्लवेन।

---

षणम्। संपृक्तावित्यादि संग्रहार्थमाह—**धर्मत्वं चेति**। **तद्धर्मतेति**। तावच्छेदकतायाः पर्याप्तिर्यत्र रमणीयतत्वादौ तदधिकरणत्वमित्यर्थः। यथा श्रुतेऽव दकताया रमणीयत्वादिवृत्तितया रमणीयत्वादिरूपधर्मलाभानुपपत्तेः। यद्वा भाव न विवक्षितः। ततश्च धर्मतावच्छेदकस्य रमणीयत्वत्वादेर्या पर्याप्तिस्तदाधारत्वमित्यर्थ अथवा धर्मतारूपा चासावच्छेदकता चेति कर्मधारयः। तथा च धर्मता प स्यधिकरणत्वमिति फलितम्। **नादर इति**। धर्मस्यैकत्वे एकस्यैव धर्मताप स्यधिकरणत्वादनेकत्वे द्वयोरेवेति भावः। नन्वेवं 'चन्द्र इव संकोचितकमलं रम च मुखम्' इत्यादौ मिश्रणस्थले रमणीयत्वादेरनुगामित्वं न स्यात्, तन्मात्रस्य ध तापर्याप्त्यनधिकरणत्वात्। संकोचितकमलत्वस्यापि धर्मत्वादित्यतो व्याचष्टे—**त देति**। तथा च रमणीयपदनिर्वाह्या रमणीयत्वस्यैव धर्मता, न तु संकोचित मलत्वादेरपीति न दोष इत्यर्थः। **देयमिति**। ननु तत्र 'पदैक्ये' इत्यने व्यभिचारवारणात्सामान्येऽप्येकविशेषणं व्यर्थमिति चेन्न, हारवृत्तिहारत्वोपस्थाप हारपदस्य निर्झरवृत्तिनिर्झरत्वोपस्थापकनिर्झरपदस्य चैकत्वसत्त्वे न व्यभिचारसंभवा एवं तु तत्र धर्मद्वयवृत्त्येकसामान्योपस्थापकपदाभावान्न दोष इत्यर्थः। **श्लेषस्या पीति**। तत्रोभयवृत्त्येकसामान्याभावादित्यर्थः। नन्वैक्यपदं व्यर्थं बिम्बप्रतिबिम्ब पूर्वोक्तरीत्यैव व्यभिचाराभावादित्यत आह—**ऐक्येतीति**। ननु तर्हि साम एकत्वविशेषणं व्यर्थं बिम्बप्रतिबिम्बभावे पदैक्याभावादेव व्यभिचारविरहात्। च प्रत्येकमेकत्वमस्तीति प्रागेव समाहितमिति वाच्यम्, प्रत्येकार्थस्य हारादे तापर्याप्त्यनधिकरणत्वात्। धर्मतापर्याप्त्यधिकरणवृत्तिसामान्योपस्थापकपदैक्येऽनु मित्वमित्यस्य प्रागेवाभिहितत्वात् इत्यत आह—**अतश्चेति**। ततश्च बिम्बप्र

क्वचिद्बिम्बप्रतिबिम्बभावेन धर्मोक्तिः । स च वस्तुतो भिन्नयोरपि सारूप्यादेकत्वाध्यवसानम् । यथा—

'उअ णिच्चलणिप्पन्दा भिसिणीपत्तम्मि रेहइ वलाआ ।
णिम्मलमरगअभाअणपरिट्ठिआ सङ्खसुत्ति व्व ॥'

अत्र हि बिसिनीपत्रमरकतभाजनयोरेकत्वेनाध्यवसानम् । क्वचिदर्थगम्योऽपि बिम्बप्रतिबिम्बभाव इति नव्याः । यथा—

'मलय इव भाति पाण्डुर्वल्मीक इवाधिधरणि धृतराष्ट्रः ।'

अत्र हि चन्दनपाण्डवानां सर्पदुर्योधनादीनां च बिम्बप्रतिबिम्बभावो गम्यते । अयं चात्र विशेषः—उभयमध्ये प्रतिबिम्बस्यैवोपादाने उपमाने धर्महानिर्दोषः, तत्र तत्स्थानीयधर्मानुक्तेः । बिम्बमात्रोपादाने तूपमाने धर्माधिक्यं दोषः, उपमेये तत्स्थानीयधर्मानुक्तेरित्यग्रे स्फुटीभविष्यति । तस्माद्बिम्बप्रतिबिम्बभावापन्नयोर्द्वयोरेव शाब्दत्वम्, द्वयोरेव वार्थत्वं विवक्षितम्, न त्वेकस्य शाब्दत्वमन्यस्यार्थत्वमिति तत्त्वम् ।

क्वचिद्वस्तुप्रतिवस्तुभावेन । स च प्रतियोगिभेदेनैकस्यैव धर्मस्य द्विरुपादानम् । स च शुद्धो न संभवत्येव, किं तु बिम्बप्रतिबिम्बभावे विशेषणतया विशेष्यतया वेति दीक्षिताः । तत्र विशेषणतया यथा—

---

बिम्बभावे पदैक्योपादानादेव व्यभिचारविरहेऽपि संतानेत्यादिश्लेषे धर्मतापर्याप्त्यधिकरणपुत्रपारिजातोभयवृत्तिपुत्रत्वपारिजातत्वोभयसामान्योपस्थापकसंतानपदैक्यसत्त्वेन तत्र व्यभिचारः स्यादतः सामान्येऽप्येकेति विशेषणम् । ततश्च तस्य पुत्रत्वपारिजातत्वोभयसामान्योपस्थापकतया धर्मतापर्याप्त्यधिकरणवृत्त्येकसामान्योपस्थापकत्वं नास्तीति पदैक्यसत्त्वेऽपि न व्यभिचार इति भावः । 'पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका । निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥' निश्चलनिरुप्यमेति नायकसंबुद्धिरिति केचित् । चलनमवयवक्रिया, स्पन्दस्त्ववयवविक्रियेति भेदः । ततो निश्चला चासौ निष्पन्दा चेति कर्मधारय इत्यन्ये । निश्चलः पर्वतस्तद्वन्निष्पन्देत्यपरे । शङ्खशुक्तिः शङ्खनिर्मितं शुक्त्याकारकपात्रम् इति काव्यप्रदीपः । अत्रोपमेयवृत्तिधर्मस्य बिम्बताउपमानवृत्तेश्च प्रतिबिम्बतेत्यालंकारिकसंप्रदायः । **द्विरुपादानमिति ।** पदभेदस्त्वत्र पौनरुक्त्यपरिहारार्थः । यद्यपि उपमानोपमेयवृत्तिरेव सामान्यधर्म इत्युच्यते, अयं च सामान्यधर्मवृत्तिरेव, न तूपमानादिवृत्तिरिति । तथापि संप्रदाया-

'शर्वपर्वतमाश्लिष्टचन्द्रिकश्चन्द्रमा इव ।
अलंचक्रे स पर्यङ्कमङ्कसंक्रमितप्रियः ॥'

अत्र भैमीचन्द्रिकयोर्बिम्बप्रतिबिम्बभावः । आश्लिष्टाङ्कसंक्रमितपदाभ्या मेव धर्मो विशेषणतयोक्तः । विशेष्यतया यथा—

'संझाराउत्थइओ दीसइ गअणम्मि पडिवआअन्दो ।
रत्तदुऊलन्तरिओ व्व णहणिहाओ णववहूए ॥'

अत्र संध्यारागरक्तदुकूलयोर्बिम्बप्रतिबिम्बभावः । उत्स्थगितान्तरि पदाभ्यामेक एव धर्मो विशेष्यतयोक्तः । संध्यारागदुकूलयोः स्थगिता रितपदार्थविशेषणीभूतत्वात् ।

यथा च—

'अज्जाइ णीलकञ्चुअभरिदुच्चरिअं विहाइ थणवट्टम् ।
जलभरिअजलहरन्तरदरुग्गअं चन्दबिम्बं व्व ॥'

इह नीलकञ्चुकजलधरयोर्बिम्बप्रतिबिम्बभावः । उच्चारितोद्गतपदाभ्या एव धर्मो विशेष्यतया निर्दिष्टः । अन्ये तु—

'विमलं वदनं तस्या निष्कलङ्कमृगाङ्कति ।'

इत्यादौ शुद्धोऽपि वस्तुप्रतिवस्तुभावः संभवति । न ह्ययं बिम्बप्रति म्बभावः, वैमल्यनिष्कलङ्कत्वयोर्भेदाभावात् । न च—सौन्दर्यादिनैवा

---

नुरोधेन धर्मत्वं तदवच्छेदकसाधारणमेव ग्राह्यम् । वस्तुतस्तु बिम्बप्रतिबिम्बभावा धर्मः क्वचिच्छुद्धः क्वचिच्चोभयसाधारणधर्मान्तरविशिष्ट इति तस्यैव द्वैविध्यद तात्पर्यम् । 'संध्यारागस्थगितो दृश्यते गगने प्रतिपदाचन्द्रः । रक्तदुकूलान्तरित नखनिघातो नववध्वाः ॥' नखनिघातपदमर्धचन्द्राख्यनखक्षतपरम् । स्पष्टार्थमाह यथा चेति । अज्जा नवयुवत्यां देशी । 'नवयुवतेर्नीलकञ्चुकभरितोच्चारितो विभ स्तनपटः । जलभरितजलधरान्तरदरोद्गतं चन्द्रबिम्बमिव ॥' अत्र कञ्चुकजलधरयो म्बप्रतिबिम्बभावः । कञ्चुकांशे नीलत्वं शब्दोपात्तम् । जलधरांशे तु जलभरितत्व इति बिम्बप्रतिबिम्बभावविशेषणतया वस्तुप्रतिवस्तुभावः । तद्विशेष्यतया तु एव व्याख्यात इत्युभयोरेकत्रोदाहरणमेतदिति विशेषः । उपमानादिवृत्तित्वमपि व प्रतिवस्तुभावस्थले कुत्रचिदानयतां मतमाह—अन्ये त्विति । एवं च क्वचिद्धर्मवृ त्वमपि पूर्वोक्तस्थलेऽस्त्येव । परंतु दीक्षितोक्तनियम एव निष्प्रमाणक इत्येषां विशे

पमासिद्ध्या न तस्य धर्मता—इति वाच्यम् । 'यान्त्या मुहुः—' इत्यादावपि तदभावापत्तेः—इत्याहुः ।

क्वचिद्बिम्बप्रतिबिम्बभूतयोरन्यतरविशेषणस्य शाब्दत्वेऽन्यस्यार्थत्वमपि। यथा—

'शरकाण्डपाण्डुगण्डस्थलेयमाभाति परिमिताभरणा ।
माधवपरिणतपत्त्रा कतिपयकुसुमेव कुन्दलता ॥'

अत्र मालविकालतयोरुपमायां गण्डपत्त्रयोरलंकारकुसुमानां च बिम्बप्रतिबिम्बभावः । तत्र गण्डांशे पाण्डुत्वं शब्दोपात्तं विशेषणीभूतम्, पत्त्रांशे तु परिणतत्वगम्यं पाण्डुत्वम् । एवम्—

'सभा नलश्रीयमकैर्यमाद्यैर्नलं विनासीद्धृतदिव्यरत्नैः ।
भामाङ्गणप्राघुणिके चतुर्भिर्देवद्रुमैर्द्यौरिव पारिजाते ॥'

अत्र स्वर्गसभयोरुपमायां यमादीनां कल्पद्रुमादीनां च नलपारिजातयोश्च बिम्बप्रतिबिम्बभावः । तत्र च नलप्रतियोगिकाभाववत्त्वेन सभोक्तिः । भामाङ्गणवृत्तित्वं च पारिजातस्य विशेषणं दत्तम् । ततश्च सभावृत्त्यभावप्रतियोगित्वं नलस्य, स्वर्गवृत्त्यभावप्रतियोगित्वं पारिजातस्यार्थलभ्यम् । एवं च स्वाधिकरणवृत्तिविजातीयशोभाविरहप्रयोजकस्वाभावकत्वमुभयविशेषणतया पर्यवस्यतीति संक्षेपः ।

कुत्रचिच्छ्लेषेण यथा—

'उत्कण्टकाविलसदुज्ज्वलपत्त्रराजि-
रामोदभागनपरागतरातिगौरी ।

---

एवं च । 'मुक्ताभिः सलिलरयास्तशुक्तिपेशी मुक्ताभिः कृतरुचिसैकतं नदीनाम् । स्त्रीलोकः परिकलयांचकार तुल्यं पल्यङ्कैर्विगलितहारचारुभिः स्वैः ॥' इत्यादौ मुक्तारुचिरत्वहारचारुत्वधर्मयोरपि भेदाभावात्साक्षादेव वस्तुप्रतिवस्तुभावो द्रष्टव्यः । **शरकाण्डेति** । मालविकाग्निमित्रनाटके मालविकामवेक्ष्याग्निमित्रस्योक्तिः । पाण्डुत्वं नायकविरहात् । **परिमितेति** । विरहदौर्बल्येन बहूनामलंकाराणामग्रहणात् । माधवो वसन्तः । **परिणतेति** । पाण्डुत्वाक्षेपः । **अर्थलभ्यमिति** । नलाभावस्य सभायां प्रतीतौ [illegible] पारिजातस्य भामा-

रुद्रक्रुधस्तदरिकामधियानले सा
वासार्थितामधृत काचन केतकीव ॥'

अत्रोत्कण्टकादीनि विशेषणानि दमयन्तीकेतक्योः श्लिष्टानि।

यथा वा मम—

'घनविशदारुणकरया संपन्नपयोधरोदयया।
प्रणयिन्या घनसमयश्रियेव चेतः समुच्छ्वसिति ॥'

क्वचिदुपचारेण यथा—

'अच्छीइ ता थइस्सं दोअ वि हत्थेवि तम्मि दिट्ठम्मि।
अङ्गं कअम्बकुसुमं व्व मउलिअं कहं णु ढक्किस्सम् ॥'

इह मुकुलितत्वं पुष्पधर्मः, अङ्गेषूपचरितः।

क्वापि समासभेदेन यथा—

'विअसिअतमालणीलं पुणो पुणो चलतरङ्गकरपरिमट्ठम्।
फुल्लेलावणसुरहिं उअहिगइन्दस्स दाणलेहं व ठिअम् ॥'

अत्र विकसिततमालनीलत्वं फुल्लैलावनसुरभित्वं च तृतीयासमासे वेलायाम्, 'उपमानानि सामान्यवचनैः' इत्युपमितसमासेन दानलेखायाम्

क्वचित्त्वेषां द्वयोर्मिश्रणेन। तत्रानुगामित्वबिम्बप्रतिबिम्बभावयोर्मिश्र

---

क्षणवृत्तित्वप्रतीतौ च मूर्तस्य युगपदुभयदेशानवस्थानात्पारिजातस्य स्वर्गवृत्त्यभावप्रति गित्वमाक्षेपलभ्यमिति भावः। **घनेति**। अतिस्वच्छौ अरुणौ रक्तवर्णौ करौ ह यस्याः। पक्षे घना मेघाः तत्र प्रविशन्त आरुणा अरुणसंबन्धिनः कराः किरणा य पयोधरः स्तनो मेघश्च। 'पयोधरौ स्त्रीस्तनाब्दौ' इति शाश्वतः। आद्यविशेषणे भङ्गश्लेषो द्वितीये त्वभङ्ग इति भेदः। **उपचारेणेति**। स च सादृश्यलक्षणेति स मेव। 'अक्षिणी तावत्स्थगयिष्यामि द्वाभ्यामपि हस्ताभ्यां तस्मिन्दृष्टे। अङ्गं कद कुसुममिव मुकुलितं कथं नु छादयिष्यामि ॥' मानवत्याः सखीं प्रत्युक्तिः। प्रियद जन्यविकासेन मानत्यागगोपनाय नेत्रच्छादनेऽपि तद्दर्शनरोमाञ्चदन्तुरितमङ्गं विलोक्य नत्यागप्रतीतिर्भविष्यत्येवेति भावः। **उपचरित इति**। तत्सदृशरोमाञ्चवत्त्वेनेत्यर्थ 'विकसिततमालनीलां पुनः पुनश्चलतरङ्गकरपरिमृष्टाम्। फुल्लैलावनसुरभिमुदधिगजेन्द्र दानलेखामिव स्थिताम् ॥' सेतुकाव्ये वेलावर्णनम्। तरङ्गाकारः करः, तरङ्ग एव इत्यत्रापि समासभेदो बोध्यः। तस्य साक्षादेलावनविकल्पेन तु द्वयेन विशेष्योद्भा

यथा—

'अह गमिअ णिसासमअं गम्भीरत्तद्दिढट्ठअम्मि समुद्दे ।
रोसो राहववअणं उप्पाओ चन्दमण्डलं व विलग्गो ॥'

अत्र विलग्नत्वमनुगतम् । राघववदनचन्द्रमण्डलयोर्बिम्बप्रतिबिम्बभावः ।

अनुगामित्ववस्तुप्रतिवस्तुभावयोर्यथा—

'वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।
आसीन्महीभृतामाद्यः प्रणवश्छन्दसामिव ॥'

अत्र मनुप्रणवयोरुपमायां छन्दोमहीभृतां बिम्बप्रतिबिम्बभावापन्नानामाद्यत्वं विशेषणतयोक्तम् । मनीषिमान्यत्वमुभयानुगतम् ।

अनुगामित्वश्लेषयोर्यथा—

'नाहूतापि पुरः पदं रचयति प्राप्तोपकण्ठं हठा-
त्पृष्टा न प्रतिवक्ति कम्पमयते स्तम्भं समालम्बते ।
वैवर्ण्यं स्वरभङ्गमञ्चतितमां मन्दाक्षमन्दानना
कष्टं भोः प्रतिभावतोऽप्यधिसभं वाणी नवोढायते ॥'

अत्र पृष्टेत्यादावनुगामित्वम्, पदमित्यादौ श्लेषः ।

अनुगामित्वोपचारयोर्यथा मम—

'अतिसुकुमारः सौरभविशेषभरितोऽतिरमणीयः ।
चुम्बति कपोलबिम्बं युवेव कर्णावतंसोऽस्याः ॥'

अत्र सुकुमारेत्याद्यनुगामि, 'चुम्बति कपोल—' इत्यवतंसे उपचारः ।

अनुगामित्वसमासभेदयोर्यथा—

'संखोहिअकमलसरो संझाअवअम्बधातुकद्दमिअमुहो ।
ठाणप्फिडिओ व्व गओ रत्तिं भमिऊण पडिणिउत्तो दिअहो ॥'

---

तम् ॥ 'अथ गमयित्वा निशासमयं गम्भीरत्वदृढस्थिते समुद्रे । रोषो राघववदनं उत्पातश्चन्द्रमण्डलमिव विलग्नः ॥' सेतुबन्धाय समुद्रप्रार्थनार्थं श्रीरामे स्थिते समुद्रे किमप्यकृतवति इयमुक्तिः । राघववदनेति । प्रकृतत्वेन रोषस्यैवोपमेयत्वात्तेन चोपात्तस्यैवोपमानत्वादिति भावः । 'संक्षोभितकमलसरः संध्यातपताम्रधातुकर्दमितमुखः । स्थानभ्रष्ट इव गजो रात्रिं भ्रमित्वा प्रतिनिवृत्तो दिवसः ॥' सेतुकाव्ये प्रभातवर्णनम् ।

अत्र संध्यातपेति समासभेदः, संक्षोभितेत्याद्यनुगामि ।

बिम्बप्रतिबिम्बभाववस्तुप्रतिवस्तुभावयोर्यथा—

'इअ णिअमिअसुग्गीवो रामन्तेण पचलिओ पितामहतणओ ।
परिमट्ठमेरुसिहरो सूराभिमुहो व्व पलअधूमप्पीडो ॥'

अत्र रामसूर्ययोर्बिम्बप्रतिबिम्बभावापन्नयोरेक एव धर्मोऽन्ताभिमुख शब्दाभ्यां निर्दिष्टः, सुग्रीवमेरुशिखरयोर्बिम्बप्रतिबिम्बभावश्च ।

श्लेषबिम्बप्रतिबिम्बभावयोर्यथा मम—

'संप्रकाशितबलाहकवृन्दो व्यञ्जयन्क्षणिकभावमनेहाः ।
हेतुभावमुपलम्भितसत्त्वो बोधिसत्त्व इव सत्वरमेति ॥'

अत्र वर्षापक्षे क्षणिकभा विद्युत्, तस्या आवो दीप्तिः । पक्षे क्षणिक भावः पदार्थानां प्रतिक्षणविनाशित्वमिति श्लेषः । मेघसत्त्वयोर्बिम्बप्रति बिम्बभावश्च । उभयोर्यथाक्रमं विद्युत्क्षणिकत्वसाधकत्वात् ।

उपचारबिम्बप्रतिबिम्बभावयोर्यथा मम—

'नितान्तपारिप्लवतारतारके रसेन सा नर्तयति स्म लोचने ।
परिभ्रमद्र्भगभृङ्गसंगते निशावसाने नलिनीव पङ्कजे ॥'

अत्र तारकाभृङ्गाणां नेत्रपङ्कजानां रसप्रभावतयो(?)श्च बिम्बप्रतिबिम्ब भावः । नर्तनं नेत्रे पद्मे चोपचरितम् ।

समासभेदश्लेषयोर्यथा—

'खुडिउप्पडिअमुणालं दट्ठूण पिअं व सिढिलिअवलअं णलिणिम्
मुहुअरिमहुरुल्लावं महुमअअम्बं मुहं व घेप्पइ कमलम् ॥'

अत्र मधुकरीमधुरोल्लापमिति समासभेदः, मधुमदाताम्रमिति श्लेषः ।

---

संक्षोभितत्वं पूर्वावस्थावैलक्षण्यम् । तच्च विकसितोन्मर्दितत्वाभ्याम् । संध्यातप ताम्रधातुरिवेति दिनपक्षे । संध्यातपवत्ताम्रो रक्तो धातुर्गैरिकं सिन्दूरं चेति गजपक्षे 'इति नियमितसुग्रीवो रामान्तेन प्रचलितः पितामहतनयः । परिमृष्टमेरुशिखरः सू भिमुख इव प्रलयधूमोत्पीडः ॥' पितामहतनयो जाम्बवान् । उत्पीडः समूहः । जा वद्धूमयोरुपमा । 'खण्डितोत्पतितमृणालां दृष्ट्वा प्रियामिव शिथिलितवलयां न नीम् । मधुकरीमधुरोल्लापं मधुमदताम्रं मुखमिव गृह्यते कमलम् ॥' सेतुकाव्ये शरद्

समासभेदबिम्बप्रतिबिम्बभावयोर्यथा—

'वणदवमसिमइलङ्गो रेहइ विञ्झो घणेहि धवलेहिं ।
खीरोदमन्थणुच्छलिअदुद्धसित्तो व्व महुमहणो ॥'

अत्र वनदवेत्यत्र समासभेदः, धवलघनदुग्धयोर्बिम्बप्रतिबिम्बभावः ॥

वस्तुप्रतिवस्तुभावश्लेषयोर्यथा मम—

'सुरसतरा हसितमुखी विभाति वरवर्णिनी नितराम् ।
उन्मीलितारविन्दा सरसीव विनिर्मितोत्कलिका ॥'

अत्र बिम्बप्रतिबिम्बभावापन्नयोर्मुखारविन्दयोरेक एव धर्मो हसितोन्मीलितपदाभ्यां विशेषणतया निर्दिष्टः, प्रथमान्त्यविशेषणद्वये च श्लेषः ॥

समासभेदोपचारयोर्यथा मम—

'मालतीमुकुलकोमलदन्ता मत्तबर्हिकुलकेशकलापा ।
जीवयत्यसमसायकमेषा कामिनीव जलदागमलक्ष्मीः ॥'

अत्र मालतीत्यादौ समासभेदः, जीवयतीत्युपचारः ॥

समासभेदवस्तुप्रतिवस्तुभावयोर्यथा मम—

'घनप्रसवसंकुला स्थगितशर्वरीवल्लभा
विराजति बलाहकागमनकालिकी द्यौरियम् ।
परं विहितगोचरीभवनपुण्डरीकच्छटा
तमालदलमेचकावयवसंनिवेशेव भूः ॥'

अत्र घनप्रसवेत्यादौ समासभेदः, चन्द्रपुण्डरीकयोर्बिम्बप्रतिबिम्बभावापन्नयोः स्थगितत्वं विहतगोचरीभवनत्वं चैकधर्म उक्तः ॥

---

त्रम् । समासभेदश्लेषयोर्यथा अत्रोत्तरार्धमेव प्रकृतोदाहरणम् । पूर्वार्धे मृणालवलययोर्बिम्बप्रतिबिम्बभावस्यापि सत्त्वात् ॥ 'वनदवमसीमलिनाङ्गो राजति विन्ध्यो घनैर्धवलैः । क्षीरोदमन्थनोच्छलितदुग्धसिक्त इव मधुमथनः ॥' [इति च्छाया ।] जीवयतीत्युपचार इति । आत्मविशेषगुणजनकमनःसंयोगरूपमुख्यजीवनस्य तत्राभावादित्यर्थः ॥ घनप्रसवेति । घनानां मेघानां प्रसव उत्पत्तिः । पक्षे घनप्रसवो जलम् । विहितमनिषिद्धम् । गोचरीभवनं प्रत्यक्षोपहितत्वं [illegible] पुण्डरीकच्छटा यस्या इति बहुव्रीहिगर्भो

श्लेषोपचारयोर्यथा—

'अस्थानगामिभिरलंकरणैरुपेता
भूयः पदस्खलितनिह्नुतिरप्रसन्ना ।
वाणीव कापि कुकवेर्मधुपानमत्ता
गेहान्निपातबहुलैव विनिर्जगाम ॥'

निर्गमनस्य वाण्यामुपचारः, अन्यत्र श्लेषः ॥

क्वचित्त्वेषां मिश्रणेन । तत्र समासभेदानुगामित्वोपचाराणां यथा-

'मुहलघणविप्पइण्णं जलनिवहं भरिअणहमहीविअरम् ।
णइमुहपज्जहत्थं अप्पाण विणिग्गअं जसं व पिअन्तम् ॥'

अत्र मुखरेत्यत्र समासभेदः, भृततमोमहीविवरत्वमनुगामि, विनि
मिति यशस्युपचारः ।

अनुगामित्वोपचारश्लेषाणां यथा—

'उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसितोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन्कोपविपाण्डुरद्युति मुखं देव्याः करिष्याम्यहम् ॥'

अत्रोत्कलिकेति श्लेषः, विपाण्डुरेत्यत्र आयासेत्यत्र चानुगामि
प्रारब्धजृम्भामिति लतायामुपचारः ।

---

बहुव्रीहिः । अदृश्यपुण्डरीकेत्यर्थः ॥ 'मुखरघनविप्रकीर्णं जलनिवहं भृतसकलनभो विवरम् । नदीमुखपर्यस्यमानमात्मनो विनिर्गतं यश इव पिबन्तम् ॥' सेतुकाव्ये वर्णनम् । मुखरेतीति । मुखरैर्गर्जद्भिर्घनैर्मेघैर्वृष्टम्, पक्षे मुखरैर्बन्द्यादिभिर्घ कृत्वा वर्णितम् ॥ विनिर्गतमिति । निसृक्रमणाख्यस्य बहिःसंयोगजनक मूर्तमात्रधर्मतया यशस्यसंभवात्प्रकाशे लाक्षणिकत्वादित्यर्थः ॥ उद्दामेति । दो लात्पुष्पितां माधवीलतां दृष्ट्वा रत्नावल्यां वत्सराजस्योक्तिः । उद्दामा उद्गताश्च का कोरका यस्याम् । पक्षे उद्दामा अतिशयवती [illegible] ॥ कोपे

उपचारसमासभेदश्लेषाणां यथा—

'सरए सरम्मि पहिआ जलाइ कन्दोट्टसुरहिगन्धाइं ।
धवलच्छाइ सअह्णा पिअन्ति दइआण व मुहाइं ॥'

अत्र पिबन्तीति मुखपक्षे उपचारः, नीलोत्पलसुरभीति समासभेदः, 'धवलाच्छानि, धवलाणि' इत्यर्थैकतया 'धवलच्छाइ' इत्यत्र श्लेषः ॥

अनुगामित्वबिम्बप्रतिबिम्बभावसमासभेदानां यथा मम—

'स्फुटनयनपङ्कजा सा स्वच्छमुखी मे मनः प्रसादयति ।
कुमुदाकरं शरदिव नवसमुदितशीतकिरणबिम्बा ॥'

अत्र 'प्रसादयति' इत्यनुगामि, मुखचन्द्रयोर्बिम्बप्रतिबिम्बभावः, 'स्फुटनयन–' इति समासभेदः ॥

अतः परं ममैवैतद्विषये श्लोकाः—

अनुगामित्वसमासभेदश्लेषाणां यथा—

'तारामुक्ताहारा समुदञ्चितचन्द्ररुचिचर्चा ।
विकसितकैरवहासा ज्यौत्स्नीव वधूर्ज्वरं विधुनोति ॥'

अत्र 'ज्वरं विधुनोति' इत्यनुगामि, 'तारा–' इत्यादौ 'विकसित–' इत्यादौ च समासभेदः । 'चन्द्र' इति श्लेषः ॥

उपचारबिम्बप्रतिबिम्बभावसमासभेदानां यथा—

'विजृम्भमाणोन्नतकोरकस्तनीं सरोजिनीं चुम्बति वासरेश्वरः ।
समुल्लसत्कुङ्कुमपङ्कलोहितो युवा नवीनां वरवर्णिनीमिव ॥'

अत्र 'विजृम्भमाण–' इत्यत्र 'समुल्लसत्–' इत्यत्र च समासभेदः, सरोजिनीवरवर्णिन्योर्बिम्बप्रतिबिम्बभावः, 'चुम्बति' इति रविपक्षे उपचारः ॥

---

देवीपरिगृहीतलतापेक्षया राजपरिगृहीतायास्तस्याः प्रथममेव पुष्पितत्वात् ॥ कन्दोट्टं नीलोत्पले देशी । 'शरदि सरसि पथिका जलानि नीलोत्पलसुरभिगन्धानि । धवलाच्छानि(क्षाणि) सतृष्णाः पिबन्ति दयितानामिव मुखानि ॥' [इति च्छाया ।] धवलानि श्वेतवर्णानि च तान्यच्छानि प्रसन्नानि चेति धवलाच्छानि । पक्षे—धवलाक्षाणि धवलनेत्राणि । मुखपक्ष इति । मुख्यपानस्य द्रवद्रव्य एव संभवादित्यर्थः ॥ भेदान्तराणां

१. 'अत्र' क.

उपचारबिम्बप्रतिबिम्बभावश्लेषाणां यथा—

'रसभरसार्द्रावयवः परिरभते केतकीं पवनः ।
कठिनतरकण्टकोत्करकञ्चुकितां कामिनीमिव सकामः ॥'

अत्र पवनपक्षे परिरम्भोपचारः, केतकीकामिन्योर्बिम्बप्रतिबिम्बभा रसकण्टकपदयोः श्लेषः ॥

अनुगामित्वबिम्बप्रतिबिम्बभावोपचाराणां यथा—

'मरुद्गृहीतामलमालतीकः सीमन्तयत्येष तमालवल्लीम् ।
प्राणेश्वरो जीवितवल्लभायाः श्लथाकृतिं श्रेणिमिवालकानाम् ॥'

अत्र 'गृहीता—' इत्यादिरनुगामी, तमालालकानां बिम्बप्रतिबिम्बभा मरुति सीमन्तकर्तृत्वोपचारः ॥

अनुगामित्वबिम्बप्रतिबिम्बभावसमासभेदानां यथा—

'तरलयति मानसं मे कुमुदमनोज्ञा सितश्रीस्ते ।
नाथं द्वीपवतीनां[1] ज्योत्स्नेव मनोद्‍चापभ्रूः ॥'

अत्र 'तरलयति' इत्यनुगामी, मानससमुद्रयोर्बिम्बप्रतिबिम्बभा 'कुमुदमनोज्ञा' इति समासभेदः ॥

वस्तुप्रतिवस्तुभावसमासभेदोपचाराणां यथा—

'कुटिलगता सरसीरुहसुकुमारकरा सुधांशुमुखी ।
वक्रतरङ्गाकुलिता सरिदिव सानन्दमवगाह्या ॥'

अत्र गततरङ्गयोर्बिम्बप्रतिबिम्बभावापन्नयोः कुटिलवक्रत्वाभ्यामे धर्म उक्त [[2]इति वस्तुप्रतिवस्तुभावः], 'सरसीरुह—' इति समासभे अवगाहनस्य कामिन्यामुपचारः ॥

वस्तुप्रतिवस्तुभावसमासभेदश्लेषाणां यथा—

'समीरणोदञ्चितकिंचिदञ्चलं स्तनं दधाना सुमृणालबाहुका ।
गुलुच्छमभ्युच्छ्वसितैकपल्लवा सरोजिनीवासि विसारिसौरभा[3] ॥'

अत्र—बिम्बप्रतिबिम्बभावापन्नयोः स्तनगुलुच्छयोरुदञ्चितोच्छ्वसिते

१. 'पतीनां' ख. २. क-पुस्तके नोपलभ्यते. ३. 'तस्यौपि सौरभम्' क.

कधर्मनिर्दे[1]शाद्वस्तुप्रतिवस्तुभावः, 'सुमृणाल–' इति समासभेदः, 'सौरभा' इति श्लेषः ॥

वस्तुप्रतिवस्तुभावसमासभेदानुगामित्वानां यथा—

'दरस्फुरितकोमलाधरतला मनागीक्षण-
क्षणैकविषयीभवद्विशदमुग्धदन्ताग्रभूः ।
परि[2]प्लवितपल्लवा किमपि दृश्यसत्कोरका
लतेव हरति प्रिया किसलयाग्रहस्ता मनः ॥'

अत्र विम्बप्रतिबिम्बभावापन्नानामधरपल्लवानां दन्तकुड्मलानां च स्फुरितप[3]रिप्लवने ईक्षणविषयीभवनदृश्यत्वे च पृथगुपात्ते [इ[4]ति वस्तुप्रतिवस्तुभावः], हरणमनुगामि, 'किसलया–' इति समासभेदः ॥

वस्तुप्रतिवस्तुभावश्लेषानुगामित्वानां यथा—

'घनसारसारविशदां कण्टकितां सा तनुं धत्ते ।
पुष्पालीमिव केतकवल्ली धूलीसितां मृद्वीम् ॥'

अत्र बिम्बप्रतिबिम्बभावापन्नयोर्घनसारधूल्योर्विशदसितत्वरूप एकधर्मः पृथगुक्त [इ[5]ति वस्तुप्रतिवस्तुभाव]ः, कण्टकेति श्लेषः, मृद्वीमित्यनुगामि ॥

वस्तुप्रतिवस्तुभावानुगामित्वोपचाराणां यथा—

'मोहयति पि[6]हितवदनो बालाया एष कुन्तलकलापः ।
प्रावृष इवाम्बुवाहश्छन्नविधुर्बान्धवस्तमसः ॥'

अत्र बिम्बप्रतिबिम्बभावापन्नयोर्मुखचन्द्रयोः पिहितच्छन्नरूप एक एव धर्म उक्त इति वस्तुप्रतिवस्तुभावः, मोहयतीत्यनुगामी, बान्धवेत्युपचारः ॥

एवमन्ये प्रकाराः स्वयमूह्याः सुलभत्वादुपेक्षिता इति दिक् ॥

अयं चात्र विशेषः—धर्मस्यानुगामित्वे पदार्थतावच्छेदकप्रकारेणोपस्थितौ सत्यां तद्रूपेणैवोपमानोपमेययोस्तद्बोधः प्रसिद्ध एव । बिम्बप्रतिबि-

---

१. 'शः, सुम्' क. २. 'प्लवनि' क; 'प्लविनि' ख. ३. 'पल्लवत्वे' क. ४. क-पुस्तके नास्ति. ५. क-पुस्तके नास्त्ययं पाठः. ६. 'विहित' क.

म्बभावस्थले तु—'मरकतभाजनशङ्खशुक्तिप्रतियोगिकसादृश्याश्रयो
काबिसिनीपत्रवृत्तिः' इति बोधः । तदाधारतापन्नयोश्च भाजनपत्रयो
सति तद्वृत्तित्वेन धर्मेण तत्सादृश्याभावेन मरकतभाजनबिसिनीपत्रयो
दारोपेणैव पर्यवसाने तन्निमित्तसादृश्यज्ञानं मानसमेव । न च—शैले
तत्सादृश्यनिर्वाहः—इति वाच्यम्, तदा शङ्खशुक्तौ मरकतभाजनवृत्ति
विशेषणवैयर्थ्यापत्तेः तादृशघटकातिरिक्तोपमानविशेषणोपादानस्य
र्थ्यात् । एकधर्मघटितसादृश्यापेक्षया बहुधर्मघटितस्य तस्य चमत्कारा
शयजनकत्वाच्च । अत एव

'यान्त्या मुहुर्वलितकंधरमाननं त-
दुद्वृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥'

इत्यादावपि वस्तुप्रतिवस्तुभावस्थले निर्वाहः । अन्यथा सौन्दर्ये
धर्मेण साम्यनिष्पत्तौ कंधरावृन्तयोरैक्यारोपेण साधारण्यानुपयोगापत्तेः ।

अयं च विशेषः—'उत्खातद्रुममिव शैलम्' इत्यत्र शैलद्रुमयोर्ध
न्तरप्रयोज्यचमत्कारकसादृश्यस्याप्रसिद्ध्योत्खातद्रुमत्वस्य सादृश्यप्रयोज
त्वानुसंधानं विना न प्रतीतिपर्यवसानम् । 'यान्त्या मुहुः—' इत्यादौ
कंधरावृन्तादीनामैक्यबोधाभावेऽपि सौन्दर्यादिना सादृश्यधीपर्यवसानं
वत्येव । परं तु कंधरावृन्तादीनामभेदबुद्धेः सादृश्यज्ञाने उत्कर्षकत्व
त्रम्—इति ॥

एवं बिम्बप्रतिबिम्बभावस्थलेऽपि यत्र बिम्बप्रतिबिम्बभावापन्नधर्मव्य
रेकेण सादृश्यमप्रसिद्धम्, तत्रापि बोध्यम् ।

यथा—

'कोमलातपबालाभ्रसंध्याकालसहोदरः ।
कुङ्कुमालेपनो भाति कषायवसनो यतिः ॥'

इत्यादौ । नह्यत्र धर्मान्तरेण यतिसंध्याकालयोः सादृश्यं प्रसिद्ध
अपि तु—अभेदाध्यवसायविषयीभूतकोमलातपकुङ्कुमादिधर्मेणैवेति ॥

एवं श्लेषेऽपि—

'नरसिंह महीपाल सर्वोऽप्यरिगणस्तव ।
पारावारसमानत्वं दधाति स्वपदच्युतः ॥'

इत्यत्र वैरिसमुद्रयोः स्वपदच्युतत्वधर्मनिमित्तकमेव सादृश्यम् ॥

एवमुपचारेऽपि—

'शतकोटिकठिनचित्तः सोऽहं तस्याः सुधैकमयमूर्तेः ।
येनाकारि विमित्रं स विकलहृदयो विधिर्वाच्यः ॥'

इत्यत्र काठिन्यस्य पृथिवीगुणत्वेन चित्त उपचारः। दयाविरहवत्त्वात् । ततश्च दयाविरहे काठिन्याभेदाध्यवसायेन कुलिशचित्तयोः सादृश्यप्रतीतिः, अन्यनिमित्तकसादृश्यस्याप्रसिद्धेः । तस्मात्कश्चिद्धर्मः सादृश्यनिर्वाहकः, कश्चित्तु तदुत्कर्षकः—इति सिद्धम् ॥

इदानीम्—

'उपमाया बुधैरेते भेदा ज्ञेयाः समासतः ।
ये शेषा लक्षणे नोक्ता संसाध्यास्तेऽपि लोकतः ॥'

इति भरतवाक्यमभिसंधाय तां विभजते—

**श्रौत्यार्थी सा द्विविधा वाक्ये वृत्तौ च तद्धिते तद्वत् ।**

'चन्द्र इव मुखम्' इत्यत्र शाब्दबोधे तावत्केचिदाहुः—यद्यपि—यथेवादिशब्दानां[1] तुल्यादिपदानां[2] च सादृश्यबोधकत्वाविशेषाच्छ्रौतार्थत्वविभागानुपपत्तिः । न च—इवादिभिरुभयत्र धर्मसंबन्धः शक्त्या प्रत्याय्यते, तुल्यादिभिस्तु धर्ममात्रम्, इति विशेषः—इति वाच्यम्, इवादी-

---

वक्ष्यमाणानां मूलानुमतत्वदर्शनाय भरतवाक्यं दर्शयति—**उपमाया इति** । उपमायाः श्रौतार्थत्वविभागस्य शाब्दबोधनिबन्धनत्वात्प्रथमं बोधमेव विचारयितुमाह—**चन्द्र इवेति** । यद्यपीत्यादिर्बोधकत्वाभावादित्यन्ता शङ्का ॥ **बोधकत्वाविशेषादिति** । सादृश्यप्रत्ययस्योभयत्रापि सत्त्वादित्यर्थः । वैषम्यं शङ्कते—**न चेति** । **उभयत्रेति** । उपमानोपमेययोरित्यर्थः । वक्ष्यमाणरीत्या चन्द्र इव मुखमित्यत्र उभयत्र तत्संबन्धबोधोपपत्तेरित्यर्थः ॥ **शक्त्येति** । तादृशोभयान्वितसादृश्यबोधकत्वस्वाभाव्येनेत्यर्थः । सर्वत्र धर्मपदमत्र सादृश्यपरम् ॥ **धर्ममात्रमिति** । प्रतियोगितयोपमाने विशेषणत्वा-

---

१. 'पदानाम्'. २. 'शब्दानाम्' इति भवेत्.

नासुपमानविशेषणत्वनियमेन तैरप्युपमान एव धर्मसंबन्धो बोधयितुं शक्य
न तूपमेयेऽपि। अन्यविशेषणस्यान्यत्र संबन्धबोधकत्वाभावात्। तथ
'यथा चैत्रस्य धनम्' इत्यत्र चैत्रपदोत्तरषष्ठ्या चैत्रस्य स्वामित्वम्, ध
च स्वत्वं बोध्यते शब्दशक्तिस्वाभाव्यात्, तथात्रापीवपदेनोभ
तद्बोधनान्नानुपपत्तिः। न चैवमपि कथमुपमानोपमेययोर्भेदान्वयः—
वाच्यम्। प्रकारीभूतविभक्त्यर्थसंबन्धस्येव फलानुरोधान्नामार्थयोर्भेदा
प्रकारीभूतनिपातार्थसंबन्धस्यापि हेतुत्वकल्पनात्। 'सदृशचन्द्रीयं मुख
इति शाब्दबोधः 'चैत्रस्येदं[1] धनम्' इत्यत्र 'स्वामिचैत्रीयं धनम्' इ

---

नापन्नमेव सादृश्यमित्यर्थः॥ तथा च वक्ष्यमाणरीत्या चन्द्र इवेत्यत्र सदृशचन्
मुखमिति उभयत्र सादृश्यबोधः। चन्द्रेण तुल्यमित्यत्र तु चन्द्रसादृश्यवन्मुखमिति दृश्
दृश्यस्य नोपमाने विशेषणत्वम्, किंतु उपमेय एवेति वैषम्यमित्यर्थः॥ नामार्थ
दान्वयानुपपत्त्या सादृश्यसंबन्धेन चन्द्रस्य मुखेऽन्वयोऽनुपपन्नः। अतः कथं 'सदृ
न्द्रीयं मुखम्' इति बोधः स्यादित्याभिप्रायवान्परिहरति—**इवादीनामिति**॥ उप
**नविशेषणत्वेति**। उपमाननिष्ठविशेष्यतानिरूपितविशेषणताशालिस्वार्थकत्वेनेत्य
**न त्विति**। उक्तरीत्या इवार्थसादृश्यस्य चन्द्रादावुपमानेऽन्वयोपगमे उपमेये तदन्वया
पत्तेरेकत्र जनितान्वयबोधत्वेन निराकाङ्क्षत्वात् अतः सदृशचन्द्रसदृशं मुखमिति न श
बोधसंभवः, तदेतदाह—**अन्यविशेषणस्येति**। न च—इवार्थसादृश्यस्य चन्द्र
न्वयः, तस्य च सादृश्यसंबन्धेन मुखादावन्वयः इति सादृश्यं संसर्गीभूयैव सादृश्यवि
ष्टचन्द्रप्रकारकमुखविशेष्यकबोधे भासताम्—इति वाच्यम्, भेदसंबन्धेन नामार्थप्रका
शाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासंबन्धेन विभक्तिजन्योपस्थितेः कारणत्वकल्पना
उपमेयस्य च नामार्थत्वेन विभक्तिजन्योपस्थितिविशेष्यत्वाविरहात्। अन्यथा 'नीलो घ
इत्यादौ नीलघटयोरप्यभेदातिरिक्तसंबन्धेन विशिष्टबुद्ध्यापत्तेरिति शङ्कार्थः॥ समाधत्ते
**तथापीति**॥ **कथमिति**। नामार्थयोरभेदान्वय एव व्युत्पत्तेः॥ 'नीलो घटः' इत्या
वुक्तरीत्या कल्पनादित्यर्थः। **प्रकारीभूतेति**। नामार्थान्तरनिष्ठविशेष्यतानिरूपितवि
षणताशालिनामार्थनिष्ठविशेष्यतानिरूपितविशेषणताशालीत्यर्थः। चैत्रस्य धनमित्यत्र
स्वामित्वं षष्ठ्यर्थः, तस्याश्रयतया चैत्रेऽन्वयः, चैत्रस्य च स्वामित्वसंबन्धेन धनेऽन्वय
तत्र धननिष्ठविशेष्यतानिरूपितविशेषणताशालिचैत्ररूपनामार्थनिष्ठविशेष्यतानिरू
विशेषणतास्वामित्वरूपविभक्त्यर्थस्यास्तीति तेन संबन्धेन चैत्रस्यापि धनेऽन्वयः
एवं चन्द्र इव मुखमित्यत्र सादृश्यं इवार्थः, तस्य प्रतियोगितासंबन्धेन चन्द्रेऽन्व
चन्द्रस्य च सादृश्यसंबन्धेन मुखे, मुखरूपनामार्थनिष्ठविशेष्यतानिरूपितविशे
ताशालिचन्द्ररूपनामार्थनिष्ठविशेष्यतानिरूपितविशेषणताशालित्वं इवरूपनिपातार्थ

---

१. 'ति' क.

वत् । अत एव श्रौतीत्वं सादृश्यप्रतियोगिताख्यस्योपमानत्वस्येवपदेन बोधनात्—इति ।

अत्र केचिदेवमाहुः—मीमांसकमतमतमभिसंधायैवात्र समाधानम् । तथा हि—चन्द्रप्रतियोगिकसादृश्यमिवपदार्थः 'घटो न' इत्यत्र घटप्रतियोगिकाभावस्य नञर्थतावत् । नच—सादृश्यमेवात्रेवादेरर्थः—इति वाच्यम्, 'चन्द्रस्य सादृश्यम्' इत्यादिवत् 'चन्द्रस्येव मुखम्' इत्यादेरप्यापत्तेः । 'घटस्याभावः' इतिवत् 'घटस्य न' इत्यादेरप्यापत्तेः । इवपदस्य सादृश्यमात्रवाचकतया ततः षष्ठ्यर्थसंबन्धालाभेन तद्बोधार्थं षष्ठीप्रयोग-

तिदृश्यस्यास्तीति तेन संबन्धेन चन्द्रस्य मुखेऽन्वयः इति प्रघट्टकार्थः । ततश्च प्रकारीभूतविभक्त्यर्थनिपातार्थान्यतरसंबन्धेन नामार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासंबन्धेन नामजन्योपस्थितेः कारणत्वं कल्प्यते । न च निपातार्थस्यापि कार्यतावच्छेदकसंबन्धप्रवेशे गौरवमिति वाच्यम् । प्रामाणिकस्य तस्यादोषत्वात् । प्रकारीभूतविभक्त्यर्थस्य तथात्वे बीजभूतस्यानुभवस्य प्रकारीभूतनिपातार्थेऽप्यविशिष्टत्वात् । **बोधनादितीति** । इवार्थसादृश्यस्य प्रतियोगित्वेन चन्द्रान्वये सादृश्यप्रतियोगिचन्द्रीयसादृश्यमिति बोधोदयादित्यर्थः । तदेवं प्रतियोगित्वस्य संसर्गत्वेन बोधः, सादृश्यस्य च चन्द्रादावन्वयः, सादृश्यप्रतियोगितायाः शाब्दबोध्यत्वाच्छ्रौतत्वम् । चन्द्रेण तुल्यमित्यादौ तु सादृश्यप्रतियोगितायाश्चन्द्रादावनवगमादार्थत्वम्, चन्द्रप्रतियोगिकसादृश्यवन्मुखमित्येव तत्र बोधात् । तुल्यत्वस्य नामार्थतया तत्र प्रतियोगित्वेन तस्य चन्द्रान्वयानुपपत्तेः । अतस्तत्र सादृश्यप्रतियोगितोपमानस्य न शाब्दबुद्धौ भासते, किंत्वर्थतस्तदुत्तरमानसज्ञान एवेति तन्मतरहस्यम् । संप्रति मतान्तरमाह—**अत्र केचिदिति** । अत्र श्रौतार्थत्वभिवागरूपे विषये । केचिन्महेश्वरादयः । एवमन्यथा तद्विवेकमाहुरित्यर्थः । **मीमांसकेति** । घटमानयेत्यादिपदानामितरपदार्थान्वितस्वार्थबोधकत्वमिति तत्सिद्धान्तः । अत्र तु निपातस्थल एवान्विताभिधानं न तु तुल्यादिपदेष्वित्यंशे तदनुसारः । तुल्यादिस्थले तदनभ्युपगमस्य वक्ष्यमाणत्वात् । अन्यथा 'इवादिप्रयोगे श्रौती, तुल्यादिप्रयोगे त्वार्थी' इति व्यवस्थानुपपत्तेः । **चन्द्रस्येवेति** । सादृश्यपदजन्यसादृश्योपस्थितौ नामार्थस्योपमानस्य सादृश्येऽन्वयार्थं यथा प्रतियोगित्वार्थकषष्ठ्यपेक्षा नामार्थयोः साक्षाद्भेदान्वयानुपपत्तेः । तथा इवार्थसादृश्येऽपि नामार्थत्वाविशेषादुपमानस्य प्रतियोगित्वसंबन्धेनान्वयानर्हत्वाद्विभक्तिजन्यतदुपस्थितिरपेक्षितेति प्रतियोगित्वबोधार्थे षष्ठी स्यादेवेति भावः । ननु भेदसंसर्गकनामार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति विभक्तिजन्योपस्थितेरिव

१. 'कार्यतावच्छेदकत्वे'.

स्यावश्यकत्वात् । अस्मद्रीत्या तु सादृश्यप्रतियोगिताया इवादिपद्वा... तथा षष्ठ्यनपेक्षणात् । नच—अव्ययस्थले विलक्षणव्युत्पत्तिवलान्न ... —इति वाच्यम्, तथासति तस्यैव गौरवस्यापत्तेः । अतोऽव्ययस्थले... ताभिधानम्, न तु तुल्यादिपदानामपि—इति । तन्न । असमस्त... ऽभावमात्रपरत्वेन प्रतियोगितांशस्य संसर्गमर्यादया भानसंभवात् । न च 'घटस्य न' इति षष्ठ्यापत्तिः, 'नञ्पदजन्याभावोपस्थितौ प्रतियोगि... शस्य संसर्गतयैव भानम्, अभावपदजन्यायां तु प्रकारतयैव' इति ... माभ्युपगमात् । न च गौरवम्, त्वयापि 'घटो न' इत्यत्र पटाभाववार... 'समभिव्याहृतपदार्थप्रतियोगिक एवाभावो भासते' इत्यस्याभ्युपगन्तव्य... तदपेक्ष्य 'अभावमात्रं नञर्थः, प्रतियोगित्वं संसर्गतया भासते' इत्य... युक्तत्वात् । 'घटपदस्यैव घटप्रतियोगिकाभावपरत्वं नञ्पदं तात्पर्यग्राह...

---

निपातजन्योपस्थितेरपि विशेष्यतासंबन्धेन कारणत्वं कल्प्यते । एवं च 'चन्द्रस्य... श्यम्' इत्यत्र सादृश्यस्य निपातजन्योपस्थित्यभावे न तत्र प्रतियोगित्वेन चन्द्रस्यान्... नर्हतया तत्र प्रतियोगित्वबोधार्थं षष्ठ्यपेक्षा । चन्द्र इवेत्यत्र तु सादृश्यस्यैवा... निपातजन्योपस्थितिर्विशेष्यतासंबन्धेन तत्रास्त्येवेति तत्र प्रतियोगित्वसंबन्धेन ... न्द्रस्यान्वयोपपत्तेर्न षष्ठ्यपेक्षा । अतो व्यर्थं प्रतियोगित्वस्यापि इवार्थत्वकल्पन... न चैवमपि इवार्थसादृश्यस्याश्रयतया कथं मुखावन्वयः, नामार्थप्रकारकशाब्दत्वावच्छि... प्रति नामजन्योपस्थितेः कारणतायां कार्यतावच्छेदकसंबन्धतया तादात्म्यस्यैव... वेशात् । भेदसंबन्धेन नामार्थप्रकारकशाब्दबुद्धौ च विशेष्यतया प्रत्ययजन्योपस्थि... कारणत्वकल्पनात् मुखादेः प्रत्ययजन्योपस्थितिविरहात् निपातजन्योपस्थि... तत्राभावेन चन्द्रस्य प्रतियोगित्वेन सादृश्यान्वयवत्सादृश्यस्याश्रयत्वेन मुखादावन्व... नुपपत्तेरिति वाच्यम् । निपातातिरिक्तनामार्थप्रकारकशाब्दबुद्धावेव तथात्वात् ... त्याशङ्क्ते—**नचेति** । **तस्यैवेति** । निपातजन्योपस्थितिहेतुत्वकल्पनादिरू... त्यर्थः । **नियमेति** । तथा च प्रतियोगिनिष्ठप्रकारतानिरूपितप्रतियोगित्वनिष्ठ... गिकविषयतानिरूपिताभावविशेष्यकज्ञानत्वं नञ्पदशक्तिज्ञानस्य, प्रतियोगिनिष्ठप्र... तानिरूपितप्रतियोगित्वनिष्ठविशेष्यत्वाभिन्नप्रकारतानिरूपिताभावविशेष्यकज्ञानत्वं ... वपदशक्तिज्ञानस्य कार्यतावच्छेदकं कल्प्यते । अत एव मिश्रैरप्युक्तम्—स एवार्थो... वसदृशादिपदेनान्यथा बोध्यते, क्वचित्संसर्गविधया क्वचित्प्रकारतया संबन्धभाव... अतः पटो नेत्यादौ न षष्ठी, पटस्याभाव इत्यादौ तु षष्ठीति भावः । समभिव्याह... तात्पर्यग्राहकत्वकल्पने गौरवविशेषाभावादिति ... —इत्यत्राह—**अत्रेति** । उभ...

त्यस्यापि सुवचत्वाच्च । अन्विताभावबोधमपेक्ष्याभावप्रकारकबोधस्यैव नञ्पदज्ञानकार्यतावच्छेदकत्वात् । एवं च प्रतियोगितांशस्य संसर्गतया भानसंभवे न तत्र नञादेः शक्तिः, अन्यलभ्यत्वात् । नच—'घटोऽभावः' इत्यत्रापि तथा भानसंभवे षष्ठ्यपेक्षा न स्यात्—इति वाच्यम्, समानविभक्तिकनामार्थयोरभेदान्वयस्यैवाकाङ्क्षितत्वेन तत्र घटस्य प्रतियोगित्वेनाभावान्वयासंभवात् । अन्यथाभावपदस्यापि घटप्रतियोगिकाभावाचकत्वसंभवेन तवापि तत्र षष्ठीप्रयोगस्य दुःसमाधानत्वात् । नच—निपातस्थल एवान्विताभिधानम्—इति वाच्यम् । त्वयान्विताभिधाननियामकत्वं यस्य वक्तव्यम्, तस्यैव मया षष्ठीप्रयोगनियामकताया वाच्यत्वात् । 'तद्धेतोः—' इति न्यायात् । तस्मात्—'चन्द्र इव' इत्यादौ प्रतियोगित्वस्य संसर्गतया बोधान्न षष्ठी, 'चन्द्रस्य सादृश्यम्' इत्यत्र तु संसर्गतया तद्भानासंभवात्षष्ठी—' इत्यस्य सुस्थतया न चन्द्रप्रतियोगिकसादृश्ये इवादेः, न वा घटप्रतियोगिकाभावे नञादेः शक्तिः—इति सिद्धम् । तस्मात्—निपातातिरिक्तनामार्थयोर्भेदान्वयबोध एव प्रकारीभूतविभक्त्यर्थोपस्थितेस्तन्त्रम्—इति नैयायिकाः ।

---

कारणभावकल्पनापेक्षयात्रापि गौरवाभावादाह—**अन्वितेति** । तथा च प्रथमावतीर्णलाघवानुरोधेन अभावत्वप्रकारकबोधत्वस्यैव कार्यतावच्छेदकत्वे कॢप्ते पश्चात्कारणताविषयकल्पनेऽपि न दोषः । फलमुखगौरवस्य दूषकत्वाभावात् । अत एव तत्पुरुषे पूर्वपदे संबन्धिलक्षणाप्रसङ्गात् तदपेक्षया लघुभूतं कर्मधारयमेवाश्रित्य पश्चादापद्यमानं निषादस्थापूर्वविद्याकल्पनमप्यङ्गीकृतम् । निषादस्थपत्यधिकरण इति भावः । **अन्यलभ्यत्वादिति** । 'अनन्यलभ्यः शब्दार्थः' इति न्यायेन संसर्गतयापि बोधसंभवे तत्र शक्तेरकल्पनादित्यर्थः । **समानेति** । भिन्नार्थकविभक्त्यनवरुद्धेत्यर्थः । तथा चाभेदसंसर्गावच्छिन्ननामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तन्नामोत्तरविभक्त्यर्थविरुद्धार्थकसुब्विभक्त्यसमभिव्याहृतपदजन्योपस्थितिः कारणम्, नीलो घट इत्यत्र द्वयोरेकविभक्तिकत्वात् । स्तोकं पचतीत्यादौ क्रियाविशेषणे च धातोर्विरुद्धार्थकसुब्विभक्त्यसमभिव्याहृतत्वादुभयत्र नामार्थस्याभेदसंबन्धेन प्रकारकता । राज्ञः सुतस्य धनमित्यत्र समानविभक्तिकयोरपि राजसुतयोरभेदान्वयबोधविरहात् विरुद्धार्थकतेति भिन्नार्थकपरम् । तत्र चैका जन्यजनकभावे षष्ठी, परा च स्वस्वामिभावे, इत्यदोषः । पचतीत्यत्र धातोरपि आख्यातरूपक्रियाभिन्नार्थकविभक्तिसमभिव्याहारोऽस्तीति तत्र विशिष्टाभावसंपादनाय 'सुब्' इति विभक्तिविशेषणम् । एवं च ज्योतिष्टोमेन यजेत इत्यादावपि ज्योतिष्टोमादियागादावभेदान्वयः संगच्छते । नैया-

केचित्तु—इवस्थले तथाबोधसंभवेऽपि 'यथा चन्द्रस्तथा मुखम्' इ
न तदुपपत्तिः । तत्र 'यादृशधर्मवांश्चन्द्रः, तादृशधर्मवन्मुखम्' इत्युप
पमेयोभयविशेष्यकबोधात् । तेन 'चन्द्र इव मुखम्' इत्यत्राप्युभयो
ष्यक एव बोधः । अत एव 'हंसीव धवलश्चन्द्रः' इति दुष्टोपमा त
यादृशधावल्यवती हंसी तादृशधावल्यवांश्चन्द्रः' इति बोधः पुंलिङ्गधवल
हंस्यामन्वयासंभवात् । अत एव श्रौतीत्वम् । द्वयोरेकविभक्तिकत्वेनो
साधारणधर्मसंबन्धस्य शाब्दत्वात् । 'चन्द्रेण तुल्यं मुखं मनोज्ञम्' इ
दौ तु विभक्तिभेदान्न तथा । 'पद्मं मुखं च मनोज्ञम्' इत्यादौ तु
क्तिसाम्येऽप्युपमानोपमेयभावस्य प्रसिद्धिबलादेव लाभः—इत्यार्थत्व
इत्याहुः । तन्न । 'चन्द्र इव मुखं रमणीयम्' इत्यत्राप्युपमाया दुष्टत्वप्र
त् । तत्राप्युपमानोपमेययोर्भिन्नलिङ्गतया मनोज्ञत्वस्य मुखान्वितस्य
ऽन्वयासंभवात् ।

---

यिका इति । तथा च उक्तहेतुहेतुमद्भावोक्त्यनन्तरं नञ्वादशिरोमणावभिहित
'अत एव इवाद्यर्थान्वयबोधे न षष्ट्याद्यपेक्षेति । संप्रति—'यत्रोपमाने उपमे
साधारणधर्मसंबन्धः शाब्दबोध एव भासते, तत्र श्रौती, अन्यत्रार्थी' इति च
मतमाह— **केचित्त्विति** । **तथा बोधेति** । उपमानप्रकारकोपमेयविशेष्यके
ननु यथा चन्द्र इत्यत्र प्रकारार्थकथाल्प्रत्ययवशाद्यत्तच्छब्दाभ्यां वाक्यभेदाव
भयविशेष्यकबोधाभ्युपगमः, अत्र तु न तादृशप्रमाणमस्ति, ये न वाक्यार्थबोध
ङ्गीकुर्म इत्यतस्तदावश्यकत्वमाह—**अत एवेति** । अन्यथा तु हंसीसदृशश्चन्द्रो
इति बोधे बाधकाभावाल्लिङ्गभेदस्य दोषत्वानुपपत्तिरित्यर्थः । प्रकृतमाह—अत एव
उभयविशेष्यकबोधाभ्युपगमादेवेत्यर्थः । **विभक्तिभेदादिति** । नामार्थयो
बोधे भिन्नविभक्त्यनवरुद्धत्वस्य तन्त्रत्वादिति भावः । पद्मं चेत्यनन्तरं तुल्यमिति
तद्विनिर्मुक्तस्य यथोक्तवाक्यस्य दीपकालंकार एव विश्रामात् । **मुखान्वितस्ये**
समानलिङ्गकत्वादित्यर्थः । **अन्वयासंभवादिति** । विशेष्यस्य चन्द्रस्य पुंलिङ्ग
अनियतलिङ्गवचनकनामार्थप्रकारकतादात्म्यसंसर्गकशाब्दबोधे समानलिङ्गवचना
नामजन्योपस्थितेर्हेतुत्वकल्पनादिति भावः । नियतलिङ्गवचनात्तद्भेदेऽपि अभेदा
र्शनात् अनियतेति । अत एव शब्दखण्डे मणिकारैरुक्तम्—'भिन्नविभक्तिक
भिन्नलिङ्गयोरपि सामानाधिकरण्येन विशेषणविशेष्यभावाभावात् अजहल्लिङ्गे तु लि
यमानुशासनान्न तथा' इति । 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति पा
यसूत्रे नपुंसकस्यानपुंसकेन सह द्वन्द्वे नपुंसकमेव शिष्यते, इतरस्य तु लोपः, त

यत्तु—तत्र 'रमणीयं च रमणीयश्च' इति द्वन्द्वे 'नपुंसकमनपुंसकेन' इत्येकशेषे एकवद्भावे च पुंलिङ्गरमणीयपदस्य चन्द्रे, नपुंसकस्य मुखेऽन्वयान्न दोषः—इति । तत्तुच्छम् । 'कुवलयमिव श्यामः कटाक्षः' 'ध्वान्तमिव केशो नीलः' इत्यादौ दुष्टोपमात्वप्रसङ्गस्य तथापि दुर्वारत्वात् । न च—तत्र दुष्टत्वमेव—इति वाच्यम्, मानाभावात् । 'दृष्टः पुंनपुंसकयोः प्रायेण' इति वामनोक्तेरुभयत्र साम्यात् । 'प्राणा इव प्रियोऽयं मे' 'विद्या धनमिवार्जिता' इत्यस्यापि दण्डिनादोषेणाङ्गीकृतस्य दुष्टत्वप्रसङ्गाच्च ।

अत्रेदं तत्त्वम्—तद्भिन्नत्वे सति तद्गतधर्मवत्त्वं हि सादृश्यम् । तत्र तद्भिन्नवृत्तित्वे तद्वृत्तित्वमात्रमिवार्थः । तद्गतेत्यत्र वृत्तित्वस्य, धर्मवत्त्वमित्यत्राधिकरणत्वस्य च निवेशापेक्षयोभयवृत्तित्वनिवेशनस्यैव युक्तत्वात् । त-

---

विकल्पेनैकवद्भावो भवतीति तस्यार्थः । तथा च रमणीयमित्यत्रोक्तरीत्या एकशेषेण पुंलिङ्गरमणीयपदस्यापि संग्रहात्तस्यैव चन्द्रेऽन्वय इति न दोषः इत्येषामाशयः । **कुवलयमिवेति** । पुंलिङ्गोपमेयक्लीबोपमानकस्थले साधारणधर्मस्योपमेयसमानलिङ्गत्वनियमेन तत्राप्युक्तरीत्या एकशेषाश्रयणेऽप्युक्तैकवद्भावे तत्रापि नपुंसकस्यैवाश्रयणापत्तेस्तत्रैकशेषस्य स्वीकर्तुमशक्यत्वादित्याशयः । एवं सर्वत्राप्यदुष्टत्वप्रसङ्गात् प्रायशब्दविरोधाच्चादुष्टत्वेनाभियुक्तप्रसिद्धमेव स्थलमाह—**प्राणा इवेति** । इदं वचनभेदस्योदाहरणम् । विद्याधनमिति तु लिङ्गभेदस्येति द्रष्टव्यम् । प्रकारान्तरेण श्रौतार्थत्वविभागं व्यवस्थापयिष्यन्प्रथमं नैयायिकाद्यभिमतसादृश्ये विशिष्टशक्तिपक्षमाश्रित्य विचारयितुमुपन्यस्यति—**अत्रेदमिति । तद्भिन्नेति** । भवति च मुखं चन्द्रभिन्नं चन्द्रगताह्लादिकत्वादिधर्मवच्चेति भावः । वक्ष्यमाणयुक्तिबलादाह—**तत्रेति** । धर्म एवार्थः, न तु तद्गतत्वमपीत्यर्थः । यद्यपि तद्गतत्वमपि धर्म एव, तथापि बोधे वैषम्यमस्त्येवेति भावः । नन्वेवं तद्भिन्नत्वं धर्मेणैव समन्वेति, न तूपमेयेन तथा च चन्द्र इव चन्द्र इत्यप्युपमा स्यात्, तत्रापि रमणीयत्वादिधर्मस्योपमानभिन्नत्वादित्यत आह—**तद्भिन्नवृत्तित्वेति** । ततश्च धर्मे न तद्वृत्तित्वं विशेषणम्, किंतु तद्भिन्नवृत्तित्वमेवेति भावः । न चैवमपि तद्दोषतादवस्थ्यं तद्भिन्नमुखादिवृत्तित्वस्यापि धर्मे सत्त्वादिति वाच्यम्, तद्भिन्नपदेन उपमानतावच्छेदकावच्छिन्नप्रतियोगिताकभेदवदुपमेयस्य विवक्षणात् । **युक्तत्वादिति** । एकत्राधेयत्वस्य परत्राधारत्वस्य च निवेशापेक्षया उभयत्राधेयत्वनिवेशस्यैवोचितत्वादित्यर्थः । यद्यप्याधारत्वाधेयत्वयोर्द्वयोरपि समवेतत्वादिसखण्डपदार्थत्वेऽतिरिक्तपदार्थत्वे वा शरीरसाम्यमेवेत्येकत्र वृत्तित्वस्यापरत्राधारत्वस्य च निवेशे उभयत्राप्याधेयत्वस्यैव वा निवेशो न किंचिद्गौरवं कार्यं वावसरः तथाप्येकत्र

द्भिन्नवृत्तित्वनिवेशस्तूभयत्र समानः। न च—तद्भिन्नवृत्तित्वस्य तत्प्रति-
गिकान्योन्याभावाधिकरणवृत्तित्वरूपस्य निवेशे तवाप्यधिकरणत्वनिवेशः
इति वाच्यम्, तद्भिन्नत्वे सतीति भेदनिरूपिताधिकरणत्वस्यापि विशे-
साम्यात्। न च—तद्भिन्नवृत्तित्वे सतीत्यत्र तदन्योन्याभावधर्मयोः सामा-
धिकरण्यं संबन्धः, तच्च विशेषणतासमवायादिघटितम्, तेन भेद एव
प्रकारः, तव तूक्तसंबन्धघटितसामानाधिकरण्यस्यैव प्रकारतया तत्रैव
न्निवेशः; परं च वृत्तित्वस्य स्वरूपात्मकसंबन्धेन वृत्तित्वेऽपि वैशिष्ट्या-
महद्गौरवम्—इति वाच्यम्, तवापि धर्मे तद्वृत्तित्वविशेषणस्य सत्त्वेन
समवायादिनिवेशाल्लाघवानवकाशात्। न च—मन्मते संसर्गीभूतसामा-
धिकरण्यघटकत्वेन विशेषणताविशेषसमवायाद्योः तद्वृत्तित्वेत्यत्रत्व (?) स्व-
मवायादेः प्रवेशः, तव तु प्रकारीभूतसामानाधिकरण्यघटकत्वेन विशेषण-
विशेषसमवायाद्योर्वृत्तित्वे, वृत्तित्ववैशिष्ट्यघटकत्वेन च स्वरूपस्य नि-
शः, धर्मे तद्वैशिष्ट्यघटकत्वेनापि स्वरूपस्य निवेशः, इति गौरवम्—

---

वृत्तित्वविषयताकल्पने परत्रापि तत्कल्पने लाघवमित्याशयः। अत एवाधिकरणत्वांश-
भिन्नेत्यत्र त्वयापि निवेशात्। तस्यापि विषयता क्लृप्तैवेत्याशङ्कते—**न चेति**। विशे-
मात्रेण साम्यमाह—**भेदनिरूपितेति**। तदधिकरणत्वनिवेशसाम्येऽपि तदुत्तरं ग्रा-
त्वनिवेशस्तवाप्यधिक इत्याशङ्कते—**न चेति**। प्रथमं भिन्नत्वस्योपमेयत्वविशेषणत्व-
क्तम्। अधुना भेदस्यैव धर्मविशेषणत्वमुच्यते इति विशेषः। **सामानाधिकरण्यमि-**
विशेषणताविशेषेण चन्द्रभेदवति मुखे समवायेन रूपविशेषात्मकरमणीयत्वादेः सत्त्व-
तदुभयघटितसामानाधिकरण्येन भेदस्य धर्मे प्रकारत्वम्। **समवायेति**। प्रकृताभिप्रा-
ण। अन्यत्र यथासंभवं संबन्धो ग्राह्यः। **उक्तसंबन्धेति**। विशेषणतासमवा-
भयेत्यर्थः। **प्रकारतयेति**। तद्भिन्नवृत्तित्वस्यैव वृत्तित्वे वैशिष्ट्याभ्युपगमात्। तस्य
भेदसामानाधिकरण्य एव पर्यवसानात्। तस्य प्रकारत्वेन भानम्। संसर्गता तु तत्र
रूपस्येति स्वरूपसंबन्धनिवेशोऽधिक इति भावः। सामानाधिकरण्यस्य संसर्गत्वस्वी-
हि तद्वैशिष्ट्यं नापेक्षेत, न हि संसर्गस्यापि संसर्गे विशिष्टबुद्धिरवगाहते, 'दण्डी
रुषः' इत्यादौ संसर्गीभूतसंयोगस्य समवायात्मकसंसर्गानुल्लेखात्। अन्यथानवस्था-
दिति भावः। वृत्तित्वनिवेशमात्रस्य तवापि सत्त्वात्साम्यमिति समाधानाभासमाह-
**तवापीति**। मन्मते संसर्गीभूत... गौरवस्वरूपमाह—**न च मादीति**। मूलयुक्तिमाह-

वाच्यम् । धर्मवत्वेत्यत्रापि समवायसंसर्गतायास्त्वन्मते सत्त्वात् । न च धर्मस्योपमेयवैशिष्ट्ये समवायादिकं संबन्धस्त्वयापि वाच्य एव—इति वाच्यम्, इवार्थ एव लाघवगौरवयोर्विचार्यत्वात् । किं च—तद्भिन्नवृत्तित्वे सति तद्वृत्तिधर्मे इवपदस्य शक्तिकल्पने—चन्द्रनिष्ठप्रकारतानिरूपितप्रतियोगित्वनि-

---

**धर्मवत्वेति** । **त्वयापीति** । इवार्थधर्मस्य समवायादिना उपमेयान्वयस्य वाच्यत्वादित्यर्थः । बोधस्वरूपकथनेन बोधविषयपदार्थस्वरूपं स्पष्टयितुमाह—**किं चेति** । प्रसिद्धोदाहरणमादाय बोधमाह—**चन्द्रेति** । चन्द्रभिन्नवृत्तित्वं चन्द्रभेदाधिकरणवृत्तित्वम्, आश्रयत्वस्योक्तप्रत्ययार्थत्वात् । तच्च चन्द्रवृत्तित्वोपरि सामानाधिकरण्येन विशेषणम् । अस्ति हि धर्मे चन्द्रभिन्नवृत्तित्वं चन्द्रवृत्तित्वं चेति स्वरूपसंबन्धेन तयोः सामानाधिकरण्यम्, अतश्च सामानाधिकरण्यस्य स्वरूपघटिततया चन्द्रभिन्नवृत्तित्वनिष्ठप्रकारतायां स्वरूपस्यैव संसर्गतयोल्लेखः । एतादृशबोधस्यायमाकारो द्रष्टव्यः । तथाहि तत्र चन्द्रः प्रतियोगितासंबन्धेन भेदे विशेषणम्, भेदश्च अभावीयविशेषणताविशेष्यसंबन्धेनाधिकरणे, तच्च वृत्तित्वे, इत्यादि । तत्रोत्तरत्र प्रकारतापदमुत्तरपदार्थनिष्ठविशेष्यतानिरूपकतयोक्तं पूर्वपदार्थनिष्ठप्रकारतापेक्षया तस्या विषयताया विशेष्यतात्वमपि बोध्यम् । वृत्तित्वप्रकारतानिरूपितेत्यस्य द्वितीये वृत्तित्वनिष्ठप्रकारतेत्यत्रान्वयः । उक्तरीत्या तत्र स्वरूपं संसर्गतया निवेशितम् । यद्यपि चन्द्रवृत्तित्वमित्यत्र चन्द्रनिष्ठप्रकारतानिरूपितायां वृत्तित्वनिष्ठविशेष्यतायां समवायस्य न संसर्गत्वम् । अपि तु निरूपितत्वात्मकस्वरूपस्यैव, न हि आधेयत्वमपि समवायेन वृत्तिमत् । अतश्च कथं तत्र समवायस्य संसर्गतया निवेशः । तथापि प्रकृते चन्द्रवृत्तित्वरूपविशेषात्मकरमणीयत्वादिरूपधर्मनिष्ठं ग्राह्यम् । वृत्तित्वं च स्वरूपसंबन्धविशेषात्मकमिति रमणीयत्वादिरूपमेव । तस्य च चन्द्रे समवाय एवेत्यभिप्रायेण समवायस्य संसर्गताविधानं न विरुद्धम् । नन्वत्र चन्द्रस्य वृत्तित्वसंबन्धेन धर्मेऽन्वय इत्येवमुक्तम् । चन्द्रस्य रमणीयत्वात्मकवृत्तित्वे तस्य च रमणीयत्वे प्रकारतायां रमणीयत्ववद्रमणीयत्वमिति बोधापत्तेः रमणीयत्वे समवायेन चन्द्रस्य प्रकारतायां भासमानं यत्समवायरूपं वैशिष्ट्यं तत्प्रतियोगित्वानुयोगित्वाभ्यां रमणीयत्वस्य चन्द्रे प्रकारत्वम्, चन्द्रस्य विशेष्यत्वं च स्यादिति चेत् । मैवम् । अखण्डशक्तिपक्षे वृत्तित्वस्य पदार्थताया आवश्यकतया संसर्गतानुपपत्तेः । वृत्तित्वेनैव बोधाद्रमणीयत्वप्रकारकतद्विशेष्यकबोधस्याप्यनापत्तेः अनुयोगित्वमुखेन समवायस्य संसर्गतायां तु दोषानवकाशाच्च । वस्तुतः स्वरूपस्यैवात्रापि संसर्गता वाच्या, अत एवाधिकरणादिनिष्ठप्रकारतानिरूपितायां वृत्तित्वनिष्ठविशेष्यतायां स्वरूपमेव संसर्गत्वेन निवेशितम् । द्वितीयपक्षीयं बोधमाह—**चन्द्रनिष्ठेति** । अत्र सामानाधिकरण्येन धर्मे भेदो विशेषणं तच्च विशेषणताविशेष्येण स्वाधिकरणे समवायेन वृत्तित्वं ततो भेदस्य धर्मोपरि प्रकारतायां विशेषणताविशे-

ष्ठसांसर्गिकविषयतानिरूपितभेदनिष्ठविशेष्यताख्यप्रकारतानिरूपितविशे-
ताविशेषनिष्ठसांसर्गिकविषयतानिरूपिताधिकरणनिष्ठविशेष्यताख्यप्रका-
निरूपिता या स्वरूपनिष्ठसांसर्गिकविषयतानिरूपिता चन्द्रनिष्ठप्रकारता-
पितसमवायादिनिष्ठसांसर्गिकविषयतानिरूपितवृत्तित्वनिष्ठविशेष्यताख्य-
रता तन्निरूपितस्वरूपनिष्ठसांसर्गिकविषयतानिरूपितधर्मनिष्ठनिष्ठविशे-
शालिज्ञानत्वम् इवपदशक्तिज्ञानस्य कार्यतावच्छेदकं कल्प्यम्, तद्भिन्नत्वे-
तद्घटधर्मवत्त्वे शक्तिकल्पने तु—चन्द्रनिष्ठप्रकारतानिरूपितप्रतियोगित्वं-
सांसर्गिकविषयतानिरूपितभेदनिष्ठविशेष्यताख्यप्रकारतानिरूपिता या
षणताविशेषनिष्ठसांसर्गिकविषयतानिरूपिताधिकरणनिष्ठसांसर्गिकविषय-
निरूपितसमवायनिष्ठसांसर्गिकविषयतानिरूपितवृत्तित्वनिष्ठसांसर्गिकवि-
तानिरूपिता चन्द्रनिष्ठप्रकारतानिरूपितसमवायनिष्ठसांसर्गिकविषयता-
पितवृत्तित्वनिष्ठविशेष्यताख्यप्रकारतानिरूपितस्वरूपनिष्ठसांसर्गिकविषय-
निरूपितधर्मनिष्ठविशेष्यताख्यप्रकारता तन्निरूपितसमवायनिष्ठसांसर्गि-
षयतानिरूपिताधिकरणनिष्ठविशेष्यताख्यप्रकारताशालिज्ञानत्वं तत्कार्य-
च्छेदकं कल्पनीयम् । धर्मवत्वमित्यत्र च धर्मवदितरावृत्तित्वादिघटित-
त्ववत्वेन धर्मवत्त्वज्ञानं तद्घटकवैशिष्ट्यादीनां च शक्तिज्ञानविषयत्वं चा-
कल्पनीयम् । मन्मते तु धर्मस्यैव विशेष्यतया तत्र धर्मत्वस्य स्वरूपेणैव प्र-
त्वमिति न तद्घटकानां ज्ञानविषयत्वकल्पनमिति लाघवम् । किं च

---

षाधिकरणसमवायवृत्तित्वानां चतुर्णां सांसर्गिकविषयतात्वेनैव निवेशः । भेदनि-
कारतानिरूपितेत्यस्य वृत्तित्वनिष्ठसांसर्गिकविषयतानिरूपितेत्यस्य च धर्मनिष्ठ-
रतेत्यत्रान्वयः । अत्रापि चन्द्रस्य वृत्तित्वोपरि प्रकारतायां समवायस्य संसर्गत्वे भि-
क्तैव रीतिरनुसर्तव्या । एवं धर्मनिष्ठप्रकारतायामपि अधिकरणत्वनिष्ठविशेष्यता-
पितायां समवायस्य च संसर्गत्वेऽप्यवधेयम् । **अधिकरणमिति** मतुबर्थोल्लेखः ।
यार्थमादायापि गौरवाधिक्यमाह—**धर्मवत्त्वमिति** । धर्मवदितरावृत्तित्वे सति
वृत्तित्वं धर्मवत्वत्वम् इति धर्मवत्पदार्थान्तर्गततद्वैशिष्ट्यादीनामपि तद्बोधविषयत्व-
नमिति गौरवमिति भावः । **धर्मत्वस्येति** । पदार्थान्तरमित्यभिप्रायेणेदम् । स्व-
णेति । निरवच्छिन्नस्यैवेत्यर्थः । धर्मत्वमपि तत्प्रतिबद्ध(ध्य)संयोगाश्रयत्वा-
मिति पक्षे त्वाह—**किं चेति** । वस्तुतस्तथापि धर्मवत्वापेक्षयात्र लाघवमेव
तत्रापि प्रवेशान्मत्वर्थो [illegible] भावः । वस्तुतस्तु धर्मस्यैव पक्षे चन्द्र-

प्रथमपक्षे—रमणीयत्वादिधर्मस्यैकत्वे तत्राभेदेन धर्मान्वयसंभवः, न तु द्वितीये, इति । तस्माद्विशिष्टशक्तिपक्षे धर्म एव शक्तिकल्पनमुचितम् । इदं चात्र पक्षद्वये तुल्यं विभाव्यम्—[1]अक्षादिपदवदिवशब्दस्य नानार्थतैव । तत्समभिव्याहारस्य नियामकत्वाच्च तथा तथा बोधः । येन संबन्धेन धर्मस्योपमानोपमेयवृत्तित्वं तत्र तस्यैव संसर्गत्वम्, यत्र चोपमानेऽन्यसंबन्धेन, उपमेये च संबन्धान्तरेण धर्मस्य वृत्तित्वम्—यथा—'वागर्थाविव संपृक्तौ' इत्यत्र वागर्थयोर्वाच्यवाचकभावस्वरूपेण वृत्तित्वम्, पार्वतीपरमेश्वरयोस्तु संयोगस्य समवायेन (?), तत्र तत्तत्प्रकारतायां तस्य तस्य संसर्गत्वम् । न चैवं चन्द्रादिपदवैयर्थ्यापत्तिः, तात्पर्यग्राहकत्वेन तदुपयोगात् । त्वप्रत्ययादीनां विशिष्टशक्तिमते घटादिपदवत् । 'चन्द्र इव चन्द्रः' इत्यादौ भिन्नशक्तिकल्पनाद्विलक्षणो बोध इति दिक् ॥ अथ—भेदः, तद्गतधर्मश्चे-

---

वृत्तित्वं चन्द्रवृत्तित्वे न विशेषणं न वा धर्मे किंतु चन्द्रभेद एव सामानाधिकरण्येन धर्मे विशेषणं ततश्च चन्द्रनिष्ठप्रकारतानिरूपितयथोक्तसामानाधिकरण्यनिष्ठसांसर्गिकविषयतानिरूपितधर्मनिष्ठविशेष्यताशालिज्ञानत्वमत्र इवपदशक्तिज्ञानस्य कार्यतावच्छेदकम् । धर्मत्वशक्तिपक्षे तु यथोक्तधर्मनिष्ठविशेष्यताख्यप्रकारतानिरूपिताधिकरणत्वनिष्ठविशेष्यताशालिज्ञानत्वं तथेति स्पष्टमेव गौरवम् ॥ उपसंहरति—**तस्मादिति** । सादृश्यं यद्यपि तद्भिन्नत्वे सति तद्गतधर्मवत्त्वमेव, तथापि इवपदस्य धर्म एव शक्तिः कल्प्यते विवक्षितविवेकेन तथा पर्यवसानादिति भावः । उभयत्रापि फलितार्थमाह—**इदं चेति । नानार्थेति** । चन्द्रभिन्नत्वादिरूपेणैव शक्तिस्वीकारात् ॥ नन्वेवं गौरवमनन्तशक्तिकल्पनादित्यत आह—**अक्षादिति** । प्रामाणिकत्वेन गौरवस्यापि सोढव्यत्वादित्यर्थः । **वागर्थाविति** । पर्यवसितबोधाभिप्रायेणेदम् । संबन्धपदात्संयोगत्वादिरूपेण संयोगादेरनुपस्थितत्वात् । **त्वप्रत्ययादीनामिति** । तेनैव घटेतरावृत्तित्वादिरूपार्थबोधनादित्यर्थः । नन्वेवं चन्द्र इव चन्द्र इत्यादावनन्वयालंकारो न स्यात्, भेदस्य तत्राभावादित्यत आह—**चन्द्र इवेति । भिन्नेति** । तच्च तत्रैव वाच्यमिति भावः ॥ विशिष्टशक्तिपक्षमुक्त्वा खण्डशक्तिपक्षमाश्रित्य विचारयति—**अथेति** । चन्द्रादिपदानां स्वार्थपरत्वं शक्तित्रयकल्पनेनानन्तशक्तिपरिहारश्चात्र पूर्वस्माद्विशेषः । अनन्वयालंकारव्यावृत्त्यर्थमाह—**चन्द्रत्वावच्छिन्नेति** । इदं च चन्द्र इव मुखमित्यादावेव संभवति न तु चन्द्र इव चन्द्र

---

१. 'इवपदस्य नानार्थतैव । अक्षादिपदवत्तत्समभिव्याहारस्य' इत्येव पाठो भवेत्.

वार्थः । चन्द्रत्वावच्छिन्नप्रतियोगितासंबन्धेन चन्द्रादेर्भेदेऽन्वयः, तयो
विशेषणताविशेषसंबन्धेन मुखादौ, धर्मस्य समवायादिना मुख एव ।
च—'चन्द्रभिन्नं मुखं चन्द्रगतधर्मवत्' इति बोधः—इति चेत् ।
तथाहि—किमत्र 'विशिष्टे वैशिष्ट्यम्' इति रीत्या बोधः, उत 'एक
यम्' इति । नाद्यः—चन्द्रभेदविशिष्टे मुखे चन्द्रगतधर्मवैशिष्ट्य
चन्द्रभेदं धर्मितावच्छेदकीकृत्य चन्द्रगतधर्मप्रकारकज्ञानरूपतया मु
धर्मितावच्छेदकचन्द्रभेदप्रकारकावान्तरवाक्यार्थज्ञानस्य पूर्वमभ्युप
त्वात् । मुखत्वावच्छिन्नविशेष्यताकचन्द्रभेदप्रकारकज्ञानरूपविशेष्य
च्छेदकप्रकारकज्ञानस्यावान्तरवाक्यार्थज्ञानपूर्वमपि योग्यताज्ञानवि
क्षणीयत्वाच्च । चन्द्रभेदावच्छिन्नमुखनिष्ठविशेष्यताकचन्द्रगतधर्मप्रका

---

इत्यादौ, चन्द्रत्वावच्छिन्नप्रतियोगिताकभेदस्य चन्द्रे अभावादित्यर्थः । **तस्य** च
भेदस्येत्यर्थः । धर्मस्य रमणीयत्वादेः । **समवायेति** । प्रकृताभिप्रायम् ।
तद्गतधर्मं एवात्रेवार्थ उक्तः, तथापि वृत्तित्वं धर्मश्च पृथगेव तदार्थोविलक्ष
अत एवाग्रे 'तथा च भिन्नवृत्तित्वे धर्मे च इवपदस्य शक्तिः' इति वक्ष्यति ।
एकशक्तिस्वीकारेऽपि पदार्थैकदेशतया वृत्तौ चन्द्रान्वयो न स्यात् । चन्द्रादेश्च च
पदेनैव लाभेन चन्द्रवृत्तिधर्मे शक्तिकल्पनानौचित्यादनन्तशक्तिकल्पनापत्तेश्च ।
**शिष्ट इति** । एकविशेषणविशिष्टे विशेषणान्तरवैशिष्ट्यमिति रीत्या दण्डी
कुण्डलीति दण्डविशिष्टचैत्रत्वं धर्मितावच्छेदकीकृत्य कुण्डलवैशिष्ट्यबोधात् ।
भेदविशिष्टमुखत्वं धर्मितावच्छेदकीकृत्य तद्गतधर्मप्रकारक इत्यर्थः । **एकत्रे**
चैत्रो दण्डी कुण्डलीति शुद्धचैत्रत्वं धर्मितावच्छेदकीकृत्य दण्डकुण्डलोभयप्रकारक
वत् शुद्धमुखत्वं धर्मितावच्छेदकीकृत्य चन्द्रभेदतद्गतधर्मोभयप्रकारक इत्यर्थः ॥
त्वस्योभयत्रापि धर्मितावच्छेदकतया विचारानन्तर्गतत्वाच्चन्द्रभेदस्यैव धर्मिताव
कतां दर्शयति—**चन्द्रभेदमिति** । यद्विशिष्टे विशेषणान्तरवैशिष्ट्यं भासते
धर्मितावच्छेदकत्वादित्यर्थः । **मुखत्वेति** । मुखं चन्द्रभिन्नमित्याकारस्येत्यर्थः ।
**न्तरेति** । विशिष्टे वैशिष्ट्यमिति विषयताशालिबोधे विशेष्यतावच्छेदकप्रकारक
यस्य हेतुत्वात् वह्निव्याप्यधूमवान्न वा पर्वत इति संशये वह्निव्याप्यधूमवान्
घटत्वात् इति ज्ञानानुदयात् । चन्द्रभिन्नं मुखं चन्द्रगतधर्मवदिति बोधहेतुत्वा
चन्द्रभिन्नमिति निर्णयो विशेष्यतावच्छेदकप्रकारकनिर्णयविधया पूर्वमपेक्षणीय
भावः । तथा च महावाक्यार्थबोधात्पूर्वमवान्तरवाक्यार्थज्ञानस्योक्तविधया त
पूर्वं योग्यताज्ञानविधया शाब्दसमानकारकस्य मुखं चन्द्रभिन्नमित्यस्यापि ज्ञानान्त

तद्योग्यताज्ञानस्य महावाक्यार्थहेतुतयाप्यपेक्षणीयत्वाच्च। तत्पदार्थं धर्मिता-

---

न्तरवाक्यार्थज्ञानविधयापेक्षेति भावः॥ ननु तादृशबोधे तथाविधज्ञानहेतुताया क्लृप्तत्वात्तदपेक्षायां को दोष इत्यत आह—**तत्पदार्थमिति**। भेदो धर्मश्च द्वयमपि इवार्थः। ततश्च इवपदार्थभेदं धर्मितावच्छेदकीकृत्य मुखपदार्थविशेष्यकधर्मरूपेव पदार्थप्रकारको बोधो व्युत्पत्तिविरहान्न स्वीकर्तुं शक्यत इत्यर्थः। अत एव 'ग्रहं संमार्ष्टि' इत्यत्र एकत्वकर्मत्वयोर्विभक्त्या युगपदेव बोधान्नैकत्वविशिष्टग्रहोद्देशे न संमार्गविधिरिति मीमांसकाः॥ नन्वदर्शनमात्रमप्रयोजकमिति चेत्, न, तत्पदार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासंबन्धेन पदान्तरजन्योपस्थितेर्हेतुत्वकल्पनात्। तत्रैकस्य धर्मितावच्छेदकत्वाख्या प्रकारता, अन्यस्य च विधेयत्वाख्येति वैषम्यानौचित्यात्। युगपदेव तदर्थद्वयोपस्थित्या वैषम्ये प्रमाणाभावात् भेदप्रकारकबोधे मुखपदजन्योपस्थितेः पृथक्कारणत्वं कल्पयित्वा धर्मप्रकारकबोधे भेदनिष्ठधर्मितावच्छेदकतानिरूपितमुखनिष्ठविशेष्यतासंबन्धेन मुखपदजन्योपस्थितेः कारणत्वकल्पने चातिगौरवात्॥ ननु चैत्रः पचतीत्यत्र एकत्वविशिष्टश्चैत्रः पाकानुकूलकृतिमानित्याख्यातार्थैकत्वधर्मितावच्छेदकभेदन्यचैत्रपदार्थविशेष्यकाख्यातार्थकृतिप्रकारकबोधः प्रसिद्ध एवेति। न च तत्रैकत्वस्य प्रथमैकवचनार्थत्वान्नाख्यातार्थैकत्वम्, आख्यातार्थैकत्वस्य साधुत्वमात्रार्थत्वेनानन्वयात्। चैत्रस्य समानाभिधानश्रुत्या स्वोत्तरवर्तिविभक्त्यर्थसंख्यावरुद्धत्वेनाख्यातार्थसंख्यायास्तदन्वयाभावादिति वाच्यम्, नैयायिकैराख्यातार्थसंख्याया एव तत्रान्वयोपगमात्। यं यं भावनानुधावति तं तं संख्यापीति तत्सिद्धान्तात्। न चोक्तरीत्या स सिद्धान्तो निर्युक्तिक इति वाच्यम्, प्रथमायाः प्रातिपदिकार्थमात्रे विधाने तात्पर्यग्राहकतया एकत्वस्यापि तदर्थत्वाभावे क्षतिविरहात् तन्मतेऽपि सर्वत्राप्यध्याहारस्यावश्यकतया आख्यातार्थसंख्याया एव तादृशस्थले सर्वत्रान्वयोपपत्तेः प्रथमायास्तात्पर्यग्राहकत्वस्य क्लृप्ततया संख्यांशेऽपि तत्कल्पने लाघवाच्च। अत एव 'शुद्धप्रातिपदिकार्थप्रतिपिपादयिषायां प्रथमा' इति महाभाष्यादिग्रन्थानुकूल्यमिति चेत्सत्यम्, एकशक्ततावच्छेदकावच्छिन्नवाचकताया विवक्षितत्वात्। तत्र ह्येकत्ववाचकता तिप एकवचनत्वावच्छिन्ना, घटमित्यादावप्येकत्वबोधात्। कृतिवाचकताख्याततत्वावच्छिन्ना पचत इत्यादावपि कृतिबोधात्। प्रकृते त्विवपदत्वावच्छिन्नैव इवपदस्योभयवाचकतेति भेदात्। वस्तुतस्तु तत्राप्येकत्वस्य कृतिधर्मितावच्छेदकत्वे मानाभावः, पाकानुकूलवर्तमानकृतिमानेकश्चैत्र इत्येव बोधसंभवात्। श्यामश्चैत्रः पचतीत्यत्र श्यामत्वं धर्मितावच्छेदकीकृत्य चैत्रपदार्थविशेष्यकाख्यातार्थकृतिप्रकारकबोधदर्शनादुक्तम्—**तत्पदार्थं धर्मितावच्छेदकीकृत्येति**। तत्र शामत्वस्याख्यातार्थत्वाभावाददोषः। चैत्र एव पचतीत्यत्र चैत्रान्यः पाकानुकूलकृत्यभाववानित्येवकारार्थं भेदं धर्मितावच्छेदकीकृत्य एवकारार्थाभावप्रकारक-

---

१. 'ता प्रातिपदिकत्वावच्छिन्ना।'

वच्छेदकीकृत्यान्यपदार्थविशेष्यकतत्पदार्थप्रकारकशाब्दज्ञानस्याप्रसिद्धत्व
'चन्द्रभिन्नवृत्तित्वविशिष्टो यश्चन्द्रवृत्तिधर्मस्तद्वत्' इत्यसत्संमते बोधे
चन्द्रभिन्नवृत्तित्वविशिष्टचन्द्रवृत्तिधर्मस्य मुखे वैशिष्ट्यं विषयः। तत्र
'चन्द्रभिन्नवृत्तित्वविशिष्टश्चन्द्रवृत्तिधर्मः' इति विशेषणतावच्छेदकप्रका
ज्ञानमवान्तरवाक्यार्थयोग्यताज्ञानविधया चापेक्षितम्। अथवा—
चन्द्रवृत्तिधर्मस्य तत्र च चन्द्रभिन्नवृत्तित्वस्य वैशिष्ट्यमिति विशेष्ये वि
तत्र च विशेषणान्तरमिति न्यायेनैव बोधः। तथा च 'चन्द्र इव मुखम्'
शाब्दबोधसामग्र्याः 'मुखं न चन्द्र इव' इति चाक्षुषादिकं प्रति प्रति
कत्वे कल्पनीये भवता 'मुखं न चन्द्रभिन्नम्' इत्यादिबाधाभावादिनि

---

बोधो भवत्येवेत्यत उक्तम्—**अन्यपदार्थविशेष्यकेति**। धर्मितावच्छेदकान्त
च्छिन्नविशेष्यताकेत्यर्थः। तत्र चैत्रान्यत्वेनैव तस्य भानं न तु रूपान्तरेण वि
भावः। एकपदार्थधर्मितावच्छेदकान्यपदार्थविशेष्यकबोधोऽपि श्यामश्चैत्रः पचतीत्या
प्रसिद्ध इत्येतदुक्तम्—**तत्पदार्थप्रकारकेति**। यस्य पदस्यार्थो धर्मितावच्छेद
भातस्तस्य तत्पदार्थस्येत्यर्थः। कृतिस्तु न श्यामपदार्थ इति न दोष इति भावः॥
स्वोक्तविशिष्टशक्तिपक्षसमानाकारकबोधमङ्गीकृत्य स्वाभिमतं विशिष्टस्य वैशिष्ट्य
न्यायेन बोधमाह—**चन्द्रभिन्नेति**। रक्तदण्डवान्पुरुष इत्यत्र रक्तत्वविशिष्ट
पुरुष इव चन्द्रभिन्नवृत्तित्वविशिष्टचन्द्रावृत्तिधर्मस्य मुखे वैशिष्ट्यम् एतादृशबोधे च
शेषणतावच्छेदकप्रकारनिर्णयः कारणम्, रक्तो दण्डो न वेति संशयसत्त्वे रक्तदण्डवा
बोधानुदयात्॥ विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति न्यायेनाप्याह—
**वेति**। यथा रक्तदण्डवान्पुरुष इति ज्ञाने पुरुषे दण्डस्य, दण्डे च रक्तत्वस्य, वै
भासते तथा मुखे चन्द्रगतधर्मस्य, धर्मे च चन्द्रभिन्नवृत्तित्वस्य वैशिष्ट्यं भासत
त्यर्थः॥ चन्द्रभिन्नं मुखं चन्द्रगतधर्मवदिति बोधे मुखं चन्द्रभिन्नमित्यादिज्ञानापेक्ष
धानात्प्रयुक्तगौरवोपन्यासमुखेन दूषयितुमाह—**तथा चेति**। **चन्द्र इवेति**।
भिन्नं मुखं चन्द्रगतधर्मवदिति चन्द्रभेदावच्छिन्नं मुखनिष्ठविशेष्यताकचन्द्रगतधर्म
कशाब्दबोधजनिकायाः सामग्र्या इत्यर्थः। **मुखं न चन्द्र इवेति**। मुखवृत्तिच
दृश्याभावविषयकचाक्षुषेत्यर्थः। समानविषये प्रत्यक्षसामग्र्या एव बलवत्त्वान्मुखं
इवेति चाक्षुषं प्रति तादृशसामग्र्याः प्रतिबन्धकत्वमिच्छां विना अप्रसिद्धमिति
षसामग्र्या अभावविषयकत्वमुक्तम्। तथा च सादृश्यविषयकशाब्दसामग्र्याः सा
भावरूपभिन्नविषयकचाक्षुषं प्रति प्रतिबन्धकत्वम्। भिन्नविषये प्रत्यक्षसामग्र्या
शाब्दसामग्र्या एव बलवत्त्वस्वीकारादिति भावः। **बाधाभावेति**। अन्यथा तदति
मुखं चन्द्र इत्येतादृशशाब्दसामग्रीसत्त्वेऽपि मुखं न चन्द्र इवेति चाक्षुषस्यैवोत्पत्त्या

कार्ये मुखत्वावच्छिन्नविशेष्यताकचन्द्रभेदाभावप्रकारकनिर्णयस्य मुखत्वावच्छिन्नविशेष्यताकचन्द्रभेदप्रकारकज्ञानप्रतिबन्धकतया तदानीं 'मुखं चन्द्रभिन्नम्' इति विशेष्यतावच्छेदकज्ञानाभावेन शाब्दबोधानुदयात् । मन्मते तूक्तबोधस्य चन्द्रभेदांशे निर्धर्मितावच्छेदकत्वेन मुखत्वावच्छिन्नविशेष्यताकचन्द्रभेदाभावप्रकारकनिर्णयप्रतिबध्यतावच्छेदकानाक्रान्ततया तादृशशाब्दबोधोत्पत्तौ बाधकाभावेन तदभावनिवेशने प्रयोजनाभावात् । न च—'चन्द्रवृत्तिधर्मो न चन्द्रान्यवृत्तिः' इति बाधाभावस्त्वयापि सामग्रीप्रतिबन्धकतायां निवेशनीयः—इति वाच्यम्, तन्निवेशस्य तवाप्यावश्यकत्वात् । तादृशज्ञानसत्त्वे 'मुखं चन्द्रगतधर्मवत्' इति ज्ञानस्याप्यनुत्पत्तेः । चन्द्रान्यवृत्तित्वावच्छिन्नाभावस्य तद्विषयत्वात् । वस्तुत इदं प्रतिबन्धकमेव नास्ति द्रव्यत्वादेश्चन्द्रतद्भिन्नोभयवृत्तित्वात् । तन्मात्रगर्भे च ग्राह्याभावान-

---

चाक्षुषे तादृशशाब्दसामग्र्यभावहेतुतायां व्यभिचारापत्तेः ॥ ननु तदापि शाब्दबोध एव कुतो न भवतीत्याह—**मुखत्वेति** । मुखं चन्द्रभेदाभाववदिति ज्ञानस्य मुखं चन्द्रभिन्नमित्याकारकज्ञानं प्रति प्रतिबन्धकत्वात्तादृशज्ञानसत्त्वे मुखं चन्द्रभिन्नमिति ज्ञानानुदयात् तद्व्यतिरेकेण च विशेष्यतावच्छेदकप्रकारकज्ञानविरहेण चान्द्रभिन्नं मुखं चन्द्रगतधर्मवदिति शाब्दबोधासंभवात् । तथा चाहुः—'अवान्तरवाक्यार्थायोग्यत्वनिर्णयदशायां महावाक्यार्थज्ञानानुदयात्' इति ॥ अत्र मुखं चन्द्रभेदाभाववदिति ज्ञानं मुखत्वावच्छेदेन चन्द्रभेदाभावप्रकारकमवशेयम् । अन्यथा विशेष्यतावच्छेदकसामानाधिकरण्येन बाधज्ञानस्य विशेष्यतावच्छेदकसामानाधिकरण्येन विशिष्टबुद्धिप्रत्ययविरोधितया मुखत्वसामानाधिकरण्येन चन्द्रभेदाभावग्रहेऽपि मुखत्वसामानाधिकरण्येन चन्द्रभेदप्रकारकज्ञानसंभवात् । मुखत्वावच्छेदेन तदभावग्रहे तु मुखत्वसामानाधिकरण्येनापि न चन्द्रभेदग्रहसंभवः, विशेष्यतावच्छेदकावच्छेदेन तदभाववत्ताज्ञानस्य विशेष्यतावच्छेदकावच्छेदेन विशेष्यतावच्छेदकसामानाधिकरण्येन च तद्विशिष्टबुद्धौ विरोधित्वात् ॥ ननु तादृशबाधाभावो भवतापि निवेश्य एवेति सामान्यमेवेत्यत आह—**मन्मते त्विति** । **उक्तबोधस्येति** । चन्द्रभिन्नवृत्तित्वविशिष्टचन्द्रगतधर्मवदित्यर्थः । **निर्धर्मितेति** । चन्द्रभिन्नेत्यत्र हि चन्द्रभेदप्रकारक एव बोधः, न तु मुखत्वादिकं धर्मितावच्छेदकीकृत्य वह्निव्याप्यवान्पर्वत इति धूमत्वाद्यनालिङ्गितव्याप्तिप्रकारकज्ञानवदित्यर्थः । **अनाक्रान्ततयेति** । तद्धर्मावच्छिन्नविशेष्यताकतद्विशिष्टबुद्धिं प्रति तद्धर्मावच्छिन्नविशेष्यताकतदभाववत्ताज्ञानस्यैव प्रतिबन्धकत्वात् । मुखं चन्द्रभेदाभाववदिति मुखत्वावच्छिन्नविशेष्यताकचन्द्रभेदप्रकारकज्ञानस्य किंचिद्धर्मावच्छिन्नविशेष्यताकचन्द्रभेदप्रकारकज्ञाने

वगाहितयैव न तथा । नहि चन्द्रगतधर्माभिन्नधर्मो ग्राह्यः, अपि तु त
जातीय इति । तादृशाभावावगाहि न एव तर्हि निवेश आवश्यकः
इति चेत् । तवापि तुल्यमिति दत्तोत्तरत्वात् । एवं 'मुखं न चन्द्रग
र्मवत्' इति बाधाभावादयोऽप्युभाभ्यामेव निवेशनीया इति । न च '
न चन्द्रभिन्नम्' इति मानसं प्रति 'चन्द्र इव मुखम्' इति शाब्दबोध
मग्र्याः प्रतिबन्धकत्वाकल्पनेन मम लाघवम् । तत्काले विशेष्यताव
दकप्रकारकनिर्णयविधया 'मुखं चन्द्रभिन्नम्' इति निर्णयस्यावश्यक
तत एव मानसवारणात्—इति वाच्यम्, 'चन्द्रान्यवृत्तिधर्मो न च
वृत्तिः' इति मानसं प्रति तादृशसामग्र्याः प्रतिबन्धकत्वाकल्पनप्रयुक्त
घवस्य ममापि समत्वात् । सामग्रीप्रतिबन्धकतायां तादृशाभावनिवेश
क्षया सामग्रीप्रतिबन्धकत्वकल्पनेऽपि लाघवसंभवाच्च ॥

नापि द्वितीयः—चन्द्रगतधर्मस्य विधेयत्वप्रतीतिवच्चन्द्रभेदस्यापि
विधेयत्वेन प्रतीत्यापत्तेः । न चेष्टापत्तिः, अनुभवविसंवादात् । अत
'मुखं चन्द्रगतधर्मवन्न वा' इति संशयस्यैवेतो निवृत्तिः, न तु 'चन्द्र
न वा' इत्यस्येति । मम तु 'विशेष्ये विशेषणम्' इति न्यायेन मुखे ध
तत्र चन्द्रभिन्नवृत्तित्वस्य च धर्मे मानाभ्युपगमेऽपि मुखे धर्मस्यैव विशे
तया मुखोद्देश्यकधर्मविधेयकप्रतीतिनिर्वाहान्नानुपपत्तिलेशोऽपि । तथा च

---

प्रतिबन्धकत्वासंभवाद्विशेषणतावच्छेदकप्रकारकज्ञानसत्त्वेन तादृशशाब्दबोधोत्पत्तौ
काभावात् ॥ त्वया तूक्तरीत्या मुखत्वावच्छिन्नविशेष्यताकचन्द्रभेदप्रकारकज्ञान
रान्मुखत्वावच्छिन्नविशेष्यताकचन्द्रभेदाभावप्रकारकज्ञानसत्त्वे च तादृशज्ञानानुद
विशेष्यतावच्छेदकप्रकारकज्ञानाभावे च तादृशविशिष्टबोधानुपपत्तेरवश्यमुक्तबाधा
निवेश्य इत्याशयः ॥ उभाभ्यामेवेति । मुखे चन्द्रगतधर्मवैशिष्ट्यस्योभयम
ग्राह्यत्वाभ्युपगमादित्यर्थः । लाघवसंभवादिति । सामग्र्यां बाधाभावनिवेशे
कारणैः सह विशेष्यविशेषणभावे विनिगमनाविरहेण गौरवमित्यर्थः ॥ प्रतीत्या
रिति । चैत्रो दण्डी कुण्डलीत्यादौ दण्डकुण्डलयोर्द्वयोरपि विधेयत्वप्रतीतेः ॥ वि
दादिति । धर्मस्यैव विधेयत्वानुभवान्न तु भेदस्यापीति ॥ अत एवेति ।
विशेषणमिति रीत्या बोधाभ्युपगमादेवेत्यर्थः । अत एवात्र चन्द्रभेदांशे निर्धर्मिता

१. सामान्येन.

वृत्तित्वे धर्मे चेवशब्दस्य शक्तिः, त्वयापि शक्तित्रयस्यैवोक्तविषये कल्प्यत्वात् । नच—मम भेदे शक्तिः, तव तद्वतीति वाच्यम्, भेदवत्यप्येकस्या एव शक्तेः कल्प्यत्वात् । न च—भेदत्वं शक्यतावच्छेदकम्, तव तु भेद इति वाच्यम्, तस्यापि भेदघटितत्वात् । तत्र च प्रतियोगितासंबन्धेन तदेकदेशे भेद उपमानस्य चन्द्रादेरन्वयः । भिन्न[पदार्थ]स्य च वृत्तित्वे चन्द्रस्यापि वृत्तित्वेऽन्वय आकाङ्क्षाबलात् । न च—चन्द्रभिन्नस्य वृत्तित्वान्वयो मदपेक्षयाधिकः—इति वाच्यम्; वृत्तित्वनिष्ठविशेष्यतानिरूपितप्रकारतासंसर्गेणान्वयबोधं प्रति चन्द्रादिपदजन्योपस्थितित्वेन हेतुत्वस्य त्वयापि कल्पनीयतया तत्र चन्द्रादिकमभिनिवेश्य भेदप्रतियोग्यनुयोग्यन्यतरार्थकपदजन्योपस्थितित्वेनैव कारणताकल्पनात् । उपमानानामनन्ततया तद्घटितकार्यकारणभावानामानन्त्येन तदपेक्षयोक्तरीतेरेव लाघवेनादरणीयत्वात् । न च—

---

दक एव बोधः, अत एव मुखं चन्द्रभिन्नं न वेति मुखत्वावच्छिन्नविशेष्यताकसंशयो न निवर्तते । मुखं चन्द्रभिन्नमिति बोधाभ्युपगमे तु सोऽपि निवर्तेत इत्यर्थः । **तद्वतीति** । भेदवतीत्यर्थः । **एकस्या एवेति** । शक्तिबाहुल्यस्यैव गौरवावहत्वादित्यर्थः । विषयगौरवमुद्भावयति—**न चेति** । **भेद इति** । तथा च त्वया भेदवतः शक्यत्वे भेदस्य शक्यतावच्छेदकता भेदत्वस्य च शक्यतावच्छेदकता(वच्छेदकता) कल्प्या, जात्यतिरिक्तपदार्थनिष्ठावच्छेदकतायाः किंचिद्धर्मावच्छिन्नत्वनियमादिति गौरवमिति भावः ॥ **तस्यापीति** । भेदत्वस्याखण्डोपाधित्वे प्रमाणाभावेन भेदघटितसखण्डोपाधिरेव भेदत्वमिति तन्निवेशस्य तवापि सत्त्वादित्यर्थः ॥ तस्मात्पूर्वमते वृत्तित्वे शक्तिरत्र तु भिन्ने धर्मे वृत्तित्वे च मतद्वयेऽपि शक्तिरिति ध्येयम् । अत एव पूर्वं वृत्तित्वं पृथगेवार्थ इत्यत्रोक्तग्रन्थसंमतिरपि दर्शितेति । **भिन्नपदार्थेति** । भेदवतः पदार्थत्वे भेदस्य तदेकदेशत्वात् । अन्यथा इवपदार्थत्वेन भिन्नपदार्थ इत्यसंगतं स्यात् । तथा च भिन्नरूपो यः पदार्थ इति कर्मधारयः । न च पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति कथमेतदिति वाच्यम्, स संबन्धिकस्थले चैत्रस्य भ्रातेत्यादावेकदेशान्वयाभ्युपगमात् । अतस्तादृशस्थले तत्पदार्थप्रकारकशाब्दबुद्धौ अवच्छेदकतासंबन्धेन तत्पदजन्योपस्थितेर्हेतुत्वमभ्युपेयम् ॥ **मदपेक्षयेति** । चन्द्रस्य भेदान्वयो वृत्तित्वान्वयश्चोभयत्र तुल्यः, भिन्नस्य वृत्तित्वे पुनरन्वयस्तु तवाधिक इति गौरवमिति भावः । **भेदप्रतियोगीति** । यद्यप्येतदपेक्षयोपमानार्थकपदजन्योपस्थितित्वेन कारणत्वकल्पने गौरवभेदाभावस्तथाप्युपमानत्वस्य सादृश्यप्रतियोगित्वरूपतया सादृश्यस्य तद्भिन्नत्वादिबहुधर्मघटिततया गौरवमेवेत्यवधेयम् ॥ यदि तु चन्द्रादिपदजन्योपस्थितित्वेनैव कारणता कल्प्यते तत्राह—**उपमानानामिति** । **न च मदिति** ।

मन्मते वृत्तित्व एव न शक्तिः सामानाधिकरण्यसंबन्धेन चन्द्रभेदस एवान्वयाभ्युपगमात्, तथा च 'सामानाधिकरण्यसंबन्धेन चन्द्रभेदवि यो धर्मस्तद्वन्मुखम्' इत्येव धीः—इति वाच्यम्, ममापि 'स्वाश्रयवृत्ति बन्धेन भिन्नविशिष्टो यो धर्मस्तद्वत्' इति वक्तुमव्याघातात् ।

एतावान्परं विशेषः—तव विशेषणतासमवायाद्युभयघटितं साम धिकरण्यं संसर्गः, मम त्वभेदसमवायादिघटितं तदिति विशेषणताप च तादात्म्यस्य लाघवमिति सांप्रदायिकसिद्धतया तादात्म्यस्य सामान करण्यघटितत्वे लाघवं परं ममातिरिच्यते । अथ चन्द्रभिन्नाश्रय त्वबोधेनैव मुखस्य तद्वत्त्वधीसिद्ध्या मुखे तद्वत्त्वस्य पौनरुक्त्यापत्तिः—इ चेत् । सामानाधिकरण्यसंबन्धेन धर्मे चन्द्रवैशिष्ट्यबोधेऽपि तुल्यमेत सांसर्गिकविषयतायाः सत्त्वेऽपि तत्प्रकारकबोधाभावान्न तथेति चेत् । म समानमेव समाधानम् । एवं सति चन्द्रगतत्वबोधानुपपत्तिः । तथा तन्निरूपितसादृश्यबोधानुपपत्तिः—इत्यप्यावयोस्तुल्यम् । चन्द्रवृत्तित्व रकबोधानुरोधेन तत्र शक्तिरेवेत्यपि तुल्यमेव । न च—चन्द्रभिन्नवृ बोधे मुखे तद्वत्ताज्ञानं न स्यात् अनाकाङ्क्षत्वात्—इति वाच्यम्, मु शेष्यकतद्धर्मप्रकारकबोधस्य ततोऽभावेन पौनरुक्त्याभावात् । अत

---

तथा च वृत्तित्वनिष्ठेत्यादिहेतुहेतुमद्भावो सिद्ध एव । त्वया तु वृत्तित्वे शक्तिस्तत्र न्वयाय हेतुहेतुमद्भावश्च कल्प्य इति गौरवमिति भावः । **सांप्रदायिकेति** । षणतायाः स्वरूपसंबन्धत्वेऽतिरिक्तत्वे वा गुरुत्वमेवेति तत्र तत्र ग्रन्थदर्शनात् । चाणुरपि विशेषोऽध्यवसायकार इति न्यायेन मन्मत एव लाघवमित्यर्थः । इदं च त्योक्तम् ॥ वस्तुतस्तु एतत्पक्षे वृत्तित्वसंबन्धमात्रेण भिन्नस्य धर्मान्वयः । त सामानाधिकरण्यापेक्षया तस्य संसर्गत्वे स्पष्टमेव लाघवमिति नानुपपत्तिः ॥ पौ **क्त्यापत्तिरिति** । चन्द्रभिन्नाश्रयवृत्तित्वे धर्मस्यावगाह्यमाने मुखस्यापि चन्द्रभि तद्वृत्तित्वस्याप्यवगाहनात् ॥ **सामानाधिकरण्यसंबन्धेनेति** । विशेषणतासं चन्द्रभेदाधिकरणे समवायादिना रमणीयत्वादेर्वृत्तित्वे संसर्गतयावगाह्यमाने मुख तादृशभेदाधिकरणतया तत्रापि धर्मस्य वृत्तित्वग्रहात् । सामानाधिकरण्यस्य उभ संसर्गत्वाविशेषादित्यर्थः ॥ **सांसर्गिकेति** । यद्यपि तत्रापि मुखे धर्मवैशिष्ट्यं वि न भासते इति न पौनरुक्त्यावकाशस्तथापि तदभ्युपेत्येदमुक्तम् ॥ **मुखविशेष्य** अयमाशयः । [illegible] हि शाब्दसमानाकारकज्ञाने च तत्पूर्वं सत्येव भवति ।

'घटत्वम्' इत्यत्र भावप्रत्ययस्य समवायसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकघटवृत्त्यन्योन्याभावप्रतियोगितानवच्छेदकत्वार्थकतया घटवृत्तित्वस्य लाभेऽपि समवायसंबन्धेन घटवृत्तित्वस्य घटत्वे प्राप्त्यभावेन प्रकृत्यर्थघटस्य घटत्वे समवायेनान्वयोऽङ्गीकृतः । नहि चन्द्रभिन्नवृत्तित्वेन धर्मस्य मुखवृत्तित्वबोधो भवति, तदन्यवृत्त्यापि तत्पर्यवसानात् । नहि तद्भिन्नत्वावच्छिन्नवृत्तित्वं तदर्थो बाधादिति यत्किंचिदेवैतत् । अथैवमनन्वयविलोपापत्तिः, त्वन्मते भेदस्योपमेयान्वयाभावेन तत्रापि चन्द्रभिन्नवृत्तिचन्द्रवृत्तिधर्मवांश्चन्द्र इति बोधसंभवात्—इति चेत्, 'चन्द्रभिन्नत्वे सति चन्द्रगतधर्मवान्' इतिबोधवादिनस्तवापि कथं नैतद्दोषावकाशः, उभयभेदस्य चन्द्रेऽपि सत्त्वात् ।

---

'शाब्दप्रमायां यथार्थयोग्यता ज्ञानं हेतुः' इति व्युत्पत्तिवादस्थमणिकारव्याख्यानावसरे बाधाभावस्य योग्यतारूपतया वाक्यार्थज्ञानजनकत्वापत्तिरित्युक्त्वा पक्षधरमिश्रैरुक्तम्—'अनुमाने सिद्धसाधनवत् शब्दे पुनरुक्तस्य दोषत्वात्' इति । शब्दखण्डेऽपि वैशेषिकानुमानप्रकरणे 'क्वचिद्योग्यतानिर्णयस्यापि शाब्दधीहेतुत्वम्' इति मूलमधिकृत्य तथा सति वाक्यार्थबोधसत्वात्कथं शब्दस्य तद्बोधकत्वमित्याशङ्क्य शाब्दं जायतामितीच्छामाश्रित्य शाब्दबुद्धिः समर्थिता । अत्र च चन्द्रभिन्नवृत्तित्वे बुद्धेऽपि मुखत्वं विशेष्यतावच्छेदकीकृत्य तादृशधर्मप्रकारकः शाब्दबोधो विवक्षितस्तत्समानाकारकबोधस्य पूर्वमसिद्ध्या न तथेति । अत एव विसकलितयोरेव पदार्थतत्संसर्गयोस्तात्पर्यग्रह इति न तदर्थमनुमानपूर्वं विशिष्टोपस्थिसिरभ्युपयेति वदद्भिः पक्षधरमिश्रैस्तात्पर्यविषयत्वस्य संसर्गग्रहे विशेषणत्वे हेतुज्ञानदशायामेव वाक्यार्थबोधापत्त्या कथं शाब्दरूपानुमितिरिति दोषो निराकृतः । तात्पर्यज्ञानस्य शाब्दधीहेतुतावादिभिरपि नैयायिकैस्तादृशरीतेरेवानुसृतत्वादिति दिक् ॥

लाभेऽपीति । घटत्वस्य घटवृत्तित्वं विना घटवृत्त्यन्योन्याभावप्रतियोगितानवच्छेदकत्वानुपपत्तेः । तदवृत्तिघटवृत्तित्वं विना धर्मस्य तद्वृत्तिभेदप्रतियोगितावच्छेदकत्वनियमात् । घटावृत्तेः पटत्वस्येव घटवृत्तिभेदे पटत्वावच्छिन्नप्रतियोगिताकभेदस्य घटे सत्वादिति भावः ॥ अङ्गीकृत इति । रामकृष्णभट्टाचार्यादिभिरिति शेषः । एवं च यत्र वस्तुतस्तद्वृत्तित्वं भासते तत्रापि शाब्दसमानाकारकबोधाभावान्न पौनरुक्त्यमिति स्थितिः । अत्र तु मुखभिन्नवृत्तित्वं विनापि चन्द्रभिन्नवृत्तित्वज्ञानपर्यवसानमिति कुतस्तदादाय पौनरुक्त्यप्रसङ्गवार्तापीत्यभिप्रायवानाह—नहीति । तदन्येति । मुखान्येत्यर्थः । बाधादिति । तादृशरमणीयत्वादेर्घटादावभावादित्यर्थः ॥ विलोपापत्तिरिति । तत्रान्युपमाया एव संभवात् । तवापीति । धर्मविशेष्ये भेदान्वयवादिन इत्यर्थः । ननु चन्द्रभेदस्य चन्द्रान्वयानर्हत्वाच्चन्द्रश्चन्द्रभिन्नत्वे सति चन्द्रगतधर्मवानिति बोधो मत्पक्षे तत्र न संभवतीति कथं साम्यमित्यत आह—उभयेति । घटचन्द्रोभयभेदस्य व्यास-

व्यासज्यवृत्तिधर्माद्यनवच्छिन्नप्रतियोगिकत्वादिनान्योन्याभावविशेषणा चेत्, तादृशं विशेषणमेव किमर्थं दीयत इति पर्यनुयोगात् । तत्र क्षितबोधनिर्वाहार्थं भिन्नव्युत्पत्तिस्वीकार इति तु ममापि तुल्यम् । न वार्थे भेदे तादृशप्रतियोगिताकत्वं विशेषणं देयमेव' इति नियमः, भे क्षायां तत्रोपमात्वस्यापि स्वीकारात् । न चात्र मानाभावः, प्रामाणि शोऽङ्गीकारात् । प्रत्युत धर्मे चन्द्रभिन्नवृत्तित्वबोधेन चन्द्रस्यान्यनिष्ठसा प्रतियोगित्वलाभेन चन्द्रनिष्ठसादृश्यप्रतियोग्यन्तरव्यवच्छेदव्यञ्जनानुगु त् । अन्यथा—उपमानान्तरव्यावृत्तिवत्तदुपमेयान्तरव्यावृत्तेरपि व्य सङ्गात् । न चेष्टापत्तिः,—चन्द्रस्यान्यनिष्ठसादृश्यप्रतियोगित्वान्यप्र गिकसादृश्यानाश्रयत्वोभयबोधे चमत्कारोत्कर्षस्यानुभवसिद्धस्यापह्नु त्वादित्यलं बहुना ।

इदं चात्र विभाव्यम्—साधारणधर्मस्य शाब्दत्वे तद्रूपेणैव स इव अन्यथा धर्मत्वेनैव । तथा च 'चन्द्र इव मुखं रमणीयम्' इत्यत्र 'च तियोगिकान्योन्याभावसमानाधिकरणं यच्चन्द्रवृत्ति रमणीयत्वं तद मुखम्' इति बोधः । 'चन्द्र इव मुखम्' इत्यत्र तु 'तादृशचन्द्रवृत्ति न्मुखम्' इति । अत एवात्र श्रौतीत्वमुपपद्यते । साधारणधर्मस्योपमा

---

ज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्येत्यर्थः । **व्यासज्यवृत्तिधर्मेति** । उ स्वरूपेत्यर्थः । आदिपदात्किंचिद्विशिष्टचन्द्रत्वादिसंग्रहः । **विशेषणादिति** । उ न्वयाभ्युपगमात् । तथा च उपमानस्य चन्द्रादिपदार्थस्य उपमानतावच्छेदक च्छिन्नप्रतियोगिताकत्वसंबन्धेन इवार्थभेदेऽन्वयस्वीकारात् उभयत्वादेश्चोपमानता कत्वविरहात्तदवच्छिन्नप्रतियोगिताकत्वेन विशिष्टस्यान्योन्याभावस्य चन्द्रान्वया दोष इत्यर्थः ॥ **विशेषणमिति** । इवार्थभेदे उपमानस्य उपमानतावच्छेदका प्रतियोगिताकत्वेनैवान्वयो भवतीति न वक्तुं शक्यमिति भावः ॥ ननूपमानोप वच्छेदकयोरैक्य उपमा न स्वीक्रियत एवेत्याशङ्कते—**न चात्रेति** । उ पमेययोरैक्येऽप्युपमास्वीकारेऽनन्वयोच्छेदापत्तेरित्यर्थः । **प्रामाणिकैरिति** । वा मिश्रादिभिरित्यर्थः । दहराधिकरणादौ उपमानोपमेयाभेदेऽपि कल्पितं भेदमा मेति भामत्यादावङ्गीकृतत्वात् । तच्चानन्वयप्रस्तावे दर्शयिष्यते भिन्नव्युत्पत्तीति वृत्तित्वस्य धर्मस्य च इवपदार्थत्वं उपमानतावच्छेदकावच्छिन्नप्रतियोगिताक मेयकत्वं विवक्षितमित्यपि प्रागुक्तं न विस्मर्तव्यम् । यथोक्तबोधस्वीकारेऽपि क्षतिरित्यभ्युपगमवादेनाह—**प्रत्युतेति** । प्रकृते संगमयति—**अत एवेति** ।

योभयनिष्ठताया इवपदेन प्रतिपादनात् । तत्र समानाधिकरणान्तेनोपमेयवृत्तित्वम्, वृत्त्यन्तेनोपमानवृत्तित्वमिति विवेकः । न च—चन्द्रान्यवृत्तित्वस्य ततो लाभेऽपि मुखवृत्तित्वस्याबोधात्कथमेतत्—इति वाच्यम्, उपमेयस्यापि चन्द्रान्यतया सामान्यतस्तद्वृत्तित्वलाभात् । तावतैव प्रकृतव्यवस्थोपपत्तेः । ननु साधारणधर्मप्रयोगस्थले तस्यैवेवपदेन रमणीयादिपदेन च बोधने एकस्य निराकाङ्क्षत्वादन्वयानुपपत्तिः । न च—उभाभ्यामेक एवोपस्थाप्यते—' इति वाच्यम्, तावतापि 'चन्द्र इव मुखमाह्लादयति' इत्यादावनुपपत्त्यनुद्धारात् । आह्लादकत्वस्य धात्वर्थतया नामार्थे मुख आश्रयत्वादिभेदसंबन्धेनान्वयायोगात् । धात्वर्थनामार्थयोः साक्षाद्भेदान्वयस्याव्युत्पन्नत्वात् । न च—'चैत्रेण न सुप्यते' इति भावार्थकप्रत्ययस्थले धात्वर्थस्य प्रतियोगितासंबन्धेन नञर्थे 'न कलञ्जं भक्षयेत्' इत्यादौ नञर्थस्य विशेषणताविशेषसंबन्धेन भक्षणे चान्वयदर्शनान्न दोषः—इति वाच्यम्, तावता

---

न्द्रवृत्तित्वेन धर्मस्योपमानवृत्तित्वं चन्द्रभिन्नवृत्तित्वेन च मुखरूपोपमेयवृत्तित्वं बोध्यते, इवपदेन अत इत्यर्थः ॥ **श्रौतीति** । श्रुत्या शब्दशक्त्यैव उभयवृत्तित्वस्य धर्मे बोधादित्यर्थः ॥ **सामान्यत इति** । चन्द्रभिन्नत्वरूपेणेत्यर्थः ॥ **इवपदेनेति** । रमणीयादिपदप्रयोगसत्वे रमणीयत्वादिरूपेणैव धर्मस्य इवपदाद्बोध इत्युक्तत्वात् । **निराकाङ्क्षत्वादिति** । रमणीयत्वरूपेण वारद्वयमुपस्थितौ तयोः परस्परमन्वयानुपपत्तेः, एकरमणीयत्वान्वयेनैव निराकाङ्क्षतया द्वितीयस्य तस्य मुखाद्यन्वयानुपपत्तेः तत्रापि धर्मत्वेनैवोपस्थित्यभ्युपगमे तु भिन्नप्रकारकोपस्थितिसत्वे रमणीयत्वादेरभेदेन धर्मान्वयसंभवात्तादृशरमणीयत्वाभिन्नधर्मवदिति धीसंभवात् । **एक एवेति** । एकस्य तात्पर्यग्राहकत्वोपगमात् इवादेरेव रमणीयत्वादिरूपेण धर्मोपस्थापकत्वोपगमादिति भावः । तदेतदनाकलय्य प्रत्यवतिष्ठते—**तावतापीति** ॥ चन्द्र इव मुखं रमणीयमित्यादौ (रमणीयत्वादे रमणीयादिपदार्थत्वान्मुखादावन्वयोपपत्तावपि आह्लादयतीत्यादौ) तदसंभवादित्यर्थः ॥ ननु तत्रापि धात्वर्थस्याह्लादकत्वस्याश्रयतया मुखादावनन्वयः कुतो न स्यादत आह—**धात्वर्थेति** ॥ तण्डुलं पचतीत्यादौ विभक्त्यर्थकर्मत्वान्वयद्वारा नामार्थस्य तण्डुलस्य धात्वर्थपाकान्वयाङ्गीकारात् साक्षादित्युक्तम् । विभक्त्यर्थाविशेषणीभूयेत्यर्थः । स्तोकं पचतीत्यादौ नामार्थस्य स्तोकस्य तादात्म्येन पाकान्वयदर्शनात् भेदेनेत्युक्तम् । अभेदादतिरिक्तसंबन्धेनेत्यर्थः ॥ **न सुप्यत इति** । तत्र प्रत्ययस्यानर्थकत्वेन स्वापा[illegible] बोधात् ॥ विशे[illegible] । [illegible]भावपर्यवसायकत्क-

धात्वर्थनिपातार्थयोरन्वयेऽपि निपातातिरिक्तनामार्थधात्वर्थयोरन्वयसा
नात् । अन्यथा 'तण्डुलः पचति' इत्यत्र कर्मतासंसर्गेण तण्डुलस्य
न्वयापत्तेः—इति चेत्, न । तादृशस्थले आह्लादकत्वादिकमिवार्थ
धातुस्तु तात्पर्यग्राहकमात्रमिति वाच्यत्वात् । अथैवं 'हंसीव धवलश्च
इत्यादेः कथं दुष्टत्वम्, उक्तभेदे लिङ्गभेदस्याप्रतिकूलत्वात्—इति
मैवम् । नहि शाब्दबोधप्रतिकूलतयैव दोषत्वम् । अतएव यत्र पुंलिङ्ग
पमेये नित्यस्त्रीलिङ्गस्योपमानस्य न पुंलिङ्गतासंभवः, यत्र चैकवचन
ऽप्युपमेये नित्यबहुवचनान्तस्योपमानस्य नैकवचनान्तत्वसंभवः, त
लिङ्गवचनभेदेऽपि न दोषः । तदुक्तमाचार्यदण्डिना—

'न लिङ्गवचने भिन्ने न न्यूनाधिकतापि च ।
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥
स्त्रीव गच्छति षण्डोऽयं वक्तीयं स्त्री पुमानिव ।
प्राणा इव प्रियोऽयं मे विद्या धनमिवार्जिता ॥'

इति ॥ सहृदयोद्वेगबीजं तूक्तरीत्या प्रकृतानुपयुक्तलिङ्गवचनविशे
दानमेव । न च तन्नियतलिङ्गवचनेषु, इति न तत्रोद्वेग इत्यर्थः ।

---

लञ्जभक्षणमिति बोधोदयात् ॥ **अन्यथेति** । निपातातिरिक्तनामार्थधात्वर्थयोरपि
क्षाद्भेदान्वयस्वीकारे इत्यर्थः । **तण्डुल इति** । न च तादृशार्थे प्रथमाया असा
न दोष इति वाच्यम् । असाधुत्वज्ञानाभावदशायां तदापत्तेः । कर्मत्वप्रकारकबोध
तत्र द्वितीयायाः साधुत्वम् । अतः कर्मत्वसंसर्गकबोधः स्यादेवेत्यन्ये ॥ इवपदे
शिष्यधर्मोपस्थापने रमणीयादिपदानामेव तात्पर्यग्राहकत्वमिति पूर्वोक्ताभिप्रायं
दयति—**तादृशस्थल इति** ॥ **इवार्थ एवेति** । तथा च धात्वर्थत्वविरहाच्च
नामार्थान्वयानुपपत्तिरित्यर्थः । न चात्र आश्रयत्वस्याख्यातार्थत्वात्तदन्वितस्याह्ल
त्वस्य मुखान्वयः संभवत्येवेति किमर्थं धातोस्तात्पर्यग्राहकत्वकल्पनमिति वा
एवमपि चन्द्रस्य वृत्तित्वसंबन्धेनाह्लादकत्वान्वयानुपपत्तेः ॥ चन्द्रभिन्नवृत्तिचन्द्रा
ह्लादकत्वाश्रयो मुखमिति बोधासिद्धेः ॥ न च इवार्थवृत्तावेव चन्द्रादेरन्वयः, त
वृत्तित्वस्य आल्हादकत्वान्वयः निपातार्थस्य धात्वर्थान्वयव्युत्पत्तेरिति वाच्यम् ।
शाब्दबोधप्रतिकूलतयैवोपमादोषत्वमिति नियमोऽप्यस्तीत्याह—**हीनताधीति** ।
त्सहृदयोद्वेगः क्वचिन्नेत्यत्र किं नियामकमत आह—**सहृदयेत्यादि** । न च ता
तत्र तादृशलिङ्गवचनान्तराभावेनान्यथानुपपत्त्या व्यधिकरणयोरपि लिङ्गवचनयोः

---

१. 'हीनताधिकतापि' इति पाठष्टीकासंमतः.

च काव्यादर्शविवरणकृद्भिर्मल्लिनाथादिभिरपि व्याख्यातम् । नियतवचनत्वं च स्वशक्यार्थाभिधानानियतस्वकत्वम् । तत्त्वेनानुशासनतात्पर्यविषयत्वमिति यावत् । प्राणा दारा इत्यादेश्चैकस्मिन्नपि प्रयोगेण बहुत्वाभिधानानियमात् । तेन प्राणशब्दस्य कोषादावेकवचनान्तत्वेनानुशासनेऽपि 'पुंसि भूम्न्यसवः प्राणाः' इति बहुवचनान्तत्वेनाप्यनुशासनमस्त्येवेति न दोषसंभवः ।

'चन्द्रेण तुल्यं मुखम्' इत्यत्र तु तुल्यपदस्य सादृश्यवानर्थः, केवलसादृश्ये तदप्रयोगात्, 'सादृश्याभिन्नं मुखम्' इति बोधापत्तेश्च । नामार्थयो-

---

प्रयोक्तुरशक्त्यनुन्नयाद्दोषाभावादित्यर्थः ॥ ननु काव्यादर्शकारिकायां सहृदयोद्वेगाभाव इत्येव दोषत्वाभावबीजमुक्तम्, न तु त्वदुक्तो लिङ्गवचनान्तराभावस्तत्कथं त्वया स्वोक्तार्थे तत्संमतिर्दर्शितेत्यत आह—**एवमेवेति** । ततश्च बीजान्तरस्यानुपपत्तेर्वृद्धसंमतत्वाच्च यथोक्तमेव तद्बीजमिति भावः । ननु प्राणशब्दस्यैकवचनान्तस्यापि सर्वसंमतत्वात् 'प्राणा इव प्रियोऽयं मे' इत्यत्र त्वदुक्तौ दूषकत्वाभावो वचनान्तराभावमूलकान्यथानुपपत्तिरूपो नास्तीति कथं मूलानुमतं तदुक्तं व्याख्यानमित्यत आह—**स्वशक्येति** । उभयत्र स्वपदमेकवचनादिपरम् । नियतवचनत्वं चेत्यस्य च वचननिष्ठं नियतत्वं चेत्यर्थः । एकवचनादीनामेकत्वद्वित्वबहुत्वानि शक्यार्थाः । 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इत्यादिवचनात् । तदभिधाने अनियतं स्वं येषां तत्कत्वम् । तदेव वक्ष्यति—'प्राणा हा(दा)रा' इत्यादि बहुवचनस्य बहुत्वं शक्यार्थः तद्विनापि दारा इत्यादावेकस्यामपि बहुवचनस्यैव विधानेन तत्रत्यस्य बहुवचनस्य तद्विधानानियतत्वमित्यर्थः ॥ नन्वभिधानं प्रतिपादनमात्रं, ततश्च लक्षणादिना एकवचनादेरपि बहुत्वादिप्रतिपादकत्वात्, पदान्तरोत्तरस्याप्येकवचनादेरनियतत्वप्रसङ्ग इत्यत आह—**तत्त्वेनेति** । नन्वेवमपि न निस्तारः 'जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्' इत्याद्यनुशासनसंमततया बहुवचनस्यापि बहुत्वाभिधानानियतत्वात् ततश्च 'सरांसीवामलं नभः' इत्यादिवचनभेदस्य दुष्टत्वाभिधानविरोधापत्तिरिति चेन्मैवं प्रकृतिविशेषपुरस्कारेण तदनुमतत्वस्य विवक्षितत्वात् । अस्ति च तथा प्राणादारादिशब्देषु 'पुंसि भूम्न्यसवः प्राणाः' इत्याद्यनुशासनदर्शनात् । जात्याख्यायामिति तु सामान्यत एव तथेति नानुपपत्तिः । एवं च यच्छब्दस्यार्थैक्येऽपि बहुवचनान्तत्वं विशिष्यानुशासनसंमतं तत्र वचनभेदो न दोष इत्यत्र तात्पर्यं न तु तत्समानवचनान्तशब्दान्तरानुपपत्तिरपि, वक्तुरशक्तेस्तावतैवानुन्नयनात् । अन्यथा प्राणा इवेत्यादैरदोषत्वाभिधानानुपपत्तेरिति फलितार्थः ॥ तुल्यादिपदप्रयोगे आर्थी कथमित्याशङ्क्याह—**चन्द्रेणेति** । तुल्यपदस्यापि सादृश्यमात्रपरतैव कुतो न स्यादत आह—**केवलेति** । इवपदस्यापि केवलसादृश्ये प्रयोगाभावादाह—**सादृश्याभिन्नमिति** । निपातातिरिक्तनामार्थयोरभेदान्वयस्यैव व्युत्पन्नत्वादि-

भेदान्वयस्याव्युत्पत्तेः । तदेकदेशस्य सादृश्यस्य च चन्द्रप्रतियोगिका न्याभावसामानाधिकरण्यं धर्मश्चार्थः, आश्रयत्वं प्रत्ययांशार्थः, तृतीया वृत्तित्वम्, 'तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्' इति सूत्रात् । एव 'चन्द्र इव मुखं भाति' 'चन्द्रमिव मुखं पश्यामि' 'चन्द्रेणेव मुखेन तम्' इत्यादावुपमानस्योपमेयसमानविभक्तिकत्वनियमेऽपि 'चन्द्रेण तु मुखं भाति, चन्द्रेण तुल्यं मुखं पश्यामि' इत्यादौ न मुखवृत्तिविभक्ति यमः । अन्यथा च धर्ममुखयोर्नामार्थतयाश्रयत्वसंबन्धेन धर्मान्वयो

---

त्यर्थः। इवार्थसादृश्ये तु निपातातिरिक्तनामार्थत्वाभावेन भेदान्वयसंभवान्न धर्मिपर ल्पनमिति [वि]शेषः । **तदेकदेशेति** । तदर्थैकदेशस्य सादृश्यस्येत्यर्थः । स्व नाधिकरण्यं स्वरूपमिति शेषः । यद्वा सादृश्यस्य तदर्थकतुल्य(ला)शब्दस्येत्यर्थः । न्यथा पदबोध्यसादृश्यस्य सामानाधिकरण्यमर्थ इत्यन्वयानुपपत्तेः । तुल्यशब्द 'नौवयोधर्मविषमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु' इति त्रेण तुल्या समितमित्यर्थे यत्प्रत्ययान्तत्वेन व्युत्पादितः । तच्च यद्यपि व्युत्पत्ति मिति सिद्धान्तस्तथापि चन्द्रभेदसामानाधिकरण्यं आश्रयश्च तुल्यपदार्थ त्रैव तात्पर्यार्थः । **तुल्यार्थैरिति** । तुलोपमाशब्दव्यतिरिक्ततुल्यार्थकपद उपमानार्थकपदात्तृतीया विकल्पेन भवतीति सूत्रार्थः । यद्यपि तृ विधानमात्रेण 'वृत्तित्वं तृतीयार्थः' इत्यत्र सूत्रसंमतिर्नायाति, तथापि तत्रानुगतो क्त्यर्थोऽवश्यं कल्प्य इत्यपेक्षावशेन वृत्तित्वमेव तृतीयार्थः कल्पत इत्यभिप्रायः । वाह—**अत एवेति** । इवादिस्थले उपमानोत्तरविभक्तेः साधुत्वमात्रार्थताया माणत्वात्तत्रोपमेयविभक्तिरेव । अत्र तु नियतार्थपरतयोपमेयलिङ्गं तिरस्कृ तृतीया विभक्तिरित्यर्थः। आश्रयस्यापि तुल्यपदार्थत्वकल्पने प्रमाणमाह—**अन्यथे** आश्रयस्य तुल्यपदार्थत्वकल्पनं विनेत्यर्थः । **न स्यादिति** । आश्रयत्वसंबन्धेनेति धर्ममुखयोर्नामार्थतया आश्रयत्वादिभेदसंबन्धेनान्वयासंभवादिति भावः । आश्रय तदर्थत्वे तु अभेदसंबन्धेन तस्य मुखान्वये धर्माश्रयाभिन्नं मुखमिति वक्ष्यमाण संभवतीत्यर्थः । नन्वेवमपि सामानाधिकरण्यस्य धर्मस्य च तुल्यरूपनामार्थत्वात्कथं परस्परं भेदान्वयः । एवमाश्रयत्वस्य तुल्यपदार्थत्वे आश्रयत्वाभिन्नं मुखमित्येव स्यात् । अथोभयत्र भावार्थस्याविवक्षितत्वात्तत्समानाधिकरणं आश्रयश्च तदर्थः । आद्यस्य धर्मे, द्वितीयस्य च मुखे अभेदान्वयः । अत एव धर्माश्रयाभिन्नं मुख समनन्तरमेव वक्ष्यतीति भवदाशयः । तथापि धर्मस्य आश्रयभेदान्वयानुपपत्ति न हि धर्माभिन्नाश्रयेति बोध इष्ट इति चेत्सत्यं धर्माश्रय एव तुल्यपदार्थ इत्यत्र यात् । अत्रैकदेशे धर्मे समानाधिकरणान्तस्य अभेदान्वयः । चन्द्रेणेत्यत्र वृत्तित्वे तस्यापि धर्म एवान्वय इति यथोक्तबोधोपपत्तिरित्यवधेयम् । वृत्तित्वमपि

स्यात् । अत एव वृत्तित्वस्यापि तुल्यपदार्थकल्पनया न निस्तारः । नामार्थतासाम्यात् । ततश्च चन्द्रप्रतियोगिकान्योन्याभावसमानाधिकरणत्वस्य चन्द्रवृत्तित्वस्य च धर्मेऽन्वयः । तस्य चाश्रये तदर्थान्तरे । तथा च 'चन्द्रान्योन्याभावसमानाधिकरणचन्द्रवृत्तिधर्माश्रयाभिन्नवन्मुखम्' इति धीः । अत्रोपमेयवृत्तित्वं धर्मोपस्थापकपदस्य, उपमानवृत्तित्वं च तृतीयाया अर्थः । अत उभयं धर्मवाचकपदार्थो न भवतीत्यत आर्थी उपमेत्युच्यते । न च—उभयत्र बोधसाम्यात्कथमयं विभागः—इति वाच्यम्, 'इवादौ सादृश्ये शक्तिः, तुल्यादौ लक्षणा' इत्यत्रापि 'कथमेवम्' इति तुल्यत्वात् । प्रत्युत भिन्नपदप्रतिपाद्यत्वेनास्मत्पक्ष एव विशेषात् । 'चन्द्रमिव मुखं प-

---

पदार्थ एव कल्प्यतां कुतस्तस्य तृतीयार्थत्वं वैषम्यस्यानर्हत्वादित्यत आह—**अत एवेति** । नामार्थयोरभेदान्वयापत्तेरेवेत्यर्थः । तथा च तत्र चन्द्रपदार्थस्य भेदान्वयो न स्यादिति तस्य तृतीयार्थत्वकल्पनमिति प्रकृत्यर्थचन्द्रस्य· प्रत्ययार्थवृत्तित्वान्वय उपपन्न इत्यर्थः । वृत्तित्वस्य धर्मान्वयो न स्यादित्यर्थभ्रमस्तु न कार्यः । वृत्तिमत एव तुल्यार्थत्वकल्पनया तादात्म्यान्वयोपपत्तेः । अत एवाग्रे वृत्तित्वादीनां नामार्थत्वेन तत्र चन्द्रादेर्भेदान्वयानुपपत्तिरिति स्वयमेव वक्ष्यति । इदमुपलक्षणम्—भेदसमानाधिकरणमात्रस्य तुल्यपदार्थत्वकल्पनेऽपि नामार्थस्य चन्द्रस्य प्रतियोगितासंबन्धेन भेदान्वयो न स्यादिति चन्द्रप्रतियोगिकत्वविशिष्टभेद एव तुल्यपदार्थ उक्त इत्यपि बोध्यम् । प्रकृतमाह—**अत्रेति । धर्मोपस्थापकेति** । तुल्यपदस्य चन्द्रभेदसमानाधिकरणत्वमात्रबोधकतया उपमेयवृत्तित्वमात्रं तेन धर्मस्य बोध्यते । उपमानवृत्तित्वं तु चन्द्रेणेति पदेन अत उपमानोपमेयोभयवृत्तित्वं धर्मवाचकतुल्यपदस्यार्थो न भवतीति इवपदादत्र वैषम्यमिति फलितार्थः ॥ **इवादाविति** । तेषां सादृश्यार्थकतया धर्ममात्रपरत्वात् ॥ **तुल्यादाविति** । तेषां सादृश्यवत्परतया विशेषणीभूतसादृश्ये लक्षणाङ्गीकारात् । तथा च बोधवैषम्यं श्रौतत्वार्थत्वयोर्न व्यवस्थापकं तन्मतेऽपि वृत्तिभेदस्वीकारेऽपि उभयत्रापि बोधसाम्येन तद्व्यवस्थानुपपत्तेरिति भावः । तथापि त्वत्पक्षे किं विनिगमकमित्यत आह—**प्रत्युतेति** । सादृश्यं तावत्प्रतियोग्यनुयोग्युभयनिरूप्यमिति सर्वसंप्रतिपन्नम् । तत्र च फलतो धर्मस्योभयनिष्ठत्वं भासते । तच्च यत्र धर्मवाचकपदादेव निर्वहति, सा श्रौती, यत्र तु पदद्वयेन सा आर्थी । पदद्वयसमभिव्याहारगम्यत्वादित्येव विवेकः साधीयान् । अत एव व्रीहीनवहन्तीत्यादौ द्वितीयया निरपेक्षयैव व्रीहीणां क्रियाजन्यफलशालित्वबोधनात्तस्याः श्रुतित्वमिति मीमांसकसंप्रदायः । यदाह—'अभिधातुं पदेऽन्यस्मिन् निरपेक्षो रवः श्रुतिः' इति ॥ न चात्रेवशब्दस्य निरपेक्षत्वेन सादृश्यबोधकत्वमसिद्धम् । चन्द्रादिपदसमभिव्याहारेणैव तद्बोधकत्वादिति वाच्यम्, द्वितीयादेरपि क्रियायाः प्रकृ-

श्यामि' इत्यादावुपमानपदोत्तरविभक्तिश्च विशेष्यसमानलिङ्गत्वस्यौत्सर्गि तया साधुत्वार्था । नच—प्रथमोपस्थिततया साधुत्वार्थं प्रथमैव स्यात् इति वाच्यम्, विशेषणातिरिक्तस्थले तथात्वात् । नच—चन्द्रस्य मु न्वयाभावान्न तथा, विशेषणविशेष्ययोरभेदान्वयार्थमेवैकविभक्तेरुपयोगा इति वाच्यम्, विशेषणविशेष्ययोः समानलिङ्गत्वमेव ह्यौत्सर्गि तत्र च साक्षादन्वयोऽभेदेनेत्यन्यदेतत् । नच—परम्परया विशेषण

तेश्च समभिव्याहारेणैव बोधकतया तस्या अपि श्रुतित्वविरहापत्तेः । पदान्तरसमभि हारापेक्षणेऽपि विवक्षितार्थबोधकत्वसामर्थ्यं तत्र द्वितीयामात्रस्यास्तीति चेत्, तर्हि पि चन्द्रादिपदसापेक्षत्वेऽपि उभयवृत्तित्वबोध इवपदेन निर्वहति ॥ तुल्यादिपदानां भयभयवृत्तित्वबोधार्थं पदान्तरापेक्षाप्यस्तीत्यधिकस्यापेक्षणीयत्वात् वैषम्यमिति । श्रौती द्वितीये त्वार्थीति कुतोऽत्र प्रद्वेषः ॥ न च चन्द्रपदसापेक्षत्वं इवादौ तुल्यादौ समानमेवेति वाच्यम् । तथापि तत्र प्रत्ययार्थस्य वृत्तित्वस्याधिकस्यापेक्षणात् इवेत्यादौ च विभक्तेः साधुत्वमात्रार्थतया तदर्थाभावे तदर्थस्यानपेक्षणीयत्वात् । स्यादप्येवं यदि चन्द्रभिन्नवृत्तित्वे सति चन्द्रवृत्तिधर्मः सादृश्यस्वरूपः स्यात्, तद्भि सति तद्गतधर्मवत्त्वस्यैव तत्सरूपत्वादिति वाच्यम्, तस्यापि फलतोविवक्षितवि तद्भिन्नवृत्तितद्वृत्तिधर्म एव पर्यवसानस्य प्रागेव व्यवस्थापितत्वात् । 'अनेकवृत्तित्वं सादृश्यम्' इति मूलग्रन्थव्याख्यानावसरे 'अनेकवृत्तिसामान्यमेव सादृश्यम्' इति लावत्युपाये **वर्द्धमानो**पाध्यायैः कण्ठत एवाभिधानाच्च ॥ अनेकवृत्तित्वं हि नै तीयानेकवृत्तित्वमात्रम्, किंतु भिन्नजातीयानेकवृत्तित्वम् । तच्च चन्द्रादिभिन्न सति चन्द्रादिवृत्तित्वमेव पर्यवस्यति । अत उक्तसादृश्यस्य इवादिपदैस्तुल्यादि क्षया अन्यपदसापेक्षत्वेन प्रतिपादनम् । तुल्यादिपदैस्तु इवादिपदापेक्षयाधिकपद त्वेनेति यथोक्तरीत्यैव श्रौतत्वव्यवस्थापनं युक्तमिति तदेतत्सर्वं मनसि कृत्वाह— **नपदेति** ॥ **औत्सर्गिकेति** । विभक्त्यन्तरकल्पने नियामकाभावेन प्रधानभूत ष्यविभक्तेरेव तत्र प्रयोगात् । अत एव 'कटं करोतीति भीष्ममुदाहरं दर्शनी इत्यादौ कर्मत्वस्य कटपदोत्तरद्वितीययैव प्रत्यायनात्कटसामानाधिकरण्यादेव भीष्म पदादपि द्वितीयेति अनभिहितसूत्रे महाभाष्ये स्पष्टमित्यर्थः । उक्ताभिप्रायम शङ्कते—**न चेति** । विभक्त्यन्तरकल्पने विनिगमकाभावो हि त्वया विशिष्यवि कत्वे मूल्ययुक्तः । अस्ति च विनिगमकं प्रथमात्यागे कारणाभावादिति सर्वत्रापि प्र स्तीति भावः । तदपेक्षया विशेष्यविभक्तेरुपस्थितिनिबन्धनान्नियामकात्प्राबल्यमि प्रायं प्रकटयति—**विशेषणेति** । **मुखान्वयाभावादिति** । साक्षादिति शेषः । **तथेति** । न विशेष्यसमानविभक्तिकत्वमित्यर्थः ॥ **अन्यदेतदिति** । विशे

१. 'मिव' ख. २. 'अल्प' ख.

तल्लिङ्गत्वे 'उद्भूतं रक्तं दधता दण्डेन विशिष्टः' इत्यादावुद्भूतादेरपि तृतीयापत्तिः 'नामार्थान्तराविशेषणीभूत–' इति विशेषणे विशेषणस्य देयत्वात्। न च—चन्द्रादेरपि प्रतियोगित्वेनेवार्थभेदाद्यन्वयात्कथं व्यावृत्तिः—इति वाच्यम्, 'निपातातिरिक्तनामार्थान्तर–' इति वाच्यत्वात्। एवं च 'चन्द्रेण तुल्यं मुखं पश्यामि' इत्यादावपि नातिप्रसङ्गः—इति॥ नन्वेवमपि 'अव्ययविशेषणानां नपुंसकत्वं भवति' इत्यनुशासनादिवार्थविशेषणस्य चन्द्रादेः क्लीबत्वापत्तिर्दुर्वारा—इति चेत्, मैवम्। 'शस्त्रीव श्यामा शस्त्रीश्यामा' 'मृगीव चपला मृगचपला' इत्यादिभाष्यकारादिप्रयोगसामर्थ्यादुपमानवृत्तिलिङ्गसिद्धेः। अत एव 'पार्थ एव धनुर्धरः' इत्यादावपि नानुपपत्तिः, अनियतलिङ्गविषयताया उक्तानुशासनस्य भाष्यादिसंमत-

विशेष्यलिङ्गतायां विशेषणत्वमेव प्रयोजकं न तु साक्षाद्विशेषणत्वम्। गौरवादिति भावः॥ प्रामाणिकगौरवाभिप्रायेण शङ्कते—**न चेति**। **नामार्थेति**। उद्भूतादेस्तु रक्तादिरूपनामार्थान्तरविशेषणीभूतत्वान्न दोष इति भावः। ननु चन्द्र इवेत्यत्रापि इवादिरूपनामार्थान्तरविशेषणीभूतत्वाच्चन्द्रादेः साम्यमेवेत्याह—**न चेति**॥ **निपातेति**। तथा च निपातातिरिक्तनामार्थान्तराविशेषणीभूतत्वं वाच्यम्। ततश्च चन्द्रादेर्नामार्थान्तरविशेषणत्वाभावविरहेऽपि निपातातिरिक्तनामार्थान्तराविशेषणत्वमस्त्येवेति भावः॥ **चन्द्रेणेति**। तत्र चन्द्रस्य निपातातिरिक्ततुल्यरूपनामार्थविशेषणत्वान्न तथेति भावः। यद्यप्येतादृशं नियामकं न प्रमाणसिद्धम्, तथापि वक्ष्यमाणप्रमाणानुगृहीतत्वात्कल्पनाया इदमुक्तम्॥ ननु निपातातिरिक्तनामार्थान्तराविशेषणीभूतविशेषणस्य विशेष्यविभक्तिकत्वकल्पनापेक्षया साक्षाद्विशेषणत्वस्य विशेष्यसमानविभक्तिकत्वकल्पने लाघवमिति चेत्, सत्यम्। अत एवापरितोषाद्भाष्यप्रयोगादिरूपमेव प्रकृते प्रमाणं वक्ष्यतीत्यदोषः। **शस्त्रीव श्यामेति**। 'उपमानानि सामान्यवचनैः' इति सूत्रे भाष्यकृतामयं प्रयोगः। तथा च इवार्थे विशेषणत्वापन्नाया अपि शस्त्र्या नपुंसकत्वादर्शनात् न क्लीवत्वमित्यर्थः। अवान्तरसमाधिमुक्त्वा वास्तवसमाधिमाह—**अनियतेति**। नियतलिङ्गानां लिङ्गानपेक्षतया तत्सापेक्षविशेष्यनिघ्नपरताया एव वचनस्य युक्तत्वात्। 'आकाङ्क्षितविधानं ज्यायः' इति न्यायात्। अत एवादिः पचतीत्यादौ आदिशब्दस्य 'पुंस्यादिः पूर्वपौरस्त्य–' इत्यादिकोशे नियतपुंलिङ्गतादर्शनात् क्रियाविशेषणत्वेऽपि न क्लीवत्वमित्यभियुक्तानां सिद्धान्त इत्यर्थः। उपमानस्योपमेयविभक्तिकत्वे पूर्वं प्रमाणानुपन्यासात्सिंहावलोकितन्यायेनाह—**भाष्यादीति**। यद्यपि भाष्यकारादन्येषां कवीनां प्रयोगो

१. 'विशेषणत्वादुक्ता' क; 'विषयत्वात्' ख. २. 'संभवतात्' क; ख-पुस्तके तु नास्त्येव.

१. 'मिव' ख.

त्वात् । 'चन्द्रस्य तुला' इत्यादौ तु तुलाशब्दस्येव शब्दवत्सादृश्यमात्रार्थ
तदर्थे भेदादौ प्रतियोगित्वादिसंबन्धेन चन्द्रादेरन्वयासंभवात्तत्र षष्ठीप्रयो
विशेषः ॥ तत्र श्रौतार्थत्वविशेषास्तु धर्मलुप्तावसरे वक्ष्यन्ते इति ॥
न्द्रो मुखं च तुल्यम्' इत्यादौ तु तुल्यपदार्थस्य चशब्दवाच्येतरेतरयो
लेन चन्द्रमुखयोर्युगपदन्वयावगमात् 'चन्द्रप्रतियोगिकान्योन्याभाव
नाधिकरणतद्वृत्तिधर्मवन्मुखम्' 'मुखप्रतियोगिकान्योन्याभावसमानाधि
णतद्वृत्तिधर्मवांश्चन्द्रः' इति बोधः । अत एव 'मुखं चन्द्रसदृशं न
'चन्द्रो मुखसदृशो न वा' इति संदेहद्वयस्यापि ततो निवृत्तिः । तुल्यप
कदेशस्य सादृश्यस्य चशब्दबलेनोभयत्रान्वयेऽपि सादृश्यवाचकपदस्यो
धर्मान्वयविरहः स्पष्ट एव ॥ तस्माद्यत्र धर्मोपस्थापकपदस्यैवोभयत्र सं
बोधकत्वम्, तत्र श्रौती—अन्यत्रार्थीति सिद्धम् । उपमानादिवृत्तित्ववि
ष्टनियतशाब्दबोधविषयत्वं श्रौतीत्वम्, इवादौ तथा नियमात् । तुल्यां
चन्द्रेण तुल्यमित्यत्र तथात्वेऽपि चन्द्रो मुखं च तुल्यमित्यत्र प्रकृतित्व
नैवोपमानोपमेयभावप्रतीतेर्विलम्बादिति प्रकाशसिद्धान्तः ॥

---

न स्वातन्त्र्येण प्रमाणं सूत्रवार्तिककारयोश्चैतादृशप्रयोगाभावस्तथापि भाष्यप्र
स्वातन्त्र्येण प्रयोगान्तराणां च तात्पर्यग्राहकत्वेनोपयोगादादीत्युक्तम् ॥ यद्वा वि
कारादिपरमादिपदम् इति तत्वम् ॥ ननु 'शस्त्रीव श्यामा' इत्युक्तौ महाभाष्यप्र
नोपमानस्योपमेयसमानविभक्तिकत्वे प्रमाणं भवितुमर्हति, पक्षद्वयसाधारण्य
प्रथमोपस्थितत्वेन प्रथमेति वादिनोऽपि तस्य विरोधाभावात् ॥ सत्यम् । विभक्त्य
न्तानां तदीयानां प्रयोगान्तराणामेवात्र प्रमाणत्वेनाभिमतत्वात् । किंच 'उपमानाद
इति सूत्रे 'अधिकरणाच्च' इति वार्तिकमत्र प्रमाणम् । तद्धि प्रासादीयति कुट
त्युपमेये सप्तमीश्रवणादुपमानमपि सप्तम्यन्तमिति कर्मविवक्षायामेतत्प्रयोगासंभ
रभ्यत इति कैयटेन प्रतिपादितम् ॥ किंच 'तत्र तस्यैव' इति सूत्रमप्यत्र म
तच्छब्देन सप्तम्यन्तेन षष्ठ्यन्तेन चोपमानपरामर्शादुपमेयेति तत्र सप्तमीषष्ठी
गादित्यलं बहुना ॥ **अन्वयासंभवादिति** । तुलापदवाच्यसादृश्यस्य निपातादि
नामार्थत्वाद्भेदान्वयाभावादित्यर्थः । **चशब्दबलेति** । तथा च चशब्दस्य यु
कार्थान्वयित्वरूपसमुच्चयार्थकतया तुल्यपदार्थधर्मस्योभयान्वयो न तु तुल्यपदमहि
न श्रौतत्वापत्तिरित्यर्थः । स्वोक्तं श्रौतार्थत्वविभागमुपसंहरति—**तस्मादिति** ।
**मानादीति** । प्रतियोगित्वानुयोगित्वेत्यर्थः । **इवादाविति** । चन्द्र इव मु

---

१ 'स्थितम्' क.

दीक्षितास्तु—सादृश्यमुख्यविशेष्यकज्ञानजनकपदप्रयोगे श्रौत्यन्यत्रार्थीत्याहुः ॥

इवादिभिः सादृश्यमनुयोगित्वसंबन्धेन बोध्यते । तुल्यादिभिस्तु सदृशाभेदेनेति विभाग इत्यन्ये । तुल्यादिपदेष्वपि प्राप्ताप्राप्तविवेकेन सादृश्यस्यैव विधेयत्वान्नेदं सम्यगित्यपरे ॥

अथ धर्मोपस्थापकपदस्योभयत्र सादृश्यसंबन्धबोधकत्वे श्रौतीति पक्षे तुल्यार्थकवति प्रत्ययप्रयोगेऽपि श्रौती स्यात् । तथाहि—तुल्यादिपदोपादाने वृत्तित्वादीनां नामार्थत्वेन तत्र चन्द्रादेर्भेदान्वयानुपपत्त्या चन्द्रवृत्तित्वादिकं चन्द्रेणेत्यादिपदानामर्थ इत्युक्तत्वात्तत्र चन्द्रवृत्तित्वादिकं तुल्यपदार्थो ने-

---

त्यादौ चन्द्रे सादृश्यप्रतियोगित्वरूपोपमानत्वस्य मुखे च तदनुयोगित्वरूपोपमेयत्वस्य नियमतः प्रतीतेः । तथा च यत्र यच्छब्दबोध्यसादृश्यविशेषणतापन्नपदार्थस्य नियमत उपमानत्वं तत्र श्रौती । तदन्यत्रार्थीति भावः । तुल्यार्थकवतिप्रत्ययप्रकृत्यर्थस्योपमानत्वप्रतीतिनियमात्तत्रापि उपमायाः श्रौतत्वापत्तिरिति । एतन्मतेऽपरितोषमुद्भावयंस्तदपहाय चित्रमीमांसामतमाह—**दीक्षितास्त्विति** । **सादृश्यमुख्येति** । यद्यपि पदान्तरसमभिहारे इवादिपदानामपि सादृश्यमुख्यविशेष्यक(ता)ज्ञानजनकत्वमसिद्धम् । सादृश्यस्य तत्राश्रयत्वसंबन्धेन मुखादिविशेषणतापन्नत्वेन मुख्यविशेष्यत्वाभावात् । तथापि येषां सादृश्यमात्रे शक्तिस्तत्र श्रौती, येषां तु तद्वति तत्रार्थी भावः । वक्ष्यमाणयुक्त्या वतिप्रत्ययस्यापि सादृश्यमात्रशक्ततया सादृश्यमुख्यविशेष्यकज्ञानजनकत्वमस्तीति तत्रापि श्रौतत्वं स्यात् एवं (च) वतिप्रत्ययेनापि सादृश्यमनुयोगित्वेनैव बोध्यते, न तु सदृशाभेदेनेति श्रौतत्वं स्यादिति एकेनैवापरितोषेण दीक्षितपदस्यान्यपदस्य चोपादानम् ॥ **अनुयोगित्वेति** । चन्द्र इवेत्यादौ चन्द्रप्रतियोगिकसादृश्याश्रय इति बोधात् । **सदृशाभेदेति** । चन्द्रतुल्यमित्यादौ चन्द्रसादृश्यवदभिन्नमिति बोधोदयात् । तथा चैकत्र सादृश्यं विधेयम्, परत्र तु सदृशाभेद इति विधेयभेदादेव वैषम्यं इत्येषामाशयः ॥ **प्राप्ताप्राप्तेति** । न हि यावद्वाक्यार्थे भासते, तावत्येव तात्पर्ये वाक्यभेदादिप्रसङ्गात् । अपित्वप्राप्त एव, तदेव च विधेयम् । तदाहुः—'यत्परः शब्दः स शब्दार्थः' इति । अत एव 'दध्ना जुहोति' इत्यादौ दधिविशिष्टहोमादेः प्रतीतावपि धात्वर्थस्याग्निहोत्रं जुहोतीत्यादिनैव प्राप्तत्वात् । दध्यादिरूपं द्रव्यमेव विधेयतया पर्यवस्यतीति गुणविधित्वव्यवहारो मीमांसकानाम् ॥ एवमत्रापि सादृश्याभिन्न इति प्रतीतावपि धर्म्यंशे न तात्पर्यम्, किंतु सादृश्यमात्र इति नैवमिवादितुल्यादीनां

---

१. 'नाहृत्य' ख. २. 'संबन्धबोधकत्वेन' क.

---

१. 'सदृशो' ख.

स्युक्तम् । वतिप्रत्ययार्थे तु वृत्तित्वादौ चन्द्रादेर्भेदान्वयस्योपपन्नत्वेन तेषामेव शक्तिकल्पनात् । तत्र वृत्तित्वं भेदो धर्मश्च वत्यर्थः । पूर्वव न्वये 'चन्द्रान्योन्याभावसमानाधिकरणचन्द्रवृत्तिधर्मवन्मुखम्' इत्येव बो न चेष्टापत्तिः । तत्रार्थी उपमेति सकलग्रन्थविरोधापत्तेरिति चेत् । उच्य 'तेन तुल्यम्' इति तुल्यार्थे वतिविधानम् ॥ तथा च—यावदेव तुल्य बोधयितुं शक्यते तावदेव वतिनाप्यानुशासनिकार्थातिरिक्तार्थबोध सर्वत्राव्यवस्थापत्तेः ॥ एवं च तत्रापि चन्द्रपदस्य तद्वृत्तित्वे लक्षणा । क्तरीत्यानुशासनसंमतत्वात् ॥ अतो नानुपपत्तिलेशोऽपि ॥ अत ए

---

वैषम्यमिति भावः ॥ **उपपन्नत्वेनेति** । प्रकृत्यर्थस्य प्रत्ययार्थे भेदान्वयव्युत्प नतु लक्षणापेक्षया वृत्तित्वस्य वतिप्रत्ययार्थत्वकल्पनमेव युक्तम् न चात्र श्रौतत्वा रेव बाधिका, प्रकारान्तरेण श्रौतत्वादिव्यवस्थाया एव तावता कर्तुमुचितत्वात् । ल्पितप्रयोजनानुरोधमात्रेण तदाश्रयणस्याशक्यत्वादित्यत आह—**उक्तरीत्येति संमतत्वादिति** । यद्यपि वतिप्रत्ययविधायकशास्त्रस्य प्रकृतेस्तद्वृत्तित्वे लक्ष शाब्दसंमतिरायाति, तथापि तुल्यार्थस्य वृत्तित्वातिरिक्तस्यैव प्रागेव व्यवस्थापितत्व तदर्थस्यैव ततो लाभेन वृत्तित्वस्य तदर्थत्वकल्पनायां सूत्रविरोधापत्तेरर्थतस्तत्सं रायातीति भावः ॥ वत्यादीनां सदृशार्थकतया सादृश्यमात्रार्थकत्वं नास्तीत्या त्वदुक्तव्यवस्थायामपि प्रकृते दूषणस्याग्रे मूल एव वाच्यत्वात् ॥ वतिप्रत्ययप्र लक्षणापि प्रामाणिकीति लक्षणांशे संमतिं दर्शयति—**अत एवेति** । यद्वा आनुशा एवार्थे शक्तिः कल्प्यते, तदन्यत्र प्रकृतेरेव लक्षणेत्यत्र संमतिमाह—**अत एवे** एवं च यत्र स्वतन्त्रप्रमाणतया वाचनिकत्वेनापि समर्थयितुं शक्यस्य सूत्रका गस्यापि सूत्रानुरोधेन लक्षणयैव समर्थनम्, तत्र का कथा परेषामिति भावः । भाष्ये पूर्वस्मादिवेति कण्ठतो नोक्तं तथापि पञ्चम्यन्तसन्शब्दसमभिव्याहारात् प्रत्ययप्रकृतिसमर्पकपूर्वशब्दस्य पञ्चम्यन्तत्वं स्पष्टमेव । 'किमिदं पूर्वग्रहणं सनपेक्षं सनो येभ्य आत्मनेपदमुक्तं तेभ्यः सन्नन्तेभ्योऽपि भवति' इति भाष्येऽपि येभ्यः पञ्चम्यन्तेन तदर्थविवरणाद्भाष्येऽपि पञ्चम्यन्तत्वं व्याख्यातमित्याशङ्कायां उक्तकैयट वतारादर्थगत्या परिकल्पितभाष्यवाक्यस्य पूर्वस्मादिवेत्यनुवाद इति ध्येयम् । तु इत्यादिमूलोपन्यस्तकैयटग्रन्थादव्यवहितपूर्वमेव हि कैयटः प्राह—'पक्षद्वयेऽपि तुल्यम्' इति तृतीयान्ताद्वतिः न तु पञ्चम्यन्तात् लक्षणाभावात्' इति ॥ पक्षद्वयेऽपि पूर्वपदस्य ससंबन्धिकत्वात् पूर्वत्वं सन्प्रत्ययापेक्षया योगापेक्षया वेति भाष्योक्तेरित्य पञ्चम्यन्तादपि वतिः कुतो न स्यादत आह—**लक्षणेति** । तृतीयान्तादेव वतेर्वि

---

१. 'मित्यत्र' क.

वैवत्सनः' इति सूत्रे पूर्वसादिवेति भाष्यं पञ्चम्यन्ताद्वतिविधानाभावेनानुपपन्नमाशङ्क्य कैयटेनोक्तम्—'तुल्यार्थे विहिता तृतीया सर्वविभक्त्यर्थानन्तर्भावयतीति पञ्चम्यर्थस्यार्थग्रहणमुपपन्नमेव। यथा ब्राह्मणवद्वैश्यादधीते ब्राह्मणादिव वैश्यादधीत इत्यर्थः। वैश्यापादानकस्याध्ययनस्य ब्राह्मणापादानकाध्ययनमुपमानमिति तत्र च ब्राह्मणशब्दो वर्तते। तेन ब्राह्मणेन तुल्यं वैश्यादधीत इति तृतीयात्ताद्वति, एवमिहापि पूर्ववत्' इति॥ अथ वतिप्रत्ययप्रकृत्यर्थस्योपमानत्वनियमाच्चन्द्रवृत्तित्वमेवोपमानं स्यादिति चेन्न॥ प्रकृतिवाच्यस्यैव तथात्वात्॥ अन्यथा चन्द्रादेरप्युपमानत्वापत्तेः। न चैवं 'ब्राह्मणाध्ययनमुपमानम्' इति ग्रन्थविरोधोऽध्ययनस्य लक्ष्यत्वादिति वाच्यम्, भावानवबोधात्। प्रत्ययोत्पत्तिदशायां यदर्थबोधकत्वम्, तस्योपमानत्वनियमात्। न चैवमपि वृत्तित्वस्य धर्मान्वयानुपपत्तिः प्रकृत्यर्थत्वाभावादिति वाच्यम्, 'प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्' इति नियमेन शक्यलक्ष्यसाधारणप्रकृत्यर्थोपादानात्। अन्यथा 'गङ्गायां घोषः' इत्यादौ तीरादेः सप्तम्यर्थाद्यन्वयो न स्यात्। तस्मात्—तुल्यार्थे वतिविधानात्तदर्थ एव तच्छक्तिः—इति सिद्धम्॥ यत्तु—'ब्राह्मणवत् वृषलवत् ब्राह्मणा इव वृषला इव' इति निरुक्ते दृश्यते, तत्फलितार्थकथनमात्रं प्रथमान्ताद्वतिविधानाभावात्॥ किं च तुल्यादिपदानां सादृश्यमात्रार्थत्वे नामार्थत्वाभावाद्भेदान्वयानुपपत्तिरूपबाधकाभावेन त्वन्मतेऽपि तत्र

---

पञ्चम्यन्तात्तदनुशासनविरहात्। नन्वेवं पञ्चम्यन्तसामानाधिकरण्यमनुपपन्नं स्यादत आह—**तृतीयेति**॥ **अन्तर्भावयतीति**॥ तत्तद्विभक्त्यर्थे प्रकृतेर्लक्षणास्वीकारादित्यर्थः। ननु ब्राह्मणापादानकाध्ययनस्य कुतो लाभः इत्याशङ्क्याभिप्रायं विशदयति—**तत्र चेति**। ब्राह्मणापादानकाध्ययन इत्यर्थः॥ **वर्तत इति**। ब्राह्मणपदस्य स्वार्थापादानकाध्ययने लक्षणया तत्परत्वादिति कैयटस्यार्थः। ननु तुल्यार्थविहितवतिप्रयोगेऽपि श्रौती स्यात्, तत्रापि निरुक्तादौ इवपदेन विवरणदर्शनादिति भ्रान्ताशङ्कां प्रसङ्गान्निराकरोति—**यत्त्विति**। **प्रथमान्तादिति**। षष्ठीसप्तम्योश्चात्रानुपपत्त्या तादृशवतेरनङ्गीकारात् इवार्थकवति प्रत्यये श्रौतत्वे इष्टापत्तेरिति भावः। एतत्पक्षे तुल्यार्थकवतिप्रयोगे श्रौतत्वमापादयता परेण सादृश्यार्थकपदप्रयोगे श्रौती, सदृशार्थकपदप्रयोगे त्वार्थीति स्वोक्ता व्यवस्था निर्दोषेत्यभिमतम्॥ अतः स्वपक्षे दोषं परिहृत्य परपक्षेऽत्र तमुद्भावयति—**किं चेति**। **नामार्थत्वाभावादिति**॥ तद्धितान्तस्य नामत्वेऽपि तद्धितमात्रस्य नामत्वाभा-

श्रौतीत्वं स्यात् । उपमानादिविशिष्टविषयत्वनियतशाब्दबोधविषयत्वस्य वतिप्रत्ययत्वावच्छेदेन व्यभिचाराभावेन सादृश्यमुख्यविशेष्यकज्ञानजन त्वसत्त्वात् । अनुयोगित्वसंबन्धेन तद्बोधकत्वस्यापि वतिप्रत्ययस्य तुल विधानेन तद्योगे यथा आर्थी तथा वतिप्रत्ययप्रयोगेऽपीति त्वया कल्पनीय तदानुशासनिकमेव तुल्यपदसमानार्थकत्वं वतिप्रत्ययस्य मयाश्रयणीयमि निर्मूलकल्पनोपजीविना त्वया समालम्बितदृढतरप्रामाण्यावष्टम्भस्य ममो चोद्याभास उद्भाव्यत इति महत्साहसम् ॥ तदुक्तम्—

---

वादिति भावः । वस्तुतस्तु—वत्यर्थसादृश्यस्य नामार्थत्वेऽपि 'तद्धितश्चासर्वविभक्तिः' सूत्रात्तस्याव्ययत्वेन निपातातिरिक्तनामार्थत्वाभावाद्भेदान्वयोपपत्तिरित्यत्र तात्पर्य निपातातिरिक्तेत्यत्र निपातपदस्याव्ययमात्रपरत्वात् । अत एवाव्ययनिपातातिरिक्त केश्चित्तत्र तत्र लिख्यत एवेति इवार्थविहितवतिप्रत्ययस्य सादृश्यमात्रार्थकत्वं स्वीकृ त्वयापि तदर्थस्यान्वयत्वेन मुखान्वयस्यानुमतत्वात् ॥ भेदान्वयानुपपत्ती तुल्यादिपदानां सादृश्यमात्रपरत्वे तस्याश्रयतया उपमेयान्वयो न स्यादित्यतस्तत्र दृश्यवदर्थकत्वम्, वतिप्रत्ययार्थसादृश्यस्य तु निपातरूपनामार्थत्वेनाश्रयतया इ दावन्वयः स्यादेवेति धर्मिपरत्वकल्पनाबीजभूतानुपपत्तिरत्र नास्तीति कुतः साद त्वपरत्वं वतिप्रत्ययस्य, येन तावन्मात्रेण तत्र त्वदभिमता आर्थी व्यवस्था स्या भावः ॥ **निर्मूलेति** । न हि तुल्यपदवतिप्रत्यययोरर्थवैषम्ये तदर्थविहितत्व आर्थीत्यत्र किंचित्प्रमाणमस्तीत्यर्थः ॥ **समालम्बितेति** । तुल्यार्थे विहितस्य व त्समानार्थकताया अनुशासनसंमतत्वादित्यर्थः । वस्तुतस्तु त्वत्पक्षे तुल्यार्थवति ययोगे आर्थीति न संभवति, तस्य धर्ममात्रपरत्वात्, धर्म्यंशपरत्वे च गौरवात् । एव च 'वद्वा यथा तथैवैवं साम्ये' इत्यमरः । **वदिति** । वतिप्रत्ययमात्रस्य ग्रह अविशेषादिवार्थतुल्यार्थे विशेषानादरणात् । रायमुकुटादौ ववेति पाठोपन्यासेऽ क्षीरस्वाम्याद्यभियुक्तसंमतत्वात् ॥ यत्तु 'ईदूदे द्विवचनं प्रगृह्यम्' इति शब्दकौस्तुभे मनोरमायां च भट्टोजिदीक्षितैरुक्तम्—'प्रातिपदिकप्रक्रमे तद्धि वतेरनुगुणत्वात्' इति, तदुपेक्ष्यम् । यथादिशब्दानामपि तद्धितत्वाविशेषादनुपा पत्तेः । अव्ययत्वस्य च तावताप्यविशेषात् । एतावांस्तु विशेषः थाल्प्रत्ययस्य प्रकृ शेषनियतत्वेन यथा तथेति सप्रकृतिकस्यैवोपादानम्, वतेस्तु प्रकृतिविशेषनियमा त्केवलस्यैव तदिति । अत एवाख्यातवादशिरोमणिविवरणे—'धात्वर्थप्रातिपदिका साक्षाद्भेदान्वयो नास्तीति तत्तत्कार्यकारणभावविचारावसरे 'अत्र प्रातिप व्ययातिरिक्तत्वेन विशेष्यम्' इति प्रक्रम्य अत एव ज्ञानवदिच्छेत्यादावपि वत धात्वर्थेऽनुयोगिप्रतियोगितया साक्षादन्वयो नानुपपन्नः' इति मथुरानाथभट्टा भिहितम् । इह हि शब्देन तुल्येति तुल्यार्थ एव वतिरिति तदर्थस्य प्रतियोगित्वा

'आशामोदकतृप्ता ये ये चोपार्जितमोदकाः ।
रसवीर्यविपाकादि तुल्यं तेषां प्रसज्यते' ॥ इति दिक्[1] ॥

केचित्तु—सादृश्यं पदार्थान्तरमभ्युपगम्यैवं बोधमाहुः—'अरविन्दसुन्दरम्' इत्यत्रारविन्दपदस्यारविन्दनिरूपितसादृश्यप्रयोजकत्वे लक्षणा तस्य चाभेदसंसर्गेण सुन्दरपदार्थैकदेशे सौन्दर्येऽन्वयः । 'चैत्रस्य नप्ता' इत्यादावेकदेशान्वयस्य बहुशो दर्शनात् । तथा च—'अरविन्दनिरूपित-

धात्वर्थान्वयाभिधानात् सादृश्यस्यैव तदर्थत्वमभिमतं सदृशार्थत्वे तस्य तादात्म्यसंबन्धेनैव इच्छान्वयोपपत्त्या अनुयोगित्वस्य तत्संबन्धकत्वकल्पनानुपपत्तेः । तुल्यादिपदानां तु भेदान्वयानुपपत्त्यैव धर्मिपरत्वं कल्प्यत इत्युक्तत्वात् । 'व्यक्तं च वतिप्रत्ययेन व्यक्तिज्ञानयोः सादृश्यमभिधीयते' इति लीलावत्युपाधे सामान्यप्रकरणे एकव्यक्तिवदिति मूलव्याख्यावसरे वर्धमानचरणैरुक्तम् ॥ अतः कथं सादृश्यार्थपदसत्त्वेऽपि तुल्यार्थकवतानुपमाया आर्थत्वं स्यात् । अस्मन्मते तु चन्द्रवृत्तित्वस्य वतिप्रत्ययार्थत्वाभावेऽपि धर्ममात्रपरत्वेन तस्य यथोक्तविरोधाभावात् । वृत्तित्वस्य वतिप्रत्ययार्थबहिर्भावस्तु तुल्यार्थे तद्विधानानुरोधादिति यथोक्तरीत्यैव श्रौतार्थत्वविभागो निरवद्य इति आशयवानुपसंहरति—**दिगिति** । मीमांसकैः सादृश्यस्यातिरिक्तपदार्थस्वीकारात्तन्मतेन विचारयितुमुपन्यस्यति—**केचित्त्विति** । **सादृश्यमिति** । सादृश्यपदेनाभिलप्यमानं वस्त्वित्यर्थः । **पदार्थान्तरमिति** । तद्गतधर्मबुद्धिव्यङ्ग्यं तदतिरिक्तं सप्रतियोगिकं भावमित्यर्थः । **एकदेश इति** । सुन्दरपदस्य सौन्दर्यवदर्थकत्वात् । ननु 'पदार्थः पदार्थेन' इति व्युत्पत्तेर्घटं पश्येत्यादौ घटत्वनिष्ठप्रकारतानिरूपितकर्मत्वीयविशेष्यताशालिज्ञानवारणाय पदार्थनिष्ठविशेष्यतानिरूपितप्रकारतयान्वयबोधं प्रतिविशेष्यतासंबन्धेन पदजन्योपस्थितेर्हेतुत्वमिति कल्पितत्वात्कथं पदार्थस्य तदेकदेशान्वय इत्यत आह—**चैत्रस्येति** । स्वजन्यपुरुषजन्यपुरुषस्य नप्तृत्वपदार्थत्वात् तदेकदेशे जन्ये चैत्रस्यान्वयाभ्युपगमात् विशेष्ये पुरुषे तदन्वये चैत्रपुत्रेऽपि चैत्रस्य नप्तेति प्रयोगप्रसङ्गात् । स्वपितृजन्यचैत्ररूपपुरुषजन्यत्वस्य तत्पुत्रे सत्त्वात् । अत उक्तरीत्या चैत्रसंबन्धिजन्यत्वाश्रयपुरुषजन्यपुरुष इति तत्र बोध इति भावः ॥ अथ तत्र जन्यत्वे पुरुषे च नप्तृपदस्य द्वे एव शक्ती लाघवात् । तत्र चैत्रस्य जन्यत्वे, तस्य पुरुषे, तस्य पुनर्जन्यत्वे, तस्य च पुनः पुरुषेऽन्वय इति यथोक्तधीसिद्धेः । तत्र जन्यत्वस्य पदार्थैकदेशत्वाभावात्पदार्थ एव तदन्वय इत्यत आह—**इत्यादाविति** ॥ चैत्रादन्य इत्यादावित्यर्थः । अन्यपदस्य भेदवत्येव शक्तेस्तदेकदेशे भेदे प्रतियोगितया चैत्रादेरन्वयः । न चात्रापि भेदे आश्रये च शक्तिद्वयमेवेति वाच्यम्, भेदप्रकारेणै-

१. 'दिक्' इति ख-पुस्तके न दृश्यते.

१. 'कथना' क.

सादृश्यप्रयोजकाभिन्नसौन्दर्यवदभिन्नं मुखम्' इति धीः ॥ 'समुदाय तादृशविशिष्टार्थपरता' इत्येके ॥ 'अरविन्दपदस्यैव लक्षणया सर्वो सुन्दरपदं तात्पर्यग्राहकम्' इत्यन्ये ॥ अत्रोच्यते—पक्षत्रयेऽपि 'अरवि सुन्दरम्' इत्यत्र समासगतवाचकलुप्तोपमात्वं सिद्धान्तसिद्धमसिद्धं स सादृश्यवाचकपदसत्त्वात् । न च—सादृश्ये लक्षणेति न तद्वाचकप त्वमिति न तद्विरोधः—इति वाच्यम्, वाचकत्वं ह्यत्र वृत्त्या तदुप कत्वमेव, न तु शक्त्यन्तर्भावः, गौरवात् । अन्यथा 'तेन तुल्यम्' इ दिना विहितस्य वत्यादेरपि धर्मिशक्तितया पदार्थतावच्छेदकीभूतसा

वात्रानुभवेन आश्रयत्वप्रकारकानुभवाभावात् । अत एव भिन्नपदादन्यपदस्य वि भेदाश्रययोः क्रमेण प्रकृतिप्रत्ययार्थतया भिन्नपदस्य भेदाश्रयपरत्वादन्यपदस्य च विशिष्टपरत्वात् । अत एवावयवदीधितौ इतरभेदानुमानस्थले इतराणि न, इतो भिन्नानि इतरेभ्यो भिद्यन्ते, इतरेभ्योऽन्यानि चेति प्रतिज्ञाचतुष्टयमुपन्यस्तम् । प्रथमपक्षे—भेद एव पक्षे प्रकारः, आश्रयत्वं संसर्गः, नञर्थभेदस्यानुयोगित्वसं पक्षेऽन्वयात् । द्वितीये—निष्ठार्थस्याश्रयस्य भेदाश्रयत्वेन रूपेणाभेदो भासते । तृती आख्यातार्थस्याश्रयत्वस्य साक्षात्पक्षे प्रकारत्वम्, धात्वर्थनामार्थयोः साक्षादन्वया प्रकारीभूतविभक्त्यर्थोपस्थितेरावश्यकत्वात् । चतुर्थे—इतरभेदप्रकारेण तादृशभेदव भासते इति अन्यभिन्नपदयोर्विशेषस्य व्याख्यातत्वात् ॥ **समुदायस्येति** ॥ अख पदपदार्थविभागस्यारविन्दसुन्दरमिति समासवाक्यस्येत्यर्थः ॥ **एक इति** । रणमतानुयायिन इत्यर्थः । तैः समासे विशिष्टशक्तिस्वीकारात् । सुन्दरपदमुप सुन्दरपदस्यैव तावानर्थः, अरविन्दपदं तात्पर्यग्राहकमित्यपि बोध्यम् ॥ ननु मा वाचकलुप्तात्वमित्यत आह—**सिद्धान्तेति** ॥ उपमानस्य साधारणधर्मेण सह सस्थल एव समासे वाचकलुप्तोपमायाः सर्वैर्ग्रन्थप्रकारैरुदाहृतत्वात् ॥ **सादृश्य चकेति** । येन यत्रैव सादृश्ये लक्षणा स्वीक्रियते, तन्मते तत्पदस्यैव सादृश्यार्थ त्तस्य च श्रूयमाणत्वात् । वाचकपदस्य च बोधकमात्रपरत्वादिति भावः । मुख त्वमादाय शङ्कते—**न चेति** । तथा च सादृश्यार्थकपदसत्त्वेऽपि तस्य लाक्षणि वाचकलुप्तत्वमव्याहतमेवेत्यर्थः । अभिप्रायमाह—**वाचकत्वं हीति** ॥ **गौरवादि** वृत्तित्वस्य सामान्यरूपतया तदपेक्षया शक्तेर्विशेषत्वनिबन्धनादित्याशयः । ननु त विवाद इति कथमेतदित्यत आह—**अन्यथेति** । सादृश्ये लक्षणास्थलेऽपि वाच त्वस्वीकारे इत्यर्थः । **वतिप्रत्ययादेरिति** । आदिपदात्तुल्यादिपदसंग्रहः । त

१. 'वतिप्रत्ययादेरिति' इति टीकासंमतः पाठः.

१. 'सादृश्यार्थकेति' क्व.

शक्त्यभावात्तत्रापि वाचकलुप्तत्वापत्तेः । न च—वृत्तित्वस्य शक्तिलक्षणान्यतरत्वरूपस्य निवेशापेक्षया शक्तिनिवेशे कुतो गौरवम्—इति वाच्यम्, शक्तिजन्यबोधस्य लक्षणाजन्यबोधात्प्रकृते वैलक्षण्याभावेन विशेषनिवेशानुपपत्तेः । चमत्कारप्रयोजकरूपस्यैवोपमाविभाजकत्वात् । नच—त्वन्मतेऽपि वत्यादीनां सादृश्ये शक्तिलक्षणान्यतराभावेन दोषसाम्यम्—इति वाच्यम्, वृत्त्या तद्विषयतानियतबोधजनकत्वस्य विवक्षितत्वात् । अत एव 'मृगनयना हरते मुनेर्मनः' इत्यत्र वाचकधर्मोपमानलुप्तामुदाहरता काव्यप्रकाशकृता 'सप्तम्युपमान—' इत्यादिना समासलोपौ यदा भवतस्तदेदमुदाहरणम्—इत्युक्तम् । कैयटाद्युक्तरीत्या 'मृगपदस्यैव मृगनयनसदृशे लक्षणा' इति यदि स्वीक्रियते, तदा तदर्थकमृगशब्दसत्त्वेनोपमानलोपाभावात्—इति हि तदाशयः । यदपि तैरुक्तम्—तत्रापि त्रिलुप्तैव, लक्षणापक्षे 'वृत्तेर्विशिष्टार्थवाचकत्वम्' इति वैयाकरणमतेऽपि स्वस्वमात्रबोधक-

---

'चन्द्रतुल्यं मुखम्' इत्यादावपि वाचकलुप्तत्वापत्तिरित्यर्थः ॥ **शक्त्यभावादिति** । अन्यथा तत्रापि श्रौतत्वापत्तौ त्वत्सिद्धान्तभङ्गापत्तेरित्यर्थः ॥ तमनाकलयन्स्वरूपगौरवं तत्रोद्भावयति—**न च वृत्तीति** । स्वाभिप्रायं विशदयति—**शक्तिजन्येत्यादिना** ॥ अत एवाह **शक्तिनिवेशे इति** ॥ तथा च स्वरूपलाघवापेक्षया संग्राहकलाघवमेव बलीय इति वृत्तित्वनिवेश एव युक्तो विशेषनिवेशे प्रयोजनाभावादित्यर्थः ॥ **चमत्कारेति** । यद्यप्येवं इवादितुल्यादिपदभेदेनाप्युपमाविभागो न स्याद्विजातीयचमत्कारस्य तत्राप्यनुदयात् । तथापि सादृश्यार्थकशब्दभेदादिनैव उपमाविभागः, न तु वृत्तिभेदेनेत्यत्र तात्पर्यम् । न च यन्मते तुल्यादीनां सादृश्ये लक्षणेत्यार्थी इवादीनां तु सादृश्ये शक्तिरिति श्रौतीति विभागः, तत्र वृत्तिभेदेनाप्युपमाविभागोऽस्त्येवेति वाच्यम् । वृत्तिभेदेन लुप्तत्वादिविभागो नास्तीत्यत्र तात्पर्यात् ॥ **शक्तिलक्षणान्यतरेति** । धर्मिण्येव शक्तिस्वीकारेण सादृश्यरूपधर्मे शक्तिविरहः स्पष्ट एव, तत एव सादृश्यबोधोपपत्तौ लक्षणाया अपि तत्र विरह एव विशिष्टशक्तिपदानां विशेषणबोधार्थं तत्र लक्षणानङ्गीकारात् । सादृश्यशक्त्या श्रौतत्वं तल्लक्षणाया चार्थत्वमिति विभागस्य च त्वयानभ्युपगमात् । येन ममेव तदर्थं तवापि लक्षणा स्यादिति भावः ॥ **तद्विषयेति** । तथा च तत्र शक्त्यभावेऽपि सदृशबोधस्य सादृश्यविषयितानियमात् तज्जनकत्वमस्त्येवेति न वाचकलुप्तत्वापत्तिरित्यर्थः । ननु तत्र वाचकलुप्तत्वे इष्टापत्तिरित्याशङ्क्य तत्रापि सिद्धान्तमुद्भावयति—**अत एवेति** ॥ **उपमानलोपाभावादिति** । वाचक-

---

१. 'यदा' इति क-पुस्तकेऽधिको दृश्यते पाठः.

पदाभावाञ्चयाणां लोपात्—इति । तदप्यसत्, मात्रपदोपादाने वैय वाद्गौरवाच्च । स्वेतराबोधकत्वे सति स्वबोधकत्वस्य तदर्थत्वात् । असिद्धे उपमानादिपदानामपि चन्द्राद्यन्यचन्द्रत्वतत्संबन्धबोधकत्वात् ॥ अथ— विषयकत्वाभाववद्वृत्तिविषयिताकान्यज्ञानजनकत्वं तदर्थः—इति चे तर्हि प्रस्तुतेऽपि वस्तुन्यस्तु दृष्टिप्रक्षेपः । अत एव 'काव्यस्य सदृ इत्यत्र सदृशपदस्योपमाने लक्षणां कृत्वा तदानीं सादृश्यवाचकपदाभ द्विलुप्तत्वं स्यादित्याशङ्क्य सादृश्यप्रतियोगित्वरूपोपमानत्वार्थकसदृशप त्त्वेन वाचकलोपाभावः—इति व्याख्यातं न्यायालंकारादिभिः ॥ त्वद्रीत्य लक्षणागम्येऽप्यर्थे लुप्तत्वव्यवहाराल्लक्ष्यतावच्छेदकीभूतसादृश्यस्य सुतरां थत्वाभावादनुपपत्तिः स्यात् । 'अरविन्दवत्सुन्दरम्' इत्यत्र 'तेन तुल्यं इति विहितस्य वतेः 'सादृश्यवदर्थस्य सादृश्ये लक्षणा' इत्युक्त्वा लक्ष

---

लोपाभावादित्यपि द्रष्टव्यम् ॥ तथा च लक्षणायां लुप्तत्वाभ्युपगमे तत्र वाचकोप भयलुप्तत्वापत्तिरिति तद्विरोध इति भावः ॥ ननु तत्रापि त्रिलुप्तत्वे इष्टापत्तिरेवेति गङ्गाधरोक्तिमनुवदति—**यदपीति** । **असिद्धेश्चेति** । स्वेतराबोधकत्वस्येति तामेव दर्शयति—**उपमानादीति** ॥ **चन्द्रत्वेति** । चन्द्रत्वप्रकारकचन्द्रविशे समवायादिसंसर्गकज्ञानत्वस्य चन्द्रपदशक्तिज्ञानकार्यतावच्छेदकत्वाभ्युपगमात् । **स्वेति** । स्वं उपमानादितद्विषयकत्वाभाववत् घटादिज्ञानं तद्वृत्तिविषयिताक ज्ञानं चन्द्रादिज्ञानं तज्जनकत्वं चन्द्रादिपदानामस्त्येव चन्द्रत्वादेरधिकस्य भानेऽपि चन्द्र विषयकत्वस्यापि तत्र सत्त्वादधिकमिति न्यायादिति भावः । एवं सति प्रकृतेऽपि स्वे बोधकत्वं न निवेश्यत इत्याह—**तर्हीति** ॥ इतरबोधकत्वेऽपि सादृश्यबोधकत्वस्यापि त्त्वादित्यर्थः ॥ ननु उपमानविषयकत्वव्यापकविषयिताप्रतियोगिशाब्दबोधविषय विवक्षितम्, चन्द्रादिपदजन्यशाब्दबोधस्य चन्द्रत्वादिविषयकत्वनियमात् । सा दिकं तु न, तज्ज्ञानविषयत्वनियतमित्यस्वरसाद्दोषान्तरमाह—**किंचेति** ॥ च मिति यथा सादृश्यादिमात्रार्थकपदाभावात्तत्र त्रिलुप्ता, तथोपमेयमात्रार्थकपद वादुपमेयलुप्तापीति चतुर्लुप्तापि तत्रोपमा स्यात् । न चेष्टापत्तिः, त्वयापि तस्या भ्युपगमात् । ग्रन्थान्तरविरोधमाह—**अपि चेति** । ग्रन्थान्तरविरोधस्य तथा त्वाभावात्तद्ग्रन्थविरोधमेवाह—**किंचेति** ॥ न चार्थत्वेऽपि वाचकलुप्तत्वं तत्र भवतीति वाच्यम्, लुप्तोपमायां तस्य परिगणनापत्तेः, तेनाप्यपरिगणनाच्च । तत्र विन्दसुन्दरमित्यादौ समासवशात् अश्रूयमाणोऽपीवशब्दः स्मृत एव सादृश्यं बो

---

१ 'अपि च' क. २ 'किंच' इत्यधिकं क-पुस्तके.

तदभिधानादार्थत्वम्' इति स्वयमेवोक्तम् । अत्रत्यरीत्या तु तत्रापि वाचकलुप्तत्वं स्यादिति स्वग्रन्थविरोधोऽपि दुष्परिहर इति दिक् ॥

(यदपि—) 'अरविन्दमिव भाति' इत्यत्रेवार्थः सादृश्यम् । तत्रारविन्दस्य निरूपितत्वसंबन्धेनान्वयः, सादृश्यस्य च प्रकारतासंबन्धेन धात्वर्थे ज्ञा(भा)नेऽन्वयः । तथा च—'अरविन्दनिरूपितसादृश्यप्रकारकधीविशेष्यः' इति बोधः । सौन्दर्येणेत्यस्याप्युपादाने तृतीयार्थः प्रयोज्यत्वं धात्वर्थे भाने, इवार्थे सादृश्ये वान्वेति । तेन 'सौन्दर्यप्रयोज्यारविन्दनिरूपितसादृश्यप्रकारकधीविशेष्यः' इति बोधः—इति ॥

अत्र ब्रूमः—'प्रकारतया सादृश्यान्वयबोधं प्रति तदनुयोग्युपस्थापकपदजन्योपस्थितित्वेन हेतुता' इति कार्यकारणभावो लाघवात्कल्प्यते, 'अरविन्दमिव मुखम्' इत्यादि साधारण्यात् । 'अरविन्दनिरूपितसादृश्यवन्मु-

---

तीत्येवालंकारिकाणामाशयः । तदनभिज्ञस्य सादृशप्रत्ययस्त्वसिद्ध एव । उपमा चेयं श्रौत्यार्थी वेत्यत्र विद्वांस एव मानम् । अरविन्दवत्सुन्दरमिति तुल्यार्थकवति प्रत्ययेनापि तदर्थोल्लिखदर्शनात् । वस्तुतस्तु शस्त्रीव श्यामेति भगवतां महाभाष्यकाराणां 'उपमानानि सामान्यवचनैः' इति सूत्रे प्रयोगाणां बहुलमुपलम्भात् तदनुरोधेनैव निर्णयो युक्त इति सहृदयैर्विचारणीयम् । वैयाकरणास्तु—पूर्वपदं तदर्थसदृशे लाक्षणिकमिति सूचयितुमेव विग्रहवाक्ये इवशब्दप्रयोगः । अत एव मृगीव चपला मृगचपलेति सामानाधिकरण्यनिमित्तः पुंवद्भावः—इत्याहुः । तदेतत्सर्वं ध्वनयन्नाह—**दिगिति** ॥ रसगङ्गाधरोक्तं बोधान्तरमपि विचारयति—**यदपीति** । **निरूपितत्वेति** । निपातार्थनामार्थयोर्भेदेनापि साक्षादन्वयाभ्युपगमात् । **प्रकारतेति** । निपातार्थधात्वर्थयोः प्रकारीभूतविभक्त्यर्थोपस्थितिं विनापि साक्षादेव भेदान्वयस्य 'न कलञ्जं भक्षयेत्यादौ' व्युत्पन्नत्वात् ॥ **धात्वर्थ इति** । भाधातोर्ज्ञानार्थत्वस्यापि प्रसिद्धेः । तदुत्तराख्यातस्य तु विशेषत्वमर्थः, तदाह—**धीविशेष्य इति** ॥ अन्यत्स्पष्टमेव ॥ **अन्वय इति** । तृतीयार्थप्रयोज्यत्वस्येति शेषः । बोधद्वयं तन्त्रेण दर्शयति—**तेनेति** । अत्र प्रयोज्ये तस्य धीपदार्थेन समन्वये आद्यः, सादृश्येनान्वये द्वितीयो बोध इति विशेषः ॥ **प्रकारतयेति** ॥ सादृश्यनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन सादृश्यान्वयबोधं प्रतीत्यर्थः । लाघवमेव दर्शयति—**अरविन्दमिवेति** । तथा च, तत्र इवार्थसादृश्यप्रकारकबोधे मुखादिरूपोपमेयार्थकपदजन्योपस्थितिर्हे-

---

१. पुस्तकद्वयेऽप्यनुपलब्धं टीकानुरोधाद्वर्धितम्.

---

१. 'कण्ठोक्तमेव' क.

खम्' इत्येव बोधात्। सुन्दरादिपदोपादानेऽपि तादृशसादृश्यवन्मुखं... रम्' इत्येव बोधात्। सादृश्यप्रयोजकधर्माकाङ्क्षायां सौन्दर्यस्यैव मा... तत्त्वेन विषयीकरणाच्च। सौन्दर्येणेत्युक्तौ च 'सौन्दर्यप्रयोज्यारविन्द... श्यवन्मुखम्' इति बोधः॥ न च—'मुखं न चन्द्र इव' इत्यादौ ... श्यस्य प्रतियोगितासंबन्धेन नञर्थे प्रकारत्वाद्व्यभिचारः—इति वाच्य... प्रतियोगित्वातिरिक्तस्य कार्यतावच्छेदकसंबन्धेऽभिधेयत्वात्। एवं 'चन्द्र... दृश्यं मुखवृत्ति' इत्यत्रापि न व्यभिचारः। अत्र प्रकारतासंबन्धेन सा... स्यान्वयाबोधात्॥

ननु—एवं सति—'अरविन्दमिव सुन्दरं मुखम्' इति शाब्दबो... 'मुखवृत्त्यरविन्दीयसादृश्यं सौन्दर्यप्रयोज्यं न वा' इति संदेहनिवृत्तिर्न ... त्वद्रीत्या सौन्दर्यप्रयोज्यत्वस्य सादृश्ये मानसगम्यत्वात्। न च— मानसोत्तरमेव संशयनिवृत्तिः, न तु शाब्दबोधा व्यवहितक्षणे क्षणविलम्ब...

---

तुरिति हेतुहेतुमद्भावस्य त्वयाप्यवश्यं कल्पनीयत्वात् 'अरविन्दमिव मुखं भाति'... त्रापि सादृश्यस्य मुख एवान्वयो युक्तो न तु धात्वर्थे ज्ञान इति भावः। ननु त... रीत्या सादृश्यस्य सौन्दर्यप्रयोज्यत्वं न लभ्येतेत्यत आह—**सादृश्यप्रयोजक... मानसेनेति**। तथा च, तादृशस्थले सादृश्यनिष्ठसौन्दर्याप्रयोज्यत्वज्ञानस्य शा... मसिद्धमेवेत्यर्थः॥ **न चेति**। तत्र इवार्थसादृश्यस्य प्रतियोगितासंबन्धेन न... भावान्वयात्, अभावस्य च विशेषणतया मुखान्वयात् 'चन्द्रप्रतियोगिकसादृश्या... ववन्मुखम्' इति बोधोदयात्। क्वचित्सादृश्यस्योपमेयभिन्नेऽपि विशेषणत्वं दृष्ट... भावः। **प्रतियोगित्वेति**। तथा च, प्रतियोगित्वातिरिक्तसंबन्धेन सा... प्रकारकशाब्दबोधकत्वं कार्यतावच्छेदकं कल्प्यते, अभावे च प्रतियोगित्वसंस... सादृश्यप्रकारकबोधोदयान्न व्यभिचारः, संबन्धस्य तु तदतिरिक्तत्वेन सादृश्यस्य... संबन्धेन धात्वर्थान्वये व्यभिचारः स्यादेवेति भावः। नन्वेवमपि 'चन्द्रसादृश्यवान्... इत्यत्र कालिकसंबन्धेन सादृश्यप्रकारकबोधे व्यभिचार इति चेत्, सत्यम्।... दजन्योपस्थितिविषयसादृश्यप्रकारकशाब्दत्वस्य कार्यतावच्छेदकत्वोपगमात्।... च सादृश्यस्य इवपदजन्योपस्थितिविषयत्वविरहात् कालिकविशेषणताविव... 'चन्द्र इव कालः' इति शब्दस्तु न प्रयुज्यत एव, तादृशसादृश्यस्यानुयोगिताविशे...

१. 'तोत्तरं' क.

१. 'शाब्दत्वम्' क.

दुर्ग्रहत्वात्—इति वाच्यम्, तत्कल्पने मानाभावात्—इति चेत्, न। 'अरविन्दमिव भाति' इत्यत्रापि 'अरविन्दनिरूपितसादृश्यप्रकारकधीविशेष्यः' इत्येतद्बोधादपि 'अरविन्दसदृशं न वा' इति संशयानिवृत्तिप्रसङ्गसत्त्वात्। क्षणविलम्बकल्पनस्य चोभयत्र साम्यात्। एवं च 'अरविन्दमिव भाति' इत्यत्रापि 'तादृशसौन्दर्यवन्मुखं ज्ञानविषयः' इत्येव बोधः। अन्यथोक्तकार्यकारणभावे व्यभिचारापत्तेः। तादृशसंबन्धेन बोधे धातुजन्योपस्थितिकल्पनगौरवाच्च॥ नन्वेवम्—चैत्रीयसादृश्यप्रकारकज्ञानाभावेऽपि 'अरविन्दमिव मुखं चैत्रस्य भाति' इति प्रयोगः स्यात्, तादृशसौन्दर्यवतो मुखस्य ज्ञानविषयत्वसत्त्वात्। मम तु सादृश्यप्रकारकत्वस्य ज्ञानेऽलाभान्न तथा—इति चेत्॥ इष्टापत्तेः। रूपान्तरेण मुखप्रकारकज्ञानसत्त्वेऽपि 'मुखं चैत्रस्य भाति' इत्यादि प्रयोगात्॥ न च—'मुखत्ववन्मुखं भाति' इति न तदा प्रयोगः—इति वाच्यम्, बाधकाभावात्, प्रकारत्वार्थकविभक्त्या-

वन्धेनैवान्वयनियमात्, यथा रजतत्वस्य कालिकविशेषणतया काले ग्रहेऽपि 'कालो रजतत्ववान्' इति रजतत्वेन रूपेण रजतत्ववत्तावगाहिबोधजनक एव शब्दः प्रयुज्यते, न तु रजतत्वांशनिरवच्छिन्नप्रकारताकबोधजनकः 'कालो रजतम्' इत्यादिरपि रजतशब्दशक्तौ रजतत्वांशे समवायस्यैव संसर्गतया निवेशात्। तथा प्रकृतेऽपि। नन्वेवं 'चन्द्रसादृश्यं मुखवृत्ति' इत्यत्र सादृश्यस्य प्रकारतयान्वयबोधविरहाद्व्यभिचारसमाधानमनुपपन्नम्, तत्र तस्य इवपदार्थत्वाभावादेव तच्छङ्कानुदयादिति चेत्सत्यम्, तस्य यथा श्रुतपरत्वात्। परंतु प्रकारकत्वमनिवेश्य सादृश्यविषयकान्वयबोधत्वमात्रस्य कार्यतावच्छेदकत्वोपगमे चन्द्रादिपदस्यापि प्रतियोगितया तदन्वयित्वात्सादृश्यविषयकान्वयबोधत्वावच्छिन्नस्य तत्रापि जायमानत्वात् तस्य तदनुयोगित्वाभावेन व्यभिचारः स्यात्। अतः सादृश्यप्रकारकत्वं कार्यतावच्छेदके निवेशितमित्यत्रैव तात्पर्यम्॥ **व्यभिचारापत्तेरिति**। तदनुयोग्युपस्थापकपदजन्योपस्थितिं विनापि तत्र इवार्थसादृश्यप्रकारकबोधत्वावच्छिन्नोत्पत्तेः॥ ननु तदनुयोग्युपस्थापकपदधात्वे तदन्यतरजन्योपस्थितेरेव तत्र हेतुत्वं कल्प्यतामत आह—**तादृशेति**॥ **ज्ञानाभावेऽपीति**। मुखज्ञानसत्वे चेत्यपि द्रष्टव्यम्॥ **ज्ञानेऽलाभादिति**। उक्तस्थले च सादृश्यप्रकारकज्ञानाभावान्न तद्बोधशब्दप्रयोग इत्यर्थः। **रूपान्तरेणेति**। द्रव्यत्वादिनेत्यर्थः। **प्रकारत्वेति**। तृतीयारूपेत्यर्थः। तज्ज्ञाने मुखत्वादेः प्रकारत्वे तदुल्लेखाय तद्विषयकशब्देऽपि 'मुखत्वेन मुखं

१. 'मैत्रीय' क.

दिविरहाच्च । वस्तुतो 'मुखत्ववद्यन्मुखं तद्भाति' इति बोधात् । अ
वोक्तबोधात् 'चैत्रो मुखत्वप्रकारकज्ञानवान्न वा' इति संशयानिवृ
अतश्च—'अरविन्दसादृश्यवन्मुखं भाति' इत्यत्रापि वस्तुतः 'अरविन्द
श्यवन्मुखं ज्ञानविषयः' इत्येव बोधः, 'मानान्तरेण चैत्रीयज्ञानस्य सादृ
कारकत्वनिश्चये 'तत्सादृश्यप्रकारकज्ञानवान्न वा' इति संशयनिवृत्ति
त्वन्यथा' इत्यनुभवसिद्धमेतत् ॥ तदवच्छिन्नप्रकारताकज्ञाननिश्च
तदवच्छिन्नप्रकारताकज्ञानाभावबुद्धिप्रतिबन्धकत्वात् । 'अरविन्दसुन्दर
मम भाति' इत्युक्तौ तु वाक्यार्थज्ञानविधया वक्तरि सादृश्यप्रका
ज्ञानस्य लभ्यते । अत एव 'अरविन्दसुन्दरमुखं बालानां [2]यथावस्थि
भाति' इत्यादावपि न ज्ञाने तत्प्रकारकत्वलाभ इति स्पष्टमेव ॥

अपि च 'अरविन्दमिव भाति' इत्यस्मात् 'अरविन्दसदृशं न वा'
संशयनिवृत्तिरनुभवसिद्धा। सा च त्वदुक्तरीत्या दुर्घटा । न च—क्षणि
म्बकल्पनान्निस्तारः, तत्प्रकारकधीविशेष्यत्वस्य तद्वत्त्वव्यभिचारेण तद्
मपि 'अरविन्दसदृशम्' इति मानसासंभवात् । न च—तत्र प्रमा
ष्यत्वं तदर्थः—इति वाच्यम्, 'कुसुदमिव मुखम्' इत्यादौ तदसंभ

जानातीत्येव प्रयोगः स्यात्, 'मुखत्वेन मुखं भाति' इत्यत्र यथा ज्ञाने मु
प्रकारकत्वं लभ्यते, नैवं 'मुखत्वन्मुखं भाति' इत्यत्र, तत्र वस्तुतो मुखत्ववत्तया
एवान्वयादिति भावः । **अत एवेति** । तादृशशब्देन चैत्रनिष्ठज्ञाने मुखत्वप्र
त्वानुल्लेखादित्यर्थः । **वस्तुत इति** । वृत्तित्वोल्लेखनं ज्ञानस्य सादृश्यप्रकारकत्वाभा
नमात्रार्थम्, न तु ज्ञानस्वरूपान्तर्गतमित्यवधेयम् ॥ **वाक्यार्थेति** । वाक्यप्रयो
भूतशाब्दबोधसमानविषयकज्ञानान्तरविधया तादृशयोगे तद्बोधस्य हेतुत्वात् ।
ईदृशस्थले ज्ञानस्य सादृश्यप्रकारकत्वलाभादन्यत्रापि तथैव स्यादिति न भ्रमि
मित्यर्थः । **व्यभिचारेणेति** । रजतत्वप्रकारकधीविशेष्यभूतायां शुक्तौ रज
भावादित्यर्थः । **प्रमेति** । तद्वत्त्वं विना तद्विषयस्य तत्प्रकारकप्रमाविशेष्यत्व
पत्तेः । तदभाववति तत्प्रकारकज्ञानत्वस्य भ्रमत्वनियमादित्यर्थः ॥ **कुसुदमि**
तत्र दुष्टोपमेत्यालंकारिकसंप्रदायादित्यर्थः ॥ तथापि तत्र सादृश्यमस्त्येवेत्यत आ

१. 'अत्र च' क. २. 'यथास्थित' क.

१. 'वस्तुतस्तु' क. २. 'सोल्लेख्यज्ञानस्य' क.

प्रमाया धात्वर्थत्वाभावाच्च । अस्माकं तु 'अरविन्दसदृशं मुखं ज्ञानविषयः' इति बोधे प्रतिबन्धकज्ञाननिर्वाहान्न काप्यनुपपत्तिः । न च—एवमपि 'मुखमरविन्दमिव भाति' इत्यत्र 'अरविन्दसादृश्यप्रकारकधीविशेष्यः' इति धीरावश्यकी—इति वाच्यम्, तत्रापि 'स्वप्रकारकज्ञानविषयत्वसंबन्धेन सादृश्यवत्' इत्येव बोधात् । धातोरुक्तसंसर्गे तात्पर्यग्राहकत्वात् । न च—'सादृश्यप्रकारकधीविषयो न वा' इति संशयाद्यनिवृत्तिप्रसङ्गः तत्प्रकारकतदभावज्ञाने तत्संसर्गकबुद्धेरप्रतिबन्धकत्वात्—इति वाच्यम्, तादृशस्यापि प्रतिबन्धकत्वाभ्युपगमात् । क्षणविलम्बकल्पनाद्वा । इति दिक् ॥

---

**प्रमाया इति** । ज्ञानमात्रस्यैव धात्वर्थत्वात् । तल्लक्षणायां च गौरवान्मानाभावाच्चेत्यर्थः ॥ ननु तत्प्रकारकधीविशेष्यत्वस्य तद्व्यभिचारेऽप्यरविन्दसादृश्यप्रकारकधीविशेष्यत्वशाब्दबोधानन्तरं 'अरविन्दसदृशं मुखं' इति ज्ञानान्तरोत्पत्तौ किं बाधकम्, नह्यत्र—'मुखमरविन्दसादृश्यवत्, तत्प्रकारकधीविशेष्यत्वात्' इत्यनुमानविषयारविन्दसदृशत्वं मुखे ग्राह्यम्, येन—तत्र व्यभिचारज्ञानं विरोधि स्यात् । किंतु मानसमेव तादृशज्ञानमपेक्षितम् । तत्र च तद्विषयतापन्नानां पदार्थानामुपस्थितिमात्रमपेक्ष्यते, तच्चास्त्येव । अरविन्दसादृश्यमुखयोः शाब्दबुद्धौ भासमानत्वात् । अतस्तादृशशाब्दबोधोत्तरमरविन्दसादृश्यप्रकारकमुखविशेष्यकमानसोत्पत्तौ बाधकाभावात् कथमेवं संगच्छते—इति चेत्, सत्यम् । नियतप्रतीतिर्न स्यादित्यत्र तात्पर्यात् । अनुमानेन तदुपादाने चोक्तव्यभिचारज्ञानसत्त्वे तदसंभवात् ॥ **न चैवमिति** । तत्र मुखानुवादेन सादृश्यस्य विधेयत्वेन बोधादित्याशयः । **स्वप्रकारकेति** । स्वपदं सादृश्यपरम् । एवं च सादृश्यस्य विधेयत्वानुभवो रक्षितो भवतीति भावः ॥ नन्वेवं भातीत्यन्वितं स्यादित्यत आह—**धातोरिति** । ननु पूर्वमनुयोगितविशेषसंबन्धेनैव उपमेये सादृश्यान्वयो व्यवस्थापितः, तत्कथं स्वप्रकारकज्ञानविषयत्वसंसर्गेण मुखे तदन्वयः ॥ उच्यते—कालिकविशेषणताव्यावृत्तेरेव तेन विवक्षितत्वात् । न चैवं चन्द्र इवेत्यादावपि उक्तसंबन्धेन सादृश्यप्रकारकज्ञानापत्तिरिति वाच्यम्, भातीत्यादिसमभिव्याहाररूपतात्पर्यग्राहकाभावात् ॥ अथैवमपि—अरविन्दसदृशं न वेत्यादिसंशयनिवृत्तिरुक्तशाब्दबोधान्न स्यादिति चेत् । तवापि तत्साम्यात् । अरविन्दसादृश्यप्रकारकधीविशेष्यस्वप्रकारकज्ञानस्यापि तादृशसंशयं प्रत्यविरोधित्वात् । न च यत्रारविन्दमिव भातीत्युपमेयार्थकपदरहितमेव वाक्यं प्रयुक्तम्, तत्र तस्य पदजन्योपस्थितेरभावेन सादृश्यस्यानुयोगित्वेनान्वयासंभवात्तत्र प्रकारतासंबन्धेन तस्य धात्वर्थे ज्ञान एवान्वयोऽवश्यं वाच्य इति वाच्यम् । तत्रापि तदध्याहारावश्यकत्वात्सादृश्यस्य प्रतियोग्यनुयोग्युभयनिरूपणं विना निरूपयितुमशक्यत्वात् । अन्यथा आख्यातार्थविशेष्यत्वस्यापि प्रथमान्तपदोपस्थाप्यरूपविशेष्याभावेनानन्वयापत्तेः । तदेतत्सर्वं ध्वनयन्नाह—**दिगिति** ।

अत एव 'अरविन्दतुल्यो भाति' इत्यत्रापि नानुपपत्तिः। त्वन्मते दृश्यस्य निपातभिन्ननामार्थत्वेन धात्वर्थे भेदेनान्वयानुपपत्तेः। न च-ल्यपदस्य तुल्यत्वप्रकारके लक्षणा तस्य चाभेदसंबन्धेन धात्वर्थेऽन्वय इति वाच्यम्, तथा सति 'क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता वक्तव्या' इत्यनुशासनात्क्लीबत्वापत्तेः ॥ यत्तु—'स्तोकं पचति' इ विषयत्वमात्रेणानुशासनोपपत्तिः—इति। तदसत्, संकोचे प्रमाणाभा अपि च—'अरविन्दतुल्यो भाति, अरविन्दवद्भाति' इत्याभ्यां तुल् यकोऽनुभवः। तव तु प्रथमे—अरविन्दतुल्यत्वप्रकार(कत्वप्रकार)का सर्गकज्ञानविशेष्यकः, द्वितीये तु—अरविन्दसादृश्यप्रकारकत्वसंसर्गक

---

सादृश्यस्य धात्वर्थज्ञानान्वयस्वीकारे दूषणान्तरमप्याह—**अत एवेति**। नानु उपमेयस्य पुंलिङ्गतया तुल्य इत्यस्यापि तथात्वोपपत्तेः। मुखपदस्य नपुंसकत्वात्तत्र पदस्य क्लीबत्वावश्यकत्वात् तत्र क्रियाविशेषणत्वप्रयुक्तक्लीबत्वापादानं इष्टापा स्यादित्यतस्तत्र पुंस्त्वसंपादनार्थमरविन्दपदमुक्तम्। इदं च प्रसिद्धाभिप्रायेण। सहजपुंलिङ्गस्य सुलभत्वात् ॥ ननु तथापि सादृश्यस्य प्रकारत्वसंबन्धेन ज्ञान ए भविष्यतीत्याशङ्क्याह—**त्वन्मत इति**। **भेदेनेति**। अभेदातिरिक्तसंबन्धेन तातिरिक्तनामार्थप्रकारकबोधे विभक्तिजन्योपस्थितेर्हेतुत्वात्। ज्ञानस्य च धात यथोक्तहेत्वभावादिति। [अ]भेदान्वये तु सादृश्याभिन्नज्ञानेति बोधः स्यात्, स ग्यतापराहत एवेति भावः। **लक्षणेति**। तथा च, सादृश्यप्रकारकस्य नामार्थ स्याभेदेन ज्ञानान्वयः; स्तोकं पचतीत्यादौ नामार्थधात्वर्थयोरभेदान्वयस्य व्युत्पन्न त्यर्थः ॥ **संकोच इति**। क्रियाविशेषणानां नपुंसकत्वस्य वाचनिकत्वादित्यर्थः। वचनं उक्तरूपं, 'ततोऽन्यत्रापि दृश्यते' इति वेत्यन्यदेतत्। ननु क्रियावि कर्मत्वं तावन्न्यायसिद्धमेव, न तु वाचनिकम्, स्तोकं पचतीत्यत्र पाकं क द्वितीयान्तपाकपदेन धात्वर्थविवरणात्तद्विशेषणतया तत्सामानाधिकरण्येन स्तोक कर्मताया एवोचितत्वात्। अत एव 'यजेत' इत्यत्र विधिबलेन धात्वर्थस्य णत्वावगमात् तत्र तद्विशेषणतया ज्योतिष्टोमेनेति तृतीयैवेति वैयाकरणमत धाय दोषान्तरमाह—**अपि चेति** ॥ **तव त्विति**। 'अरविन्दतुल्यो भाति' सादृश्यस्य प्रकारत्वसंबन्धेन ज्ञानान्वयानुपपत्त्या तुल्यपदस्य तुल्यत्वप्रकारके णेत्युक्तत्वात्। तुल्यत्वप्रकारकविशेषणतया, अभेदश्च संसर्गतया, ज्ञानं वि तया भासते। 'अरविन्दवद्भाति' इत्यत्र तु सादृश्ये लक्षणास्वीकारेऽपि तस्य प्रत्ययार्थतया [१]ज्ञानातिरिक्तनामार्थत्वाभावेन तस्य प्रकारत्वसंबन्धेन ज्ञानान्वयः

---

१. 'निपतितीक' क.

वेशेष्यकः—इति वैषम्यापत्तिः । 'अरविन्दतुल्यो न भवति' इति शाब्द-
ोधोत्तरम् 'अरविन्दवद्भाति' इत्येतद्वाक्यजन्यशाब्दबोधापत्तिश्च, ग्राह्याभा-
ानवगाहिज्ञानस्य प्रतिबन्धकत्वात् ॥ यदपि धातोरेव लक्षणया सादृश्य-
कारकज्ञानमर्थः, तुल्यादिपदं तात्पर्यग्राहकम्—इति ॥ तदप्यसत् ।
ुल्यादिपदस्य सादृश्यानुपस्थापकत्वे उक्तोपमाया आर्थत्वव्यवस्थित्यभावात्
 च—सादृश्यतात्पर्यग्राहकतामात्रेण तथात्वम्—इति वाच्यम्, तात्प-
ग्राहकत्वस्य श्रौतार्थत्वव्यवस्थापकत्वे मानाभावात् ॥ किंच तथापि क्लीब-
वापत्तिरनिवार्यैव—स्वार्थपरविशेषणस्यैव समानलिङ्गत्वम्—इति चेत् । तर्हि
सामान्ये नपुंसकम्' इति क्लीबत्वपराहतं पुंस्त्वं कथं समादधीयात् । तस्मादालं-
कारिकसिद्धान्तानुरोधिनां यथोक्तरीत्याश्रयणमेव युक्तमित्यलं बहुना ॥

---

त्येवेति सादृश्यं विशेषणतया, प्रकारत्वं च संसर्गतया, ज्ञानं च विशेष्यतया प्र-
ीयते । ततश्च विशेषणांशे संसर्गांशे च विषयभेदापत्तिरिति भावः ॥ **वैषम्यं**
**ेयमेवेति** । वतिप्रत्ययपर्यन्तानुधावनं तु तुल्यार्थविहितत्वात्सामानविषयकबो-
स्यैवोचितत्वादिति ध्वननार्थम् । अरविन्दमिव भातीत्यनेनापि सह वैषम्यं ज्ञेयमेव ।
वादौ सादृश्यमाश्रयत्वसंबन्धेन तुल्यादौ तु तद्भानभेदसंबन्धेन उपमेयेऽन्वीयत इति
षम्याङ्गीकारेऽपि 'अरविन्दवद्भाति' 'अरविन्दतुल्यो भाति' इति द्वयोरुक्तरीत्या वैष-
याङ्गीकारे प्रमाणाभावात् । 'एतावन्मात्रस्यापि तथा दोषत्वाभावादाह—**अरवि-**
**देति** । अरविन्दतुल्यत्वप्रकारकज्ञानाभावज्ञानस्यारविन्दतुल्यत्वप्रकारकज्ञानज्ञानं प्रत्य-
रोधित्वादित्यर्थः । क्रियाविशेषणत्वप्रयुक्तक्लीबपरिहारार्थं केषांचित्कल्पनां सिं-
ावलोकितन्यायेन दूषयितुमनुवक्ति—**यदपीति** ॥ **तात्पर्येति** । तथा च—क्रिया-
शेषणानामिति नपुंसकत्वापत्तिरिति दोषभाव इति भावः । ननु तथैव परिभाषाकरणे
ोषाभावः । किंच सादृश्यमात्रस्य धात्वर्थत्वाभावात्पूर्वोक्तमप्यार्थत्वमव्याहतमेवेत्यत
ाह—**किंचेति** ॥ **तथापीति** ॥ क्रियाविशेषणतात्पर्यग्राहकत्वेऽपीत्यर्थः । **तर्हीति** ।
दपि तुल्यपदं क्रियाविशेषणम्, तदा तत्त्वेन क्लीबत्वापत्तिः । यदि तात्पर्यग्राहकमात्रम्,
दापि पुंलिङ्गविशेषणत्वाभावेन तदापत्तिः, लिङ्गविशेषाविवक्षायां नपुंसकमेव प्रयुज्यत
ति सामान्ये नपुंसकमिति महाभाष्यकारादिभिर्व्यवस्थापितत्वात् । तदाह—**सामान्य**
**ेति** ॥ तथा च विशेषानिश्चये वक्तारो वदन्ति 'किमस्य जातम्, स्त्री पुमान्वा' इत्यादि ।
तस्तुल्यपदस्यैव सादृश्यादिकमर्थः । तस्य च मुखादावन्वय इत्येव युक्तमित्यर्थः ॥
पि च—पूर्वोक्तविषयवैषम्यरूपदोषोऽत्राप्यवसेयः । तथा हि—सादृश्यप्रकारकज्ञाने

---

१. 'वैषम्यं ज्ञेयमेव' इति टीकासंमत पाठः. २. 'यत्तु' क.

'गज इव गच्छति' 'पिक इव रौति' इत्यादावपि गजपदस्य तद्ग- मने लक्षणा, तस्य प्रतियोगित्वेन सादृश्येऽन्वयः, तस्यानुयोगित्वेन धात्वर्थे गमने । तथा च 'गजगमनसदृशगमनानुकूलकृतिमान्' इत्यादिर्बोधः- इति केचित् ॥

---

लक्षणाभ्युपगमे प्रकारकेति संसर्गोल्लेखः, विशेषणं वा । आद्ये प्रकारत्वसंबन्धेन सादृश्य- प्रकारकज्ञानविशेष्यकस्य, द्वितीये च तादात्म्यसंबन्धेन सादृश्यप्रकाशकज्ञानविशेष्य- कस्य शाब्दबोधस्य पूर्ववदेवोदयात् । द्वितीये तावदरविन्दमिव भातीत्येतद्वाक्यजन्य- त्सादृश्यप्रकारत्वसंसर्गकज्ञानविशेष्यत्वावगाहिनः शाब्दबोधाद्वैषम्यं स्पष्टमेव । आद्ये विषयसाम्यरक्षायामपि तुल्यपदस्य तात्पर्यग्राहकताभ्युपगमे तद्योगेऽरविन्दादिपदे तृ- तीयानुपपत्तिः । 'तुल्यार्थैः' इति सूत्रेण तदर्थकपदयोग एव तद्विधानात् । यदि प्रथमं तुल्यपदस्य स्वार्थविवक्षया तद्योगे तृतीयां विधाय पश्चादेव तस्य तात्पर्यग्राहक- ताकल्पनम्, अत एव 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति न्यायात् 'गौर्वाहीकः' इत्यादौ गोशब्दस्य गौणत्वात्कथं तत्र वृद्ध्यादिकार्यमित्याशङ्क्य मुख्य एव स्वार्थे गोश- ब्दस्य वृद्ध्यात्वे, ततः पश्चादेव गौणत्वम् । न चान्तरङ्गत्वेन प्रवृत्तः पदसंस्कारो बहि- रङ्गगौणत्वप्रतीतावपि निवर्तित इति समादधिरे शाब्दिकाः, एवमिहापीति न तृती- यानुपपत्तिरिति विभाव्यते । तदापि सादृश्यस्य धात्वर्थत्वात्तत्र निरूपितत्वसंबन्धेनार- विन्दादिपदार्थान्वयानुपपत्तिः । धात्वर्थनामार्थयोः साक्षाद्भेदान्वयाभावात् । अथ नि- रूपितत्वं तृतीयार्थं कल्पयित्वा तद्द्वारकोऽरविन्दादेः सादृश्यरूपधात्वर्थान्वयः कल्प्यते, एवमपि एकदेशान्वयो दुर्वार एव । यदि तु सादृश्य एव लक्षणा, ज्ञाने तु शक्तिरे- अतोऽनैकदेशत्वं सादृश्यस्येत्युच्यते, तर्हि सादृश्यस्य मुख्यपदार्थत्वादुपमायाः श्रौतत्वा- पत्तिः । न चेष्टापत्तिः, त्वयापि तदनभ्युपगमात् । अथ सादृश्ये लक्षणायामपि न श्रौतत्वं तत्र शक्तावेव श्रौतत्वोपगमात् । यद्वा सादृश्यज्ञान एव लक्षणा, ससंबन्धिकस्थल एकदे- शान्वयस्यापि व्युत्पन्नत्वात् । यद्वा अरविन्दमपि तात्पर्यग्राहकमेव तथा चारविन्दसादृ- श्यज्ञान एव लक्षणा इत्यादिकं विभाव्यते । तथाप्यस्मदपेक्षया गौरवं स्पष्टमेवेत्यादि ध्वनयन्नाह—**अलमिति** ॥ पूर्वोक्तस्थलेऽपि सादृश्यस्य धात्वर्थान्वयबाधकयुक्तिं प्रद- र्शयिष्यन् अन्यत्रापि सादृश्यस्य धात्वर्थान्वयं वारयितुमाह—**गज इवेति** । गजनिरूपि- तसादृश्यस्य गमने बाधाद्गजपदस्य तद्गमनपरत्वाश्रयणम् । **तस्येति** । गजगमनस्येत्यर्थः । **प्रतियोगित्वेनेति** । निपातार्थनामार्थयोर्भेदान्वयस्यापि व्युत्पत्तेः । **तस्येति** । सा- दृश्यस्येत्यर्थः । **इत्यादीति** । पिकशब्दस्य तदीयरुते लक्षणा, तस्य इवार्थे सादृश्ये प्र- तियोगित्वेन, सादृश्यस्याश्रयतया धात्वर्थे रुतेऽन्वयः । तेन . पिकरुतसदृशरुतानुकूलकृ- तिमानिति बोधः । एवमन्यत्रापीति भावः । सादृश्यस्य धात्वर्थान्वयवादिनामेकेषां

१. 'सादृश्यप्रकारकप्रकारत्व' क.

धात्वर्थनिष्ठविशेष्यतानिरूपितप्रतासंबन्धेनान्वयबोधं प्रति विशेष्यतया विभक्तिजन्योपस्थितेर्हेतुत्वस्यावश्यकतया सादृश्यस्य धात्वर्थान्वयासंभवात्सादृश्यस्य गमनकर्तर्येवान्वयः। कर्तरि गजसादृश्यं च स्वगमनसदृशगमनकर्तृत्वम्—इत्यन्ये॥

केचित्तु—एवं सति सादृश्यस्य विधेयतया प्रतीतिरनुभवसिद्धा न सिध्येत्। 'गज इव यः पुरुषः स गच्छति' 'पुरुषो यः स गज इव गच्छति' इत्यादिवाक्याभ्यां भिन्नविधेयकप्रतीतिजननात्। 'वनं गज इव गृहं देवदत्तो गच्छति' इत्यादौ वनादेरनन्वयापत्तेश्च। 'गजनिरूपितसादृश्यप्र-

---

मतान्तरोपन्यासमुखेन दूषयति—**धात्वर्थेति**॥ ततश्चैतादृशकार्यकारणभावबलेन धात्वर्थविशेष्यक इवार्थसादृश्यप्रकारको बोधो न स्वीकर्तुमर्हः सादृश्यस्य विभक्त्यर्थत्वाभावात्, धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंबन्धेनान्वयबोधस्वीकारे व्यभिचारप्रसङ्गात्। अत्र प्रकारतासंबन्धेनान्वयबोधे विभक्तिजन्योपस्थितिर्हेतुरित्युक्तौ 'नीलो घटः' इत्यादौ व्यभिचारः, नीलस्य प्रकारतयान्वयबोधात्तस्य च विभक्त्यर्थत्वाभावात्। एवं 'घटः' इत्यादौ घटत्वस्य प्रकारतया बोधादुक्तदोषो द्रष्टव्यः। अतो धात्वर्थनिष्ठविशेष्यतानिरूपितेत्युक्तम्। तत्र तु घटादिरूपनामार्थनिष्ठविशेष्यतानिरूपितैव नीलादिप्रकारतेत्यदोषः। ननूक्तकार्यकारणभावो नाङ्गीकर्तव्य इत्यत आह—**अवश्येति**। घटो न पश्यतीत्यादौ घटान्वितस्याभावस्य विषयतासंबन्धेन धात्वर्थदर्शनान्वये घटाभावं पश्यतीतिवत् घटाभावविषयकदर्शनशाब्दबोधापत्तेस्तद्वारणाय यथोक्तकार्यकारणभावः कल्प्यते। तत्कल्पने चाभावस्य निपातार्थतया विभक्त्यर्थत्वाभावाद्धेतवभावादेव न तथा बोध इति भावः। **गमनकर्तर्येवेति**। गजसदृशो गमनानुकूलकृतिमानित्यर्थः। नन्वेवं धर्मान्तरेण तयोः सादृश्यं सिद्ध्येन्न तु गमनेनेत्यत आह—**गजसादृश्यं चेत्यादि**। **स्वगमनेति**। गजगमनेत्यर्थः। **अन्ये इति**। आख्यातवाददीधितिविवरणे रुद्रभट्टाचार्यादय इत्यर्थः॥ अत्र रसगङ्गाधरोक्तदूषणमाह—**केचित्त्विति**। **भिन्नविधेयकेति**। गज इव यः पुरुषः स गच्छतीत्यत्र गजसादृश्यविशिष्टपुरुषानुवादेन गमनस्य विधेयत्वम्, पुरुषो यः स गज इव गच्छतीत्यत्र तु शुद्धपुरुषानुवादेन गजगमनसदृशगमनस्य विधेयत्वं प्रतीयत इत्यर्थः। एवं च विधेयतयेत्यस्य विधेयकोटिप्रविष्टतयेत्यर्थः। **अनन्वयेति**। गजसदृशो देवदत्तो गमनानुकूलकृतिमानित्यत्र वनस्यान्वयाबोधात्। एवं बिम्बत्वापन्नकारकमात्रस्याप्यनन्वयो बोध्य इति भावः॥ ननु धात्वर्थनिष्ठेत्यादिकार्यकारणभावस्य क्लृप्तत्वात्कथं दृश्यस्य धात्वर्थान्वयः अतः प्रतीतिमात्रम-

योजकगमनाश्रयः' इत्येव बोधः । उक्तकार्यकारणभावश्च नाङ्गीकार्यः । न च—'घटो न पश्यति' इत्यत्र 'घटाभावं पश्यति' इत्यादिबोधवारणाय तदावश्यकम्—इति वाच्यम्, धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंसर्गेणान्वयबोधं प्रति नञ्पदजन्योपस्थितिमात्रस्य प्रतिबन्धकत्वकल्पनात्—इत्याहुः ॥

---

किंचित्करमित्यत आह—उक्तेति । ननु यथोक्तकार्यकारणभावानङ्गीकारे घटो न पश्यतीत्यत्र घटस्य प्रतियोगितया नञर्थाभावान्वये तस्य च विषयतया धात्वर्थदर्शनान्वये घटाभावं पश्यतीति बोधः स्यादित्याशङ्कते—न चेति ॥ धात्वर्थेति । तथा च घटो न पश्यतीत्यत्राभावस्य नञ्जन्योपस्थितिविषयत्वेन तत्र धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंबन्धेन नान्वयबोधः । न चैवं पाको न याग इत्यत्र नञर्थान्योन्याभावस्य पाकादावन्वयो न स्यात् । पाकस्य धात्वर्थतया तन्निष्ठविशेष्यतानिरूपितप्रकारतासंबन्धेनान्योन्यभावस्यान्वयबोधायोगादिति वाच्यम् । नामार्थातिरिक्तत्वेन धात्वर्थस्य विशेषणात्, उक्तस्थले च धात्वर्थत्वेऽपि पाकादेर्नामार्थत्वात्, धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंबन्धेनान्वयबोधं प्रति विभक्तिजन्योपस्थितेर्हेतुत्वं कल्पयतापरेणापि धात्वर्थस्य नामार्थत्वभिन्नत्वेनावश्यं विशेष्यत्वात्, अन्यथा 'पाको न यागः' इत्यादावपि उक्तकार्यतावच्छेदकावच्छिन्नस्य नञर्थे सत्त्वेन विभक्तिजन्योपस्थितेरभावे न व्यभिचारापत्तेरिति तन्मतशेषः ॥

अत्रेदं बोध्यम्—एतादृशप्रतिबध्यप्रतिबन्धकभावकल्पने 'न कलञ्जं भक्षयेत्' इत्यत्र विध्यर्थस्य बलवदनिष्टाननुबन्धित्वस्य प्रतियोगित्वेन नञर्थाभावान्वये तस्य भक्षणे धात्वर्थे विशेषणताविशेषसंबन्धेनान्वयो न स्यात्, अभावस्य नञ्पदजन्योपस्थितिविषयत्वेन धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंबन्धेनान्वयबोधासंभवात् । न च त्वदुक्तरीत्याप्येतदनुपपन्नम्, अभावस्य विभक्त्यर्थत्वाभावादिति वाच्यम् । तत्र विशिष्य धातुजन्योपस्थितित्वेन कारणत्वान्तरकल्पनात् । न च ममाप्येवमेव निस्तार इति वाच्यम् । प्रतिबन्धकसत्वे हेत्वन्तरेणापि कार्यानुदयात् । वनं गज इव गृहं देवदत्तो गच्छतीत्यत्र च वनगृहयोरभेदान्वयः, देवदत्ते गजसादृश्यं च वनसंयोगानुकूलगमनसदृशगृहसंयोगानुकूलगमनकर्तृत्वम् । तथा चोक्तधर्मेण गजसदृशः पुरुषो वनाभिन्नगृहकर्मकगमनानुकूलकृतिमानित्यादिः शाब्दबोधः । एवं च धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतयान्वयबोधे विशेष्यतासंबन्धेन विभक्तिजन्योपस्थितेर्हेतुत्वेऽवश्यं कल्पनीयेऽरविन्दमिव भातीत्यादावपि प्रकारतया सादृश्यस्य ज्ञानान्वयोऽपि तन्मते प्रथममुपन्यस्य निरस्तो वेदितव्यः, इत्याद्यस्वरसमं तन्मते सूचयन्नेव पूर्वमतमेव समर्थयमान आह—

वस्तुतस्तु—'गजप्रतियोगिकसादृश्यवान्पुरुषो गमनानुकूलकृतिमान्' इत्येव धीः । सादृश्यस्य च धर्मान्तरनिमित्तकत्वे तात्पर्यज्ञाने उक्तधिय एवावश्यकत्वात् ॥ यत्रापि गमनप्रयोज्यमेव सादृश्यं विवक्षितम्, तत्रापि सादृश्ये गमनप्रयोज्यत्वज्ञानं मानसमेव । अतएव धर्मान्तरप्रयोज्यसादृश्यविवक्षायां 'पुरुषगमनं न गजगमनसदृशम्' इति बाधज्ञानसत्त्वेऽपि 'गजसदृशः[1] पुरुषो गमनानुकूलकृतिमान्' इति धीर्भवत्येव ॥

अयं चात्र विशेषः—धर्मान्तरप्रयोज्यसादृश्यविवक्षायां 'गज इव गच्छति' इति धर्मलुप्ता । गमनप्रयोज्यसादृश्यविवक्षायां तु न तथा—इति ॥ नच—गमनस्य साधारणधर्मताया मानसगम्यत्वात्त्वन्मते गमनप्रयोज्यसादृश्यविवक्षायामपि धर्मलुप्तत्वापत्तिः—इति वाच्यम्, साधारणधर्मस्य शाब्दत्वादेव तदभावात् । नहि 'शाब्दबोधगम्य एव धर्मस्य साधारणत्वे न धर्मलुप्तत्वापत्तिः' इति नियमे प्रमाणमस्ति । बिम्बप्रतिबिम्बभावादौ शाब्दबोधोत्तरमुभयोर्धर्मयोरभेदस्य मानसविषयतया तत्रापि तदभावापत्तेरसंभवापत्तेश्चेति न किंचिदेतत् ॥

एवं 'पिक इव रौति' 'चक्रन्द विग्रा कुररीव भूयः' इत्यादावपि पि-

---

वस्तुत इति । धर्मान्तरेति । स्थूलत्ववत्वादिरूपेत्यर्थः ॥ आवश्यकत्वादिति । स्थूलत्वादिप्रयुक्तसाम्यविवक्षायां गजगमनसदृशगमनेत्यादिबोधानुपपत्तेरित्यर्थः । तथा च—धर्मान्तरप्रयुक्तसाम्यविवक्षायां तस्य कर्त्रन्वयस्वीकारस्यावश्यकतया त्वदुक्तरीत्या धात्वर्थ एव सादृश्यान्वयाभ्युपगमो निर्बीज इति भावः । नन्वेवमपि गमनप्रयोज्यसादृश्यविवक्षायां तस्य धात्वर्थान्वयोऽपि स्वीकार्य इत्यत आह—यत्रापीति । मानसमेवेति । उक्तविधया धात्वर्थे सादृश्यान्वयासंभवादिति भावः । ननु धर्मान्तरेण सादृश्यविवक्षायां गज इव गच्छतीति प्रयोगो न भवत्येवेत्यत आह—अत एवेति ॥ धर्मलुप्तेति । तत्प्रयोजकस्थूलत्वादिधर्मवाचकपदाभावादित्यर्थः ॥ न तथेति । गमनार्थकगमिरूपधातुप्रयोगसत्वेन न धर्मलुप्तेत्यर्थः ॥ असंभवेति । चन्द्र इव रमणीयमित्यादौ रमणीयत्वादिबोधेऽपि तत्साधारणतायाः शाब्दबोधाविषयत्वात् । तस्याः पदार्थवाक्यार्थत्वाभावादित्यर्थः ॥ उक्तरीतिमन्यत्राप्यतिदिशति—एवं पिक इवेति । अत्र रुतत्वादिधर्मेणैव सादृश्यं चमत्कारजनकतया कविप्रसिद्धम्, 'गज इव' इत्यादौ तूपात्तगमनादिव्यतिरिक्तधर्मेणापि तथेत्यत्र विशेषः ॥ चक्रन्देति । रघुवंशे

---

[1] 'गजगमनसदृशः' क.

करुतसदृशरुतानुकूलव्यापारवान्' इत्यादिरेव बोधः । 'पिकप्रतियोगिक- सादृश्यवान् रौति' इत्यादिरेव बोधस्य स्वीकारात् । तदुत्तरं सादृश्यस्य ह- तनिमित्तकत्वज्ञानं मानसमेवेति सर्वनिर्वाहात् ॥ ननु—एतदनुपपन्नम्। तथाहि—यत्र 'गजसादृश्याभावव्याप्यवद्गमनम्' इत्याद्यपेक्षाबुद्ध्यात्मकः परामर्शः 'गज इव गच्छति' इति शाब्दबोधसामग्री च, तत्र 'शाब्दबोधो जायताम् ।' इतीच्छासत्त्वे इच्छाघटितत्वेन शाब्दसामग्र्या बलवत्वात् 'गजस- दृशो गच्छति' इति बोधः । तदुत्तरक्षणे 'गजगमनसदृशं न गमनम्' इ- त्यनुमितेरेवोत्पत्त्या 'गजगमनसदृशं गमनम्' इति मानसं न संभवति। एवं तद्रूपबाधज्ञानसत्त्वात्तदुत्तरक्षणेऽपि न तादृशमानससंभवः । तथा च

---

सीतां वाल्मीकितपोवने परित्यज्य लक्ष्मणे गते इयमुक्तिः ॥ एवं सादृश्यस्य गमनप्रयो- ज्यत्वज्ञानं न निर्वहेत् । प्रतीयते च तदवश्यम् । अतो गमनसादृश्यं शाब्दबोधविषय एवेति स्वीकार्यम्, तच्च न, सादृश्यस्य धात्वर्थान्वयं विनेत्यर्थात् तथा सेत्स्यतीत्यभिप्राये- णानाशङ्कते—नन्वेतदिति । गजसादृश्येत्यत्र गजपदं गमनपरम् । तथा च गजगमन- सादृश्याभावव्याप्यवद्गमनमिति परामर्शाकारः । 'गजगमन'इत्यादिपाठे तु स्पष्टोऽर्थः । अत्र चोक्तपरामर्शः शाब्दसामग्री चेत्येकः क्षणः, तदुत्तरं शाब्दं जायतामितीच्छाधिकरणं द्वितीयः, शाब्दबोधोत्पत्त्यधिकरणं तृतीयः । तथा च—ज्ञानस्य क्षणद्वयावस्थायि- तया शाब्दोत्पत्तिक्षणे परामर्शनाशात्तदुत्तरं गजगमनसादृश्याभाववद्गमनमित्यनुमितिर्न स्यात् तत्पूर्वक्षणे परामर्शरूपकारणाभावात् । अत उक्तं अपेक्षाबुध्यात्मक इति परा- मर्शविशेषणं तथा चापेक्षात्मकज्ञानस्य क्षणत्रयावस्थायितया शाब्दबोधोत्पत्तिक्षणे विनष्ट- दवस्थः परामर्शोऽस्त्येवेति तदुत्तरं उक्तानुमित्युपपत्तिः अनुमितिक्षणे परामर्शाभावेऽपि तदव्यवहितपूर्वक्षणे तत्सत्वादिति भावः । ननु भिन्नविषये अनुमितिसामग्र्या ज्ञानमात्र- सामग्रीतो बलवत्वात्कथं तत्र 'गज इव गच्छति' इति शाब्दबोधो भविष्यतीत्यत आह— शाब्दं जायतामिति । इच्छाघटितसामग्र्या बलवत्वकल्पनात्स्वभावतः शाब्दसा- मग्र्या दुर्बलत्वेऽपि इच्छाघटितत्वेन तस्या बलवत्वमिति इच्छावच्छाब्दबोध उपपद्यत इति भावः । बोध इति । 'गजसदृशो गमनानुकूलकृतिमान्' इति त्वदभिमतः सादृश्यप्रका- रककर्तृविशेष्यक इत्यर्थः । मानसं नेति । मानससामग्र्याः सर्वतो दुर्बलत्वकल्पना- दित्यर्थः । ननु तादृशानुमित्यनन्तरं शाब्दबोधात्तृतीयक्षण एव 'गजगमनसदृशं गम- नम्' इति मानसं भविष्यतीत्यत आह—एवं तद्रूपेति । गजगमनसादृश्याभाववद्गम- नमित्यनुमितिरूपेत्यर्थः । तथा चानुमितिजननक्षणे विरोधिसामग्रीविषयानुमितिसा-

सादृश्ये गमनप्रयोज्यत्वज्ञानं सर्वानुभवसिद्धं न निर्वहेत् । मम तु गमने गजगमनसादृश्यस्य शाब्दबोधविषयतया शाब्दबोधकाल एव तद्बोधावश्यकत्वान्तान्नानुपपत्तिरिति चेत् । उच्यते—तत्रापि शाब्दबोधाच्चतुर्थक्षण एव सादृश्ये गमनप्रयोज्यत्वज्ञानाभ्युपगमे क्षतिविरहात् । किंच 'गज इव गच्छति' इत्येतद्वाक्यजन्यशाब्दबोधात् 'पुरुषो गजसदृशो न वा' इति संशयनिवृत्तिरनुभवसिद्धा, 'गजसदृशो न' इति ज्ञाने सत्येतच्छाब्दबोधानुदयश्च । एतच्छाब्दबोधे सति 'गजसदृशो न' इति बुद्ध्यनुत्पत्तिश्चेति निर्विवादम् । त्वन्मते च गमने गजगमनसादृश्यबोधेऽपि पुरुषे गजसादृश्यस्यैतदविषयत्वात्सर्वमिदं दुर्घटम् । मम तु पुरुषे गजसादृश्यस्यैतद्विषयतया नानुपपत्तिः । न च—धर्मसादृश्येन धर्मिसादृश्यसिद्ध्या क्षणविलम्बकल्पनाददोषः—इति वाच्यम् । 'गजसदृशो न' इति बाधज्ञानसत्त्वे एतज्जन्यशाब्दबोधापत्तेस्तथाप्यवारणात् । न च—त्वन्मतेऽपि 'गमनं न गजगमन-

---

ध्या प्रतिबन्धान्न तथाविधमानसं भवितुमर्हति, तदुत्तरक्षणेऽप्यनुमित्यैव[1] विरोधज्ञानविधया प्रतिबन्धान्न तत्संभव इति भावः । ननु तादृशस्थले गमने गजगमनसादृश्यं मा प्रतीयतामित्यत आह—**सर्वानुभावेति** । 'गज इव गच्छति' इत्येतद्वाक्यार्थबोधानन्तरं गमने गजगमनसादृश्यग्रहनियमादित्यर्थः ॥ **मम त्विति** । तत्र 'शाब्दं जायताम्' इतीच्छावशाद् 'गज इव गच्छति' इत्येतद्वाक्यात् शाब्दबोध उत्पद्यमाने तस्य गजगमनसदृशगमनानुकूलकृतिमानित्याकारकत्वस्य मया स्वीकारात्, गमने गजगमनसादृश्यग्रहसिद्धेः, त्वया तु शाब्दबोधस्य 'गजसदृशो गमनानुकूलकृतिमान्' इत्याकारकत्वस्याभ्युपगमादिच्छाबलाच्छाब्दे जातेऽपि गमने गजगमनसादृश्यस्य तदविषयत्वान्न तत्प्रतीतिनिर्वाह इति भावः । समाधिसौकर्यादाह—**उच्यत इति** । बहुक्षणविलम्बकल्पनप्रयुक्तापरितोषादाह—**किंचेति** । **दुर्घटमिति** । गमने गजगमनसादृश्यग्रहेऽपि पुरुषे शाब्दबोधस्य गजसादृश्यविषयकत्वविरहात् गजसादृश्याभावप्रकारकसंशयं प्रत्यविरोधित्वात्, 'गजसदृशो न पुरुषः' इति बाधज्ञानप्रतिबध्यत्वानुपपत्तेः, तादृशज्ञानं प्रति प्रतिबन्धकत्वस्याप्यसंभवात्, ग्राह्याभावानवगाहनात् । **अदोष इति** । संशयनिवृत्त्यनुपपत्त्यापि रूपदोषाभाव इत्यर्थः । शाब्दबोधोत्तरभाविना पुरुषविशेष्यकगजसादृश्यप्रकारज्ञानेन तन्निवृत्त्यादिनिर्वाहात् । **तथापीति** । 'गजसदृशो न पुरुषः' इति ज्ञानस्य 'गजगमनरसदृशगमानानुकूलकृतिमान्' इत्येतादृशबोधाविरोधित्वात्, विषयभेदात् । एवं च संशयनिवृत्त्यादिरूपकार्यस्य शाब्दोत्तरज्ञानेन क्षणविलम्बं

---

१. 'विरोधिसामग्रीविधयानुमितिसामग्र्या प्रति' ख.

सदृशम्' इति ज्ञाने सत्यपि उक्तशाब्दबोधापत्तिस्तुल्या—इति वाच्यम्। मम शाब्दबोधात्पूर्वं गजसदृश इति योग्यताज्ञानसत्ताया आवश्यकत्वात्, त्सत्त्वे च तद्गमनसादृश्यबोधस्यापि सामग्रीसत्त्वेनावश्यकतया 'गजगमनसदृशम्' इति बोधस्य पूर्वमनियमात् तद्बोधेऽपि बाधकाभावात्। 'न गजगमनसदृशम्' इति ज्ञाने सति च गजसादृश्यज्ञानरूपयोग्यताज्ञानाभावादेव तदनुत्पत्तेः। न च—ममापि 'गजगमनसदृशम्' इति योग्यताज्ञाने

---

कल्पयित्वा कथंचित्परिहारसंभवेऽपि 'गजसदृशो न' इति ज्ञानसत्त्वे 'गज इव गच्छति' इत्येतद्वाक्यजन्यशाब्दबोधानुत्पत्त्यनुभवो न समाधातुं शक्यः। न च—अत्रापि तादृश ज्ञानोत्तरम् 'एतद्गमनं न गजगमनसदृशम्' इति ज्ञानेनैवोक्तशाब्दबोधप्रतिबन्धः संभवति इति वाच्यम्। गजसदृशो नेति ज्ञानोत्तरमेव तदापत्तेरनिवारणात्। न च तादृशबाधधी सत्त्वे 'गज इव गच्छति' इत्येतद्वाक्यार्थबोधप्रतिबन्धोऽसिद्ध एवेति वाच्यम्। अनुभवापलापे उपेक्षणीयतापत्तेः। वक्ष्यमाणरीत्या मया त्वदभिमतबाधधीकालेऽपि शाब्दानुत्पत्त्यनुभवस्य रक्षणात्। तदर्थमेव तां शङ्कामवतारयति—**न चेति**। पुरुषगमन विशेष्यकगजसादृश्याभावप्रकारकज्ञानस्य पुरुषविशेष्यकगजसादृश्यप्रकारकत्वदभिमत बोधे प्रतिकूलत्वाभावाद्विषयभेदसाम्यादित्यर्थः। **सामग्रीति**। गजसदृश इति ज्ञानस्य एतद्गमनं गजगमनसदृशमिति ज्ञानमात्रेणासंभवात्। धर्मिसादृश्यं विना धर्मिसादृश्यानुपपत्तेरित्यर्थः। एतच्च नहीत्यादिना स्फुटं पुरस्तात्। न च धर्मान्तरप्रयुक्तसाम्य विवक्षायां गमनसादृश्यज्ञानं विनापि धर्मान्तरसादृश्येन गजसदृश इति ज्ञानं संभवत्येवेति वाच्यम्। तदा त्वदुक्तबाधधीसत्त्वेऽपि 'गजसदृशो गच्छति' इत्येतद्वाक्यार्थबोधे इष्टापत्तेः। यदा तु पूर्वं 'गमनं न गजगमनसदृशम्' इति बाधबुद्धिरस्ति, तदा 'गजसदृशः' इति योग्यज्ञानानुत्पत्त्या तदभावप्रयुक्त एव 'गज इव गच्छति' इत्येतद्वाक्यार्थबोधाभावो न तु बाधबुद्धिप्रतिबन्धकताप्रयुक्त इति न दोषः। एवं च सिद्धान्तिमन्मते त्वदुक्तबाधज्ञानस्य जनकज्ञानविघटकतया 'न गजसदृशम्' इति ज्ञानस्य च ग्राह्याभावावगाहितया 'गज इव गच्छति' इत्येतद्वाक्यार्थबोधे प्रतिबन्धकत्वमुपपन्नम् इति, बाधद्वयकालेऽप्युक्तशाब्दबोधानुत्पत्त्यनुभवसमर्थनम्। त्वन्मते तु शाब्दबोधस्य 'गजगमनसदृशगमनेत्यादिरूपतया तत्र 'गजगमनसदृशं न गमनम्' इति बाधज्ञानस्य प्रतिबन्धकत्वसंभवेऽपि 'गजसदृशो न' इत्यस्मदुक्तबाधज्ञानस्य प्रतिबन्धकत्वासंभवादन्तरानुभवविरोधः' इति फलितार्थः। अत एव यथा त्वन्मते धर्मिसादृश्यानुपपत्त्या धर्मसादृश्यानुपपत्त्या धर्मिसादृश्यभाननियम इति उभयानुभवरक्षार्थतया[1]' शङ्कते—**न चेति**। एवं च गजगमनसदृशगमनेत्यादिशाब्दबोधात्। पूर्वं गजगमनसदृशं गमनमिति योग्य

---

1. 'रक्षार्थमा' क.

गजसादृश्यज्ञानस्यापि सत्त्वेनोक्तरीत्यैव नानुपपत्तिः—इति वाच्यम्। धर्मसादृश्ये धर्मिसादृश्यनियमाभावात्। न हि धर्मिसादृश्यं विना धर्मसादृमनुपपन्नम्, अपि तु धर्मसादृश्यं विना धर्मिसादृश्यमेव, उपपादकस्योपपाद्यं विनानुपपत्त्यभावात्। अन्यथोपपाद्योपपादकाभावव्याघातापत्तेः। तथा च गजसादृश्ये तद्गमनसादृश्यं विनानुपपन्नमिति तस्य तदाक्षेपकत्वमुचितम्, न तु गमनसादृश्यस्य गजसादृश्याक्षेपकत्वम्। अतश्च गजगमनसादृश्यस्यैव मानसत्वकल्पनमुचितमिति॥ यदि तु गमनसादृश्याभिप्रायेणैव 'गज इव गच्छति' इत्यादि प्रयोग इति शपथः क्रियते, तर्हि प्रतियोगित्वातिरिक्तसंबन्धावच्छिन्नप्रकारतासंसर्गेण सादृश्याचयबोधं[1] प्रति

---

ताज्ञानस्यावश्यं सत्त्वात्, तत्सत्त्वे च 'पुरुषो गजसदृशः' इत्यस्यापि ज्ञानस्योक्तरीत्या सत्त्वात्पूर्वं 'पुरुषो न गजसदृशः' इति बाधधीसत्त्वे च धर्मिसादृश्याभावे धर्मसादृश्यस्याप्यभावेन 'गजगमनसदृशं गमनम्' इति ज्ञानासंभवात्त्वदभिमतबाधज्ञानस्य योग्यताज्ञानविघटकतया गजगमनसदृशं न गमनमित्यस्मदभिमतबाधज्ञानस्य च ग्राह्याभावावगाहनविधया 'गज इव गच्छति' इत्येतद्वाक्यार्थबोधं प्रति एकस्य जनकज्ञानविघटकतया, एकस्य च विरोधिविषयकतयेति बाधद्वयस्यापि प्रतिबन्धकत्वसंभवादुभयानुभवसमर्थनं सुघटमिति भावः। एतद्विशदयति—**धर्मेति। नियमाभावादिति।** मृगनायिकयोः साम्याभावेऽपि तन्नेत्रसाम्याङ्गीकारात्। ननु धर्मसादृश्यं विना धर्मिसादृश्यवत् धर्मिसादृश्यं विना धर्मसादृश्यमप्यनुपपन्नमेवेत्याशङ्कामपाकर्तुमाह—**न हीति। व्याघातेति।** उपपत्तिव्यतिरेकप्रयोजकव्यतिरेकप्रतियोगी ह्युपपादकः, तद्व्यतिरेकप्रयोज्यव्यतिरेकप्रतियोगी चोपपाद्यः, तदुक्तं न्यायकुसुमाञ्जलावाचार्यचरणैः—'अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः।' इति परस्परस्य परस्परोपपाद्यत्वे चैतदनुपपन्नम्। नहि पीनत्वेन रात्रिभोजनमिव रात्रिभोजनेन पीनत्वमपि कल्पत इति भावः। ततश्च 'गजसदृशो न' इति ज्ञानस्य जनकज्ञानविघटकत्वविधया गमनसदृशगमनेत्यादिबोधं प्रति प्रतिबन्धकत्वं न संभवतीति त्वन्मतेऽन्यतरानुभवविरोधः। मद्यानुभवद्वयस्यैवोक्तविधया समर्थितत्वादिति फलितार्थः॥ एवं 'गज इव गच्छति' इत्येतद्वाक्याद्गजसादृश्यगजगमनसादृश्योभयप्रतीत्युपपादनानुरोधादपि सादृश्यस्य कर्तर्येवान्वयो युक्त इत्याह—**अत इति।** 'गजसदृशो गच्छति' इति शाब्दबोधाभ्युपगमे गजसादृश्यशब्दे गजगमनसादृश्यस्य च तदाक्षेपेणोपपत्त्या

---

१. 'बोधत्वावच्छिन्नं' ख.

---

१. 'दूषयति' क.

तदनुयोग्युपस्थापकमदजन्योपस्थितित्वेन हेतुत्वमिति कार्यकारणभावे ए शब्दमात्रं बोध्यम् । अतो धातोरपि संग्रहः । एवं च गमनस्य सादृश्य श्रयतया धात्वर्थेऽपि तत्र सादृश्यान्वयः । तथापि 'अरविन्दमिव भा इत्यादौ ज्ञाने सादृश्यान्वयोऽनुचित एवेति दिक् ।

---

प्रतीतिद्वयसमर्थनम् । त्वन्मते तु गजगमनेत्यादिशाब्दस्वीकारात् गजसादृश्यप्रती समर्थनं न संभवतीति भावः ॥ ननु माभूदाक्षेपेण गजसादृश्यसिद्धिः, मानसादेव त हसंभवात्। सत्यम्, तथापि नियता प्रतीतिर्न स्यादित्यत्र तात्पर्यम् ॥ **शब्दमात्रमिति** तथा च, पूर्वं पदेति नामैवानुमतमित्यर्थः ॥ **अनुचित एवेति** । उक्तस्थले ज्ञा स्योपमेयत्वाभावादिति भावः । इदं चाभ्युपेत्योक्तम् । वस्तुतः पूर्वोक्तकार्यका णभावानुरोधेन सादृश्यस्य धात्वर्थान्वयोऽनुचित एवेति तात्पर्यम् ॥ ननु गज दस्य गजगमनलक्षणया 'गजगमनसदृशगमनानुकूलकृतिमान्' इति बोधवादिनाम नामेदं दूषणम् । गजसादृश्यप्रयोजकगमनेत्यादिबोधवादिनां सादृश्यप्रयोजकत्वसंबन्धे गमनान्वयमूरीकुर्वतां **रसगङ्गाधर**कृतां किं दूषणमभिहितं तेषां गजसादृश्यबोध निर्वाहादिति चेत् । उच्यते—एकं तावदुक्तमेव धात्वर्थे सादृश्यस्यान्वयानुपपत्तिरूप परं च गजसादृश्यगजगमनान्यतरशाब्दबोधस्यानुपपत्तिरूपं तत् । तन्मते गजसादृ प्रयोजकत्वस्यैव शाब्दबोधविषयत्वात् । अन्यदपि पूर्वोक्तसंशयनिवृत्त्यनुपपत्त्यादि मत्राप्यवधेयम् । नह्युक्तवाक्यार्थबोधाद् 'गजसदृशो न वा' इति संशयनिवृत्तिः संभव गजसादृश्यस्य त्वद्रीत्या पुरुषविशेषणत्वानवमात् । 'गजसदृशेन' इति बाधज्ञान एतद्वाक्यार्थबोधप्रतिबन्धकत्वं च न स्यात् । एतद्ग्राह्याविरोधिविषयकत्वविरहात्, ए उक्तशाब्दबोधात् गजसदृशो नेति बुद्धिं प्रति बाधोऽपि न स्यात् इति स्पष्टमेव ॥ 'मृगो न भीमः कुचरो गिरिष्ठाः परावत आजगन्थापरस्याः । सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून् ताळि विमृधो नुदस्व ॥' इति वाजसनेयके मन्त्रः पठ्यते । अत्र सिंहे इन्द्र उपमीयते, नशब्दस्य वेदे उपपदवदुपसर्गार्थकत्वात् 'नेति प्रतिषेधार्थीयो भा यामुभयमन्वध्यायम्' इति **निरुक्तकृ**ताभिधानात् । अन्वध्यायं वेदे तु उभयं निषे र्थकत्वं सादृश्यार्थकत्वं चेत्यर्थः । कुचरः पृथिवीसंचरणात् । यद्वा क्वायं न चरती कुचरः देवतायाः प्रभावातिशयेन सर्वत्र मानत्वात् । सिंहस्यापि स्ववीर्याहंकारेण त त्वात् । गिरौ पर्वते तिष्ठतीति गिरिष्ठः । परावत इति दूरनाम छान्दसम् । आजग आगच्छसि । सृकं प्रसरणशीलम् । तिग्मं तीक्ष्णम् । पविं वज्रम् । संशाय सम्यक् नि तीकृत्य शत्रून् विताळि मारय । वीत्युपसर्गस्य ताळीति क्रिययान्वयः । 'व्यवहित इति छान्दससूत्रेण तथाभ्युनुज्ञानात् । एवं मृगो विलक्षणोऽपि । अत्र तावदि केभगवता महर्षिणा यास्केन वेदभाष्यकारादिभिश्चाभियुक्तैर्भीमादिविशेषणानां

स्पष्टार्थं कीदृशस्य पदस्य योगे श्रौती कीदृशस्य चार्थीत्याह—

**स्यादिव[1]यथादियोगे वताविवपदार्थे च सा श्रौती ॥ ९ ॥**
**तुल्यादिकपदयोगे वतौ तदर्थेऽपि चार्थी सा ।**

इवशब्दस्य यथाशब्दस्य आदिशब्दाद्वाशब्दादीनाम् । 'तत्र तस्येव' इत्यनेन षष्ठीसमर्थात्सप्तमीसमर्थाच्च इवार्थे विहितस्य वतिप्रत्ययस्य चोपादाने श्रौती । तुल्यसदृशादिपदयोगे[2] तुल्यार्थविहितवति[3]योगे चार्थीत्यर्थः ॥

उपमानार्थकाः प्रोक्ता दण्डिना काव्यादर्शे—

'इववद्वा यथाशब्दो समाननिभसंनिभाः ।
तुल्यसंकाशनीकाशप्रकाशप्रतिरूपकाः ॥
प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिनः ।
सदृक्सदृशसंवादिसजातीयानुवादिनः ॥
प्रतिबिम्बप्रतिच्छन्दसरूपसमसप्रभाः ।
सलक्षणसदृक्षाभाः सपक्षोपमितोपमाः ॥
कल्पदेशीयदेश्यादि प्रख्यप्रतिनिधी अपि ।
सवर्णतुलितौ शब्दौ ये वान्यूनार्थवाचिनः ॥
समासश्च बहुव्रीहिः शशाङ्कवदनादिषु ।
स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति ॥
आक्रोशत्यवजानाति कदर्थयति निन्दति ।
विडम्बयति संरुन्धे हसतीर्ष्यत्यसूयति ॥

---

सिंहोभयान्वितोऽर्थो व्याख्यातः । अत्र भीमादिभिर्धर्मैः 'सिंहसदृशस्त्वमागच्छसि' इति बोधे सादृश्यस्य चेन्द्र एवान्वयोऽवगम्यते । त्वद्रीत्या तु सिंहसादृश्यप्रयोजकगमनेत्यादिबोधस्वीकारे कुचरादिपदानां सिंहान्वितार्थपरत्वोक्तिरनुपपन्ना स्यात् । अतस्तत्रोपमेय एव तदन्वयकल्पनस्यावश्यकतयान्यत्रापि तथैव युक्तम् । वैषम्ये बीजाभावात् । इत्यादिकं स्फोरयन्नाह—**दिगिति** ॥ इतीवाद्यर्थबोधप्रकरणम् ॥ **यथाशब्दस्येति** । 'स्यादिवयथादियोगे' इति कारिकापाठाभिप्रायेण 'इवपदादि' इति पाठे तु यथाशब्दोऽप्यादिपदसंग्राह्यः । वाशब्दादीनामित्यादिपदाद्वकारादिसंग्रहः । इवार्थवतेः स्वरू-

---

1. 'पदादि' क-ख. २-३. 'प्रयोगे' ख.

तस्य पुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति ।
तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति ॥
तत्पदव्यां पदं धत्ते तस्य कक्षां विगाहते ।
वन्धुश्चौरः सुहृद्वादी कल्पः प्रख्यः समप्रभः ॥
देशीयदेश्यहृद्यामसोदराद्या इवार्थकाः ।'

'व वा यथा तथैवैवम्' इत्यमरे वशब्दोऽपीवार्थः । 'शात्रवं व पपुर्यशः' इति कालिदासः । 'कादम्बखण्डितदलानि व पङ्कजानि' इति पूर्वप्रयोगः। अत्र निपातसंज्ञा इवादयः । वदिति इवार्थे तुल्यार्थे च वतिप्रत्ययः। कल्पदेशीयदेश्यास्तद्धितप्रत्ययाः । ते च यद्यपि 'ईषदसमाप्तौ' इत्यादिसूत्रे विहितास्तथापि तुल्यार्था एव । ईषदसमाप्तेरपि सादृश्ये पर्यवसानात्। तदुक्तं कैयटेन—'गुड इव ईषदर्थसमाप्ता द्राक्षा गुडकल्पाः, यद्यप्यत्रोपमानग्रहणं नोपात्तं तथापि सामर्थ्यादुपमानोपमेयभावः' इति ।

'वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक् ।
साधारणः समानश्च स्युरुत्तरपदे त्वमी ॥
निभसंकाशनीकाशप्रतीकाशोपमादयः ।'

इत्यमरः । तत्र प्रत्ययानामुपमानोत्तरमेव प्रयोगः । तस्यैव तत्प्रकृ-

---

पेणैवोपादानात् । **प्रत्यया इति** । स्वातन्त्र्येण सदृशादिशब्दवत् प्रयोगवारणार्थम्। तेषां सादृश्यार्थत्वाभावमाशङ्कते—**ते च यद्यपीति** । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति सूत्रेणेत्यर्थः । **सामर्थ्यादिति** । ईषदसमाप्तत्वेन किंचिद्वैलक्षण्यलाभः तेन चात्यन्तसाम्यस्य लाभ इति कैयटस्याशयः । सादृश्यार्थकत्वाभावशङ्कां मध्य एव समाधाय प्रत्ययत्वकथनप्रयोजनमाह—**तत्रेति** । **प्रत्ययानामिति** । वतिप्रत्ययकल्पवादिप्रत्ययानामित्यर्थः । यद्यपि वतिप्रत्ययोऽपि तद्धितसंज्ञ एव तथापि तस्याव्ययसंज्ञाया अपि सत्त्वात्कल्पादिभ्यो वहिष्कृत्य इवादीनां कल्पवादीनां च मध्ये प्रदानात् इवादिवदव्ययत्वं कल्पवादिवत्तद्धितत्वं चायास्यतीति लाघवार्थं पृथग्विधानम् । समासपदानां 'चन्द्रेण समम्' इति वाक्येन, 'चन्द्रसमम्' इति समासेन च, प्रयोगाभि-

त्वात् । निभादीनां तु नित्यसमासविषयत्वात् 'चन्द्रेण समं चन्द्रेण निभम्' इत्यादिरीत्या विग्रहः कार्यः । तदुक्तं क्षीरस्वामिना—'उत्तरपदे इत्युक्तेश्चन्द्रेण निभमिति न भवति' इति । वैरिवाचकाः सुहृद्वाचकाश्च सादृश्यार्था ज्ञेयाः । शशाङ्कवदनेत्यत्र 'सप्तम्युपमानपूर्वपदो बहुव्रीहिः' इति समासः । प्रतिबिम्बः स्पर्धत इत्यादयः सादृश्याक्षेपका ज्ञेयाः । तत्र वाक्ये श्रौती यथा—

'इतीदृशैर्नैषधसूनृतामृतैर्विदर्भजन्मा भृशमुल्ललास ।
ऋतोरधिश्रीः शिशिरानुजन्मनः पिकस्वरैर्दूरविकस्वरैर्यथा ॥'

अत्र वसन्तश्रीरुपमानम् । भैम्युपमेया । यथेत्युपमावाचि । उल्लसेति साधारणधर्मः । न चैषां कस्यापि समास इति वाक्यगा ॥

यत्तु प्राचीनैः वाक्यगायां यथाशब्द एवोदाहृतः । तन्न । इवेनापि समासस्य नित्यत्वाभावात् । अन्यथा 'उद्बाहुरिव वामनः' इत्याद्यनुपपत्तेः । 'जीमूतस्येव भवति प्रतीकम्' इत्यत्र शाखान्तरे समासेन, शाखान्तरे चासमासेन पदकारैः पाठाच्च तत्र निर्णीतत्वादिति बोध्यम् ।

---

दावपि तथा भ्रमो माभूदित्यभिप्रायेणाह—**निभादीनां त्विति** । **विग्रह इति** । 'अविग्रहोऽस्वपदविग्रहो वा नित्यसमासः' इति सिद्धान्तात् । अविग्रह इति तस्य विग्रहेण विवरणमेव न कार्यमित्यर्थः । अस्वपदेति । समासान्तर्गतस्वपदेन विग्रहो न कर्तव्यः, किंतु तदर्थकपदान्तरेणेत्यर्थः । तदाह—**चन्द्रेण निभमिति न भवतीति** । समासं विना केवलनिभपदस्यासाधुत्वेन प्रयोगानर्हत्वादित्यर्थः । 'अदभ्रमिति विभ्राळि' इत्यनुवाके सूर्यस्तुतिरिति तद्विषयकरत्यङ्गत्वादत्रोपमाया अलंकारकत्वम् । वीत्यस्य अदभ्रमित्यत्रान्वयः । 'छन्दसि परेऽपि व्यवहिताश्च' इति सूत्रात्केतवः प्रधानभूता अस्य सूर्यस्य रश्मयः किरणा जनेषु विशेषेण दृश्यन्ते ज्वलन्तोऽग्नय इवेत्यर्थः । अत्र भ्राजनम्, प्रकाशार्थतया सामान्यधर्मः । **प्राचीनैरिति** । 'इवेन सह नित्यसमासविधानात् तत्प्रयोगे उपमाया वाक्यगतत्वोदाहरणविरोधादिति तेषामाशयः । **अन्यथेति** । 'वामन इव' इत्येवमेव प्रयोगापत्तेः । **जीमूतस्येवेति** । 'जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समुदामुपस्थे । अनाविद्धया तन्वा जय त्वं सत्त्वा वर्मणो महिमा पिपर्तु ॥' इति मन्त्रः । वर्मी कवची समदां शत्रूणां उपस्थे संनिधाने यदा याति गच्छति तदा तस्य वर्मिणो जीमूतस्य मेघस्येव प्रतीकमङ्गं भवति । नीलमेघ इव



१. 'सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च' इति हि वार्तिकम्.

वाक्ये आर्थी यथा मम—

'जलदोदरादुदीता भामिनि सौदामिनीलेखा ।
नीलनिचोलादाविर्भूता कान्तिश्च ते समा रम्या ॥'

अत्र समप्रयोगादार्थी ।

समासे श्रौती यथा—

'आविर्भवन्ती प्रथमं प्रियायाः सोच्छ्वासमन्तःकरणं करोति ।
संतापदग्धस्य शिखण्डियूनो वृष्टेः पुरस्तादचिरप्रभेव ॥'

अत्र इयं हीति पूर्वशेषात्कामन्दकी उपमेया । अचिरप्रभेवेत्यत्र इवे[...] सह समासः ।

[1]आर्थी यथा मम—

'द्युतीनां संदोहैर्बहु विषदयन्ती दश दिशो
हरन्ती संतापानुपगतवती स्पर्शविषयम् ।
प्रयाता स्वच्छन्दं दृशमधि सुधादीधितिकला
समानेयं केषां न हरति मनस्ते तनुलता ॥'

अत्र समानपदप्रयोगात्तस्य समासान्तर्गतत्वाच्च ।

तद्धिते श्रौती यथा मम—

'सुकुमारत्वमरुणता दृशोर्वशीकारकारणत्वं च ।
भातीह मत्तकाशिनि पाणियुगे तामरसवत्ते ॥'

अत्र इवार्थे सप्तम्यर्थे वतिः ।

---

दृश्यते इत्यर्थः । अनाविद्धया वैरिप्रहरणैरक्षतया तन्वा देहेन त्वं जय शत्रून्, [...] प्रसिद्धो वर्मणः कवचस्य महिम्ना शस्त्रक्षतप्रतिबन्धकत्वरूपस्त्वां पिपर्तु पालयतु । परश[...] स्त्रेभ्य इत्यर्थः । **समासेनेति** । जीमूतस्य इवेति पदद्वयानवच्छेदेनेत्यर्थः । **असमा[...] सेनेति** । पृथक् पदद्वयपाठादित्यर्थः । समासस्य नित्यत्वे तु पृथक् पदद्वयपाठो [...] स्यात् । समासे पूर्वपदे पृथगवग्रहाकरणात् । अवान्तरपदसंज्ञानेकत्वे तदुत्तरका[...] प्रकृतिकामेव पदसंज्ञामादायावग्रहः क्रियते इति वैदिकसंप्रदायात् । एतदभिप्रायेणैव 'ग्रीष्मचण्डकरमण्डलभीष्मज्वालसंसरणतापितमूर्तेः । प्रावृषेण्य इव वारिधरो मे वेदनां हरतु वृष्णिवरेण्यः ॥' इति वाक्यगतपूर्णोपमायां रसगङ्गाधरेऽप्युदाहृतत्वादिति भावः ।

१. 'तत्रार्थी' ख.

षष्ठ्यर्थे तत्रैव यथा—

'प्रत्यग्रमेघवदियं केशकलापस्य ते छाया।
संतापितजननयना तिरयति संतापसंतानाम्॥'

मेघस्येवेति वतिः। वेदेऽपि यथा—

'प्रियमेधवदत्रिवज्जातवेदोविरूपवत्।
अङ्गिरस्वन्महीवृत्तप्रस्कण्वस्य श्रुधीवहम्॥'

प्रियमेधस्येवेति वतिः। एतेषामृषीणामाह्वानं यथा त्वया श्रुतं तथा प्रस्कण्वस्य मुनेः शृणु इत्यर्थः। आर्थी यथा—

'उन्नतिमानतिकठिनः समुदितनक्षत्रमालोऽयम्।
बाले पयोधरस्तव कनकाचलवद्दरीवर्ति॥'

इह तुल्यार्थे वतिः। तदेवं षड्विधा पूर्णा व्याख्याता॥

अत्रेदं शङ्क्यते। चित्रकाव्यमिह निरूप्यम्। तच्च व्यङ्ग्यरहितत्वे सति। यदुक्तम्—

'शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्।'

इति। अस्ति चोदाहृतेषु सर्वत्र व्यङ्ग्यमिति। अत्राहुः— रसादिरूपं व्यङ्ग्यं सर्वत्रास्तीति तस्यावर्जनीयसंनिधितया तदनादरेणैवोपमादय उ-

---

'यथैतेषामृषीणामेवं प्रस्कण्वस्य शृणुह्वानम्' इति निरुक्तमाश्रित्यार्थमाह—**प्रियमेधादीनामिति**। आदिपदेन अत्रिविरूपाङ्गिरःसंज्ञकानां मुनीनां ग्रहणम्। अङ्गिरस्वदित्यत्र अङ्गिरोवदिति वक्तव्ये। 'अयस्मयादीनि छन्दसि' इति भसंज्ञत्वाद्रुत्वाद्यभावः। जातवेद इत्यग्निसंबुद्धिः। प्रस्कण्वो नामक एव पुत्र ऋषिविशेषः। 'प्रस्कण्वहरिश्चन्द्रावृषी' इति निपातः। अत्राग्निविषयकप्रस्कण्वनिष्ठरत्याख्यभावोत्कर्षतया उपमाया अलंकारत्वम्। **नक्षत्रेति**। 'सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः' इत्यमरः। नक्षत्रमाला मुक्तावलीविशेषः। मेरुपक्षे समुदिता नक्षत्राणां तारकाणां माला पङ्क्तिर्यत्रेत्यर्थः॥ **यदुक्तमिति**। काव्यप्रकाशकृतेति शेषः। **रसादीति**। आदिपदेन भावरसाभासभावाभासभावोदयभावसंधिभावशबलत्वानां संग्रहः। **सर्वत्रेति**। तदभावे चमत्कारविरहेण काव्यत्वानुपपत्तेरित्यर्थः। **तदनादरेति**। रसादिरूपव्यङ्ग्यराहित्यं न विवक्षितम्, किंतु तदतिरिक्तव्यङ्ग्यराहित्यमेवेत्यर्थः। ननु रसाद्यतिरिक्त-

दाह्रियन्ते। व्यङ्ग्यबोधनान्न तत्र चमत्कारः, किं तु वाच्यवैचित्र्यादेवेति केचित्तु—तात्पर्यविषयव्यङ्ग्यराहित्यमेव चित्रत्वम्। तदुक्तम्—

'रसभावादिविषयविवक्षाविरहे सति।
अलंकारनिबन्धो यः स चित्रविषयो मतः॥'

इत्याहुः॥

अथ लुप्ता निरूप्यते—

**अन्यतमस्य चतुर्णां विरहे लुप्तां वदन्त्याप्ताः॥ १०॥**

चतुर्णामुपमानोपमेयवाचकधर्माणामन्यतमस्याप्रयोगे लुप्ता। सा त्रिधा संभवति। एकलोपे द्विलोपे त्रिलोपे चेत्यर्थः।

तत्र विशेषमाह—

**अन्यतमस्य च लोपे वाचकधर्मोपमानानाम्।**
**धर्माङ्गकयोरङ्गकसमयोः समधर्मयोः समान्येषाम्॥ ११॥**

अत्र पूर्वार्धे एकलुप्तायास्त्रयो भेदाः। वाचकलोपे धर्मलोपे उपमानलो[pe] चेत्यर्थः। उत्तरार्धे षष्ठ्यन्तत्रये लोपे इत्यस्यानुषङ्गः। सामान्यधर्मवाच[क]योः, वाचकोपमेययोः, धर्मोपमानयोश्च लोपाद्विलोपात्रिधेत्यर्थः। सम[ा]न्येषाम् उपमानभिन्नानां त्रयाणामुपमेयधर्मवाचकानां लोपे त्रिलोपा ए[क]विधेत्यर्थः। समान्येषामित्यत्र समपदं सादृश्यप्रतियोगिपरम्। प्रत्येकं तद्भेदानाह—

**धर्मलुप्श्रौत्यार्थी वृत्तौ वाक्ये च तद्धिते त्वार्थी।**

अस्यार्थः—वाक्ये समासे च श्रौत्यार्थीभेदेन चत्वारः, तद्धिते त्वा[र्थी] वेति धर्मलुप्तायाः पञ्च भेदाः। ननु तद्धिते धर्मलुप्ता श्रौती कुतो नो[क्ता]

---

मपि व्यङ्ग्यं तत्रास्त्येवेत्यत आह—**व्यङ्ग्येति**। तथा च रसाद्यतिरिक्तचमत्कार[ा]कव्यङ्ग्यराहित्यमेव चित्रत्वमिति भावः। एवमेतन्मते रसादीनां चित्रत्वप्रयोज[क]भावप्रतियोगिताबहिर्भाव उक्तः। संप्रति रसादीनामपि विशिष्टाभावं चित्रत्वे समानयन्ति, तन्मतमाह—**केचित्त्विति**। **तात्पर्येति**। तथा च तत्र रसादि[व्य]ङ्ग्यराहित्याभावेऽपि रसादिव्यङ्ग्यतात्पर्यविषयीभूतव्यङ्ग्यराहित्यमस्त्येवेति भावः। [त]दुक्तमिति। ध्वनिकृतेति शेषः॥ **षष्ठ्यर्थेति**। तत्प्रकारकबोधं प्रति नामजन्य

इति चेत्, न । 'तत्र तस्येव' इति सूत्रेण विहितस्य वतेः प्रयोगे हि श्रौती संभवति । न च धर्मलोपः संभवति । उपमेये उपमानसंबन्धबोधकस्य तस्य साधारणधर्मप्रयोगं विनानुपपत्तेः । न हि 'मथुरायामिव स्रुघ्ने' इति संभवति । सप्तम्यर्थाद्यनन्वयापत्तेः । किं तु मथुरावत्स्रुघ्ने इत्येव । तस्मात् षष्ठ्यर्थसंबन्धविशेषणस्य सप्तम्यर्थाधारत्वविशेषणस्य साधारणधर्मरूपस्य प्रयोगं विना इवार्थवतेरसंभवान्न तद्धिते श्रौती धर्मलुप्ता । ननु मा भूदिवार्थकवतियोगे धर्मलुप्ता श्रौती, तथापि इवार्थकतद्धितान्तरे सा दुर्वारा । तथा हि । 'इवे प्रतिकृतौ' इत्यधिकारे 'कुशाग्राच्छः' इति सूत्रेण कुशाग्रमिव कुशाग्रीया बुद्धिरित्यत्र छप्रत्ययविधानेन एतादृशस्थले तत्संभवादिति चेत् । अत्राहुः—'इवे प्रतिकृतौ' इत्यधिकारे विहिताः प्रत्ययास्तुल्यार्था एव । 'कुशाग्रतुल्या बुद्धिः' इत्यभेदान्वयदर्शनात् तस्य सादृश्यमात्रार्थत्वे तद्वत्परत्वाभावेनोपमेयसामानाधिकरण्यासंभवात् । न च—इवार्थे तद्विधानविरोधप्रसङ्गः—इति वाच्यम् । सादृश्ये विधानमपि सदृशे पर्यवस्यतीत्यभिप्रायेण सूत्रे इवार्थे तद्विधानेन तदविरोधादिति । अथ सादृश्यादिपदप्रयोगे श्रौत्यार्थी वा यथा ।

'परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु ।
मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु ॥'

इत्यादाविति चेत् । अत्र **दीक्षिताः** । श्रौत्येवेयम् । ष्यञ्प्रत्ययप्रकृति-

---

स्थितेर्हेतुत्वकल्पनात् । **सप्तम्यर्थेति** । यद्यपि नैयायिकमते वृत्तित्वमेव सप्तम्यर्थो न तु आधारत्वं 'भूतलवृत्तिर्घटः' इति बोधस्य तैरभ्युपगमात्, तथापि प्राचीनमताभिप्रायेणेदम् । अधिकरणत्वस्य सप्तम्यर्थस्य निरूपकत्वसंबन्धेन घटादावन्वयस्य तैरङ्गीकारात् । नव्यमते आधारत्वमित्येव व्याख्येयम् । उभयथापि सामान्यधर्मप्रयोगावश्यकत्वे तात्पर्यम् । **इवे प्रतिकृताविति** । तथा च तस्य इवार्थविहितत्वेन तादृशवतिप्रत्ययवत्प्रयोगे उपमा श्रौती स्यादित्यर्थः । **एतादृशेति** । 'शिला इव' शिलेयम् । 'दधिशिलाया' इति ढप्रत्ययः । ढमित्यर्थः । पुण्डरीकमिव पौण्डरीकं मुखं इत्यत्रापीत्यर्थः । तत्रापि कठिनत्वरम्यत्वादिधर्मप्रयोगविरहेण तद्धिते श्रौती धर्मलुप्ता स्यादित्यर्थः । **तद्वत्परत्वाभावेनेति** । निपातातिरिक्तनामार्थत्वेन भेदेनान्वयासंभवादित्यर्थः । **पर्यवस्यतीति** । धर्मार्थकशब्दस्य विवक्षते धर्मिपरत्वादित्यर्थः ॥ **इत्यादाविति** । इ-

भूतेन सदृशशब्देन सादृश्यवदभिधानेऽपि भावप्रत्ययस्य प्रकृत्यर्थतावच्छे दकशक्ततया तदुक्तसादृश्यस्यैव वाक्यार्थान्वयित्वादित्याहुः ।

न्यायपञ्चाननादयस्तु । यत्पदार्थविशेषणस्योपमानत्वनियमस्तत्रै श्रौती । इवादिविशेषणीभूतस्य चन्द्रादेरुपमानत्वनियमात् । सादृश्यादि पदविशेषणस्य च नोपमानत्वनियमः । चन्द्रसादृश्यमित्यादौ तथात्वेऽपि चन्द्रमुखयोः सादृश्यमित्यादौ व्यभिचारात्—इत्याहुः ॥ तस्माद्धर्मलुप्ता याः पञ्च भेदाः स्थिताः ।

अत्र दीक्षिताः—द्विर्भावेऽपि धर्मलुप्ता दृश्यते । यथा पटुपटुरिति 'प्रकारे गुणवचनस्य' इति सूत्रेण सादृश्ये द्विर्भावविधानात् पटुसदृश इत्यर्थः । वस्तुतोऽपटावयं प्रयोगः । न चेयं वाक्यगा । 'कर्मधारयवदुत्तरे' इति सूत्रेण तत्रैकपद्यविधानात् । नापि समासगा, वास्तवसमासत्वाभावा दिति ॥ तन्न । आतिदेशिकसमाससाधारण्येनैवात्रोपमाविभागकरणेनाति देशिककर्मधारयवद्भावेऽपि समासगायामेव तदन्तर्भावसत्त्वात् । अत एव पटुपटुरित्यादौ समासत्वप्रयुक्ताः पुंवद्भावान्तोदात्तत्वादयोऽपि सिध्यन्तीति

केचित्तु—वाचकधर्मलुप्तायामेतद्भेदस्याधिक्यम्, न तु केवलधर्मलुप्ता याम् । न च अत्र द्विर्भावस्य सादृश्यवाचकस्य सत्त्वान्न वाचकलोपः— इति वाच्यम् । सादृश्ये द्योत्ये द्विर्भवत इति दर्शनात् द्विर्भावस्य वाचक ताया भाष्यकैयटविरुद्धत्वादित्याहुः ॥ तन्न । द्योतकत्वेऽप्युभयलुप्तत्

---

वाद्यर्थेत्यर्थः । धर्मलुप्ताविभागस्य न्यूनत्वमाशङ्कते—यत्त्विति । प्रकार इति प्रकारे सादृश्ये विवक्षिते गुणवाचकशब्दस्य द्विर्भावो भवतीति सूत्रार्थः ॥ वाक्यगेति पदद्वयरूपत्वादिति भावः । ननु समासत्वेनैकपद्ये समासगतधर्मलुप्तायामेव तदन्तर्भा स्यादित्यत आह—नापीति ॥ पटुपटुरित्यादावपीति । पटुपटुः स्त्रीत्यादा त्यर्थः । एवं च यथा 'समासस्य' इत्यादिषु अन्तोदात्तत्वादिविधायकसूत्रेषु आतिदे कसमासोऽपि गृह्यते तद्वदत्रापि मुख्यसमासस्यैवग्रहणे बीजाभावादित्यर्थः ॥ चित्रमी मांसाकारमतं दूषयित्वा रसगङ्गाधरकारमतमाह—केचित्त्विति । भाष्ये

१. 'दर्शयित्वा' क.

संभवात् । अन्यथा इवादीनां द्योतकत्वपक्षे चन्द्र इवेत्यादावपि लुप्तोपमानत्वप्रसङ्गात् । पदान्तरेण तादृशार्थबोधे सहकारित्वरूपस्य द्योतकस्य सत्त्वे तद्वाचकत्वस्य पदान्तरे स्वीकारस्यावश्यकत्वाच्च । यदीयमेकलुप्ता, यदि वा द्विलुप्ता, उभयथापि समासमध्येऽन्तर्भावान्न दोषः—इति तत्त्वम् ।

तत्र वाक्ये श्रौती[1] धर्मलुप्ता । यथा मम—

'आलोक्य चन्द्रमसमिव वरवर्णिनि तावकं वदनम् ।
न भवन्ति मनसि केषां व्यापाराः पञ्चबाणीयाः ॥'

अत्र मुखचन्द्रयोरुपमायां साधारणधर्मस्याप्रयोग एव लोपः। न च—एतादृशस्थले साधारणधर्मस्येवशब्देनैवोपस्थितिरिति प्रागभिधानात्कथमेतत्—इति वाच्यम् । तत्र धर्मत्वेनैव धर्मोपस्थितेर्व्यवस्थापितत्वेनाह्लादकत्वादितत्तद्रूपेण धर्मानुपस्थितेरनुपपत्त्यभावात् । अत एव चन्द्र इव मुखमित्यस्मात् 'मुखमाह्लादकं न वा' इति संशयो न निवर्तेत इति बोध्यम्[2] । अत एव तत्तत्प्रकारेणैव धर्मोपस्थितिं वदन्तो ग्रन्थस्वरसानभिज्ञा इति बोध्यम् ।

आर्थी[3] यथा मम—

'प्रत्यूषकालरजनीकरमण्डलेन
तुल्येन सुन्दरि कपोलतलद्वयेन ।

---

**यदेति** । वाचकत्वे संमते हि द्योत्ये इति व्याख्यानं विरुध्येतेति भावः । **द्योतकत्वपक्ष इति** । वैयाकरणसंमत इति शेषः । 'स वाचको विशेषाणां संभवाद् द्योतकोऽपि वा' इति वाक्यपदीयोक्तेः । **सहकारित्वेति** । तात्पर्यग्राहकविधयेति शेषः । **तद्वाचकत्वस्येति** । तद्बोधकत्वस्येत्यर्थः । तथा च, तत्रैकपदस्य सादृश्ये लक्षणाद्विर्भावश्च द्योतक इत्यवश्यमाश्रयणीयमित्यर्थः ॥ अत्र दीक्षितैर्धर्मलुप्ताधिक्यमापादितम् । एतैस्तु द्विलुप्ताधिक्यमिति । काव्यप्रकाशकारोपरि द्वयोरप्ययमाक्षेपस्तुल्य एवेत्यभिसंधाय उभयथापि नाधिक्यमित्याह—**यदीति** । तथा च प्राचीनकृतविभागस्य नैतदनुक्त्या न्यूनत्वमिति भावः ॥ 'लब्धास्वादेन चिरं सुरवन्दीपरिग्रहे निशाचरपतिना। सीता राक्षसवसतिं दृष्टिविषग्रहं विषौषधीव उपनीता ॥' [इति छाया।] विषौषधीवेत्यत्र पक्षे इव पदेन सह समासः । सेतुकाव्ये विभीषणं प्रति श्रीरामवाक्यम् । एवं च यथा सर्पगृहे विषौषधीसंबन्धे तेषामनिष्टम्, तथा सीतानयनेन राक्षसानामपि भविष्यतीति भावः ॥

1. 'समासे' ख. २. बोध्यमित्यन्तः पाठो नोपलभ्यते ख-पुस्तके. ३. 'तत्रार्थी' ख.

उन्नम्रतां सुकृतसंततिमञ्जरीणां
त्वं व्यञ्जयस्यहह धन्यतरस्य कस्य ॥'

समासे श्रौती धर्मलुप्ता यथा—

'लद्धासाएण चिरं सुरवन्दिपरिग्गहे णिसाअरवइणा ।
सीआ रक्खसवसइं दिट्ठिविसघरं विसोसहिव्व उपणीआ ॥'

अत्र सीताविषौषध्योः साधर्म्यमनुपात्तमर्थगम्यम् ।

आर्थी यथा—

'अग्घाइ छिवइ चुम्बइ ठवेइ हिअअम्मि जणिअरोमञ्चो ।
जाआकवोलसरिसाइ पहिउ महुअउप्फाइं ॥'

अत्र जायाकपोलसदृशानीति समासः । सदृशपदप्रयोगादार्थी ।

तद्धिते आर्थी धर्मलुप्ता । यथा मम—

'मुखममृतद्युतिकल्पं कपोलदेशो मुकुरदेश्यः ।
तस्या दृशां विलासाः कुवलयदलदामदेशीयाः ॥'

'तेन तुल्यम्' इति विहितवतिप्रयोगे तु धर्मलुप्ता न संभवति । त
क्रियासाम्ये विधानेन क्रियारूपसाधारणधर्मप्रयोगं विनानुपपत्तेः ।

---

**साधर्म्यमिति** । स्वविरोध्यनिष्टहेतुत्वरूपमित्यर्थः । न चात्र राक्षसवसतिदृ विषगृहयोर्बिम्बप्रतिबिम्बभावोऽप्यस्तीति कथं धर्मलोप इति वाच्यम् । तस्य तत्साद ानुपपादकत्वात् ॥ 'आजिघ्रति स्पृशति चुम्बति स्थापयति हृदये जनितरोमा जायाकपोलसदृशानि पथिको मधूकपुष्पाणि ॥' [इति छाया ।] गाथाकोषे कस्यचि रहावस्थावर्णनम् । **क्रियासाम्य इति** ॥ 'तेन तुल्यं क्रिया चेद्वतिः' इति सू क्रियानिष्ठत्वेनैवोपमेयत्वस्य बोधनादिति भावः ॥ नन्वेवं सर्वग्रन्थेषु तुल्यार्थक योगे नामार्थस्य उपमेयत्वकथनमसंगतमयुक्तं च, वत्यर्थसादृश्यस्य क्रियायामेवान्व वाच्यत्वात् । तथा च वैयाकरणाः—'संबोधनान्तं कृत्वोर्थाः कारकं प्रथमो व धातुसंबन्धाधिकारनिष्पन्नमसमस्तनञ् ॥' तथा 'यस्य च भावेन षष्ठी चेत्युदितं द्व साधुत्वमष्टकस्यास्य क्रिययैवावधार्यताम् ॥' अस्यार्थः । संबोधनान्तस्य क्रियाया न्वयः । ब्रूहि देवदत्तेति । 'एकतिङ्वाक्यम्' इति कात्यायनोक्तेः । एवं च 'स नवाक्ये निघातयुष्मदस्मदादेशाः' इत्येकवाक्यविहितः 'तिङ्ङः तिङः' इति नि

१. 'विसहर' क. २. 'साधारणधर्मोऽर्थगम्यः' ख.

सिद्ध्यति । तदुक्तं हरिणा—'संबोधनपदं यच्च तत्क्रियाया विशेषणम् । व्रजानि दे-वदत्तेतिनिघातोऽत्र तथा सति ॥' इति । कृत्वोर्थानामपि क्रियायामेव संबन्धः । यथा सकृत्पचति, द्विः पचति, पञ्चकृत्वः पचतीत्यादि । 'संख्यायाः क्रियाभ्यां वृत्तिगणने कृत्वसुच्' इति वचनेन क्रियायोग एव तदनुशासतात् । एवं कारकस्यापि तस्यामेवा-न्वयः । करोतीति कारकमित्यन्वर्थसंज्ञाविज्ञानात् । 'तन्दुलं पचतीत्यादौ क्रियान्व-याभावे कारकत्वानुपपत्तेः । प्रथम इति—'तेन तुल्यम्' इत्यनेन विहितो वतिः प्र-त्ययः । तस्यापि क्रियायामेवान्वयः । 'यत्तुल्यं सा क्रिया चेत्' इत्यविधानात् । यथा देवदत्तवत्पठति इत्यादौ । चैत्रवत्सुन्दर इत्यादावप्यनुशासनानुरोधात्साधुत्वार्थमध्याहृ-तभवतीत्यादिक्रियायामेव तदन्वयः । 'धातुसंबन्धे प्रत्ययाः' इत्यधिकृत्य विदेहि-तानां तुमुनादीनामपि क्रियायामेव संबन्धः । यथा भोक्तुं पचतीति । पातुं जलमित्यादौ अध्याहृतानयनयादिपदबोध्यायामानयनादिक्रियायामेव तदन्वयः । असमस्तनञोऽपि 'न त्वं पचसि' इत्यादौ क्रियानिषेधस्यैव बोधात्तत्रैवान्वयः । 'घटो नास्ति' इत्यादावपि घटा-स्तित्वप्रतियोगिकाभावबोधाभ्युपगमात् । 'यस्य च भावेन भावलक्षणम्' इत्यनेन विहिता सप्तमी 'गोषु दुह्यमनासु गतः' इत्यादौ तस्या अपि भावेनेति क्रियार्थकभावपदानुरोधा-त्तत्रैवान्वयः ॥ एवं 'षष्ठी चानादरे' इति सूत्रेण विहिता षष्ठी । रुदतिरुदतो वा प्राव्राजीदित्यादौ तस्या अपि क्रियायामेवान्वयः । चकारेण यस्य च भावेनेति पूर्वसू-त्रानुकर्षणात् । आस्तामप्रकृतमन्यत् । वतिप्रत्ययस्य तु नामार्थान्वयः कथम् । अत एव 'महानसवत्' इति दृष्टान्तवाक्योपात्तवत्यर्थस्य पक्षीभूते पर्वतादावप्यन्वयोऽनुपपन्न एव । अत एव 'वह्निमान् भवितुमर्हति' इति क्रियापदयुक्तामेव प्रतिज्ञां सांप्रदायिकाः कुर्वन्ति । यदि त्वनुशासनमप्यवधूय वत्यर्थस्य नामार्थान्वयोऽभ्युपगम्यते तर्हि 'पुष्पेभ्यः' इत्युक्ते 'स्पृहयति' इत्यध्याहारोऽपि न स्यात् । न चेष्टापत्तिः, तत्र साधुत्वार्थं तदध्याहार आवश्यक इति त्वत्सिद्धान्तात् । एतदप्युक्तम् । यदि पक्षेऽपि वत्यर्थकारकं वानत्रादिषु । अन्वेति त्यज्यतां तर्हि चतुर्थी स्पृहि कल्पन इति वैयाकरणभूषणे । अत एव क्रिया-विशेषणत्वाद्वतिप्रत्ययस्यासत्ववाचकार्थाविधायकत्वेनैवाव्ययत्वसिद्धौ वतेरव्ययमध्ये पाठो न कर्तव्य इति भाष्यकैयटयोर्व्यवस्थापितमिति चेत् । सत्यम् । पर्यवसाने पुनस्त-द्वतोरेव सादृश्यं फलतीत्यभिप्रायेणोक्तग्रन्थानां तदविरोधः संपादनीयः । अत एव 'स्थानिवदादेशोऽनल्विधौ,' 'असिद्धवदत्रात्' इत्यादौ सादृश्यान्वयो नामार्थ एव पर्यव-सितमादायैव प्रतीयते ॥ वस्तुतस्तु 'तेन तुल्यम्' इति सूत्रे महाभाष्यकारैः क्रियेति प्रकृत्यर्थविशेषणं प्रत्ययार्थविशेषणं वेति पक्षद्वयं व्याख्यातम् । येन तुल्यं सा क्रिया चेदिति सादृश्यप्रतियोगिनः क्रियात्वविवक्षायां आद्यस्य सादृश्यानुयोगिनः क्रियात्ववि-वक्षायां द्वितीयस्य, पक्षस्य समुल्लासात् । तत्राद्यपक्षे प्रत्ययार्थस्य सादृश्यानुयोगिनः क्रियात्वेन विशेषणं नास्तीति तृतीयासमर्थात् । क्रियावाचिनो गुणतुल्ये प्रत्ययः स्यात् । यथा 'पुत्रेण तुल्यः स्थूलः' इत्यादौ । द्वितीयपक्षेऽनुसारस्य(?) प्रतियोगिनः क्रियात्वविशे-

अथोपमानलुप्तामाह—

**वाक्यसमासोभयगोपमानलुप्ता**[१]

इति। वाक्ये समासे चोपमानलुप्तेत्यर्थः। न तु तद्धितेऽपि वत्यादे स्तद्धितस्योपमानवाचकपदोत्तरमेव विधानेनोपमानानुपादाने तदसंभवात्। नापि श्रौतीयम्। इवादिपदानामुपमानानन्तर्यनियमेनोपमानपदं विना न्वयाबोधकत्वात्। अत आर्थी द्विविधैवेयम्।

तत्र वाक्ये यथा—

'सअलकरणपरवीसामसिरिविरअणं सरसकव्वस्स।
दीसइ अहव ण सुव्वइ सरिसं अंसंसमेत्तेण॥'

---

षणं नास्तीति तृतीयासमर्थात् क्रियावाचिनोऽपि क्रियातुल्ये प्रत्ययः स्यादित्याशङ्क्य तुल्यपदमहिम्ना प्रकृत्यर्थप्रत्ययार्थयोर्द्वयोरपि विशेषणसिद्धेः। तथा हि—यदा तावत् ययया प्रकृत्यर्थो विशेष्यते तदा प्रत्ययार्थस्य क्रियात्वलाभः सामर्थ्यात्। यदा तु क्रिय प्रत्ययार्थो विशेष्यते तदा प्रकृत्यर्थस्य क्रियात्वलाभः सामर्थ्यादिति क्रियायाः क्रिया दृश्यानुपपत्तेरिति। तत्र प्रत्ययार्थविशेषणपक्षे क्रियायाः साध्य(स्वभाव)त्वेन तत् विधीयमानो वतिरसत्वभूतार्थाभिधायकत्वेन लिङ्गसंख्यानन्वयात्स्वयमेव "यन्नव्ये तदव्यय"मिति लिङ्गसंख्यानन्वयित्वमव्ययत्वमिति लक्षणयोगादव्ययत्वं प्रतिपद्यत इ तदर्थं तद्गणपाठो न कर्तव्यः। वतिना च क्रियासामान्यस्यैवाविधानात्पचतीत्यादि यावशेषप्रयोगः। प्रकृत्यर्थविशेषणपक्षे तु क्रियाग्रहणेन क्रियावत उपलक्षणे क्रियाद्वारकं क्रियावतः सादृश्यमाश्रयणीयम्, तच्च क्रियावान्प्रत्ययार्थः। ततो लिङ्गसंख्यावदर्थाभिधायकत्वादव्ययत्वं वतेर्न प्राप्नोति तदर्थो वतेः पाठोऽव्ययमध्ये कर्तव्यः। पाठसा र्थ्याच्च सत्त्ववाचित्वेऽप्यव्ययसंज्ञेति स्पष्टं कैयटे॥ ततो द्वितीयपक्षाभिप्रायेण त नामार्थान्वयोक्तिरित्यलमिति बहुना। एवं बहुच्प्रत्यययोगेऽप्यार्थी धर्मलुप्तोदाह कल्पवादितुल्यार्थकत्वात्। यथा—'इन्दुमुखाद्बहुतृप्यं तव यद्गृणन्ति नैनं मृगरूपजा तन्मृगतृष्णयैव। अत्येति मोहमहिमानहिमांशुबिम्बलक्ष्मीविडम्बिमुखवृत्तिषु पाशवीषु। तृणेन सदृशं बहुतृणम्। 'विभाषा सुपो बहुच्पुरस्तात्तु इति सादृश्यार्थकबहुच्पूर्वप्रयो तदसंभवादिति। 'न केवलाप्रकृतिः प्रयोक्तव्या न केवलः प्रत्ययः' इति प्रकृति निर्मुक्तप्रत्ययमात्रस्य प्रयोगानर्हत्वादिति भावः। काव्यप्रकाशकारोक्तविचारसौ स्याय तदुदाहरणमेवोपन्यस्यति—**सजलेति**। 'सकलकरणपरविश्रामश्रीविरचनं स

---

१. 'लोपे' [illegible]तावल्याम्, अत्र ख-पुस्तके च पाठः.

अत्रैव 'कबस्स' इत्यत्र 'कक्समम्' इति, 'सरिसं' इत्यत्र 'च णूणम्' इति पाठे च समासगेति काव्यप्रकाशकृत् ।

नन्वियं कथमुपमानलुप्ता । चन्द्रस्य सदृशमित्यत्र चन्द्रस्यैवोपमानताप्रतीतेः । काव्यस्य सदृशमित्यत्रापि काव्यमेवोपमानमिति चेत् ।

अत्राहुः—काव्यस्य सदृशमित्यस्य काव्यप्रतियोगिकसादृश्यानुयोगीति नार्थः किं तु काव्यनिष्ठसादृश्यप्रतियोगीत्येव । काव्यस्य प्रकृततया तदुत्कर्षायोपमेयत्वस्य विवक्षितत्वात् ।

अथैवं तद्वृत्तिसादृश्यप्रतियोगिनोऽसत्त्वेऽनन्वयः स्यात् । किं च भेदगर्भसादृश्यस्याप्रसिद्धतया कथं निषेधः । न चात्र भेदगर्भे सादृश्यं स्वस्मिन्नेव प्रसिद्धमिति वाच्यम् । उपमोदाहरणविरोधादिति चेत् । न । दर्शनश्रवणाविषयतयोत्कृष्टगुणस्योपमानत्वविवक्षणात् । दर्शनश्रवणविषयस्यैवोपमानत्वनिषेधात् । अतोऽत्रानुपादानमात्रमुपमानस्य विवक्षितं न तु वस्तुतोऽप्यसत्त्वम् । अनन्वये त्वसत्त्वमेवाभिमतमिति ।

अन्ये तु—सदृशपदमत्रोपमाने लाक्षणिकम् । न चैवं तदुपादानं नास्तीति वाच्यम् । यादृशपदेनोपमानोपादाने तदुत्तरवर्तिना इवादिपदेनोपमानत्वं बोध्यते तादृशपदेनानुपादाने इत्यर्थात् । न च सदृशादिप-

---

सकाव्यस्य । दृश्यते अथवा न श्रूयते सदृशं अंशांशमात्रेण ॥' [इति च्छाया ।] लाघवादाह—**अत्रैवेति** । वक्ष्यमाणापरितोषादाह—**काव्यप्रकाशकृदिति** । जयरामभट्टाचार्यव्याख्यानेन समाधिमाह—**अत्राहुरिति** । **कथमिति** । अप्रसिद्धप्रतियोगिकनिषेधस्य निरूपणाभावादित्यर्थः । **विरोधादिति** । 'सादृश्यमुपमाभेदे' इति भेदगर्भसादृश्यस्यैव उपमात्वादित्यर्थः ॥ महेश्वररीत्या समाधिमाह—**अन्ये त्विति** । **लाक्षणिकमिति** । सादृश्याश्रयस्यैव तद्वाच्यतया सादृश्यप्रतियोगिनि लक्षणेत्यर्थः । **यादृशेति** । उपमानतावच्छेदकरूपावच्छिन्नोपमानबोधकेत्यर्थः । **न च सदृशेति** । नहि चन्द्र इवेत्यस्मात् यथा साम्यप्रतीतिस्तथा सदृश इवेत्यस्मात्, विशिष्य उपमानतावच्छेदकानुपस्थितेरित्यर्थः । तथा चोपमानत्वातिरिक्तप्रकारेण तदुपस्थापकपदप्रयोग

---

१. 'मानस्य' ख.

देनोपमानोपादाने तदुत्तरमिवादेः संभवः। न चात्रोक्तरीत्या सदृशपदस्ये
पमानपरत्वे सादृश्यबोधकपदाभावेन द्विलुप्तत्वं स्यादिति वाच्यम्। सा
दृश्यप्रतियोगित्वस्योपमानपदार्थतया सदृशपदस्यैव सादृश्यार्थकत्वात्
न च सादृश्यप्रतियोगितारूपस्योपमानत्वस्य सदृशपदार्थत्वे श्रौतत्वं स्या
दिति वाच्यम्। उपमानविशेष्यभूताया एव प्रतियोगिताया उपमात्वात्
प्रकृते च पदार्थतावच्छेदकतया तस्या उपमाने विशेषणत्वात्। सदृशपद
स्योपमालाक्षणिकत्वेन श्रौतत्वाभावाच्चेति व्याचख्युः।

काव्यप्रदीपकारस्तु[1] चिन्त्यमेवैतदित्याह। तस्यायमाशयः। प्रकृतत
काव्यस्यैवोपमेयत्वमुत्कर्षायेत्यसंगतम्। स्वनिष्ठसादृश्यप्रतियोगिनिषेधस्य
स्वप्रतियोगिसादृश्यानुयोगिनिषेधस्याप्युत्कर्षपर्यवसायित्वात्।

यथा—

'रक्षांसीति पुरापि संश्रृणुमहे वीरस्तु कस्तादृशो
यो जागर्ति जगत्रयी विपदलंकर्मीणदोर्विक्रमः।

---

एवात्रोपमानप्रयोगो विवक्षित इति भावः। **पदाभावेनेति**। सादृश्यविशेष्यकबो
जनकपदाभावेनेत्यर्थः॥ **सदृशपदस्येति**। लक्ष्यलक्षतावच्छेदकोभयससाधार
सादृश्यार्थकत्वसत्वादित्यर्थः। **श्रौतत्वमिति**। सादृश्यप्रतियोगिता यत्रशब्देन
ध्यते तत्रैव श्रौतीत्येतन्मतव्यवस्थापनात्। न चेष्टापत्तिः। उपमानलुप्ताया आर्थत्व
यमस्वीकारादित्यर्थः। **उपमानेति**। उपमाननिष्ठविशेषणतानिरूपितविशेष्यता
लिन्या इत्यर्थः। **प्रकृते चेति**। सादृश्यप्रतियोगिताश्रयस्योपमानपदार्थतया प्रतियो
तायाः पदार्थतावच्छेदकतया उपमानविशेषणतापन्नत्वादित्यर्थः। सर्वत्रास्वरसं सू
न्मतान्तरमवतारयति—**काव्यप्रदीपेति**। एतदभिप्रायविवरणद्वारा तत्पूर्वास्वरसं
शदयति—**तस्यायमिति**॥ उपमानलुप्ताया आर्थत्वनियमभङ्गभयेन यत्रोपमानलुप्त
मिति परैरिष्टापत्तिर्न कर्तुं शक्यते तादृशोदाहरणमाह—**रक्षांसीति**। अनर्घ्यरा
नाटके विद्याधरस्य विद्याधरान्तरं प्रत्युक्तिः। ननु 'अर्तिश्रुदृशिभ्यश्च' इति वार्तिकेन
पूर्वात् श्रृणोतेरकर्मत्व एवात्मनेपदस्यानुशासनादत्र 'संश्रृणुमहे' इत्यात्मनेपदमनुपपन्न
'रक्षांसीति' कर्मणः प्रयोगसत्त्वात्। सत्यम्। प्रमाद एवायमिति केचित्। अन्ये तु क
यद्वयः इत्यध्याहृत्य रक्षांसीत्यस्य तत्रैवान्वयं कल्पयित्वा रक्षसां कर्मत्वाविवक्ष

---

१. 'प्रकाश' क. २. 'न्तो वक्ष्यसीमहि मरि' इति ख.

शश्वद्द्वारभुवि प्रशस्तिरचनावर्णीयमानेक्षण-
श्रेणीसंभृतगोत्रभिन्मयजयस्तम्भो यथा रावणः ॥'

अत्र हि रावणसदृशस्याश्रवणोक्त्या यथोक्तार्थलाभः ।

यथा वा—

'त्वमिव कोऽपि परापकृतौ कृती न ददृशे न च मन्मथ शुश्रुवे ।'

इत्यत्र प्रकृतः कामः । तथा च 'कामप्रतियोगिकसादृश्यवानन्यो दर्शनश्रवणविषयत्वाभाववान्' इति बोधः । एवं वेदेऽपि—

'इन्द्राणीमासु नारीषु सुभगामहमश्रवम् ।
न ह्यस्या अपरां च न ॥'

इत्यत्र 'न चास्या अपरां समाम्' इति निरुक्तकारोक्तेः । इन्द्राणी-

---

आत्मनेपदं समर्थयन्ते । न च तथापि कर्मणः सत्वात्कथमकर्मकत्वमिति वाच्यम् । अविवक्षितकर्मत्वस्यैवात्राकर्मकत्वात् । वस्तुतः कर्माभावस्य सकर्मकेष्वसंभवात् । तदुक्तम्—'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥' इति ॥ भारं वहतीत्यत्र सकर्मकत्वेऽपि, नदी वहतीत्यत्राकर्मकत्वम् । अर्थान्तरे स्यन्दरूपे धातोर्वृत्तेः । 'जीवति' इत्यत्र धात्वर्थान्तर्भूतकर्मत्वात् । 'जीव प्राणधारणे' इति कर्मीभूतस्य प्राणस्य धात्वर्थान्तर्भावात् । प्रसिद्धेरिति मेघो वर्षतीत्यादौ जलस्य तत एव लाभात् । अविवक्षेति नेह गम्यत इत्यादौ भावे लकारात् । वस्तुतस्तु प्रकृते रक्षीसीत्यस्य प्रथमान्तत्वस्य सर्वसंमतत्वात्तानि सन्तीतिवाक्यार्थस्य कर्मत्वं कल्पनीयमेव । अतः साक्षात्कर्मसंबन्धाभावात् विनाप्यध्याहारं आत्मनेपदं समर्थयितुं शक्यम् । अविद्यमानकर्मकत्वस्य त्वन्मतेऽपि बाधात् । अश्रूयमाणकर्मकत्वस्य ममापि सत्वादिति न कोऽपि दोषः । 'कर्मक्षमोऽलंकर्मीणः' इत्यमरः । तथा च जगत्त्रयविपद्रूपकर्मक्षय इत्यर्थः ॥ यथा शब्दघटितमुक्त्वा इवशब्दघटितमाह—**त्वमिवेति** । नैषधे भैम्याः कामोपालम्भः—'स्वमदनदहनात् ज्वलनात्मना ज्वलयितुं परिरभ्य जगति यः' इत्युत्तरार्धम् । अत्राप्युपमानलुप्तत्वस्वीकारे तु इवादिपदसत्त्वात् श्रौतत्वं स्यादिति भावः । यद्वक्ष्यति **अथ(त्र) कथंचिदित्यादि** । अत्र 'ददृशे' 'शुश्रुवे' इत्युभयत्र कर्माख्यातस्य सविषयकार्थधात्वन्तरवर्तित्वेन लक्षणया विषयत्वमर्थः । त्वं पदार्थस्य कामस्य प्रतियोगितया इवपदार्थे सादृश्येऽन्वयः । तस्याश्रयतया कोऽपीति पदार्थेऽन्यस्मिन् आख्यातार्थविषयत्वस्य प्रतियोगितया नामार्थाभावे तस्य विशेषणतया अन्यपदार्थे इति पदार्थान्वयः इति । नैयायिकमते प्रथमान्तविशेष्यकबोधस्वीकाराद्बोधाकारमाह—**तथा चेति** । **वेदेऽपीति** । अपिशब्दात् न देवेषु न यक्षेषु तादृक् रूपवती क्वचित् ।

समां नाश्रौषमित्यत्रापि इन्द्राणीप्रतियोगिकसादृश्याश्रयनारीविषयकज्ञान भाववानहमित्येवार्थः ॥ अथ कथंचित्तत्रापि 'कामवृत्तिसादृश्यप्रतियोगिक दर्शनीयविषयः' इति बोधं स्वीकुर्याः । तर्हि 'इवादिपदानामुपमानपदो त्तरमेव प्रयोगः' इति नियमव्याघातापत्तिः । श्रौत्या अप्युपमानलुप्ताया प्रकृते संभवेन आर्थ्येवेति नियमक्षतिश्च । 'इवादिपदानां यदुत्तरं प्रयोग तस्यैवोपमानताधीः इति नियमभङ्गश्चेति दिक् ॥ अत एव ढुण्ढो

मानुषेष्वथ वान्येषु दृष्टपूर्वाथवा श्रुता ॥' इति भैमीपरं महाभारतमवधेयम् ॥ काम वृत्तीति। त्वंपदार्थस्य कामस्यानुयोगितासंवन्धेन इवार्थे सादृश्ये तस्य च प्रति गितासंवन्धेन अन्यस्मिन् इति रीत्येति भावः । चन्द्र इवेत्यादौ सादृश्यनिष्ठविशेष निरूपितप्रकारतायां प्रतियोगिताया एव, सादृश्यनिष्ठविशेषणतानिरूपितविशेष्यता चानुयोगिताया एव संसर्गत्वमिति सर्वानुभवसिद्धत्वात् । प्रकृते च कामनिष्ठविशे तायां सादृश्यनिष्ठविशेष्यतानिरूपितायां आधेयत्वस्य संसर्गत्वं सादृश्यनिष्ठविशे तानिरूपितान्यनिष्ठविशेष्यतायां . च प्रतियोगित्वस्येति तद्विरोधात् । अनुभवस्य स्वरसवाहिनस्तथा विरहात्स्वकल्पितनियमानुरोधेन तत्कल्पने चातिप्रसङ्गात् इत्य परितोषसूचनाय कथंचिदित्युक्तम् ॥ ननूपमानोत्तरमेवेवादीनां प्रयोग इति नि नास्त्येव, 'उद्बाहुरिव वामनः' इत्यादौ व्यभिचारादतस्तद्भङ्गेऽपीष्टापत्तिरेवेत्यत आह श्रौत्या अपीति । यदि तु स्वनिष्ठसादृश्यप्रतियोगिनिषेधस्यैव प्रकृतोत्कर्षहेतुत मिति स्वोक्तिरक्षणमात्रनिवन्धेन पूर्वोक्तप्रतिज्ञाविरोधदोषमप्यनाकलय्य उपमानलुप्ता श्रौतत्वमिष्टापत्त्यैव परिहर्तुमिच्छेत्तत्राह—इवादीति । नन्वेतत्प्रथममेव दूषितं द्वाहुरिव वामनः' इत्यादौ उद्बाहुपदोत्तरमिवादीनां प्रयोगेऽपि तदर्थस्योपमानत्वाभाव इति, तत्कथं पुनरप्ययमेव दोष उद्भाव्यते इति चेत्, सत्यम् । यथा दूषितार्थवि यमभ्युपेत्य तदस्वरसादुपमानलुप्तायाः श्रौतत्वमापादितम् । इदानीं तु तत्रेष्टापत्तिमा शङ्क्य तस्यैव निष्कर्षः कथ्यते । तथा हि—यदुत्तरमित्यादि । यत्पदार्थनिष्ठवि षणतानिरूपितविशेष्यताशालिस्वार्थकत्वमित्यर्थः । इवादिपदार्थसादृश्यनिष्ठविशेष्य निरूपितविशेषणताशालिनोऽर्थस्य उपमानत्वनियमात् । नन्वत्रापि व्यभिचारः उद्बा रिवेत्यादौ प्रयोगपौर्वापर्येऽपि सादृश्यनिष्ठविशेष्यतानिरूपितविशेषणताशालिनां वाम दिपदार्थानामुपमानत्वस्य सत्वात् । न च त्वमिवेत्यादावेव उक्तव्यभिचारशङ्केति च्यम् । पक्षीयस्य व्यभिचारसंशयस्य प्रमाणमात्रोच्छेदकत्वेन दूषणत्वाभावात् । अत उपमायाः श्रौतत्वव्यवस्थापकमिदमेव तैरङ्गीकृतम् । यदुपमानत्वादिविशिष्टशब्दबो विषयत्वमिति अत इष्टापत्तिरियमनिष्टापत्तिरेवेति नाभ्युपगन्तुं न्याय्येति । एते त्वमिवेत्यादिनैषधश्लोकस्य उपमानलुप्तोपमानत्वेन आधुनिकचन्द्रालोकविवरणे कुत्रचि दाहरणं निरस्तम् । तदेतत्सर्वं प्रकाशयन्नाह—दिगिति । नात्रोपमानेति । मा

१. 'नो वक्ष्यसीमहि सदृशं' स्व.

मरिहसीति वक्ष्यमाणे नात्रोपमानलोप इत्यलंकाररत्नाकरः । एतेन तत्रोपमानस्यासत्त्वं नाभिमतमपि त्वप्राप्तिरेवेत्युपमानलोप एवेति तदुत्तररसगङ्गाधरदूषणमपास्तम् । उक्तरीतेस्तत्राभिधानात् । तस्मादेतदुदाहरणीयम् ।

'चन्दसरिसं मुहं से सरिसो अमअस्स मुहरसो तिस्सा ।
सकअग्गहरहसाअलचुम्वणं कस्स सरिसं से ॥'

---

तीकुसुमसदृशमित्युक्तौ मालतीकुसुमस्यैवोपमानत्वादित्यर्थः ॥ **एतेनेति** । स्वप्रतियोगिकसादृश्याश्रयनिषेधस्यापि स्वोत्कर्षपर्यवसानमिति व्यवस्थापनेत्यर्थः । यदि हि तेनात्रोपमानस्यासत्त्वमेवाभिमतमित्युपमानत्वमेवात्र नास्तीत्यभिप्रायेणोपमानलुप्तत्वाभाव इत्युच्यते, तदा 'असत्त्वं नाभिमतं' 'अपि त्वप्राप्तिरेव' इति तदुपरि दोषः प्ररोहमासादयेत् । तेन तु मालतीकुसुमस्यात्रोपमानत्वात्तस्य च श्रूयमाणत्वात्कथं उपमानलुप्तत्वमित्येव विवक्षितम् । तत्र च उपमानस्य अप्राप्तिरेव विवक्षितेति समाधानम् भुक्तवान्तिप्रायमेवेत्यर्थः । तदेतदाह—**उक्तरीतेरिति** । कल्पितं हि स्वप्रतियोगिकसादृश्याश्रयनिषेधस्याप्युत्कर्षपर्यवसायित्वम् । उपमानत्वेन प्रसिद्धे वस्तुनि उपमेयप्रतियोगिकसादृश्यनिषेधात्मके प्रतीपविशेषे इति भावः । किंवहुना तद्वृत्तिधर्मविशेषस्यान्यत्र निषेध उत्कर्षहेतुरिति सर्वसिद्धम् । तथा च श्रुतावेव 'न तदन्यो मघवन्नास्ति माहेन्द्रं ब्रवीमि ते वाचः' इति । अत्र इन्द्रान्यस्मिन् सुखजनकत्वाभावोक्त्या इन्द्रस्तुतिप्रसिद्धेः ॥ नन्वेवमस्तु तदुक्तरीत्या प्रकृतोत्कर्षपर्यवसानम्, तथापि कथमत्रोपमात्वं प्रकृतानुयोगिकसादृश्यस्यैव उपमात्वात् इति चेत्, तवापि कथं तत् । उपमानतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वस्यापि 'चन्द्र इव' इत्यादौ दर्शनात् । उपमेयनिष्ठविशेष्यतानिरूपितविशेषणताशालित्वस्यापि सादृश्ये दर्शनात्, प्रकृते च तदभावात् ॥ अथ दर्शनमात्रेऽपि न तदुपमात्वप्रयोजकम् । किंतु प्रकृतोत्कर्षकतामात्रमिति चेत्, तुल्यं ममापि । तथापि यत्सादृश्यप्रतियोगितायां उपमेयतावच्छेदकावच्छिन्नत्वस्वाश्रयमात्रवृत्तित्वानवच्छेदकधर्मसामानाधिकरण्योभयाभावः सा उपमेति त्वदुक्तलक्षणस्यात्राव्याप्तिः । प्रतियोगिताया उपमेयतावच्छेदकावच्छिन्नत्वेन तदभावादिति चेत्, नूनमद्यापि कामादीनामुपमेयत्वमेवेति श्रद्धाजाड्यं न त्वया परित्यक्तम् । अस्माभिस्तत्रोपमानत्वस्यैवाभ्युपगमात् । उपमेयतावच्छेदकावच्छिन्नत्वाभावस्य प्रतियोगितायां सत्त्वात् । नहि प्रकृतत्वाप्रकृतत्वे एवोपमेयतोपमानताप्रयोजके, किंतु सादृश्यानुयोगित्वप्रतियोगित्वे एवेति बहुसंमतत्वात् । अग्रे यथा स्थानं वक्ष्यमाणत्वाच्चेत्यलमतिविस्तरेण । एवं पूर्वोक्तमुदाहरणं निरस्य उदाहरणान्तरमाह—**चन्देति** । 'चन्द्रसदृशं मुखं तस्याः सदृशोऽमृतस्य मुखरसस्तस्याः । सकचग्रहरभसहठचुम्बनं कस्य सदृशमस्याः ॥' [इति च्छाया ।] अत्र कस्य सदृशमित्युक्त्या तस्य विशेष्यतापत्तेरित्यर्थो लभ्यते इति समन्वयाशङ्का

अत्र सकचग्रहरभसहठचुम्बनं कस्य सदृशमिति उपमानस्याप्रयोगः।

समासे यथा—

'यत्तुलनामधिरोहसि लोकोत्तरवर्णपरिमलोद्गारैः।
कुसुमकुलतिलक चम्पक न वयं तं जातु जानीमः ॥'

द्विविधेयमिति प्राचीनानुसारादुक्तम्। वस्तुतस्तु उपमानलुप्ता तद्धि- ऽपि संभवति। यथा—'चञ्चत्कः, बृहत्कः' इति। तथा च कैयटः—'अ- चञ्चन्नपि यश्चञ्चन्निव लक्ष्यते स चञ्चत्कः। यथा मणिः स्यन्दमानप्रभ- त्वात्। अबृहन्नपि बृहन्निव प्रसृतप्रभावत्वाद्यो दृश्यते स बृहत्कः' इति। अत्र हि चञ्चत्त्वं बृहत्त्वं च धर्मः, मण्यादिरुपमेयः, कन्प्रत्ययश्च वाच- पञ्चत्वाद्याश्रयस्य चाप्रयोगः। न च—इयमुत्प्रेक्षा। मणौ चञ्चत्वाद्यभाव- साधारणधर्मस्योभयवृत्तावेवोपमास्वीकारात्। तथा च 'अयं मणिः चञ्च- प्रकारकसंभावनाविषयः' इति वाच्यम्। आरोपितेनापि चञ्चत्वेन सा- धारण्योपपत्तेः। वास्तववृत्तित्वस्य चालंकारतायामप्रयोजकत्वात्। वस्तुतः- उत्प्रेक्षा त्वशङ्क्यैव नास्ति। तथा हि—'केन प्रकारेण चञ्चद्बृहतोरुपसंख्या- नम्' इति वार्तिकम्। 'इवे प्रतिकृतौ' इति कन् च सादृश्यार्थे एव भवति। अन्यथा चञ्चेत्यादीनामप्युपमात्वमसिद्धं स्यात्। नापीयमतिशयोक्तिरि- वाच्यम्। मण्यादेः प्रयोगसत्त्वात्। 'आयःशूलिकः' इत्यत्र ठक्प्रत्यय-

---

कार्या। अत्रोपमानस्य कस्येति सामान्यशब्देनैव निर्देशात्। उपमानतावच्छेदकरू- च्छिन्नोपमानोपस्थितिजनकप्रयोगाभावादुपमानलुप्तत्वम् ॥ परंतु धर्मस्याप्यप्रयोगात्- मुपमानमात्रलुप्तत्वमेकलुप्ताया एवात्र प्रकृतत्वादित्यपरितोषात्। 'यस्य तुलाम्' इति प- वाक्यगापि बोध्येति वक्ष्यति—**यथा चञ्चत्क इति**। कन्प्रत्ययविधायकवार्तिक- अग्रे वक्ष्यमाणत्वादत्र तदनुपन्यासः ॥ **आरोपितेनापीति**। अत एव 'तमेव भा- न्तमनुभाति सर्वम्' इत्यत्र सूर्यादीनां ब्रह्मानुकारसमर्थनाय अयोदहनयोः स्वरूपसा- भावेऽपि क्रियासाम्यं भवत्येव। यद्यपि दहनक्रिया वह्निमात्रवृत्तिस्तथापि वह्नौ स्व- पेण, अयःपिण्डे त्वारोपेणेति तस्या उभयवृत्तित्वात्साम्यं इत्युपपादितम्, उत्तरमीमांसा- प्रथमाध्यायतृतीयचरणे वाचस्पत्यादिषु ॥ **वास्तवेति**। वास्तवपदस्य भावप्रधा- त्वमाश्रित्य तदस्यास्तीत्यर्थे ठक् ॥ **असिद्धं स्यादिति**। न चेष्टापत्तिः 'तं ज- भजन्मर्त्यश्चञ्चाचन्द्रकलाधरम्' इति चित्रमीमांसायामेवोपमात्वाङ्गीकारात्। असा- तद्भेदस्याग्रिमग्रन्थे निराकरिष्यत इत्यन्यदेतदिति भावः। **प्रयोगसत्त्वादि-**

इवाद्यर्थेऽनुशासनाभावेन क्रूराचाराद्युपमेयप्रयोगाभावेन तथात्वस्वीकारात्, रामकः इत्यादीनामप्युपमात्वोच्छेदप्रसङ्गाच्च, प्रकृते प्रकृत्यर्थे प्रत्ययविधायकेनानुशासनेन सादृश्यार्थ एव तद्विधानाच्च। अन्यथा सर्वत्राप्यनवस्थाप[1]तावुन्मत्तकलहः स्यादिति दिक्।

अथ वाचकलुप्तामाह—

**न वाक्यजाङ्गकलुक्।**

द्योतकलुप्तोपमा वाक्ये तद्धिते च न संभवति। मुखं चन्द्रो रमणीयमित्यतः सादृश्याप्रतीतेः। कल्पबादीनां द्योतकतया तत्प्रयोगे द्योतकलोपस्यैवासंभवात्। वाक्यपदं तद्धितस्याप्युपलक्षणमित्यर्थः।

अत एव तद्भेदव्युत्पादनमुखेनोक्तार्थं दर्शयति—

**वृत्तौ कर्माधारक्यचि क्यङि स्याद्विधा णमुलि॥ १२॥**

वृत्तौ समासे कर्मक्यचि, आधारक्यचि, क्यङि, कर्मणमुलि, कर्तृणमुलि चेति षड्विधेत्यर्थः।

तत्र समासे यथा—

'दीसइ विद्दुमअम्बं सिन्दूरारुणगइन्दकुम्भच्छाअम्।
मन्दरधाउकलं किअ वासुइमण्डलणिअक्कलं रहबिम्बम्॥'

इह विद्रुमवत्ताम्रमिति 'उपमानानि सामान्यवचनैः' इति समासः।

---

अतिशयोक्तौ चोपमानतावच्छेदकरूपेणैव उपमेयबोधाभ्युपगमेन उपमेयार्थकपदाप्रयोगादिति भावः। **सादृश्यार्थ एवेति**। यद्यपि सादृश्यार्थविहितानामप्युत्प्रेक्षापर्यवसानं भवत्येव, तस्या अपि सादृश्योपजीवकत्वात्। 'कस्तूरीतिलकं ललाटफलके देव्या मुखाम्भोरुहे रोलम्बन्ति तमालबालमुकुलोत्तंसन्ति मौलिं प्रति। याः कर्णे विकचोत्पलन्ति कुचयोरङ्के च कालागुरुस्थासन्ति प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विषः॥' इत्यादौ उपमाप्रक्रमोत्प्रेक्षेत्यलंकारसर्वस्वकारादिभिरङ्गीकारात्। तथाप्यत्र संभावनार्थत्वे साधकाभावादौत्सर्गिकसादृश्यपरतैव कल्प्यत इत्यभिप्रायः। इदमेव स्फोरयन्नाह—**दिगिति**। **अत एवेति**। वाक्यपदस्य तद्धितानुपलक्षकत्वे तद्धितेऽपि द्योतकलुप्ताभेदान्व्युत्पादयेदित्यर्थः। द्विधेत्यनेन पूर्वोपक्रान्तकर्माधाररूपभेदद्वयं गृह्यत इति भ्रमो माभूदित्यभिप्रायेण कर्तृकर्मपरत्वेन व्याचष्टे—**कर्तृणमुलीत्यादि**। 'दृश्यते विद्रुमाताम्रं सिन्दूरारुणगजेन्द्रकुम्भच्छायम्। मन्दरधातुकलं किल वासुकिमण्डलवतुंलं रविबिम्बम्॥' [इति च्छाया।] सेतुकाव्ये सायं सूर्यमण्डलस्योत्तरोत्तरं रक्तत्वमा-

---

१. 'प्रसङ्गाद्' ख. २. 'वासुइफण' ख.

उपमावाचकस्य समासान्तर्गतत्वादप्रयोगः । अत्रोपमानधर्मयोः समासः क्वचित्त्रयाणामपि ।

यथा—

'जितमिह भुवने त्वया यदस्याः सखि बकुलावलि वल्लभासि जाता ।
परिणतबिसकाण्डपाण्डुमुग्धस्तनपरिणाहविलासवैजयन्ती ॥'

अत्र बिसकाण्डमुपमानम्, पाण्डुत्वं साधारणधर्मः, स्तन उपमेय इति त्रयाणां समासः ।

यत्तु 'कोकिलालापिनी' इत्यत्र कोकिलवदालपतीत्यर्थे 'कर्तर्युपमाने' इति सूत्रेण णिनिप्रत्यये वाचकलुप्तातिरिक्ता । तथा च चित्रमीमांसायां वाचकलुप्ताश्लोकः—

'यं पश्यन्दीपदर्शं सपदि मनसिजः कीटनाशं स नष्टः
स्वान्ते योऽन्तःपुरीयस्यति भजनकृतस्ते कुमारीयति द्राक् ।
मूलस्तम्भायते यस्त्रिभुवनभवने कोकिलालापिनीं द्रा-
ग्वामाङ्के कल्पवल्लीं श्लथयति कुवलश्यामलां तां भजामि ॥'

---

न्धवर्णनम् । गजेन्द्रः ऐरावतः । णिअक्कलं वर्तुले देशी ॥ **त्रयाणामपीति** । यद्यपि त्रयाणां समासेऽपि 'उपमानानि सामान्यवचनैः' इति यावदंशे समासः तत्र द्वितीयसमासपूर्वपदभागे उपमा, न तु द्वितीयांशेऽपि, तथाप्युपमेयस्याप्येकसमासान्तर्गतत्वमित्यभिप्रायेणायं पृथगुपन्यस्त इति ध्येयम् ॥ उक्तविभागे चित्रमीमांसोद्धारि न्यूनत्वमाशङ्कते—**यत्त्विति** । दीपदर्शमिति कर्मणमुल् । कीटनाशमिति कर्तृणमुल् । अन्तःपुरीयतीत्याधारक्यच् । कुमारीयतीति कर्मक्यच् । स्तम्भायत इति क्यङ् । कोकिलालापिनीति णिनिः । कुवलयश्यामलेति समासः । एवं च वाचकलुप्तायां णिनिप्रत्ययस्यापि दीक्षितैर्गणनादत्र च तदनुक्तेर्न्यूनत्वमिति भावः । उपपदमिति उपमानरूपस्योपपदस्य णिनिप्रत्ययान्तेन समासादिति भावः ॥ यद्यप्येवं णमुलोऽपि पृथगुपादानमनर्हं तत्राप्युपपदसमाससद्भावात् । यदि च तत्र समाससत्त्वेऽपि तस्योपमानार्थकत्वाभावात् णमुल एव सादृश्यार्थे विधानाच्च पृथग्गणनं सादृश्यार्थकत्वेनैवात्र विभागकारणादित्युच्यते, तर्हि प्रकृतेऽपि णिनेरेव सादृश्यार्थे विधानं न तु समासस्येति णिनिरपि पृथगेव गणयितुमर्हं इति तुल्यम् । तथापि अनव्ययसमासत्वमत्र विभाजकोपाधितया विवक्षितम् । णमुलन्तस्य चाव्ययत्वात्पृथगुपादानमिति रहस्यम् । 'उपमानादाचारे' इति सूत्रं उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् स्यात् । 'कादम्बिनीमिव,' 'सौदामनीमिव' च आचारतीत्यर्थः । 'चलन्नवाभ्रमाला तु बुधैः कादम्बि

इति, तन्न । 'उपपदमतिङ्' इति समासस्य तत्रापि सद्भावेन समासगणनेनैव तत्कोडीकारात् । विभाजकतावच्छेदकधर्मानवच्छिन्नत्व एवाधिक्यस्योद्भावयितुमुचितत्वात् । न चैवं वत्यादीनामपि तद्धितत्वादिना विभागे न्यूनत्वापत्तिरिति वाच्यम् । इष्टापत्तेः । विभागस्यैच्छिकत्वात् । इयानेव हि विशेषः । तद्धितत्वे साक्षाद्विभजकोपाधौ वतित्वादयस्तत्र परम्परया विभाजकाः । वतित्वादिनैव विभागे तु तयैव विभाजकोपाधय इति । किं तु समासत्वमेव विभाजकतावच्छेदकं वदतां कथं तदवच्छिन्नस्थल एवाव्याप्तिरुद्भाव्यत इति नवीनमेतद्भवदीयपाण्डित्यं न विद्म इति ।

कर्मक्यचि यथा मम—

'घर्मागमापगमकालसमुत्सुकानां
    हृन्मण्डली सपदि दण्डकबर्हियूनाम् ।
कादम्बिनीयति तनूं रघुनन्दनस्य
    सौदामिनीयति मुदा जनकेन्द्रकन्याम् ॥'

अत्रोभयत्र 'उपमानादाचारे' इति कर्मणि क्यच् ।

अधिकरणक्यचि यथा मम—

'भूधरीयति पयोधरद्वये चन्द्रमस्यति मुखे तवास्य दृक् ।
विद्रुमीयति रदच्छन्दान्तरे दर्पणीयति कपोलमण्डले ॥'

इह सर्वत्र 'अधिकरणाच्च' इत्यधिकरणे क्यच् । भूधरे इवाचरतीत्यादिरर्थः । अत्राचारः प्रत्ययार्थः ।

क्यङि यथा—

'चन्द्रश्चण्डकरायते मृदुगतिर्वातोऽपि वज्रायते
    माल्यं सूचिकुलायते मलयजालेपः स्फुलिङ्गायते ।
आलोकं स्तिमितायते विधिवशात्प्राणोऽपि भारायते
    हा हन्त प्रमदावियोगसमयः संहारकालायते ॥'

---

स्मृता' इति हलायुधः । 'तडित्सौदामिनी विद्युत्' इत्यमरः । 'अधिकरणाच्च' इतीतिपूर्वसूत्रस्थवार्तिकादित्यर्थः ॥ ननु 'कर्तुः क्यङ् सलोपश्च' इति सूत्रे सकारलोपसंनियोगशिष्टः क्यङ् सकारान्तादेव प्रातिपदिकात्स्यात् । ततश्च 'चण्डकरायते' इत्यादावकारा-

---

१. 'स्थल' ख.

अत्र 'कर्तुः क्यङ् सलोपश्च' इत्यनेन उपमानादाचारे कर्तरि क्य भवति उपमानवाचकपदस्य सकारान्तत्वे सति सकारलोपश्चेत्यर्थकेन सू क्यङ् । अत्राचारः प्रत्ययार्थः । अध्याहृतस्यैवपदस्य च तद्भिन्नावृत्तित्वं त त्तित्वं चार्थः । तथा च मेघभिन्नवृत्तिमेघवृत्तिश्रीरामविषयकाचारानुकूल त्याश्रय इत्यर्थः । प्रकृत्यर्थस्यैवार्थे वृत्तित्वे तस्य चाचारे प्रत्ययार्थेऽन्वय इ पर्यवसितम् । न च तद्युक्तम् । प्रत्ययार्थानन्वितस्य प्रकृत्यर्थस्यान्यत्रान्वया भवात् । प्रत्ययार्थे प्रकृत्यर्थभिन्नस्यान्वयविरहाच्चेति चेत्, न । उक्तस्य उपमानादिति वचनसामर्थ्यात् इवार्थविशेषणीभूतस्य प्रकृत्यर्थस

---

न्तात्कथं क्यङित्तीमामाशङ्कां परिहरन्सूत्रं व्याचष्टे—**उपमानादिति** । पूर्वसू पमानादाचारे इति पदद्वयानुवृत्तेः उपमानादित्यनन्तरं कर्तुः सुवन्तादिति पदद्वय बोध्यम् । **उपमानवाचकेति** । तथा च वाक्यभेदात्, चकारस्य च अन्वाच ष्टत्वात् प्रत्ययः सर्वतोऽपि भवति, सलोपस्तु सकारान्तस्थल एवेति न दोष इत्य यद्यपि क्यङादयो वैकल्पिकाः पक्षे वाक्यस्यापि द्रष्टत्वात्, तथापि प्रकृतानुपयो विकल्पोऽत्र सूत्रार्थमध्ये नोक्त इति ध्येयम् ॥ **भेदादाविति** । मेघादेरुपमानस्य प्र योगित्वेन भेदे निरूपकत्वेन च वृत्तित्वे अन्वयाभ्युपगमात् ॥ **प्रत्ययार्थेति** । 'प्र तिप्रत्ययौ स्वार्थे सह ब्रूतः' इति कात्यायनोक्त्या प्रकृतिप्रत्ययान्यतरार्थनिष्ठविशे प्रकारतान्यतरसंबन्धेन बोधं प्रति विशेष्यतासंबन्धेन तदन्यतरजन्योपस्थितेः का त्वकल्पनात् । प्रकृते च मेघादिनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबो भेदादावुत्पत्तेः । प्रकृतिप्रत्ययान्यतरजन्योपस्थितेश्च तत्र विशेष्यतासंबन्धेनाभावात् भेदादीनां इवपदार्थत्वाभ्युपगमादित्यर्थः । वृत्तित्वरूपस्य इवपदार्थस्य आचारान्वय क्तरीत्या दूषयति—**प्रत्ययार्थ इति** । प्रत्ययार्थनिष्ठविशेष्यतानिरूपितविशेष संबन्धेन शाब्दबोधं प्रति विशेष्यतासंबन्धेन प्रकृतिजन्योपस्थितेः कारणत्वकल्पना 'चैत्रः पचति' इत्यत्र कृतेश्चैत्रविशेषणत्वेन भानात् प्रत्ययार्थनिष्ठप्रकारतानि तविशेष्यतासंबन्धः कार्यतावच्छेदकतया न निवेशनीय इति प्रत्ययार्थनिष्ठवि तेत्यादिकमेवोक्तम् । प्रकृते च प्रत्ययार्थे आचारे वृत्तित्वादेरिवार्थस्यान्वयात् । प्रत्ययार्थनिष्ठविशेष्यतानिरूपितविशेषणतासंबन्धेन शाब्दत्वरूपकार्यतावच्छेदका न्नोत्पत्त्या तस्य इवपदार्थत्वेन प्रकृतिजन्योपस्थितेश्चात्राभावेन व्यभिचाराप भावः ॥ **वचनसामर्थ्यादिति** । यद्यप्यन्वये आकाङ्क्षैव बीजं न तु वचनम्, त वचनरूपप्रमाणोपष्टम्भेन तथैवाकाङ्क्षोन्नीयत इति तात्पर्यम् । तथा च मेघादेः सा आचाररूपप्रत्ययार्थान्वयेऽपि मेघादिविशेषणतापन्नस्य प्रकृत्यर्थस्य मेघादेः परम तत्रान्वयसत्त्वान्न दोषः । अत एव प्रकृत्यर्थान्वयमात्रे व्युत्पत्तेः । स च यथाक

न्वयाभ्युपगमात् । आख्यातार्थकृतौ तदर्थवर्तमानत्वान्वयेन द्वितीयनियमाभावाच्च ।

---

संबन्धमात्रेणेति द्रव्योपायविवरणे मिश्रैरप्युद्भावितम् । एवं च स्थलविशेषे प्रकृत्यर्थप्रकारकबोधं प्रति प्रत्ययार्थान्वयार्थकपदजन्योपस्थितेरपि विशेष्यतासंबन्धेन कारणतावच्छेदकीकृत्य कार्यकारणाभावः । कल्प्यः प्रामाणिकत्वात् । अत एव 'नातिरात्रे षोडशिनं गृह्णाति' इत्यत्र षोडशिग्रहणाभाव इष्टसाधनमिति बोधो दीधितिकारादिभिः स्वीकृत इति भावः ॥ द्वितीयदोषं व्यभिचारेण दूषयति—**आख्यातार्थेति** । 'चैत्रः पचति' इत्यत्र पाकानुकूलवर्तमानकृतिमांश्चैत्र इति बोधात् । कृतिवर्तमानत्वयोः प्रत्ययार्थयोरपि परस्परमन्वयात्प्रत्ययार्थनिष्ठविशेष्यतानिरूपितविशेषणतासंबन्धेन शाब्दत्वावच्छिन्नस्य वर्तमानत्वेऽपि सत्त्वात् प्रकृतिजन्योपस्थितेश्च तत्र विरहादिति भावः । न चैवमप्युक्तसंबन्धेन शाब्दत्वावच्छिन्नं प्रति प्रकृतिस्ववाचकप्रत्ययान्यतरजन्योपस्थितेरेव हेतुत्वं कल्प्यते, वर्तमानत्वस्य प्रकृतिजन्योपस्थितिविशेष्यत्वाभावेऽपि वर्तमानत्ववाचकप्रत्ययजन्योपस्थितेर्विशेष्यतासंबन्धेन तत्र सत्त्वात् । ततश्च इवार्थवृत्तित्वस्य आचारे प्रत्ययार्थेऽन्वयो न युक्तः । वृत्तित्वस्य प्रकृतिप्रत्ययान्यतरार्थत्वाभावादिति वाच्यम् । प्रभाकरनये 'न कलञ्जं भक्षयेत्' इति वाक्ये कलञ्जभक्षणाभावविषयकं कार्यं इति बोधाभ्युपगमात् । कार्यस्य तन्मते लिङर्थत्वात् प्रत्ययार्थत्वात् । प्रत्ययार्थनिष्ठविशेष्यतानिरूपितविशेषणतासंबन्धेन शाब्दत्वावच्छिन्नस्य णिजर्थाभावेऽप्युत्पत्तेस्तत्र प्रकृतिजन्योपस्थितेः स्ववाचकप्रत्ययजन्योपस्थितेश्चान्यतरस्याप्यभावेन तथापि व्यभिचारप्रतीकारविरहात् । किंच चतुर्थाध्यायेऽभावकारणताविचारावसरे 'नानुपमृद्य प्रादुर्भावात्' इति न्यायसूत्रम् । अनुपमृद्य कारणमविनाश्य प्रादुर्भावो न भवति कार्यस्य, न हि बीजमनुपमृद्य अङ्कुरः प्रादुर्भवति । अतः कार्यकाले कारणस्य सत्त्वविरहादभावस्य कारणत्वमागतमेवेति तस्यार्थः । तत्र नानुपमृद्य प्रादुर्भावो यतस्तस्मादिति व्याचक्षाणैर्वाचस्पतिमिश्रैर्दीधितिकारादिभिश्च कण्ठरवेणैव प्रादुर्भावस्य नञर्थान्वयं कृत्वा नञर्थस्य पञ्चम्यर्थहेतुत्वान्वयः स्वीकृतः । अनुपमृद्य प्रादुर्भावादिति । तथा च हेतुत्वरूपप्रत्ययार्थनिष्ठविशेष्यतानिरूपितविशेषणतासंबन्धेन शाब्दस्य नञर्थाभावेऽप्युत्पत्त्या तस्य च प्रकृतिप्रत्ययान्यतरार्थत्वाभावेन दुर्वार एव व्यभिचारः ॥ एवं 'तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः' इति सूत्रेऽपि इतरोत्पत्त्यभावादिति अन्वयबोधाभ्युपगमात् । न च तत्रापि प्रादुर्भूतपदोत्तरपञ्चम्यर्थहेतुत्वे नञर्थाभावस्य नान्वयः, किंतु नञ्पदोत्तरपञ्चम्यर्थ एव तथा च नञो हेत्वर्थकपञ्चम्याः प्रकृतित्वेन अभावे प्रकृतिजन्योपस्थितिरस्त्येवेति न व्यभिचारः । न च तदुत्तरपञ्चमीश्रवणापत्तिरिति वाच्यम् । 'अव्ययादाप्सुपः' इत्यनुशासनबलेन तस्यालोपसंभवात् । न च प्रादुर्भावपदोत्तरपञ्चम्या अनन्वयापत्तिरिति वाच्यम् । तस्याः प्रतियोगित्वार्थकत्वात् ।

अत्र वदन्ति—'पौरं सुतीयति' इत्यादौ क्यजादीनामाचारमात्रार्थ सुताद्यन्विते आचारे पौरादिकर्मकत्वान्वयासंभवः । न च—सुताद्यन्वितस्यैवाचारस्य पौराद्यन्वयः—इति वाच्यम् । प्रकृत्यर्थान्वितप्रत्ययार्थबोधात् । अन्यथा 'चैत्रो न पचति' इति बाधधीसत्त्वे 'चैत्रः पच

न च प्रतियोगित्वस्य संसर्गतयैव भानात् तद्वैयर्थ्यमेव निपातातिरिक्तनामार्थयोः दान्वयस्वीकारात्, अन्यथा 'घटो न' इत्यादावनुपपत्तेरिति वाच्यम्। तथापि साधुत्वार्थत्व भवात् । मैवम्, अव्ययोत्तरविभक्तेरेव साधुत्वार्थत्वात् । प्रथमैकवचनमेवाव्यये उत्पद्यते—तस्यैव लोप इति पक्षस्यैव महाभाष्यकारैः सिद्धान्तितत्वात् । नवुत्तरा व्युत्पत्तौ प्राणाभावात्। यत्तु एवकारस्य तदन्वयिपदसमानविभक्तिकत्वमिति लीलावतीशिरोमणौ प्रतिपादितम् ॥ यत्तु अव्ययेभ्यः सर्वविभक्त्युत्पत्तिरिति अभ्युच्चय माश्रित्य समर्थनीयम् । न चैवं स्वपश्येत्यादीनां स्वरादीनां कर्मत्वप्रतीतिः कथं वाच्यम्। तेषां सत्त्ववाचित्वेन सर्वविभक्त्युत्पत्तेः न चैवमव्ययत्वं न स्यात्सत्त्ववाचि तथात्वादिति वाच्यम्, पाठसामर्थ्यादव्ययसंज्ञा प्रवृत्तेः। एवं च यथोक्तव्यभिचारः ए एवेत्यलमिति प्रपञ्चेन। एवं अध्याहृतस्य इवपदस्य भेदादिकमर्थः । इति स्थितम्। संप्रति भेदोऽपि क्यङादेरेवार्थ इति जयरामभट्टाचार्यमतमाह—**अत्र वदन्तीति पौरमिति** । काव्यप्रकाशोपन्यस्तोदाहरणाभिप्रायेण 'पौरं सुतीयति जनं सम न्तरेऽसावन्तःपुरीयति विचित्रचरित्रचञ्चुः । नारीयते समरसीम्नि कृपाणपाणेरालो यस्य लसितानि सपत्नसेना ॥' सुतीयतीति कर्म क्यच्, अन्तःपुरीयतीत्यधि क्यच्, नारीयत इति क्यङ्, इति त्रयाणामेकश्लोक एवोदाहरणम् ॥ **क्यजादीमिति** । आदिपदात्क्यङ्संग्रहः, विचारसाम्यसूचनाय स्वयं क्यङ्प्रत्यये बोधसु क्यजादौ एतद्विप्रतिपत्त्युपन्यास इति द्रष्टव्यम् ॥ **आचारमात्रेति** । मात्रपदाद्भेद वच्छेदः ॥ **सुताद्यन्वितेति** । प्रत्ययार्थस्य प्रकृत्यर्थेनैव समुत्थिताकाङ्क्षत्वेन तद स्यान्तरङ्गत्वात्। **पौरादीति** । एककर्मान्वयादेव निराकाङ्क्षतया कर्मान्तराकाङ्क्षाविरहा न च प्रत्ययार्थाचारस्य निराकाङ्क्षत्वेऽपि पौरमित्यादिपदाकाङ्क्षयैव तदन्वयः-स्यादिति च्यम् । अन्वयप्रतियोगिनोर्मध्येऽन्यतरस्य निराकाङ्क्षत्वे परपदार्थानन्वयात् ॥ तदु माचार्यचरणैः—'न चान्यदाकाङ्क्षान्वयबीजम्, अपि तूभयाकाङ्क्षा' इति ॥ शब्दखण्डे रप्युक्तम्—'द्वयाकाङ्क्षायां चान्वयधीः, न त्वन्यतराकाङ्क्षायाम्' इति ॥ **सुताद्यन्वितेति** । तथा च आचारस्य कर्मानन्वयेन तत्साकाङ्क्षत्वात् । तत्र पौरमित्या नामन्वयोपपत्तिरिति भावः । न चैवं पौराद्यन्वयसंभवेऽपि सुतादिप्रकृत्यर्थानन्वय दवस्थ्यं निराकाङ्क्षत्वसाम्यादिति वाच्यम् । पौराद्यन्वयोपपादनमात्रे तात्पर्यात् तदाकाङ्क्षया अन्तरङ्गत्वेन पुनस्तत्रान्वय इत्यभिप्रायाद्वा ॥ **प्रकृत्यर्थेति** । प्रकृ निरूपितविशेष्यताप्रकारतान्यतररहितप्रत्ययार्थस्य पदान्तरार्थान्वयानर्हत्वात् ॥ अ **थेति** । प्रकृत्यर्थानन्वितस्यापि प्रत्ययार्थस्य पदान्तरार्थान्वयस्वीकार इत्यर्थः ॥

इति वाक्यात् 'चैत्रः कृतिमान्' इति बोधापत्तेः। किं च—अश्रुतस्यैवादिपदस्य कल्पनापेक्षया क्यजादिशक्तिकल्पनमेवोचितम्। न च गौरवम्। सन्प्रत्ययादेरपि इच्छादिशक्तिविलोपापत्तेः। तत्रापि इच्छतीत्यादेरध्याहारसंभवात्। अथ तत्रानुशासनाद्विनाप्यध्याहारं बोधाच्च शक्तिरिति चेत् क्यजादावपि

---

**पचतीति** । पाकानुकूलकृत्यभाववानित्यर्थः ॥ **चैत्रः कृतिमानिति** । चैत्रविशेष्यकपाकानुकूलकृतित्वावच्छिन्नप्रतियोगिताकाभावप्रकारकबाधज्ञानस्य चैत्रविशेष्यककृतित्वावच्छिन्नप्रकारताकबोधं प्रत्यविरोधित्वात् । नीलदण्डाभाववानिति ज्ञानस्येव दण्डवानिति ज्ञाने बाधबुद्धौ प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणं यो धर्मस्तद्धर्मावच्छिन्नप्रकारकज्ञानत्वस्यैव प्रतिबध्यतावच्छेदकत्वात्, तादृशं चात्र पाकानुकूलकृतित्वम्, प्रकारतावच्छेदकं तु कृतित्वमेव, तच्च प्रतियोगितावच्छेदकताया पर्याप्त्यधिकरणमेव । अतः 'चैत्रः पचति' इति वाक्यात् चैत्रः कृतिमानिति बोधस्तादृशबाधकालेऽपि दुर्वारः। उक्तनियमस्वीकारे तु पाकरूपप्रकृत्यर्थानन्वितायाः कृतेश्चैत्रादौ अन्वयासंभवात् । पाकानुकूलकृतिमानिति बोधस्य च यथोक्तप्रतिबन्धसत्वेनानुत्पादनात्तादृशबाधधीकाले तद्वाक्यस्य न वाक्यार्थबोधजनकत्वमित्यर्थः । एवं च पदान्तरार्थनिष्ठविषयतानिरूपितविषयतासंबन्धेन शब्दबुद्धित्वावच्छिन्नं प्रति प्रकृत्यर्थावच्छिन्नविषयतानिरूपितविषयतासंबन्धेन प्रत्ययजन्योपस्थितिः कारणमिति पर्यवस्यति । अतः सुताद्यनन्वितस्यैवाचारस्य पौराद्यन्वयानर्हत्वादाचारे प्रथमं सुतादि प्रकृत्यर्थान्वयाभ्युपगमे च निराकाङ्क्षत्वात्तत्र पौराद्यन्वयानर्हत्वाचारे प्रथमं सुतादिप्रकृत्यर्थान्वयाभ्युपगमे च निराकाङ्क्षत्वात्तत्र पौराद्यन्वयतादवस्थ्यमिति फलितार्थः ॥ ननु 'चैत्रो न पचति' इति बाधज्ञानसत्वे 'चैत्रः पचति' इति वाक्याच्चैत्रः कृतिमानिति बोधानुत्पादेऽपि प्रकृते प्रथममाचारे पौराद्यन्वयः स्यादेव । तत्र पश्चादपि कृतेः प्रकृत्यर्थान्वयविरहात् । अत्र च पौराद्यन्वयानन्तरं सुतादावपि तदन्वयाभ्युपगमेन वैषम्यात् ॥ यत्तु प्रकृत्यर्थानन्वितप्रत्ययार्थस्यान्यत्र नान्वय इत्युक्तम्। तदकिंचित्करम्। देवदत्तेन दृष्ट इत्यादौ देवदत्तकृतिविषयदर्शनविषय इति बोधदर्शनात्, निष्ठाप्रत्ययार्थस्य तृतीयार्थकृत्यन्वयानन्तरमेव प्रकृत्यर्थदर्शनान्वयाभ्युपगमात्। तथा चोक्तव्युत्पत्त्यसिद्धिमेव लिखित्वा अद्य स्थित्वेत्यादौ क्त्वाप्रत्ययार्थस्याव्यवहितपूर्वकालस्यापेत्यनेन सममभेदान्वयः समर्थितो द्रव्यकिरणावल्युपायविवरणे पक्षधरमिश्रजलदढक्कुरादिभिस्तस्मात्प्रकृतिप्रत्ययार्थयोः परस्परान्वय एव आवश्यको नतु प्रकृत्यर्थान्वयात्पूर्वं प्रत्ययार्थस्यान्यत्रानन्वयोऽपि । तावतैव न पचतीति बाधकाले पचतीत्यस्मात्कृतिमानिति बोधवारणादित्यपरितोषादाह—**किं चेति** ॥ **क्यजादिशक्तीति** । क्यजादिनिष्ठशक्तीत्यर्थः ॥ **न च गौरवमिति** । शक्तिकल्पनमपेक्ष्याध्याहार एव लाघवादित्यर्थः ॥ **इच्छादिशक्तीति** । इच्छादिविषयकशक्तीत्यर्थः । **विलोपापत्तेरिति** । न चेष्टापत्तितद्वाचकत्वस्यैव भाष्यकाराद्यभियुक्तसंमतत्वात् ॥

समानम्। अतः क्यच आचारजातीय आचारो भेदश्चार्थः। अत एव च 'सु
सुतीयति' इत्यादिर्न प्रयोगः। तथा च 'पौरं सुतीयति' इत्यादेः सुतभिन्न
रवृत्तिर्यः सुताचारजातीयाचारस्तदनुकूलकृतिमानित्यादिरर्थः। एवं च
तपौरादेः सादृश्यविशेष्यकबोधात् श्रौती पूर्णोपमैवेयं न तु वाचकलुप्तो
तत्र। 'सुतमिवाचरति' इत्यादिविवरणानुरोधेन इवादिकल्पनस्य प्रामाणि
कत्वात्। आचारे वाच्ये उपमानवाचकपदात्क्यच्प्रत्ययो भवतीत्यनुशास
नार्थः। स च इवाद्यध्याहारेऽप्यविरुद्धः। न हि सन्प्रत्ययस्येच्छायां वि

---

अत एवेति। भेदस्यापि क्यजाद्यर्थत्वादिति भावः। यद्यपि भेदस्य इवपदार्थत्वे
'सुतं सुतीयति'इत्यादिप्रयोगापत्तिर्नास्त्येव सुतादिभेदस्य सुताद्यन्वयानर्हत्वसाम्यात्, त
पि क्यजादिस्थले भेदोऽवश्यं प्रतीयत इत्यत्रैवायमुपष्टम्भः। स च लाघवात्क्यजा
एवेत्युक्तमित्यन्यदेतत्। सुतभिन्नेति। अत्र प्रकृत्यर्थस्य सुतादेः प्रतियोगि
प्रत्ययार्थभेदे, तस्य च विशेषणतासंबन्धेन उपमेये पौरादौ, तस्य वृत्तित्वे द्विती
तस्य मुख्यविशेष्यभूते द्वितीयाचारे, पुनः प्रकृत्यर्थस्य सुतादेः प्रथमाचारे, एवं सुत
न्नपौरादिवृत्तित्वविशिष्टस्य सुतविषयकाचारजातीयाचारस्य धात्वर्थस्य कृतावन्वय इ
क्रमः। एवं च एकत्राचारे प्रकृत्यर्थस्यान्वय एकत्राचारे पौरादेरिति उभयत्र तद
योपपत्तिः। पदजन्योपस्थितिभेदसत्त्वादिति फलितार्थः॥ सादृश्यविशेष्यकेति
क्यजादिप्रकृत्यर्थस्य उपमानत्वनियमात्, यत्र सादृश्यविशेषणीभूतस्योभयमानत्वविव
स्तत्रैव श्रौतीति पूर्वमेतन्मतव्यवस्थापनादित्यर्थः। पूर्णोपमेति। क्यजादीनां
सादृश्यार्थकत्वेन तेषां श्रूयमाणत्वेन च वाचकलुप्तत्वाभावादित्यर्थः। तदेव दर्शयति—
न त्विति। विवरणेति। यद्यपि विवरणमनुमानविधया क्यजादीनां सादृश्या
कत्व एव साधकं न त्विव पदाध्याहारे, तथापि सादृश्यप्रतीत्यावश्यकत्वदर्शनार्थं
तदुक्तम्। न हि तद्वाक्यार्थबोधविषयत्वविरहिणोऽर्थस्य वाचकेन पदेन तद्वाक्यं
व्याख्यायत इति तात्पर्यात्। न च सादृश्यप्रत्यये विवादाभावात्तत्र कृतं साधकोपन्या
सेन। किं सादृश्यं क्यजादेरेवार्थः, उत अध्याहृतस्य इवपदस्येत्यत्रैव विप्रतिपत्ते
वाच्यम्। सादृश्यप्रत्यये उक्तरीत्या दृढीकृते क्यजादीनामेव तत्र शक्तिकल्पने
वात्। इवादिकल्पने च तेषां तद्वाचकत्वस्य कल्पितत्वात्तत एव तत्प्रतीतौ लाघवा
भिप्रायात्। अत एव सन्प्रत्ययादेरिच्छादिशक्तिविलोपप्रतिपत्तिं निरस्यन्नाह—
चारे इत्यादि॥ स चेति। आचारस्य क्यजर्थताप्रतिपादकः सूत्रार्थ इत्यर्थः।
अविरुद्ध इति। इवाध्याहारेऽपि क्यजादीनामाचारार्थकतारक्षणादित्यर्थः।
त्ययादस्य वैषम्यमाह—न हीति। तथा च इच्छास्थानीये सूत्रोपात्ते आचारे
शक्तिरभ्युपगम्यत एव 'सादृश्यं तु प्रतीयमानं अध्याहृतपदार्थः, उत प्रत्ययार्थः'

नवत्क्यचोऽपि भेदादौ शक्तिरित्यर्थोऽनुशासनाल्लभ्यते, येन तत्र शक्तिः स्यात् । अतः क्यजादेः साधारणधर्ममात्रार्थत्वात् द्योतकलुप्तत्वं दुर्वारमिति दिक् ॥

यद्यप्येतदधिकृत्य चण्डीदासादय आहुः—ननु नारीयते इत्यादौ कथमौपम्यप्रतिपादकप्रयोगाभावः । क्यङादीनामेव तदर्थविहिततया तत्कर्मक्षमत्वात् । अथैषां प्रत्ययत्वेनास्वतन्त्रतया प्रयोगाभावेन वा न सम्यगौपम्यप्रतीतिरिति चेत् । तर्हि वतिकल्पबादावपि तथैव प्रसज्येत । न हि प्रत्ययतया तद्धितान्ययोः कश्चिद्विशेषः । कल्पबादय इवादितुल्यतयौपम्यवाचकाः । क्यङादयस्तु द्योतका एवेत्यपि न । इवादीनामपि वाचकत्वसंदेहात् । अस्तु वा तेषां वाचकत्वं तथापि समुदितमेव पदं वाचकम् । प्रकृतिप्रत्ययौ स्वस्वार्थवाचकाविति मतद्वयेऽपि वत्यादिक्यङाद्योः साम्यमेवेति । सत्यमेवम् । तथापि प्राचीनोपरोधनियन्त्रितोऽयमाचार्यो विद्वानपि ईदृशानि दुर्यशःसंकुचितानि संकटानि प्रविशतीत्यत्र किं ब्रूमः ॥

यत्तु केनचिदुक्तम्—वत्यादय इवाद्यर्थेऽनुशिष्यन्ते क्यङादयस्त्वाचारे इति वैषम्यम्—इति, एतदपि रिक्ततरम् । न हि क्यङादय आचारमात्रार्थाः किं तु सदृशाचारार्थाः—इति, तदप्यत एव परास्तम् । सदृ-

---

वीक्षायां प्रत्ययशक्तिकल्पने गौरवादनुशासनविरोधाच्च, भेदाद्युपस्थितिरध्याहृतादिवपदादेव युक्तेति भावः । किं च सुताद्यन्विते आचारे पौराद्यन्वयासंभव इत्ययुक्तम् । प्रथममुक्तरीत्या सुतादिप्रकृत्यर्थान्विते आचारे—पुनः 'सनाद्यन्ता धातवः' इति चानेन क्यजाद्यन्तस्य सुतीयत्यस्य धातुसंज्ञायां सत्यां विशिष्टे तत्र पौरादिकर्मकत्वान्वयसंभवात् । सुतमिवाचरतीत्यनेन धात्वर्थेन कर्मान्तरस्यावश्यमाकाङ्क्षितत्वादिति द्योतयन्नाह—**दिगिति** ॥ चण्डीदासादय इत्यादिपदेन तदनुवादिसाहित्यदर्पणादिसंग्रहः । **वाचकत्वसंदेहादिति** ॥ तेषां द्योतकत्वमिति । वैयाकरणाभ्युपगमात् । **समुदितमेवेति** । पदस्फोटाभिप्रायकं राममित्यखण्डपदस्यैव रामप्रकारककर्मत्वविशेष्यकबोधजनकत्वं नतु रामपदेन रामस्य, प्रत्ययांशेन च कर्मत्वस्य, प्रतिपादनमिति तत्राभ्युपगमात् ॥ **स्वस्वार्थेति** । उभाभ्यां प्रत्येकं स्वस्ववाच्यार्थोपस्थापने तदन्वयबलेन विशिष्टप्रतीतिसंभवात् इति नैयायिकैरङ्गीकृतत्वात् ॥ **तदप्यत एवेति** । इवाद्यर्थ एव सादृश्यमिति व्यवस्थापनादेवेत्यर्थः । साधकाभावमुक्त्वा

शाचारस्य क्यङाद्यर्थकत्वकल्पने प्रमाणाभावात् । अपि च 'उपमा-
दाचारे' इति ह्यधिकारः। उपमानार्थकपदोत्तरमाचारार्थे क्यङादयो
न्तीति सूत्रान्तरैकवाक्यतयार्थः । तथा च यदि इवाद्यधिकारो न क्रि-
तदा प्रकृतेरुपमानार्थकत्वमेव न स्यादिति क्यङादय एव तदुत्तरं दुर्ल-
स्युरिति क्यजादीनामुपमानपरतानियमव्युत्पत्त्या तेषां श्रवणमात्रेणौपम्य-
तद्वाचकस्येवादेर्वा आक्षेपलभ्यत्वात्। अत एवेयं श्रौत्येव क्यजादेरुपमा-
त्तरत्वनियमादिति न्यायपञ्चाननादयः॥

प्रकृत्यैव लक्षणया सादृश्यप्रतिपत्तिरिति मतेनेदम्। समुदायस्यैव
त्सादृश्यप्रयोजकाचरणकर्तृशक्तत्वमिति नयेऽपि सादृश्यविशिष्टान्यतरस्य

---

बाधकमप्याह—**किं चे(अपि चे)ति॥अधिकार इति**। ननु 'उपमानादाचारे' इति
त्रस्य क्यच्प्रत्ययविधायकत्वात्कथमधिकारत्वोक्तिः, कार्यविशेषोपादानेन पदा
त्वाभावात्। सत्यम्। स्वयं क्यच्प्रत्ययविधायकत्वेऽपि 'कर्तुः क्यङ्' इत्यादावुप-
दाचारे इति पदद्वयानुवृत्त्या तथात्वोक्तेः। अत एवाह—**सूत्रान्तरैकवाक्ये**ति
परंतु चण्डीदासग्रन्थे क्यङ्प्रत्ययमेवोपक्रम्य विचारात् तद्विध्येकवाच्यतापन्नत्वमुक्तं
'उपमानादाचारे' इति सूत्रमुद्भावितम्॥ **तस्मादिति**। इवादिप्रयोगादेव सा-
प्रतियोगित्वरूपोपमानत्वनिर्वाहात्। सदृशाचारस्य क्यजाद्यर्थत्वे तु तदुत्तरमुपमा-
प्रयोगावपि तदुत्पत्तिदशायां तथा न स्यात्तदभिप्रायेणैव उपमानत्वोपपादने तु
मानादिति पदानर्थक्यं स्यात्। न च तत्सामर्थ्यादेव क्यङ्प्रत्ययादीनां सदृशाचार-
कत्वसिद्धिरिति न तद्वैयर्थ्यमिति वाच्यम्। एवमपि सदृशाचारे इत्येव सूत्रन्यासाप-
असध्रीच्या च यथान्यासमेवेति सूत्रोपपत्तेः। उपसंहारग्रन्थपर्यालोचनयोजनया जय-
भट्टाचार्याणामपि इवाद्यध्याहारनिरासनिर्बन्धो नास्तीति प्रतीयते इत्यभिप्रायवानाह
**क्यजादीनामिति॥ लक्षणयेति**। एवं हि तत्र स्वीकृतम्, क्यङर्थाचारो धर्म-
उपमानपदस्य तन्निरूपितसादृश्ये लक्षणसादृश्यस्य च पदार्थान्तरत्वनये तस्य प्र-
कतासंसर्गेण, समानधर्मात्मकत्वे त्वभेदसंसर्गेण धर्मेऽन्वयः। तस्याश्रयतया उप-
ऽन्वयः इति, एवं च सादृश्ये शक्त्याभावाद्वाचकलुप्तत्वमिति भावः॥ **विशिष्टस्यैव** प-
विशिष्टार्थे शक्तिरिति पक्षे सादृश्येऽपि शक्तिसत्त्वात्कथं वाचकलुप्तत्वमित्याशङ्क्याह
**समुदायस्यैवेति**। एतावान्प्रकृतेरेतावान्प्रत्ययस्येति विभागस्यात्रानभ्युपगमा-
**सादृश्येति**। श्रौतोपमायां सादृश्यमात्रवाचकपदसत्त्वम्। आर्थोपमास्थले तु सा-
विशिष्टार्थमात्रवाचकसदृशादिरूपपदसत्त्वमिति। तत्रैव वाचकसत्त्वेऽपि अत्र तत्सा-
प्रयोजकाचरणकर्तृशक्तत्वेन प्रयोजकत्वादिरूपार्थवाचकत्वस्यापि सत्त्वात्। न तद-

१. 'तस्मात्' इति पाठो भवेट्टीकानुसारात्.

१. 'अधिकारत्वा' ख. २. मूलपुस्तकद्वये तु 'तथा' इत्येव दृश्यते.

वाचकपदाभावात् वाचकलुप्तेति केचित् । तदसत् । क्विपोऽप्युभयलुप्तोदाहरणत्वानुपपत्तेः । तत्रापि प्रकृतेः सादृश्ये लक्षणासंभवादिति । अत एव 'तद्वाचकस्येवादेर्वाक्षेपलभ्यत्वात्' इत्युक्तं न्यायपञ्चाननादिभिः । क्यङादीनां [1]वाचकमात्रलुप्तोदाहरणविरोधाच्च । यथा हि 'सादृश्यमात्रवाचकत्वाभावात्तल्लो-

रमात्रवाचकत्वमिति वाचकलुप्तत्वमव्याहतमिति भावः ॥ **क्विपोऽपीति** ॥ ननु प्रकृतेः सादृश्ये लक्षणायामपि तस्य वाचकलुप्तत्वे किं बाधकं सादृश्ये तस्य शक्त्यभावात् । तावतैव एतन्मते वाचकलुप्तत्वव्यवहारात् ॥ तथा च रसगङ्गाधर एव—'कुचकलशेष्वबलानामलकायामथ पयोनिधेः पुलिने । क्षितिनाथ कीर्तयस्ते हारन्ति हरन्ति हीरन्ति ॥' इति क्विबन्ते वाचकधर्मलुप्तामुदाहृत्योक्तम्, तत्र हारादिशब्दालक्षणया हारादिसादृश्यं बोधयन्ति । लुप्तोऽपि स्मृतः क्विबाचारमिति पक्षे वाचकधर्मलोपः स्पष्ट एव, हारादिशब्द एव लक्षणया तादृशसादृश्याभिन्नमाचारमिति पक्षेऽपि सादृश्यस्येव धर्मस्यापि बोधात्तन्मात्रबोधकाभावाल्लोप एवेति तत्कोऽयमुपालम्भ इति चेत् ॥ उच्यते—सादृश्ये लक्षणास्वीकारेऽपि वाचकलुप्तत्वानुपपत्तेरित्यरविन्दसुन्दरं मुखमित्येतद्वाक्यार्थबोधविचारावसरे प्रपञ्चितत्वात् । तदभिप्रायेणात्र क्यङ्क्विबादिसाधारण्येनानुपपत्त्युद्भावनात् । समुदायस्यैव विशिष्टार्थे शक्तिरिति पक्षेऽपि सादृश्यमात्रबोधकत्वाभावाद्वाचकलोप एवेति द्वितीयपक्षं दूषयति—**वाचकमात्रेति** । इदं च क्यङादिकमेवाधिकृत्य बोध्यम्, क्विबन्ते वाचकमात्रलुप्तत्वाभावापत्तेरिष्टापत्त्यैव परिहारात् । तत्रोभयलुप्तत्वाङ्गीकारेण एकमात्रलुप्तत्वाङ्गीकारात् । ननु क्यङादिकमप्यधिकृत्य रसगङ्गाधरोपरि नेदमनिष्टापादानं क्यङादावपि तैरुभयलुप्तत्वाङ्गीकारेण वाचकमात्रलुप्तत्वा[न]भ्युपगमात् । तथाहि क्यच्क्यङोर्वाचकलुप्तोदाहरणत्वं प्राचीनोक्तमयुक्तमेव तन्मात्रलुप्ताया एव वाचकलुप्तपदार्थत्वात् । अत्र च धर्मलोपस्यापि संभवेन द्विलुप्तान्तर्भावस्य न्याय्यत्वात् । न च क्यङाद्युक्ताचार एव सामान्यधर्मोऽस्तीति वाच्यम् । धर्ममात्ररूपस्याचारस्योपमायामप्रयोजकत्वात् । 'नारीयते समरसीम्नि सपत्नसेना' इत्यादौ प्रकारान्तरेणोपस्थितानां कातरत्वादीनामाचारभेदाध्यवसाये सत्येव साधारण्यस्वीकारात् । अन्यथा 'त्रिविष्टपं तत्खलु भारतायते' इत्यादौ सुप्रसिद्धत्वादिरूपाचारोपस्थितिमात्रेणोपमानिष्पत्तिप्रसङ्गात् । न चेष्टापत्तिरनुभवविरोधात् । 'सुपर्वभिः शोभितमन्तराश्रितैः' इत्यादिबोधोत्तरमेव तदुल्लासात् । अत आचारमात्ररूपो धर्मो नोपमानिर्वाहक इति धर्मलोपोऽप्यत्रावश्यक उपमानप्रयोजकतावच्छेदकरूपेण धर्मवाचकपदशून्यत्वस्यैव धर्मलोपशब्दार्थत्वात् । अन्यथा 'मुखरूपमिदं वस्तु प्रफुल्लमिव पङ्कजम्' इत्यादौ वस्तुत्वादिरूपधर्मोपादानेन पूर्णोपमापत्तेरिति तत्र व्यवस्थापितत्वात् ॥ अतः क्यङादावुभयलुप्तत्वापादानमपीष्टापादानमेवेति कथं दूषणत्वेन तदुपन्यास इति चेत्—सत्यम् । तथापि

१. 'वाचकधर्ममात्र' ख.

प्राचीनमतानुसारित्वदशायां तत्र तथा व्याख्यातत्वेन तदानीं यथोक्तस्यानिष्टा पर्यवसानसंभवेन दोषत्वेनोद्भावितुमर्हत्वात् । अविशेष्यते स तु परमार्थतोऽत्र वाचकमात्रलोप उक्तरीत्या धर्मलोपस्यापि सत्वादिति । तदेतच्चण्डीदासेनाप्युक्त तमेव । तथा चाह—वस्तुतस्तु 'सुतीयति' इत्यादौ स्नेहनिर्भरत्वादेर्गम्यमानतया लोपोदाहरणान्यमूनि, एवंविधविचारविरहदशायामपि चोभयलोपोदाहृतियोग्यानी क्यङादीनामेव औपम्यप्रतिपादकत्वमिति व्यवस्थाप्य तदनन्तरमयं ग्रन्थः । तथा वाचकस्य सत्वाद्धर्मस्य चानुपादानाद्धर्ममात्रलोपोदाहरणत्वमेव युक्तम् । यदपि क्य दीनामौपम्यार्थकत्वपर्यन्तं न विभाव्यते, तदपि धर्मस्याप्युपमानिर्वाहकस्यानुपा दुभयलोपोदाहरणम् । सर्वथापि न वाचकमात्रलुप्तत्वमिति तस्यार्थः । तत्कथं नात्र लोपोऽपीति ॥ तत्रायं प्राचामभिप्रायः । धर्मत्वव्याप्यरूपेण धर्मबोधकपदोपादानस्य धर्मलोपो वक्तुं युक्तः । इवादिपदैस्तु धर्मत्वरूपेणैव तद्बोध इति 'चन्द्र इव मु इत्यादौ धर्मलुप्तमध्याहृतम् । व्याप्यत्वं च तदनतिरिक्तत्वमात्रं न तु न्यूनवृत्तित्वम् सुत्वादेः केवलान्वयिधर्मस्योपादाने तस्य धर्मत्वन्यूनवृत्तित्वानुपपत्त्या धर्मलोपा न चैवं 'मुखरूपमिदं वस्तु' 'घट इव पटो द्रव्यम्' इत्यादेरपि पूर्णोपमात्वं स्यात्, द्रव्यत्वादिरूपेण धर्मस्योपादानसत्वादिति वाच्यम् । इष्टापत्तेः । तथा हि किमत्र त्वमापाद्यते, उत पूर्णत्वम्, आहोस्विच्चमत्कारः । नाद्यो द्रष्टत्वात्, नान्त्यः आपा भावात् । पूर्णत्वस्य उपमात्वस्य वा चमत्कारप्रायोजकत्वविरहात् । किंतु विपर्य यस्यैव तथात्वात् ॥ यत्तु 'त्रिविष्टपं तत्खलु भारतायते' इत्यादौ सुप्रसिद्धत्वादिरू रोपस्थित्या उपमानिष्पत्तिप्रसङ्ग इति ॥ तदप्यसत् । तत्राप्युपमानिष्पत्तौ बाधकाभाव परंतु सुपर्वत्वादिधर्मप्रयुक्तसादृश्यप्रतीतावेव चमत्कारोल्लासो न तु प्रसिद्धत्वादिप्रयु द्धिमात्रात् । तत्रोपमाया एव निष्पत्तौ 'उपमानादाचारे' इत्यादिसूत्राणाम् उभयस्य रोधापत्तेः । न हि क्यङादिस्थले धर्मलोपस्वीकारेणापि नात्रोपमानिष्पत्तिरिति वक्तुं क्यम् । धर्मलुप्तोपमोदाहरणत्वं क्यजादीनामिति तेनापि स्वीकृतत्वात् । धर्मलोपोदाह नीति चण्डीदासग्रन्थस्य द्विलुप्तान्तर्भावस्य न्याय्यत्वादिति च रसगङ्गाधरग्रन्थस्य पन्यासात् । न हि व्यापकधर्मानवच्छिन्नस्य तद्व्याप्यधर्मावच्छिन्नत्वं वक्तुमर्हति । पृथि व्यनवच्छिन्नस्य जलादेरपि पृथिवीविशेषमध्ये परिगणनस्यानुक्तिसहत्वात् । न च नारी इत्यादावेव तैरुपमानिष्पत्तिरभ्युपगता, न तु भारतायते इत्यादौ इति वाच्यम् । धर्मानुपादानस्योभयत्राप्यविशेषणवैषम्यानुपपत्तेः । विरोधस्यान्तरावगमोत्तरमपि त यप्रसङ्गात् । तस्मान्नारीयत इत्यादावाचारस्यैव धर्मत्वाद्विषयविशेषमहिम्ना चमत्कारो न धर्मलुप्तत्वम् । इदं च सूत्रकर्तुर्भगवतः पाणिनेरप्यभिमतम् । न ह्याचाररूपस्य सादृश्यानुपपादकत्वे 'उपमानादाचारे' इति सूत्राणामुक्तिसंभवः । वस्तुतस्तु तत्तदु पमेयसमभिव्याहारवशात्क्यङादिभ्यो विशेष्यप्रकारेणैव आचारोपस्थितिर्भवति । रे इति तु नानाविधशक्यतावच्छेदका ... मम्, न तु सम ...

पः तथाचारादिमात्रवाचकत्वाभावात्तल्लोपः' इत्यस्यापि सुवचत्वादिति ध्येयम्। उपमानोपमेयनिष्ठसदृशधर्मस्योपमाप्रयोजकत्वात्तत्प्रयोज्यस्योपमानोपमेययोः संबन्धस्य साम्यस्य ततोऽन्यत्वात्तदवाचकत्वं क्यङादीनामिति चक्रवर्तिनः। अत्रापि साधर्म्यातिरिक्तः साम्यरूपः संबन्धोऽन्वेषणीय इति न्यायपञ्चानना-दयः । उभयनिष्ठसमानधर्मबुद्धिग्राह्यसादृश्यं पदार्थान्तरमित्यभिप्रायेण च-क्रवर्तिनामुक्तिरिति तत्त्वम् ।

कर्मार्थकणमुलि यथा मम—

'सांवर्तिकतीक्ष्णद्युतिदर्शं पश्यति सुधाकरं बाला ।
विरहेण निधिनिधायं निदधाति स्तनगतं नखाङ्कं ते ॥'

अत्रोभयत्रापि 'उपमानात्कर्मणि च' इति सूत्रेण णमुल्। णमुल्प्रकृति-

---

तदादिपदेषु बुद्धिस्थत्वादिवत् नारीयत इत्यादौ क्यङाचारत्वादिना धर्मस्य यथोक्तसम-भिव्याहारबलादुक्तरीत्या लाभ इति न धर्मलोपापत्तिः । यथा ह्युपमानादित्युपमानत्वेन रूपेण नानाविधानां संग्रहः । तथा आचारत्वेन रूपेण तत्तद्धर्माणामपि । एतावांस्तु विशेषः—यत्र धर्मः प्रसिद्धस्तत्र तदुपादानमनावश्यकम्, यथा हंसायते नायिकेति। क्व-चित्स्पष्टार्थं तत्प्रयोगोऽपि यथा—'हंसायते चारुगतेन कान्ता' इत्यादौ । यत्र तु न तथा प्रसिद्धिस्तत्र तदुपादानमावश्यकम् । यथा—'त्रिविष्टपं तत्खलु भारतायते' इत्यादौ सुपर्वभिः शोभितमित्यादेः । न चैतादृशानुभवे मानाभावः, आचारत्वेनैव तदुपस्थिते-रिति वाच्यम्, तावन्मात्रस्य सादृश्यानिर्वाहकत्वमिति तदुक्तरीत्या सूत्राद्यसंगत्यापत्तेः । तदाशयेनैव प्राचीनैरपि क्यङादीनां धर्मवाचकत्वाङ्गीकारात् । अत एव तत्र भाष्यका-रैरपि कुटीयति प्रासादे, प्रासादीयति कुट्याम्, इति धर्मार्थकशब्दान्तरहीनमेवोदाहृतम् । एवं 'ओजायमानं यो अहिं जघान' इति भाष्योदाहृतश्रुतावपि तथैव प्रयोगः। ओजःपदं लक्षणया तद्वत्परम्। 'अहिर्वृत्रासुरे सर्पे' इत्यभिधानम्। तदेवमुपन्यस्तनानाप्रमाणानुगृही-तानुभवबलात्स्वीकुरु, वा आचारमात्रस्योपमानिर्वाहकत्वं, प्रतिजानीहि वा क्यङादिभ्यो विशेषप्रकारकं बोधमिति । सर्वथा क्यङादयो धर्मवाचका इति सिद्धमित्यलमतिनिर्ब-न्धेन । प्रकृतमनुसरामः ॥ क्यङादीनां सादृश्यबोधकत्वनिरासाय मतान्तरमाह—**उ-पमानेति** । एतन्मते जयरामभट्टाचार्योक्तं दूषणमाह—**अत्रापीति** । **अन्वेषणीय इति** । समानधर्मस्यैव नैयायिकमते सादृश्यपदार्थत्वादिति भावः । मीमांसकमतमवलम्ब्य पूर्वमतं योजयति—**उभयनिष्ठेति** ॥ **उपमानादिति** । यद्यपि 'उपमाने कर्मणि च' इत्येव सूत्रस्वरूपं कर्मणि । कर्तरि चोपमाने उपपदे धातोर्णमुल् भवतीति सूत्रार्थः । तथापि कर्मणि चेत्यंश एवात्र सूत्रस्वरूपकथनपरः तेन चैकदेशद्वारा 'उपमाने कर्मणि

भूतस्यैव धातोराख्यातान्तस्यानुप्रयोगोऽनुशासनसामर्थ्यात् । पूर्ववदेवा... वादेरध्याहारः ॥

यत्तु—भेदः सजातीयश्च णमुलोऽर्थः । भेदः सकर्मकक्रियायोगे कर्म... अन्यत्र सजातीयक्रिया कर्तर्येवान्वेति ।

तथा च—

'मृधे निदाघघर्मांशुदर्शं पश्यन्ति तं परे ।'

इत्यस्य 'निदाघघर्मांशुभिन्नं तत्कर्मकं यन्निदाघघर्मांशुदर्शनसजाती... दर्शनं तद्वन्तः परे' इत्यर्थः ।

'स पुनः पार्थसंचारं संचरत्यवनीपतिः ।'

इत्यत्र तु पार्थभिन्नत्वे सति पार्थसंचारसजातीयसंचारवानित्यर्थः... अत एव 'घर्मांशुदर्शं घर्मांशुं पश्यति' 'पार्थसंचारं पार्थः संचरति' इत्या... दिर्न प्रयोगः । अतः पूर्णोपमैवेयमिति ॥ तन्न । भेदादौ णमुलशक्ति... धकानुशासनाभावात् ॥ किं च । अन्वयितावच्छेदकावच्छिन्नप्रतियो... तावच्छेदकत्वसंबन्धेन प्रकृत्यर्थस्य भेदान्वयो न नियतः । देशकाला... कृतभेदविवक्षया तथाप्रयोगस्यापीष्टत्वात् ।

---

च' इति सूत्रं विवक्षितम् । उपमानादिति तूपमानोपपदाद्धातोर्णमुल्प्रत्ययः प्रतीयते... यद्वा उपमानं अतति प्राप्नोति स्वप्रकृतिभूतधातुपूर्ववर्तित्वसंबन्धेनेति । 'अत' धातोः... क्विप्प्रत्यये प्रथमान्त एव णमुलो विशेषणम् । यद्वा उपमानशब्दो भावव्युत्पत्त्या सा... श्यपरः । अन्यत्पूर्ववत् । ननु 'तीक्ष्णद्युतिदर्शं पश्यति' इत्यत्र दृशेर्वारद्वयं प्रयोगः पु... रुक्तो व्यर्थश्चेत्यत आह—तत्प्रकृतीति । यस्माद्धातोर्णमुल् प्रयुज्यते तस्येत्यर्थः । अनु... शासनेति—यस्माद्धातोर्णमुल् विहितः स एवानुप्रयोक्तव्य इत्यर्थकेन 'कषादिषु य... विध्यनुप्रयोगः' इति सूत्रेणेत्यर्थः ॥ णमुलो भेदशक्तिकल्पनेऽपि निदाघघर्मांशुं दर्शं नि... दाघघर्मांशुं पश्यतीति प्रयोगो दुर्वार एव उभयव्यासज्यवृत्तिधर्माद्यवच्छिन्नप्रतियो... ताकभेदस्य स्वस्मिन्नपि सत्वात् इत्यभिप्रायेणाह—किं चेति । ननु प्रकृत्यर्थस्य प्र... यार्थे भेदे अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेनान्वयाभ्युपगमात् क... क्तप्रयोगापत्तिः । व्यासज्यवृत्त्यादिधर्मस्यान्वयितानवच्छेदकत्वात् । तदवच्छिन्नप्रति... गितायाः संसर्गत्वासंभवात् । निदाघघर्मांशुत्वादिरूपतादृशधर्मावच्छिन्नप्रतियोगिताक... दस्य निदाघघर्मांशुप्रभृतावसत्त्वादित्याशङ्क्याह—अन्वयितेति । तथा च णमुलर्थे... प्रकृत्यर्थस्योक्तप्रतियोगितयान्वयनियमाभ्युपगमे यत्रैकस्यैवोपमानोपमेयत्वं तत्रान्व... नुपपत्तिः उक्तसंसर्गेण प्रकृत्यर्थभेदान्वयस्य तत्र बाधितत्वात् ॥ ननु णमुल्स्थले ता...

'लङ्कापुरादतितरां कुपितः फणीव
निर्गत्य जातु पृतनापतिभिः परीतः ।
क्रुद्धं रणे सपदि दाशरथिं दशास्यः
संरब्धदाशरथिदर्शमहो ददर्श ॥'

इत्यनन्वयालंकारे भेदाप्रतीत्या न भेदेऽपि शक्तौ प्रमाणमस्ति ॥ न च तत्र भेदस्यानन्वय एवेति वाच्यम् । प्रत्ययार्थत्वं कल्पयित्वा तदनन्वयकल्पनायामनौचित्यात् । अन्यथातीतकृतिके चैत्रे 'चैत्रः पचति' इति प्रयोगापत्तेः । वर्तमानत्वस्य बाधेन कृतावनन्वयात्पाकानुकूलकृतिमानिति बोधसंभवात् । शक्यतापर्याप्त्यधिकरणतावच्छेदकस्यैव शक्यत्वाच्च । अत एव 'श्रोतव्यः श्रुतिवाक्येभ्यः' इत्यत्र श्रुतिपदस्य प्रमाणशब्दे लक्षणा ।

प्रयोगो नास्त्येवेत्याशङ्कां परिहरन्नाह—**लङ्केति** । रसगङ्गाधरेऽनन्वयोदाहरणमेतत् । 'नैर्ऋतो यातुरक्षसी' इत्यमरः । चवर्गीयजकारादिरपि जातुशब्दो राक्षसार्थं इति तव्द्याख्यातारः ॥ ननु तत्र भेदस्यानन्वय एव, इवपदाध्याहारवादिना त्वयापि इवार्थभेदस्य तत्रान्वयबोधवारणाय तथैव वाच्यत्वादित्याशङ्कते—**न च तत्रेति** । **कल्पयित्वेति** । तथा च इवपदस्य भेदशक्तिरुभयसिद्धत्वात्तत्रानुपपत्त्या भेदान्वयस्वीकारेऽपि णमुल्प्रत्ययस्य भेदशक्तेः प्रमाणतयासिद्धत्वेन तच्छक्तिं कल्पयित्वा तदनुपपत्त्यानन्वयकल्पनमयुक्तमेवेत्यर्थः । किंच युगपदुभयार्थबोधकपदानामेकार्थानन्वयेऽर्थान्तरस्याप्यनन्वयव्युत्पत्तिविरोधादपि नैवमित्याह—**अन्यथेति** । एकार्थान्वयाभावेऽप्यन्यार्थान्वयस्वीकारे इत्यर्थः ॥ ननु यत्र तदर्थान्वयायोग्यत्वे तत्पदस्यासाधुत्वम्, तत्रैव तदर्थान्वयव्यतिरेकेण नार्थान्तरमात्रे तत्पदप्रयोगः । यथा कृतेरतीतत्वदशायां पचतीति लटो साधुत्वात् 'वर्तमाने लट्' इति वचनात् । अत्र तु भेदांशान्वयेऽपि न तस्य साधुत्वप्रसक्तिर्भेदातिरिक्तार्थान्वयबोधः स्यादेव । अन्यथा इवपदाध्याहारवादिनस्तवापि कथं भेदानन्वयेऽपि तदन्यार्थान्वय इत्यत आह—**शक्यतेति** । तत्पदशक्तिपर्याप्त्यधिकरणेत्यत्र तात्पर्यम् । तथा च भेदानन्वये तदन्यार्थमात्रस्य शक्तिपर्याप्त्यनधिकरणत्वात् तद्बोधार्थं लक्षणा स्यात् । अत एव पुष्पवन्तावित्यादौ 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इति चन्द्रसूर्ययोर्व्यासक्तशक्तिस्वीकारात् । केवलं चन्द्रत्वादिप्रकारकबोधो लक्षणयैवेति संप्रदायः ॥ ग्रन्थान्तरसंवादमप्याह—**अत एवेति** । उभयत्र व्यासक्तायाः शक्तेरेकधर्ममात्रप्रकारकशाब्दजनकत्वासंभवादेवेत्यर्थः । **प्रमाणशब्द इति** । शब्दतदुपजीवीप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानजन्यप्रमाणशब्दत्वस्य श्रुतिलक्षणत्वात्तत्र स्मृतिपुराणादिसाधारणाय प्रमाणशब्दमात्र एव श्रुतिपदस्यात्र तात्पर्यम् ।

१. 'इत्यादावनन्वया' क-ख. २. 'भेदस्याप्रतीत्या' ख.

अन्यथा तद्घटकपदार्थेषु खण्डशक्तौ प्रमाणशब्दस्य शक्त्यैव बोधसं
तद्विरोधात् ॥ अत्रापि लक्षणैवास्तु को दोष इति चेत् । श्रौतीत्वानुपपत्ति
रेवेति दिक् ।

कर्तृणमुलि यथा मम—

'त्वद्विप्रयोगदहनज्वरदह्यमाने
ये ये गुणा हृदि वसन्ति पुरो मृगाक्ष्याः ।
ते वह्निमध्यविलसद्बिसतन्तुनाशं
नष्टास्त्रपाधृतिविवेकमुखाः समस्ताः ॥'

अत्र प्रागुक्तसूत्रे चकारेण कर्तुरनुकर्षात्कर्तरि णमुल् । एवं त्रयोदश
धैकलुप्ता व्याख्याता ।

अथ द्विलुप्ता व्याख्यायते—

**धर्मद्योतकलुप्क्विप्समासयोः**

इति । नहीयं वाक्ये संभवति । 'मुखं चन्द्रः' इत्यतः सादृश्याप्रतीतेः
नापि तद्धितगा । वत्यादेरेव धर्मवाचकत्वेन तल्लोपाभावात् ।

---

तत्र च कैश्चित्खण्डशक्तिस्वीकारेण शब्दस्य श्रुतिपरत्वं शक्त्यैव । विशिष्टशक्तिपक्षे
शेषणविशेष्यभावे विनिगमकाभावेन गौरवात् । अतो न लक्षणेत्युक्तम् । तत्र च
व्यासक्तशक्तेस्तथाप्यनपायेन शक्यांशमात्रबोधे लक्षणैव स्यात् इति न्यायमालायां
तीयसूत्रव्याख्यानावसरे जयरामभट्टाचार्यैरेव लिखितमिति । अवश्यं व्यासक्त
मतां पदानामेकमात्रार्थबोधकत्वे लक्षणेति अत्रापि साम्यादेवेति फलितार्थः ॥ अ
पीति । इदं च त्वयाप्यवश्यमभ्युपेयं इवपदस्यापि व्यासक्तशक्तिकत्वे भेदविनिर्मु
न्यार्थबोधे लक्षणाध्रौव्यादिति भावः । **श्रौतीत्वेति** । ननु सादृश्ये लक्षणायां
उपमेति मते एतद्दोषसंभवेऽपि यत्पदार्थविशेषणस्योपमानत्वनियमस्तत्रैव श्रौतीति
वस्थापयतां जयरामभट्टाचार्याणां मतेन कथमेतदापादनं सादृश्यलक्षणायामपि
र्थसादृश्यविशेषणतापन्नस्य कर्मादिकारकस्य उपमानत्वनियमस्य क्षतिविरहादिति
सत्यम् । सादृश्ये लक्षणायामेव आर्थत्वमिति व्यवस्थावादिभिरप्येतत्पक्षमालम्ब्य णमुल
यस्य भेदादिशक्तिस्वीकारसंभवात् । तान्प्रत्येवार्थत्वापादनात् । न च तेषामत्रेष्टापत्ति
उपजीव्यविरोधात् । न चांशान्तर एव तदुपजीवनमिति वाच्यम् । तदा प्रलक्ष
कल्पयित्वेत्यादिपूर्वोक्तदूषण एव उभयसाधारण्येन तात्पर्यात् । तदेवाह—दिगि
इत्येकलुप्तोपमाविवरणम् ॥

---

१. 'कर्म' ख.

तत्र क्विपि यथा मम—

'बाणन्ति वारिधाराः पवनाः पवयन्ति वह्नयति विद्युत् ।
घनति घना घनमाला पथिकानां कामनुन्नानाम् ॥'

'सर्वप्रातिकेभ्य आचारे क्विप् वा वक्तव्यः' इति भाष्यकारवचनात् बाणा इवाचरन्ति इत्याद्यर्थे क्विप् । तस्याचारार्थकतायामपि तस्य सर्वलोपित्वेन श्रूयमाणत्वाद्धर्मलोपव्यवहारः इवाद्यप्रयोगस्तु स्पष्ट एव ।

समासे यथा—

'अयं क इत्यन्यनिवारकाणां गिरा विभुर्द्वारि विभुज्य कण्ठम् ।
दृशं दधौ विस्मयनिस्तरङ्गां स लङ्घितायामपि राजसिंहः ॥'

अत्र 'राजा सिंह इव' इत्युपमितसमासः । न चात्र 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः ॥' इति सिंहपदं श्रेष्ठपरमिति । कण्ठं वक्रीकृत्य पश्चादवलोकनोपपत्तये उपमितसमासस्यैवात्र युक्तत्वात् ॥ न चैवं सामान्यधर्मप्रयोगात्तत्समासानुपपत्तिरिति वाच्यम् । अत्रोपमानिमित्तसामान्यधर्मप्रयोग एव समासनिषेधात् । शौर्यादिद्वारा तत्र सिंहोपमायां सिद्धायां पश्चादेव तत्स्वभावस्य तत्र वर्णनात् ।

**क्यचि समाज्ञकलुप्त् ।**

उपमेयद्योतकयोर्लोपे उपमा क्यच्प्रत्यय एव भवतीत्यर्थः । यथा—

'मा संभावय मां गिरा मधुरया कुर्या न चित्तोत्सवं
वातान्दोलविलोलपङ्कजदलद्रोहस्पृशा वा दृशा ।
आयाते मयि यच्चकार भवती कृत्यौचिती संभ्रमं
तेनैवाद्य ममेन्दुसुन्दरमुखि स्वात्मा महेन्द्रीयति ॥'

अत्र 'महेन्द्रमिवात्मानमाचरति' इत्यर्थे क्यच् ॥ यद्यप्यत्रात्मैवोपमेयः, तथापि कर्तृकर्मभूतयोरात्मनोरुपाधिभेदेन विवक्षया कर्मीभूतस्यात्मनोऽश्रूयमाणत्वादुपमेयलोपव्यवहारः ।

अत्र दीक्षिताः—धर्मवाचकलुप्ता तद्धितेऽपि संभवति । यथा—

'नृणां यं सेवमानानां संसारोऽप्यपवर्गति ।
तं जगत्यभजन्मर्त्यश्चञ्चा चन्द्रकलाधरम् ॥'

अत्र हि चञ्चेव चञ्चेति 'इवे प्रतिकृतौ' इति कन् । 'लुप् मनु' इति तस्य लोपः । लिङ्गं तु प्रकृतिवदेव । एवं वध्रिकेव वध्रिका इत्या वपि । अत्र हि साधारणधर्मस्याचेतनत्वादेर्वाचकस्य च लोपः ए एवेत्याहुः ॥

अन्ये तु—चन्द्रमौलिभजनराहित्यरूपधर्मप्रयोगान्न तल्लोपः ॥ न च तस्य मर्त्यविशेषणत्वेनोपादानात्तस्योपमानभूतचञ्चायामनन्वयान्न सा ण्यमिति वाच्यम् ।

'यद्भक्तानां सुखमयः संसारोऽप्यपवर्गति ।
तं शंभुमभजन्मर्त्यश्चञ्चा स्वात्महिताकृतेः ॥'

इत्यत्रापि धर्मलुप्तत्वप्रसङ्गे तत्र धर्मश्रवणमिति स्वोक्तिविरोधाप उभयत्र शाब्दान्वयबोधं विनापि वस्तुत उभयवृत्तित्वज्ञानमेव सा नियामकमिति त्वत्रापि तुल्यम् । उपमेयतावच्छेदकत्वेनैवात्र चन्द्रमौ भजनराहित्यं विवक्षितम् । साधारणश्च धर्मः स्वात्महिताकरणमिति शपथमात्रम् । चन्द्र इव मुखं रमणीयमित्यत्रापि धर्मान्तरप्रयुक्तसा विवक्षितमिति शपथस्यापि संभवाद्धर्मलोपापत्तेरित्याहुः ॥

धर्मोपमानलुप्ता वृत्तौ वाक्ये

धर्मोपमानलुप्ता समासे वाक्ये चेत्यर्थः । तद्धिते तु नेयं संभव उपमानपदोत्तरमेव तद्विधानात् । अत एव न श्रौत्यपि इवादेरप्रयो उपमानपदाप्रयोगे इवादेरप्रयोगात् ।

तत्र समासे यथा—

'ढुण्ढोलन्तो मरिहिसि कण्टअकलिआइ केअइवणाइं ।
मालइकुसुमसरिच्छं भमर भमन्तो ण पाविहिसि ॥'

अत्र मालतीकुसुमसदृशमित्यस्य मालतीकुसुमनिष्ठसादृश्यप्रतियो मित्यर्थः । यद्यपि ............................................................ तथापि ............................................................ ॥

श्रीः । 'अन्वेषयन्मरिष्यसि कण्टककलितानि केतकीवनानि । मालतीकुसुम भ्रमर भ्रमन्नपि न प्राप्स्यसि ॥' [इति च्छाया ।] अत्र कुसुमस्यैवोपमानत्वा तल्लोप इत्याशङ्कते—यद्यपीति । पूर्वोक्तरीत्या समासे ... ।

वाक्ये यथा—

'जं तुज्झ सई जाआ असईओ सुहअ जं अम्हे ।
ता किं फुट्टउ वीअं तुज्झ समाणो जुआ णत्थि ॥'

त्वन्निष्ठसादृश्यप्रतियोगी युवा नास्तीत्यर्थः । यद्वा 'मालइकुसुमेण समं' इति पूर्वश्लोके पाठे वाक्यगा बोध्या ।

अत्र दीक्षिताः—वाचकोपमानलुप्ता स्वरूपत एवानुदाहृता समासेऽस्ति । तथा धर्मोपमानलुप्ता वृत्तिवाक्ययोरेवोक्ता तद्धितेऽपि । तथा हि—काकागमनमिव तालपतनमिव काकतालम् । 'समासाच्च तद्विषयात्' इति समासानुवादेन प्रत्ययविधानाज्ज्ञापकात्समासः । 'इवार्थविषयात्समासाच्छप्रत्ययः स्यात्' इति हि तदर्थः । न चेवार्थे समासं विना तत्संभवतीति तस्मादेव तात्पर्यग्राहकात्समासः । तत्र काकशब्दस्तदागमने, तालशब्दस्तत्पतने वर्तते । तत्र काकागमनं देवदत्तगमनस्योपमानम्, तालपतनं दस्यू-

---

व सती जाया असत्यः सुभग यद्वयम् । तत्किं स्फुटयतु बीजं तव समानो युवा नास्ति ॥' [इति च्छाया ।] त्वत्सदृशयुवान्तराभावादेव त्वज्जायायाः पुरुषान्तरसंगमाभावः, अस्माकं च स्वपतीनपहाय त्वत्संबन्ध इति किमुभयत्रापि हेत्वन्तरगवेषणयेत्यर्थः ॥ नन्वत्र त्वत्समानो युवा नास्तीत्यस्य युवाभावस्य बाधितत्वेन तत्सादृश्यरूपविशेषणाभावपर्यवसायित्वेन त्वत्सदृशाभाव एव विवक्षित इति कथमुपमा, अनन्वयस्यैवोचितत्वादित्यस्वरसादाह—**यद्वेति** । इदं च सर्वं मालत्यादिनिष्ठसादृश्यप्रतियोगिनमित्यर्थस्वीकारे । प्रागुक्तनिष्कर्षरीत्या मालत्यादिप्रतियोगिकसादृश्याश्रयमित्येव बोधाभ्युपगमे तु गोवर्धनाचार्यपद्यमुदाहार्यम्—'वासरगमनमनूरोरपि वियदवनिश्च वामनैकपदम् । जलधिरपि पोतलङ्घ्यः सतां मनः केन तुलयामः ॥' अत्र केनेति सामान्यनिर्देशादुपमानलोपः । तुलयाम इत्युक्त्या तस्य ज्ञानाभाव एव तात्पर्यं नत्वसत्त्वेऽपि । तत्सत्त्वेऽपि ज्ञानाभावेन तत्प्रतियोगिकसादृश्याश्रयत्वेन प्रकृतनिरूपणानुपपत्तिसिद्धौ असत्त्वे तात्पर्यकल्पने गौरवात् । सतां मनः किंसमं ब्रूम इति च वाक्यगतत्वं बोध्यम् ॥ **स्वरूपत एवेति** । एतद्भेदस्यैव प्राचीनैरपरिगणनात् । **तद्धितेऽपीति** । तथा चात्र धर्मिणः परिगणितत्वेऽपि विभागे न्यूनत्वमिति भावः । समासं विना उक्तसूत्रार्थानुपपत्तावेव तदन्यथानुपपत्तिबलात्समासः स्यान्नत्वन्यथेति । समासव्यतिरेकप्रयुक्तां सूत्रार्थानुपपत्तिं प्रदर्शयिष्यन्सूत्रार्थं व्याचष्टे—**इवार्थेति** । अनुपपत्त्यंशं विभज्य दर्शयति—**न च इवार्थ इति** । इदं च प्रसिद्धिवशादुक्तम् । सुप्सुपेत्यनेनापि समाससिद्धेः कैयटेनाभिहितत्वात् । **वर्तत इति** । स्वसमवेतयथोक्तक्रियायां लक्षणयेति भावः ॥ **देवदत्ते-**

पनिपातस्य, तयोरिवशब्दस्य च काकतालमिति समासे लोपः स
ततोऽपि काकतालमिव काकतालीयमिति 'समासाच्च तद्विषयात्'
छप्रत्ययः । तालपतनेन यथा काकवधस्तथा चौरेण देवदत्तस्येति तद्धि
तथा च 'काकतालीयो देवदत्तस्य वधः' इत्यत्र तद्धिते उपमानस्य का
धस्यातर्कितोपनतत्वस्य समानधर्मस्य च लोपो वक्तव्य एवेति ॥

अत्रोच्यते—सत्यमेव काकतालीयेत्यत्र छप्रत्ययप्रकृतिभूते स
वाचकोपमानलोपोऽस्ति । परंतु न प्रकृते तदनुक्त्या न्यूनत्वप्रसङ्गः । त
मासस्य स्वातन्त्र्येण प्रयोगाभावात् । तथा हि—छप्रत्ययविधानबलेन
समाससिद्ध्या यत्र छप्रत्ययो विषयस्तत्रैव समासो न तु छप्रत्ययविनिर्मुक्त
विभागश्चात्र स्वातन्त्र्येण प्रयोगयोग्यानामेव कृत इति ।

वस्तुतस्तु—नात्र वाचकलोपोऽपि । समासस्यैव वाचकस्य विध
त्वात् । इवार्थविषयात्समासादिवार्थे छप्रत्ययविधानबलेनेवार्थ एव
सस्य वाच्यत्वात् । तथा च कैयटेन व्याख्यातम्—'काकस्यागमनं
चैत्रस्यागमनम्, तालस्य पतनमिव दस्योरुपनिपातः' इत्येक इवार्थः । त
समासः । तेन 'पतता तालेन यथा काकस्य वधस्तथा दस्युना चै
वधः' इति द्वितीय इवार्थः । तत्र च छप्रत्ययः—इति ॥ अवश्यं

---

ति । 'यच्चौराणामस्य च समागमो यच्च तैर्वधोऽस्य कृतः । उपनतमेतदकस्मादा
काकतालीयम् ॥' इति चित्रमीमांसोदाहरणाभिप्रायकम् । **तयोरिति** । काक
तालपतनयोरित्यर्थः । तत्रैव वाचकलोपमपि दर्शयति—**इवशब्दस्य चेति** । त
**र्कितेति** । 'काकतालीयो देवदत्तस्य वधः' इति वाक्याभिप्रायेण उक्तश्लोके अक
दिति धर्मस्यापि निर्देशात् । तृतीयचरणस्यान्यथानिर्माणे तत्रापि धर्मलोपो द्रष्ट
ननु क्यङादीनामपि स्वातन्त्र्येण प्रयोगायोग्यत्वात्तद्विभागोऽप्येवमसंमतः स्यादि
तोषादाह—**वस्तुतस्त्विवति** । **कैयटेनेति** । द्वितीयाध्याये 'प्राक्कडारात्स
(आकडारादेका संज्ञा) इति सूत्र इत्यर्थः । पञ्चमाध्याये 'इवार्थे समासः' इति
विशिष्यानभिधानात्स्थलान्तरानुसरणम् । तथा च 'इवार्थे समासः' इति कैयट
नास्तिद्धम् । समासस्यैव सादृश्यवाचकत्वं तदर्थविहितवतिप्रत्ययादिवदिति
किंच त्वयापि तदर्थविहितस्य तद्वाचकत्वमस्वीकृतमित्याह—**अवश्यं चेति** । त
छप्रत्ययस्य इवार्थविहितस्य सादृश्यवाचकत्वमभ्युपगम्य तत्प्रकृतिभूतस्य इवार्थ
स्यैव समासस्य सादृश्यवाचकत्वं नास्तीत्यभिधाने तुरगारूढस्यैव तुरगविस्म

त्वयाप्युपगन्तव्यम्। अन्यथा इवार्थे विहितस्य तद्धितस्यापि तदवाचकत्वप्रसङ्गादिति तत्त्वम्। एवं तद्धितार्थभूताया धर्मोपमानलुप्ताया अपि नात्रोक्तिः। तद्धितोत्पत्तिदशायां काकतालपदस्य तालकृतकाकवधे लक्षणास्वीकारेण तदाश्रयकाकतालपदस्य श्रूणमाणत्वेनोपमानलुप्तत्वाभावात्। न च लक्षणायां मानाभावः। उपमानपरत्वाभावे तदुत्तरमिवार्थे तद्धितानुपपत्तेरेव मानत्वादिति कृतं पल्लवितेन।

---

भावः॥ तद्धितप्रकृतिभूतसमासगतोपमाया आधिक्यं निराकृत्य, तद्धितार्थोपमाया अप्याधिक्यं निराकरोति—**एवमिति। उपमानपरत्वेति।** तालकृतकाकवत्वस्यैवोपमानतायाः सर्वसिद्धत्वात्। तथा च पञ्चमाध्याये कैयटेनोक्तम्—'तालेन तु यः काकस्य वधः स देवदत्तस्य दस्युना वधस्योपमानमिति वधादिः काकतालीयादिशब्दवाच्यः संपद्यते। छप्रत्ययप्रकृत्यंशस्य तत्परत्वं विना तदुत्तरं तद्धितो न स्यादिति भावः। ननूक्तसमासस्य सादृश्यवाचकत्वे मानाभावः। अध्याहृतादिवपदादेव तद्बोधोपपत्तेः। न च इवार्थविषयादित्यनुवादसामर्थ्यात्तथेति वाच्यम्। तत्समासेनं सादृश्यप्रतीतावेव तस्य तात्पर्यात् तस्याश्च इवपदादेवोपपत्तौ समासस्य तच्छक्तिकल्पने गौरवात्। यदपि 'समासाच्च' इति सूत्रे यदि समासोऽपि इवार्थे, छप्रत्ययोऽपि तत्रैव, तर्हि समासेनोक्तत्वात्। छप्रत्ययो न प्राप्नोति इति शङ्कापरं भाष्यम्। तदपि तत्समासात्सादृश्यप्रतीतिरित्येतावन्मात्रतात्पर्यकम्। अत एव तत्र कैयटेन वचनसामर्थ्यात्स्यादिति चेत् शस्त्रीश्यामादिभ्योऽतिप्रसङ्ग इति व्याख्यातम्। न हि शस्त्रीश्यामेत्यादावपि समासस्यैव सादृश्यवाचकत्वमिष्यते। तत्र वाचकलुप्तायाः सर्वैरप्युदाहृतत्वादिति चेत्सत्यम्। तथापि नात्र वाचकलोपोऽपीत्यपिशब्देनोपमानलोपाभावस्य विवक्षितत्वात्। तथा हि—काकतालशब्दयोस्तदागमनपतनयोर्लक्षणा सर्वसंमता। तयोर्देवदत्तागमनदस्यूपनिपातनिष्ठोपमेयतानिरूपितोपमानत्वं च सर्वग्रन्थसंमतम्। पञ्चमाध्याये कैयटेनाप्युक्तम्—'वृत्तिविषये काकतालशब्दौ काकतालसमवेतक्रियावाचिनौ, तत्र काकागमनं देवदत्तागमनस्योपमानं तालपतनं दस्यूपनिपातस्य' इति। एवं स्थिते लाक्षणिकोपमानवाचकपदयोः श्रूयमाणत्वात्कथमुपमानलोपः। न च लक्षणास्वीकारेऽपि तत्र शक्त्यभावादुपमानलोपः—इति वाच्यम्। उपमानार्थकशब्दश्रवणमात्रस्य विवक्षितत्वेन वाचकत्वपर्यन्तस्य वैयर्थ्यात्प्रमाणाभावाच्च। अतएव वाचकलुप्तत्वमपि सादृश्यार्थकपदमात्राभावे सत्येव पूर्वं व्यवस्थापितम्। विवक्षितं च सर्वेषां ग्रन्थकाराणां तथैव। न हि सादृश्यलाक्षणिकपदयोगेऽपि लुप्तत्वस्वीकारे आर्थी पूर्णोपमा कुत्रचिद्विषयमर्हति। आर्थोपमायां सादृश्यवाचकपदाभावनियमात्॥ नन्वेतदर्थमेव सादृश्यतद्विशिष्टान्यतरवाचकपदाभावे वाचकलुप्तत्वमिति रसगङ्गाधरादौ व्यवह्रियते। तत्र सादृश्यवाचकपदाभावेऽपि सादृश्यविशिष्टवाचकपदसत्त्वेन लुप्तत्वानापत्तिरिति

चेत्, सत्यम्। अस्मदपेक्षया गौरवं स्पष्टमेव। सादृश्यार्थकपदाभावस्य वाचकलुप्तत्वव्यवस्थापकत्वे उभयनिवेशापेक्षया लाघवस्य सत्त्वात्। आस्तां प्रागेव बहुशो दूषितं प्रामाणिकमेतत्॥ प्रकृते उपमानार्थकलाक्षणिकपदसत्त्वान्नोपमानलुप्तत्वसंभवः। अथात्राप्युपमानवाचकपदाभाव एवोपमानलोपव्यवस्थापको वक्तव्य इति चेत्, गौरवादिकं तावत्तिष्ठमास्ताम्। एवं सति क्यङ्प्रत्ययेऽपि उपमानलुप्तोपमा स्यात्। न चेष्टापत्तिः। केनाप्यनभिधानात्। चित्रमीमांसा-रसगङ्गाधरयोरपि क्यङादावुपमानलुप्तानभ्युपगमात्। ननु क्यङ्स्थले कथमुपमानलोपापत्तिरिति चेत्। अवहितो भूत्वा शृणुयाः॥ 'ओजसोऽप्सरसो नित्यम्–' इति तत् सूत्रस्थवार्तिकेन विशिष्यौ जायते इत्यत्र क्यङ्प्रत्ययः सिद्धः। तत्र च ओजःशब्दो लक्षणया तद्वत्परः इति वैयाकरणैः कण्ठत एव व्याख्यातम्॥ अस्ति च तत्र वैदिकोऽपि प्रयोगः—'ओजायमानं अहिं जघान' इति॥ ननु तत्र मास्तु लक्षणा दुःसहत्वादिधर्मविवक्षया ओजस एवोपमानत्वसंभवादिति चेत्, न; धर्मान्तरानुसरणक्लेशवैयर्थ्यात्। ओजस्विन उपमानत्वे विशेषणतया उपस्थितस्य ओजस एव साधारणधर्मतायां लाघवात्। 'पौलोमीकुचकुम्भकुङ्कुमरजस्राजन्यजन्मोद्धतांशो रुचयः पुरंदरपुरो सीमामुपस्कुर्वते। एताभिर्लिहतीभिरन्धतमसान्युज्ज्वलाभिर्दिशः क्षोणीमारणतीभिरन्तरतमं व्योमेदमोजायते॥' इति मुरारिपद्ये तद्वदुपमानताया अवश्यवाच्यत्वाच्च॥ किंच—उपमानादेव क्यङादयो विहिताः, उपमानं लक्ष्यार्थस्यापि सर्वसंमतम्। अतो लाक्षणिकादपि उपमानविहितप्रत्ययोत्पत्तौ न किंचिद्बाधकं संकोचे मानाभावात्। स्वीकृतं चात्रैव त्वयापि लाक्षणिकशब्दात् छप्रत्ययादिकम्, तत्केन विशेषेण क्यङादयो लाक्षणिकान्न स्युः। तत्रोपमानपदं साक्षादेव श्रूयते, छप्रत्यये त्वाक्षेपादिति चेत्, किं ततः। शास्त्रतात्पर्यविषयत्वस्योभयत्रापि साम्यात्, अन्यथा ततः प्रत्ययानुपपत्तेः। तदुक्तम्—'सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके' इति॥ अतएव—'अश्वाभिधानीमादत्ते'। इत्यादौ गर्दभाभिधानी व्यावृत्तेरशाब्दभूताया अपि वेदतात्पर्यविषयत्वेन विधेयत्वपर्यवसानम्। 'अरुणयैकहायिन्या पिङ्गाक्ष्या सोमं क्रीणाति' इत्यत्र मीमांसकमते—अरुणयेत्यादीनां क्रियायां एवान्वयात्। गवारुणयोः परस्परावच्छेदत्वकस्य पाकत्वस्वीकारेऽपि तस्य शास्त्रीयत्वं च। अन्यथानरुणयापि गवा सोमक्रयापत्तेः। ततश्च लाक्षणिकत्वात्क्यङादिप्रत्यये उपमानलुप्तत्वापत्तिर्दुर्निवारैव। एवं साधारणधर्मादीनामपि लक्ष्यत्वस्थले धर्मलोपापत्तिरपि स्यात्। तथा पुष्पवत्तेऽस्या मुखं इत्यत्रापि उपमानलोपापत्तिः। पुष्पवत्पदस्य हि 'एकयोक्त्या पुष्पवन्तौ' इत्युक्तया व्यासक्तशक्तिमत्वेन चन्द्रत्वप्रकारकत्वे सति सूर्यत्वप्रकारकशाब्दत्वं कार्यतावच्छेदकं क्लृप्तम्। तत्र चन्द्रत्वादिमात्रप्रकारकबोधत्वस्य तच्छक्तिज्ञानकार्यतानवच्छेदकत्वात्तादृशबोधो लक्षणयैवेति स्वीकारात्। न चेष्टापत्तिः काव्यसममित्यादावर्थान्तरानुसरणक्लेशानुपपत्तेः। लक्ष्योपमानकस्थल एव तत्सौलभ्यात् तथैवास्त्विति चेत्, 'पुष्पवन्त-

१. 'छेदकत्वस्य' क.

अथ त्रिलुप्तामाह—

सामान्यलुब् वृत्तौ ॥ १३ ॥

धर्मद्योतकोपमानानां[1] त्रयाणां लोपे समास एवेत्यर्थः ।

यथा—

'अह सरसदन्तमण्डलकवोलपडिमागऊ मिअच्छीअ ।
अन्तो सिन्दूरिअसङ्खवत्तकरणिं वहइ चन्दो ॥'

अत्र मृगाक्षीति । इह हि मृगस्याक्षिणी इवाक्षिणी यस्या इत्यर्थे 'उपमानपूर्वपदो[2] बहुव्रीहिरुत्तरपदलोपश्च' इति वार्तिकात्समासः । उपमानवाचकाक्षिपदस्य[3] लोपः । अस्य[4] हि 'सप्तमीपूर्वपदस्योपमानपूर्वपदस्य च बहु-

---

विव रम्यं मुखम्' इत्यादौ श्रौत्या अप्युपमानलुप्ताया उपपत्तेः । नहीदमपीष्टापत्त्यापरिहर्तुं शक्यम्, तस्या आर्थत्वनियमस्य सिद्धान्तसिद्धत्वात् । त्वयाप्यभ्युपगमाच्च । तत्रापीष्टापत्तिमभिदधानस्तु उन्मत्तप्राय एवेत्युपेक्ष्यः । किंचैवं 'पुष्पवत्कल्पं मुखम्' इत्यादौ तद्धितेऽप्युपमानलुप्ता स्यात्[1] । न चेष्टापत्तिः । त्वयाप्यनङ्गीकारात् । तथापि त्वया तद्धितेऽप्युपमानलुप्ताभ्युपगतैव चञ्चत्क इत्यादाविति चेत् । नहीदं मां प्रति आपादनं येनेष्टापादानमित्यदोषः स्यात् । किंतु त्वां प्रत्येव, त्वया च तद्धिते उपमानलुप्तानभ्युपगमाद‍निष्टापादानमेवेति । ममापि तथैवाभ्युपेयमिति चेत्, तर्हि स्वपक्षे लज्जा चेत्युभयपरित्यागात्स्पष्टमेव निग्रहोऽङ्गीकृतः । किंच पुष्पवद्रम्यं मुखमिति वाचकोपमानलुप्ता, त्वयाप्यभ्युपगमात्[2] । न चेदं मां प्रतीष्टापादानमेव, काकतालीयमिति छप्रत्ययप्रकृतिभूते समासे त्वयाप्यभ्युपगमादिति वाच्यम् । तत्पर्यन्तानुसरणप्रयासानुपपत्तेः । किंच 'पुष्पवन्ताविव मुखम्' इति वाक्येऽपि धर्मोपमेयोभयलुप्तोपमापत्तिः । तथा च क्यच्प्रत्यय एव तदुपगमविरोधः । किं वहुना । धर्मोपमानोपमेयार्थकलाक्षणिकपदान्युपादाय सर्वत्रैव तत्तल्लुप्तापत्तिरिति संक्षेपः । तदेतत्सर्वमभिद्योतयन्नाह—**अलं पल्लवितेनेति**। 'असौ सरसदन्तमण्डलकपोलप्रतिमागतो मृगाक्ष्याः । अन्तः सिन्दूरितशङ्खपत्रकरणिं वहति चन्द्रः ॥' [इति च्छाया ।] प्रकृतोदाहरणांशं विविच्य दर्शयति—**अत्र मृगाक्षीति** । यद्यपि 'सप्तम्युपमान–' इत्यादिवार्तिकशरीरं महाभाष्यादौ दृश्यते, तथापि प्रकृतोपयुक्ततया सप्तमीत्यंशमपहायैव वार्तिकं पठति—**उपमानेत्यादि** ॥ उक्तवार्तिकविष-

---

१. 'समा(दुपमेया)दन्येषां' इत्यलंकारमुक्तावल्यामधिकं दृश्यते. २. 'सप्तम्युपमान' ख. ३. 'कनेत्र' ख. ४. 'अस्यार्थो हि' ख.

---

१. 'त्वयाप्युपमा स्यात्' ख. २. 'तदाप्यभ्युपगमात्' क; 'तदानयनात्' ख.

व्रीहिर्वाच्यः । उत्तरेषामिव पदोपमानार्थकमुखपदादीनां लोपः' इत्यर्थं ... दन्ति काव्यप्रदीपादयः सर्वे व्याख्यातारः ।

वस्तुतस्तु उत्तरपदशब्दस्य समासान्त्यावयवे रूढिरिति वैयाकरण... दायादुपमेयभूतमुखपदस्यैवात्र लोपेन भाव्यमिति सूरिभिर्विभावनीय... अतो धर्मद्योतकोपमेयलुप्तैवेयमुपमेति युक्तं [समपदम्] ।

कैयटस्त्वाह—अप्रयोग एवात्र लोपशब्देनोच्यते । तथा हि—उ... मुखमस्येत्येव विग्रहः । न च प्राणी प्राण्यन्तरावयवो भवति इति उष्ट्र... ब्दस्य तन्मुखे लक्षणेति । अस्मिंस्तु पक्षे 'नात्रोपमादिलोपप्रसङ्गः' इ... पूर्वपक्ष एवेदमुदाहरणं बोध्यम् ।

अत्र केचित्—उपमानमात्रोपादानेऽपि त्रिलुप्ता संभवति । यथा '... यमायःशूलिकः' इति । अत्र हि अयःशूलमिव तीक्ष्ण आचारसं...

यकं प्राचां व्याख्यानं दूषयति—**वस्तुतस्त्विति** । नन्वेतदसंगतम् । तथा हि ... स्योपमानपूर्वपदस्य पदान्तरेण सह समासो विधेयस्तत्रत्यमुत्तरपदमत्र गृह्यते, न ... बहुव्रीहेरेव । येन द्वितीयाक्षिशब्दस्य लोपः स्यात् । अत एव 'शाकप्रियः पा... शाकपार्थिवः' इत्यत्र 'शाकपार्थिवादीनामुत्तरपदलोपश्च' इति वचनेन शाकप्रियेति ... मासे तदुत्तरपदं प्रियपदरूपं तस्यैव लोपः, न तु एतद्वचनविधेयसमासोत्तरपद... पार्थिवपदस्य । किं बहुना—'सप्तम्युपमान–' इत्यादिप्रकृतवार्तिकेनैव धनं करे ... यस्य सः करधन इत्यत्रैव उत्तरपदलोपः । स पूर्वसमासे उत्तरपदभूतस्य स्थितशब्द... न त्वेतद्विधेयबहुव्रीहिसमासोत्तरपदभूतधनशब्दस्य, करधन इति रूपासिद्धिप्रसङ्गा... एवं चोक्तसंप्रदायस्य विरोधाभावात्, कथमत्र द्वितीयाक्षिशब्दस्य लोप इत्युक्त... चेत्, सत्यम् । यथा श्रुतग्रन्थे उक्तदूषणप्रतिभासेऽपि ग्रन्थस्याभिप्रायान्तरेणैव ... त्तत्वात् । तथा हि—**संप्रदायादिति** । बहुव्रीहिपूर्वपदभूते उष्ट्रमुखेति शब्दे ... शब्द एवोत्तरपदम्, न त्विवादिरपि, येनोत्तरपदतया इवादीनामप्युक्तवचनेन लोपः ... दिति भावः ॥ **अत इति** । अत्राप्युपमेयपदमुपमानपरमेव करणव्युत्पत्त्यार्थ... तथा चोपमानभूतमुखपदस्यैवोक्तवार्तिकेन लोपः । इवपदस्य च गतार्थत्वादेव ... स्पष्टं चेदं कैयटे एव । अत उभयोरप्युक्तवार्तिकेन लोप इति प्राचां व्याख्यानमयु... मेव । यद्वा मुखपदस्य मुखसदृशे लक्षणा । उभयथापीवादीनामुक्तवार्तिकेन लोप ... भावः । **समपदमिति** । सामान्यपदमित्यर्थः । तेन सामान्यपदेन कारिका... उपमानलोप एव वाचनिकः, इवादिनिवृत्तिस्त्वर्थादित्येव विवेको विवक्षित...

१. 'पूर्वोक्तपक्ष' ख.

न्विच्छति इत्यायःशूलिकः । अत्र हि उपमेयधर्मवाचकानां त्रयाणामपि लोप इति ।

अत्राहुः—क्रूरस्याचारस्यायःशूलतयाध्यवसानादतिशयोक्तेरेवात्र विषयसत्त्वादुपमाविरहात् । अत एव महाभाष्यमपि 'अयःशूलमिवायःशूलः यो मृदुनोपायेनान्वेष्टव्यानर्थान् रभसेनान्विच्छति स उच्यते आयःशूलिकः' इति । कैयटश्चाह—'यथायःशूलं तीक्ष्णम्, एवमन्योऽपि तीक्ष्ण उपायोऽयःशूलमुपचारादिति' । एवं 'पार्श्वेनान्विच्छति पार्श्विकः' इत्यत्रापि अतिशयोक्तिरेव । 'यथा पार्श्वं तिर्यगवस्थानादनृजु तथान्योऽनृजुरुपायः पार्श्वमिति कैयटेन व्याख्यानात् । एवमेकोनविंशतिभेदा लुप्ता ।

अत्र केचिदुपमाया भेदान्तराणि स्वीकुर्वन्ति । ते यद्यपि वैचित्र्याभावादुक्तभेदेष्वेवान्तर्भवन्ति तथाप्यवान्तरवैचित्र्यसत्त्वादाकरानुमतत्वाच्चोदाह्रियन्ते ।

तथा च भरतः—

'एकस्यैकेन सा कार्या ऐकस्य बहुभिस्तथा[2] ।
अनेकेषां तथैकेन बहूनां बहुभिस्तथा ॥'

इति ।

तदुक्तं द्वितीयभेदमाह—

**मालोपमोपमेयेऽप्येकस्मिंश्चेद्बहूपमानसंबन्धः[3] ।**
**सामान्यधर्मभेदाभेदाभ्यां सापि च द्वेधा ॥ १४ ॥**

स्पष्टोऽर्थः ।

तत्र सादृश्यनिमित्तधर्माभेदे मालोपमा यथा—

'गेहं व वित्तरहिअं उज्झरकुहरं व सलिलसुण्णकिअं ।
गोहणरहिअं गोट्ठं व तीए वअणं तुह विओए ॥'

भावः ॥ नन्ववान्तरवैचित्र्यसत्त्वेऽपि पृथगभिधानमनर्हं एवंविधवैचित्र्यसहस्रसंभवादित्यत आह—**आकरेति** । आकरसंमतिमेव दर्शयति—**तथा चेति** । अनेकोपमाननिरूपितं सादृश्यमित्यर्थः । 'गेहमिव वित्तरहितं निर्झरकुहरमिव सलिलशून्यीकृतम् ।

१. 'न्विष्यतीत्या' ख. २. 'कार्यानेकेनाप्यथवा पुनः । अनेकस्य तथैकेन' इति भरतसूत्रे पाठः. ३. 'मालोपमेयमुक्ताप्येकस्मिंश्चेद्बहूपमानसंबन्धः' इति पाठोऽलंकारमुक्तावल्याम्.

अत्रोद्वेगजनकत्वं सर्वत्रोपमानिमित्तधर्मः स चाक्षिप्तः।

श्रूयमाणस्तु यथा—

'वाहि व्व वेज्झरहिओ धणरहिओ सुअणगेहवासो व्व।
रिउरिद्धिदंसणं विअ दूसहणिज्जो तुह विओऊ॥'

अत्र दुःसहत्वं सर्वत्रैको धर्मः।

तद्भेदे यथा—

'मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चाभिरमयत्यपनीय दुःखम्।
कीर्तिं च दिक्षु वितनोति तनोति कीर्तिं
किं किं न साधयति कल्पलतेव विद्या॥'

अत्र रक्षणादयो धर्मा भिन्नाः।

यथा वा—

'जलइ वडवाणलो विअ फुट्टइ सेलो व्व रामवाणाहिहओ।
रसइ जलउ व्व उअही खुहिओ लङ्घेइ मारुओ व्व णहअलम्॥'

अत्र ज्वलनादयो भिन्ना धर्माः।

यथा वा—

'..........[सूर्यस्यैव]........[वक्षथः]........[वसिष्ठा]........[अ-
तवे]..........'

गोधनरहितं गोष्ठमिव तस्या वदनं तव वियोगे॥' [इति च्छाया।] 'व्याधिरिव वैद्य-
हितो धनरहितः सुजनगेहवास इव। रिपुऋद्धिदर्शनमिव दुःसहस्तव वियोगः।'
[इति च्छाया।] क्वचित्तु सामान्यधर्मानुपादानेऽपि तदापेक्षकस्य शाब्दत्वं यथा—
'वाप्यां स्नाति विचक्षणो द्विजवरो मूर्खोऽथ वर्णाधमः फुल्लां नाम्यति वायसोऽपि
लतां या नामिता बर्हिणा। ब्रह्मक्षत्रविशस्तरन्ति हि यया नावा तयैवेतरे त्वं वापीव ल-
नौरिव जनं वेश्यासि सर्वं भज॥' अत्र सर्वोपभोग्यत्वरूपधर्मोपपादकमाद्यउदाहर-
यम्। धर्म इति। श्रूयमाण इति पूर्वेणान्वयः॥ 'ज्वलति वडवानल इव स्फुटति
शैल इव रामबाणाभिहतः। रसति जलद इवोदधिः क्षुभितो लङ्घयंति मारुत एव
भस्तलम्॥' [इति च्छाया।] सेतुकाव्ये श्रीरामशराहतसमुद्रक्षोभवर्णनम्। अत्र
मबाणाभिहतत्वं समुद्रांशे तत्तद्भिन्नधर्मप्रयोजकमिति पूर्वस्माद्विशेषः॥ [सूर्यस्यैवेति

१. 'परिभाषिता' ख.

१. एतदादिकस्य छान्दस इत्यन्तस्य ग्रन्थस्य मूलं नोपलभ्यते। एकस्मिन्मूलपु-
'यथा वा' इत्येवोपलभ्यते। अग्रे तूदाहरणं किमपि न दृश्यते.

'एकत्रानेकेषां साधर्म्यम्' इतीयमुपमा भरतेनोक्ता—

'श्येनबर्हिणभासानां तुल्याक्ष इति या भवेत्।
एकस्य बहुभिः सार्धमुपमा नाटकाश्रया॥'

बहुष्वेकस्य सादृश्यरूपोऽपि भेदस्तत्रोक्तः। यथा—

'चन्द्रवत्संप्रकाशन्ते ज्योतिर्भाजो द्विजोत्तमाः।
एकेन सा त्वनेकेषामुपमा परिकीर्तिता॥'

इयं च सामान्यधर्मैक्य एव संभवति। उपमानस्यैकत्वादिति ध्येयम्।

तत्रैव यथा—

'तुल्यन्ते शशिना वक्त्राणीति सैकक्रता भवेत्॥'
'घना इव गजा यत्र बहूनां बहुभिस्तु सा॥'

हरिवंशेऽपि—

'जलावलम्बाम्बुदवृन्दकर्षी घनैर्घनान्योधयतीव वायुः।
प्रवृत्तचक्रो नृपतिर्विनस्थानाजान्गजैः स्वैरिव वीर्यदृप्तान्॥'

अत्रैव सामान्यधर्मभेदे यथा—

'अलक्षितगतागतैः कुलवधूकटाक्षैरिव
क्षणानुनयशीतलैः प्रणयकेलिकोपैरिव।

---

ऋषिस्तुतिरपि, अथाप्यृषयः स्तूयन्त इति निरुक्तकारोक्तेः। वक्ष्यथ इति महदर्थकम्। वशिष्ठा इति श्रेष्ठार्थकं संबोधनम्। वो युष्मान्। अन्वेतवे अन्वेतुम्। अनुकर्तुमिति यावत्। तुमर्थे तवेप्रत्ययश्छान्दसः। **श्येनेति**। भरतकारिकायां श्येनादिपदानां तत्तदक्षिलक्षणा। **बहुष्विति**। अनेकप्रतियोगिकसादृश्यस्योपमेयोत्कर्षातिशयाधायकवत् एकप्रतियोगिकानेकवृत्तिसादृश्यस्य एकप्रतियोगिकैकवृत्तिसादृश्यापेक्षया विलक्षणचमत्कारजनकत्वं नास्तीत्यस्य पृथगस्माभिरनुक्तिरित्यर्थः। **इयं चेति**। यथा एकस्मिन्नुपमेये एकप्रतियोगिकसादृश्यवर्णनं अभिन्नधर्मनिर्वाह्यं तद्वदिहापि उपमान एव भिन्नधर्मसंभवादित्यर्थः। **हरिवंशेऽपीति**।। वज्रनाभवधे प्रभावतीं प्रति प्रद्युम्न-

---

१. 'साम्यादुपमा' भरत०. २. 'शशाङ्कवत्प्रकाशन्ते ज्योतींषीति भवेत्तु या। एकस्यानेकविषया सोप' भरत०. ३. इतोऽग्रे किंचिद्वैदिकोदाहरणं भवेत्। टीकायां सूर्यस्यैवेतीति प्रतीकदर्शनात्। पुस्तकान्तरे तु 'यथा वा' इत्यपि नोपलभ्यते। टीकायां पुस्तकद्वयेऽपि व्याख्यानमुपलभ्यते. ४. 'तुल्यं ते शशिना(भिः) वक्त्रमित्येके (?) नेकसंश्रया' भरत०.

सुवृत्तमसृणोन्नतैर्मृगदृशामुरोजैरिव
त्वदीयतुरगोत्तमैर्धरणिचक्रमाकम्पते ॥'

**पूर्वोपमोपमेयं यद्युपमानं परोपमायां स्यात् ।**
**रशनोपमेयमुक्ता द्वैविध्यं प्राग्वदेवास्याः ॥ १९ ॥**

प्रथमोपमायां यदुपमेयं तच्चेदुत्तरोपमायामुपमानं भवति सा रशनोप- सामान्यधर्मभेदे अभेदे चेति प्राग्वदित्यस्यार्थः । तद्भेदे यथा—

'अधर इवोक्तिर्मधुरा तनुलक्ष्मीरुक्तिवद्विशदवर्णा ।
तनुरिव मनोहरा दृग्दृगिव मृगाक्ष्याः सुदुःसहो विरहः ॥'

अत्र माधुर्यादिधर्माः प्रतिवाक्यं भिन्नाः ।

अभेदे यथा ममैव—

'अतितारुण्यविकासादनुदिवसविजृम्भमाणवदनायाः ।
दृगिव गतिर्गतिरिव धीर्धीरिव गीर्गीरिवातिवक्रा भ्रूः ॥'

अत्र वक्रत्वं सर्वत्र सामान्यधर्मः ।

भरतेन तु प्रशंसानिन्द्योरप्युपमाभेद उक्तः ।

[तत्र प्रशंसायां] यथा—

'[1]आलप्य तां विशालाक्षीं तुतोष मनुजाधिपः ।
मुनिभिः साधितां कृत्वा सिद्धिं मूर्तिमतीमिव ॥'

---

स्योक्तिः । बहूपमानकबहूपमेयकोपमायाः भरतकारिकाद्वितीयार्धोपदिष्टाया इदमुदा- णम् । इदं च सामान्यधर्मैक्ये द्रष्टव्यम् । तद्भेदेनाह—अत्रैवेति ॥ अधर इवोक्ति- माधुर्यमधरस्यानुभवसिद्धो रसविशेषः । उक्तेस्तु गुणविशेषः । तथा च भरतः 'बहुशो यच्छ्रुतं वाक्यमुक्तं वापि पुनः पुनः । नोद्वेजयति तस्माद्धि तन्माधुर्यमि- स्मृतम् ॥' विशदवर्णत्वं स्वच्छरूपत्वम्, उक्तेस्तु प्रसादरूपो गुणः । स च भरतेनोक्तः 'अप्यनुक्तो बुधैर्यत्र शब्दोऽर्थो वा प्रतीयते । सुखशब्दार्थसंयोगात्प्रसादः परि- र्तितः ॥' यद्यप्युपमेयोपमायां सादृश्यार्थकशब्दस्याप्यैक्यनियमो दृश्यते । तथा- उपमेयस्य भिन्नपदार्थत्वात् इवादेरप्यनियमे दोषाभावादुक्तिपदानन्तरं वतिप्र- प्रयोगः । यदि तु इवादिपदैक्येऽपि प्रमाणमुपलभ्यते, तदा उक्तिरिवेत्येव पाठो- द्रष्टव्यः । वक्रत्वमिति । दृशो वक्रत्वमपाङ्गविजृम्भणात् । गतेश्च विलासहेतुके

1. 'दृष्ट्वा तु ताम्' भरत०.

निन्दायां यथा—

'सा त्वं सर्वगुणैर्हीनं संश्रिता पुरुषाधमम् ।
वने कण्टकिनं वल्ली वह्निदाघमिव द्रुमम् ॥'

यथा वा—

'सन्ति श्वान इवासंख्या जातिभाजो गृहे गृहे ।
उत्पादका न बहवः कवयः सरघा इव ॥'

यथा—

'सत्यं सन्ति गृहे गृहे सुकवयो येषां वचश्चातुरी
स्वे हर्म्ये कुलकन्यकेव लभते जाता गुणैर्गौरवम् ।
दुःप्रापः स तु कोऽपि कोविदपतिर्यद्वाग्रसग्राहिणी
पण्यस्त्रीव कलाकलापकुशला चेतांसि हर्तुं क्षमा ॥'

अस्याश्च रूपकवदपि भेदाः संभवन्ति । तथा हि—उपमा द्विविधा—निरवयवा, सावयवा च । निरवयवा द्विधा—शुद्धा, मालारूपा च । निरवयवत्वं चान्यप्रतियोगिकान्यनिष्ठसादृश्यप्रतियोगित्वाभाववत्स्ववृत्तिसादृश्यकत्वम् । तच्च 'चन्द्र इव मुखम्' इत्यादौ स्पष्टमेव, उदाहृतं च बहुधा प्रागेव । तथापि यथा—

'उद्गाढदुर्दिनविसंष्ठुलवृत्तिरारा-
दारब्धगात्रमलिनो वसनान्तलम्बी ।

---

ण्यात् धियस्तु सूक्ष्मार्थग्राहित्वात् वाण्यास्तु तादृशार्थगर्भत्वात्, भ्रुवः संस्थानविशेषवत्वादिति बोध्यम् । **सन्तीति** । हर्षचरिते बाणस्योक्तिः । उत्पादका नूतनार्थोत्प्रेक्षणसमर्थाः । पक्षे—अष्टचरणत्वेन उद्गतपादाः । केषांचित्सुकवीनां सत्वात् । कवित्वावच्छिन्नभावोक्तौ बाधवारणाय—बहव इति । **अन्यप्रतियोगिकेति** । यद्यप्युपमायाः सादृश्यरूपतया प्रयोज्यत्वाभाववत्त्वमित्येतावतैव निर्वाहो भवत्येव, तादृशप्रयोज्यत्वाभाववत्स्ववृत्तिसादृश्यकत्वमित्युक्त्या च उपमेयनिष्ठत्वमस्यायाति, न तु सादृश्यनिष्ठत्वम् । तथापि प्रतियोगितारूपोपमा पक्षमभिसंधाय, स्वपदस्य प्रतियोगित्वपरतया वृत्तिपदस्य च निरूपितार्थकतया उक्ताभावविशिष्टस्वनिरूपितसादृश्यकत्वमित्यर्थ एव पर्यवसानं बोध्यम् ॥ **उद्गाढेति** । राघवपाण्डवीयकाव्ये युद्धारम्भवर्णनम् ।

---

१. 'सा तं सर्वगुणैर्हीनं सस्वजे कर्कशच्छविम् ।' भरत० २. 'दवदग्धमिव' भरत०.

आमृष्टगण्डतिलकानि मुखान्यचुम्ब-
द्रागीव रेणुरवनेः सुरसुन्दरीणाम् ॥'

मालारूपा यथा—

'आवर्ता इव मण्डलीषु पयसां वेगा इवात्यन्तिका
धारास्वर्धपुलायितेषु तरलोत्तुङ्गास्तरङ्गा इव ।
कण्ठे कोमलशैवलावलिमिवालग्नां वहन्तः सटां
राजन्साहजिकीं वहन्ति बहुधा सिन्धोः स्थितिं सैन्धवाः ॥'

द्वितीया द्विधा—समस्तवस्तुविषया, एकदेशविवर्तिनी च।

आद्या यथा—

'अहं रथाङ्गनामेवं प्रिया सहचरीव मे ।
अननुज्ञातसंपर्का धारिणी रजनीव नौ ॥'

अत्राग्निमित्रमालविकयोश्चक्रवाकसादृश्यसिद्धौ तत्संगमप्रतिबन्धक... धारिण्या देव्या रात्रिसादृश्यसिद्धिः ।

यथा वा—

'कर्णेनेव विषाङ्गनैकपुरुषव्यापादिनी रक्षिता
हन्तुं शक्तिरिवार्जुनं बलवती या चन्द्रगुप्तं मया ।
सा विष्णोरिव विष्णुगुप्तहतकस्यात्यन्तनिःश्रेयसे
हैडम्बेयमिवेत्य पर्वतनृपं तद्वध्यमेवावधीत् ॥'

यथा वा—

'श्रिय इव ममास्यापो दूरीकृतावधिनिग्रहे-
रहमिव परित्यक्तः पौरैरयं जलजन्तुभिः ।

---

आद्यविशेषणस्य निविडदुर्दिनतया चञ्चलवृत्तिरित्यर्थः । आरात्समीपत आरब्धं ... त्रस्य मलिनं येन । 'मलिनं पटवासे स्यान्मलिनं स्पर्शने स्मृतम्' इति विश्वः ॥ अ... मिति । मालविकाग्निमित्रनाटके अग्निमित्रस्य राज्ञ उक्तिः ॥ कर्णेनेवेति । मुद्रारा... क्षसे अमात्यराक्षसोक्तिः । विष्णुगुप्तश्चाणिक्य इत्यर्थः । हिडम्बाया राक्षस्या अ... हैडम्बेयः । घटोत्कच इति यावत् । यथा कर्णेन अर्जुनवधार्थमवस्थापितया श... श्रीकृष्णेन यज्ञादिविघ्नकरतया स्ववध्यत्वाभिमतो घटोत्कचो घातितः, तथा चन्द्र... वधार्थं राक्षससंज्ञेनामात्येन स्थापितया विषकन्यकया चाणक्येनार्धराज्यहारितया ... वध्यः पर्वतसंज्ञको राजा घातित इति समुदायार्थः ॥ श्रिय इवेति । नैषधानन्द...

इयमपि च मां वैदर्भीव स्थलग्लपिताम्बुज-
व्यथितवदना नाद्याप्येनं जहाति सरोजिनी ॥'

अत्रोपमान्तरेण नलसरसोरुपमासिद्धौ सावयवत्वम् । उपमानोपमेयानां च शाब्दत्वात्समस्तवस्तुविषयत्वम् ।

एकदेशवर्तिनी सावयवा यथा—

'वर्षोदकमुद्गिरता श्रवणान्तविलम्बिना कदम्बेन ।
एकस्तनोऽभिषिक्तो नृपसुत इव यौवराज्यस्थः ॥'

अत्र हि कदम्बे कलशोपमया गम्यमानया वसन्तसेनया स्तने नृपसुतोपमासिद्धिः । सा चार्थगम्या । कलशसादृश्यस्याशाब्दत्वादित्येकदेशवर्तित्वम् ।

यथा वा मम—

'निःश्वासा मलयानिला इव पिकालापानुकारा गिरो
रक्ताशोकलताप्रवालसदृशं पाणिद्वयं विद्यते ।
दृक्प्रोल्लासविजृम्भितं सुतनुते भृङ्गप्रतानायते
स प्राप्यासमसायकोऽपि भवतीं लोकत्रयीनायकः ॥'

अत्र शाब्दीभिरुपमाभिर्नायिकाया वसन्तलक्ष्मीसादृश्यसिद्धिः ।

शुद्धश्लेषपरम्परितोपमा यथा मम—

'मृगमदपङ्कश्यामे प्रोत्तुङ्गे तव पयोधरे तन्वि ।
हारमणिकान्तिलेखा विलसति सौदामनीवेयम् ॥'

इह पयोधरवाच्ययोर्मेघस्तनयोरुपमया कान्तिलेखायां विद्युदौपम्यसिद्धिः । इयमेव मालारूपा यथा—

'लेखेव या चान्द्रमसी कलानां रसस्य या पुष्करिणीव पूर्णा ।
निष्कैतवस्थानमियं रुचीनामानन्दवद्धाति सरोरुहाक्षी ॥'

---

टके शुष्कतडागमालोक्य नलवचनम् ॥ **वर्षोदकमिति** । मृच्छकटिकाख्यनाटके चारुदत्तोक्तिः ॥ **लेखेति** । चन्द्रलेखायाः षोडशभागात्मककलाबाहुल्यवन्नायिकायाः कामशास्त्रादिकलाभिज्ञत्वात् । रसस्य शृङ्गारस्य जलस्य चेत्यर्थः । निष्कैतवमिति । कान्तिपक्षे—अन्यापेक्षापकर्षरहितमिति । इच्छापक्षे—निरुपाधीत्यर्थः । सुखस्य स्वतः पुरु-

अत्र चतुःषष्टिकलाशृङ्गारकान्तीनां षोडशकलाजलेच्छासादृश्येन ना-यिकाया इन्दुलेखासरसीमुखसादृश्यनिःपतिहेतुः । इदं च परस्परि-भेदद्वयं रसगङ्गाधराद्यनुरोधादुक्तम् ।

वस्तुतस्तु—एकपदोपस्थाप्ययोरपि कथं परस्परं भेदान्वयः । 'विद्व-न्मानस–' इत्यादौ तु मनःसरसोरभेदान्वय एव स्वीकृतः । अत एव

'नेत्रैरिवोत्पलैः पद्मैर्हस्तैरिव सरःश्रियः ।
पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव ॥'

इत्यादावेकदेशवर्तित्वमश्लेषस्थल एवोपमायाः स्वीकृतं प्रामाणिकैः । कथं तर्हि उदाहृतश्लिष्टपरम्परितस्थले तदुपमासिद्धिरिति चेत् । तदभेद-ज्ञानादेव ॥ धर्माभेदज्ञानस्य धर्म्युपमायां नानुकूलत्वं किं त्वभेद एवेति चेत्, न । बिम्बप्रतिबिम्बादौ तदभेदज्ञानस्य साधारण्यनियामकता-

---

षार्थत्वेन निरुपाधीच्छाविषयत्वात् ॥ रसगङ्गाधरादित्यादिपदेन चित्रमीमांसासंग्रहः । कथमिति । नामार्थतया तादात्म्यसंबन्धेनैवान्वयस्य युक्तत्वादित्यर्थः । तदभे-देति । धर्माभेदेत्यर्थः । तदेव दर्शयन्नाह—**धर्माभेदेति** ॥ **किं त्विति** । विद्व-द्वन्मानसेत्यादौ सरश्चित्तयोरभेदारोपेण राज्ञि हंसाभेदारोपाभ्युपगमादिति भावः । **सर्वेति** । वस्तुतो भिन्नयोः परस्परसादृश्यादभिन्नतयाध्यवसितयोर्द्विरुपादानं बिम्ब-प्रतिबिम्बभाव इति चित्रमीमांसादर्शनात् । असाधारणानामपि धर्मान्तराणां सादृश्य-मूलेनाभेदाध्यवसायेन साधारणत्वकल्पनादुपमासिद्धिरिति रसगङ्गाधरदर्शनाच्च । इदं भेदस्य स्फुटप्रतिपत्त्यर्थमुक्तम् । अनुगामिस्थलेऽपि वस्तुतो मुखचन्द्रादिगतरमणीय-देर्भिन्नतया तादात्म्याध्यवसानं विनानुपपत्तेरिति बोध्यम् । किं च ॥ वृहदारण्यके 'यथा वृक्षो वनस्पतिस्तथैव पुरुषो मृषा । तस्य पर्णानि लोमानि त्वगस्योत्पाटिका बहिः ॥' इत्याद्यनन्तरं 'अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमा कृता' इत्यत्र धर्म-

---

१. 'षष्टिश्लिष्ट' क.

---

१. 'यथा लोके वृक्षो वनस्पतिः, तथैव तत्सधर्मे पुरुषाः इत्येतदमृषा न मिथ्या सत्यमेव तस्य पुरुषस्य लोमानि तत्स्थानीयानि वनस्पतेः पर्णानि । त्वगस्य पुरुषस्य त-त्स्थानीया न वहिरुत्पादिका सर्वापेक्षया बहिर्भूता त्वग् । अस्य पुरुषस्य अस्थिसंलग्न-तुविशेषेभ्योऽभ्यन्तरतोऽस्थीनि भवन्ति तत्स्थानीयानि वृक्षस्यान्तरतो दारूणि काष्ठानि । मज्जाशब्देनोभयत्रास्थिकाष्ठगतं ब्रह्मेहोच्यते । स च वृक्षपुरुषयोर्मज्जावन्मज्जाया उपमा कृता । ताभ्यो विशेष इत्यर्थः ।' इत्यधिकं पाठः क-पुस्तके.

सर्वाभ्युपगतत्वात् ॥ यदि च तत्सादृश्यबुद्ध्यैव तथेत्याग्रहः क्रियते । तथापि तत्र मानससादृश्यज्ञानसंभवेऽप्यत्र सादृश्यशब्दस्यानुपपत्तिरेव । अत्रेवादिपदानामुपमोपस्थापकानामभावात्तत्प्रतीकारभूतत्वेनापि नामार्थान्वयायोगादित्यादि सूरिभिरेव विचारणीयम् ॥

भेदे परम्परिता यथा—

'नलिन्या इव तन्वङ्ग्यास्तस्याः पद्ममिवाननम् ।
मया मधुकरेणेव पायं पायमरम्यत ॥'

अत्रोपमानोपमेयानां भिन्नपदवाच्यत्वम् ।

यथा वा मम—

'चकोरकाणामिव कोविदानां राकासुधारश्मिरिवोज्ज्वलो यः ।
विभूषणं भूवलयस्य विद्वान्वीराग्रणी राजति राजहंसः ॥'

इयमेव मालारूपा यथा मम—

'ज्योत्स्नायन्ते तव गुणगणाः पूर्णचन्द्रायसे त्वं
धारायन्ते विशिखनिवहा वारिवाहायसे त्वम् ।
एधायन्ते रिपुनृपतयो हव्यवाहायसे त्वं
भृङ्गायन्ते प्रवरविबुधा वीर पद्मायसे त्वम् ॥'

इदानीमुपमादोषाः पूर्वाचार्योक्ताः प्रदर्श्यन्ते । तानाह वामनः— 'हीनत्वाधिकत्वलिङ्गवचनभेदासादृश्यासंभवास्तद्दोषाः' इति । भेदपदं लिङ्गे वचने चान्वेति । तेन लिङ्गभेदो वचनभेदश्चेत्यर्थः ।

तत्र हीनत्वं त्रिधा—जातितः, प्रमाणतः, धर्मतश्च । तथा च सूत्रम्— 'जातिप्रमाणधर्मन्यूनत्वमुपमानस्य हीनत्वम्' इति ।

आद्यं यथा—

'चाण्डालैरिव युष्माभिः साहसं परमं कृतम् ।'

अत्र[1] चाण्डालत्वजातिरुपमेयजातितो न्यूना । न च नित्यत्वे सत्यने-

---

सादृश्येन धर्माभेदेन चेत्युभाभ्यामपि उपमानिष्पत्तिः स्फुटैव । एवमन्यत्रापीति दिक् ॥ एतदस्वरससूचनायैवाह—यदि चेति ॥ एधायन्त इति । सकारान्तादेधस्शब्दा-

1. 'तत्र' ख.

कव्यक्तिसमवेतत्वरूपाया जातेरुत्कर्षापकर्षानुपपत्तिरिति वाच्यम् । तथापि व्यक्तावुत्कर्षापकर्षसत्त्वेन हीनव्यक्तिवृत्तित्वरूपस्यैव न्यूनत्वस्य जातौ विव-क्षितत्वात् ॥ एतेनोत्कृष्टत्वमपि व्याख्यातम् ।

प्रमाणतो न्यूनत्वं यथा—

'वह्निस्फुलिङ्ग इव भानुरयं विभाति ।'

इह स्फुलिङ्ग उपमानम्, उपमेयसूर्यापेक्षया न्यूनपरिमाणम् ।

उपमेयापेक्षयोपमानस्य न्यूनधर्मत्वं यथा—

'स मुनिर्लाञ्छितो मौर्व्या[1] कृष्णाजिनपटं वहन् ।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान् ॥'

अत्र मुनिसूर्ययोरुपमायां कृष्णाजिननीलमेघयोर्बिम्बप्रतिबिम्बभावः । मुनौ मौर्वीवत्[2]सूर्ये तत्स्थानीयधर्मानुपन्यासः ।

तथा च रामायणे—

'निद्रामन्दपरीताक्ष्यो रावणस्योत्तमाः स्त्रियः ।
अनुजग्मुः पतिं वीरं मेघं विद्युल्लता इव ॥'

एवमधिकत्वमपि त्रेधा । तत्र जात्या अधिकत्वं यथा—

'विशन्तु वृष्णयः शीघ्रं रुद्रा इव महौजसः ।'

इह रुद्राणामेकादशत्वात्तद्वृत्तिरुद्रत्वं जातिः ।

प्रमाणाधिक्यं यथा—

'पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ ।
वेणीदण्डः पुनरयं कालिन्दीपातसंनिभः ॥'

---

त्क्यङ्प्रत्यये सकारलोपः, अकारान्तादेव तत्प्रत्यये तु स्पष्टम् ॥ व्याख्यातमिति । उत्कृष्टव्यक्तिवृत्तित्वमेव जातेरुत्कृष्टत्वमित्यर्थः । उत्कर्षापकर्षौ चोपमेयापेक्षया बोध्यौ । तत्स्थानीयेति । तत्प्रतिबिम्बभूतेत्यर्थः ॥ निद्रामन्देति । अत्र आद्यचरणोक्तस्त्रीधर्म-स्थानीयधर्मस्य विद्युद्वल्लीष्वनुपादानादुपमानस्य धर्महानिरित्यर्थः । यदि तु तद्विशेषणं तत्स-मययोग्यतामात्रेण स्त्रीषु निर्दिष्टमतो न दोष इत्युच्यते, तर्हि वीरमिति रावणवि-शेषणप्रतिबिम्बधर्मस्य मेघविशेष्य(?)नविधानान्न्यूनत्वमवधेयम् । रावणमेघयोरप्युपमेयो-

1. 'मौञ्ज्या' क. 2. 'मौञ्जी' क.

अत्र पातालाद्युपमानं स्तनाद्युपमेयादधिकपरिमाणम् ॥ न चैवम् 'अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि' इत्यादीनामनुपपत्तिरिति वाच्यम् । तत्राहार्यारोपे दुष्टत्वादित्याहुः ।

धर्माधिक्यं यथा—

'खरश्मिचञ्चलं वक्रं दधद्देवो व्यराजत ।
स वाडवाग्निः सांवर्तः स्रोतसामिव नायकः ॥'

अत्र वाडवाग्नेरुपमेयं नोक्तम् ।

तत्र लिङ्गभेदो यथा—

'सैन्यानि नद्य इव जग्मुरनिर्गलानि ।'

यथा वा—

'चिन्तारत्नमिव च्युतासि करतो धिङ्मन्दभाग्यस्य मे ।'

अत्र च्युत इति पुंलिङ्गं रत्नेन नपुंसकेन नान्वेति इति काव्यप्रदीपः । च्युतासीति नायिकां प्रत्युक्तिरिति ॥

वचनभेदो यथा—

'सक्तवो भक्षिता देव शुद्धाः कुलवधूरिव ।'

इह शुद्धा इति बहुवचनं विरुद्धत्वादुपमेये एकवचनान्ते नान्वेति ॥

वेदेऽपि यथा—

'अग्निर्न ये भ्राजसो रुक्मवक्षसः ।'

अत्र—'अग्निरिव ये भ्राजस्वन्तो रुक्मवक्षसः' इति निरुक्तम् ।

असादृश्यं यथा—

'ग्रश्नामि काव्यशशिनं विततार्थरश्मिम् ।'

अत्र काव्यचन्द्रयोः सादृश्यहेतुधर्मो न प्रसिद्धः । न चार्थानां रश्मि-

---

पमानत्वपर्यवसानात् । **स्तनादीति** । षष्ठीसमासेन नाभिग्रहणात् तदाद्यपेक्षयेति । मध्यमपदलोपादिनार्थौ बोध्यः ॥ उपमानोपमेययोः स्त्रीत्वक्लीवत्वरूपलिङ्गभेदमुक्त्वा क्लीवत्वपुंस्त्वभेदमाह—**यथा वेति** । अत्रैवोपमेयस्य स्त्रीत्वेनापि लिङ्गभेदमाह—च्युतासीति ॥ शुद्धाः शर्करादिमधुरद्रव्यसंयोगहीनाः । पक्षे शुद्धत्वं अन्यविषय-

१. 'नाभ्या' मूलपुस्त०.

तुल्यत्वे सति तदिति वाच्यम्। काव्यस्य शशितुल्यत्वसिद्ध्यार्थानां रश्मि- तुल्यत्वम्, तत्संसिद्धौ वा काव्यस्य शशितुल्यत्वं सिद्ध्यतीत्यन्योन्याश्रयात्।

असंभवो यथा—

'चकास्ति वदनस्यान्तः स्मितच्छायाविलासिनः।
उन्निद्रस्यारविन्दस्य मध्ये मुग्धेव चन्द्रिका॥'

अत्रोन्निद्रारविन्दे चन्द्रिकाया असंभव एव। तदेते षडुपमादोषाः॥

क्वचित्त्वदोषा अप्येते। 'चन्द्र इव मुखम्' इत्यत्र जातिप्रकर्षः 'भ- द्व्यणुकमिव' इत्यत्र परिमाणतो न्यूनत्वं न दोषः, कविसंमतत्वात्।

तथा एकत्रानेकोपमानसंबन्धे वाच्ये उपमेये धर्माधिक्यं यथा—

'क्षीरोदवेलेव सफेनपुञ्जा पर्याप्तचन्द्रेव शरत्त्रियामा।
नवं नवं क्षौमनिवासिनी सा भूयो बभौ दर्पणमादधाना॥'

अत्र वेलासादृश्ये फेनदुकूलयोः शरद्रात्रिसादृश्ये चन्द्रदर्पणयोर्बिम्ब- प्रतिबिम्बभावः। तत्र वेलाप्रतियोगिकसादृश्ये दर्पणस्य रात्रिप्रतियोगिक- सादृश्ये च दुकूलस्याधिक्यमदोषः। स्वस्वोपमायां तयोरुपयुक्तत्वात्॥

तथा साधारणधर्मवत्तासंपादनार्थत्वे आधिक्यमदोषः।

यथा—

'इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः।
क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः॥'

इह 'विज्ञापितः' इति विशेषणं 'ध्यानस्तिमितलोचनः' इत्यत्रोपयुक्तत्वा- दुक्तम्। तेन ह्रदपक्षे तादृशविशेषणाभावेऽप्यदोषः। बिम्बप्रतिबिम्ब-

---

कानुरागहीनत्वम्। कुलवधूः पतिव्रतेत्यर्थः। लिङ्गभेदोऽप्यत्र बोध्यः॥ अन्योन्याश्र- यादिति। न चैवं परम्परितोपमारूपकयोरुच्छेदापत्तिरिति वाच्यम्। प्रकृतेतर- नामर्थानां च सादृश्ये धर्मस्याप्यप्रसिद्धत्वात्। परस्परसादृश्यापन्नकाव्यचन्द्रसंबन्धि- स्यैवार्थरश्मीनां साधर्म्यस्य वाच्यत्वात्। अर्थरश्मीसाधर्म्यात्पूर्वं च काव्यचन्द्रसादृश्य- वासिद्धेः। युद्धादेरन्तःपुराद्यारोपे चं सुखसंचारास्पदत्वादिनापि निर्वाहात्॥ अस- भव एवेति। चन्द्रिकायां पद्मस्य मुकुलितत्वनियमात्॥ ननु मुग्धेव चन्द्रिकेत्यु- त्प्रेक्षैवास्तु, तत्र चासंभवो न दोषः। प्रत्युतानुकूल एव 'यदा पुनरयं लोकादसिद्धः क- कल्पितः' इत्यादेरुत्प्रेक्षाव्यवस्थापकत्वादिति चेत्। सत्यम्। उपमानत्वविवक्षायामेव

वापन्नयोः स्तिमितनेत्रत्वसुप्तमीनत्वयोरुपपत्त्यर्थं तदुपादानात् । क्वचित्तु लिङ्गभेदेऽप्यदोषः । तदुक्तम्—

'दृष्टः पुंनपुंसकयोः प्रायेण' इति ॥

काव्यादर्शेऽपि—

'न लिङ्गवचने भिन्ने न न्यूनाधिकतापि च ।
उपमा दूषणायालं यत्रोद्वेगो न धीमताम् ॥'

'चन्द्र इव मुखम्' इत्यादावित्यर्थः । एवं 'प्राणा इव प्रियोऽयं मे' इत्याद्यप्युदाहरणीयम् ।

अन्यदप्युक्तं वामनेन—

'लौकिक्यां समासाभिधानायामुपमाप्रपञ्चे च' इति ।

लौकिक्यां समासगम्यायां चोपमायामुपमाप्रपञ्चे प्रतिवस्तूपमादौ च लिङ्गभेदः प्रायेण न दुष्ट इत्यर्थः ।

लौकिक्यां यथा—

'छायेव पुरुषस्तस्याः पुरुष इव""स्त्री ।'

इति छायापदे पुंस्त्वपदे च स्त्रीत्वस्य बाधितत्वात्तत्प्रतियोगिकसादृश्यवर्णनस्य तत्पदाप्रयोगेऽसंभवात् ।

'नवाङ्गनेवाङ्गनेऽपि गन्तुमेव प्रकम्पते ।
इयं सौराष्ट्रजा नारी महाभट इवोद्भटा ॥'

इत्यादावपि ज्ञेयम् ।

समासाभिहितायां यथा—

'अनुभवन्नवदोलमृदुस्तवं पटुरपि प्रियकण्ठजिघृक्षया ।
अनयदासनरज्जुपरिग्रहे भुजलतां जडतामबलाजनः ॥'

---

पत्वाभिधानान्न दोषः ॥ न लिङ्गेति । एतद्रहस्यं तु प्रागेव प्रपञ्चितम् ॥ अनुभवन्निति । रघुवंशे वसन्तवर्णनम् । पटुरपि निपातप्रतीकारसमर्थोऽपीत्यर्थः ॥ भुजौ लते इवेति उपमितसमासः । प्रियकण्ठग्रहस्य भुजसाध्यतया तत्प्राधान्यापवादकरूपकानङ्गीकारात् । 'यमकादौ भवेदैक्यं डलो र्बवोः शसोस्तथा' इति लकारडकारयोरैक्यानुशासनाद्यमकनिर्वाहः ॥ उपमानोपमेययोः स्त्रीपुंस्त्वभेदमुदाहृत्य क्लीबत्वस्त्रीत्वाभ्यां भे-

यथा च—

'निविष्टायाः कोपाद्गुरुसदसि पङ्केरुहदृशः
पदोपान्ते छायामुपनयति मूर्धप्रणयिनि।
तया चक्षुर्लीलाकमलरजसा दूषितमिति
ध्रुवं मुक्ता मुक्ताफलपरिणता बाष्पकणिकाः॥'

भुजलता पङ्केरुहदृशः इत्युभयत्रापि लिङ्गभेदः।

एवं साधारणधर्मसमासेऽपि यथा—

'निर्मुक्तशेषधवलैरचलेन्द्रमन्थ-
विक्षुब्धदुग्धमयसागरगर्भगौरैः।
राजन्निदं बहुलपक्षदलन्मृगाङ्क-
च्छेदोज्ज्वलैस्तव यशोभिरशोभि विश्वम्॥'

यथा च—

'मुक्तं मुक्तागौरमिह क्षीरमिवाभ्रैर्वापीष्वन्तर्लीनमहानीलशिलासु।
शश्वीश्यामैरंशुभिराशु द्रुतमम्भश्छायामच्छामृच्छति[1] नीलां सलिलस[...]

प्रायेणेत्युक्ते 'हंसीव धवला' इत्यादौ दुष्टत्वमेव॥

उपमाप्रपञ्चे यथा—

'शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य।
दूरीकृता खलु गुणैरुद्यानलता वनलताभिः॥'

अत्राश्रमवासिजनवनलतयोर्लिङ्गभेदः। एवं वचनभेदेऽप्यदोषो ज्ञेय[...]

---

दमुदाहरति—**यथा चेति**। गुरुसदसीति साक्षादनुनयानर्हत्वसूचनम्। पदान्ते [...]
श्छायोपनयनं प्रसादार्थं प्रणामाभिप्रायम्। उत्तरार्धे बाष्पत्यागो मानभङ्गसूचनार्थ[...]
**निर्मुक्तेति**। अनर्घ्यराघवे दशरथं प्रति विश्वामित्रोक्तिः। 'निर्मुक्तो मुक्तक[...]
इति सर्वप्रकरणेऽमरः। अत्र शेषादीनामुपमानानां पुंस्त्वं यशसां तु क्लीबत्वम्। [...]
लिङ्गोपमाने साधारणधर्मसमासमुदाहरति—**यथा चेति**। **मुक्तमिति**। माघे [...]
तकवर्णनम्। **उपमाप्रपञ्च इति**। सादृश्यपर्यवसायित्वात्तथात्वमित्यर्थः। शुद्धा[...]
न्तेति। शकुन्तलामालोक्य दुष्यन्तस्योक्तिः। 'शुद्धान्तश्चावरोधनम्' इत्यमरः। [...]
कवचनभेदमुदाहरति—**एवमिति**। जनस्यैकवचनान्तत्वात् लतानां च बहुवच[...]

1. 'मिच्छति' क.

लौकिक्यां यथा—

'पश्यामि लोचने तस्याः पुष्पं पुष्पलिहो यथा ।'

इहोपमानोपमेययोर्भिन्नवचनत्वम् ।

समासाभिहितायां यथा—

'सत्पक्षप्रसरः सतां परिमलप्रोद्बोधबद्धोत्सवो
विम्लानो न विमर्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः ।
कृष्णस्यैष निवेशितः पदयुगे भृङ्गायमाणं भ्रम-
च्चेतो मे रमयत्वविघ्नमनघन्यायप्रसूनाञ्जलिः ॥'

अत्र 'न्याय इव प्रसूनाञ्जलिरञ्जलिस्थानि कुसुमानि' इत्युपायकारोक्तेर्वचनभेदः ॥

उपमाप्रपञ्चे यथा—'शुद्धान्त–' इत्यादावेव वनलतानां बहुवचनान्तत्वं जनस्यैकवचनान्तत्वमिति ।

तथा—

निन्दायामेव तात्पर्ये उपमानस्य जातिहीनत्वं न दोषः ।

यथा—

'चाण्डालश्च दरिद्रश्च द्वावेव सदृशौ मम ।
चाण्डालस्य न गृह्णाति दरिद्रो न प्रयच्छति ॥'

त्वादित्यर्थः ॥ **सत्पक्षेति** । न्यायकुसुमाञ्जलावाचार्याणां मङ्गलाचरणम् । न्यायः पञ्चावयववाक्यं सप्रसूनाञ्जलिरिवेत्युपमितसमासः । सति प्रामाणिके पक्षे साध्यधर्मिणि प्रसरः संबन्धो यस्य । सतां परामर्शकुशलानां परि सर्वतो भावेन मलः संबन्धः । व्याप्तिरिति यावत् । विमर्दनं विरोधितर्कोद्भावने विम्लानः स्वकार्यसाधकत्वाभावहीनः अमृतं मोक्षः पदयुगम्, अन्वयिव्यतिरेकिरूपं पक्षे पक्षपदं दलपरं सतामनुपहतघ्राणेन्द्रियाणाम् । परिमलः आमोदः । विमर्दनमुपभोगः । अमृतसदृशरसहेतोर्माध्वीकस्य मकरन्दस्य जनकः ॥ अञ्जलिशब्दस्याप्यत्रैकवचनान्तत्वात्कथं वचने भेद इत्यत आह—**अत्रेति** । तथा च विवक्षिते वचनभेद एव । यद्वा व्याख्यानवाक्यमेवोदाहरणमिति भावः । अन्यत्राप्यौचित्यवशात्प्रतिप्रसवमाह—**तथा निन्दायामिति** । उपश्लोक्यतिरस्कारप्रतीतिर्हि जातिहीनसूच्यत्वे[१] दूषकताबीजम् । तस्यैव विवक्षायां तु बीजाभा-

१. 'हीनत्व' क.

एवमुपमानपदेन तद्धर्मविशिष्टोपमानबोधकतया तद्धर्मप्रतिपादने उपमे धर्माधिक्यमदोषः ।

यथा—

'अभिहन्ति हन्त कथमेष माधवं
सुकुमारकायमनवग्रहस्मरः ।
अचिरेण वै कृतविपर्वतदारुणः
कलभं कठोर इव कूटपाकलः ॥'

अत्र कलभपदेनैव सुकुमारकायताप्रतीत्या तदंशे न तदपेक्षा ।

एवं न्यूनपरिमाणताप्रत्यायनतात्पर्ये परिमाणहीनत्वमुपमानस्य बोध्यम्।
यथा—

'दिव्यहरेर्मुखकुहरे विस्तीर्णे पर्णति व्योम ।'

अत्र पर्णस्योपमानस्य गगनापेक्षया हीनपरिमाणत्वेऽपि नृसिंहमुखपरि-णामे च तात्पर्यम् ।

काव्यप्रकाशकारस्तु—"उपमानस्य जातिप्रमाणगे न्यूनत्वाधिकत्वे अनुचितार्थतायामेवान्तर्भावः । न च उपश्लोकनीयनिन्दाव्यञ्जकत्वस्यानुचि-तत्वलक्षणत्वोक्तेः कथमेतदिति वाच्यम् । दोषान्तरलक्षणानाक्रान्तत्वे सति औचित्याभाव एवानौचित्यमित्यभिप्रायेण तथोक्तेरिति तद्व्याख्यातारः। एवं धर्मगते न्यूनत्वाधिकत्वे अपि हीनपदत्वाधिकपदत्वयोरेवान्तर्भवतः। एवमुपमानोपमेययोर्लिङ्गवचनभेदोऽपि भग्नप्रक्रमत्वान्नातिरिक्तः । तथा हि तत्र साधारणधर्मस्योपमानोपमेयान्यतरलिङ्गत्वे तस्य समानलिङ्गेन सहैवा-न्वयेन भाव्यम् । तथा च तस्य साधारण्याभावात्कथमुपमा ॥ अथ त-

वात्र दोषत्वमित्यर्थः ॥ **उपमानपदेनेति** । तद्वाचकपदेनेत्यर्थः । वाचकत्वस्य पदा-र्थत्वात् । **अभिहन्तीति** । मालतीमाधवे मकरन्दोक्तिः । 'कलभः करिशावकः' इत्य-मरः । कूटपाकलो गजानां वातरोगविशेषः । 'गजं वातात्मको हन्यात्तथा वै कूटपा-कलः' इत्युक्तेः । **सुकुमारेति** । नवयौवनस्थायाः प्रतीतेरित्यर्थः । तथा च सुकुमार-कायमित्यस्य कलभांशान्वयेनेति भावः । **दिव्यहरेरिति** । 'चूर्णति चन्द्रः कुसुमति कनकगिरिः खदिरसारति खरांशुः' इति रसतरङ्गिण्यामुत्तरार्धम् । **काव्यप्रकाशेति** । शब्दतस्तात्पर्यतश्च तदर्थस्यात्रानुवाद इति ततोऽर्वाचीनोक्तीनामपि तदुक्तिमध्ये

प्रतीयमानं साधर्म्यमाश्रित्योपमा भविष्यतीति चेत् । तर्हि उपात्तेन धर्मेण प्रक्रान्तस्योपमारूपस्यार्थस्य स्फुटमनिर्वाहात् भग्नप्रक्रमत्वमेव ॥ यत्र तु तद्भेदेऽप्युपमान्वययोग्यं साधारणधर्माभिधायि पदं तत्र न दोषः । यदुक्तं काव्यडाकिन्याम्—

'श्लेषमर्थादयो यत्र पदं साधर्म्यवाचकम् ।
उभयान्वयि यत्रापि नास्य दोषस्य संस्थितिः ॥'

लिङ्गभेदे यथा—

'गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः ।'

अत्र गुणरत्नयोर्भिन्नलिङ्गत्वेऽपि अनर्घ्यैरिति रूपभेदाभावादुभयत्रान्वययोग्यम् ।

वचनभेदे यथा—

'तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः ।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥'

अत्र वेषविभ्रामशब्दौ एकवचनबहुवचनान्तौ । तत्रासदृश इति सदृशशब्दस्यैकवचनान्तम् सदृश्शब्दस्य बहुवचनान्तम् । 'समानः सदृशः सदृक्' इत्यमरः । भृत इति क्तप्रत्ययान्तस्यैकवचनान्तम् । दधते इति 'दध धारणे' इति भौवादिकस्यैकवचनान्तम् । 'डुधाञ् धारणे' इति जुहोत्यादिपठितस्य बहुवचनान्तं रूपमित्युभयत्रान्वयबोधसंभवात् ॥

एवं कालपुरुषविध्यादिभेदोऽपि भग्नप्रक्रम एवान्तर्भवति । तत्र कालभेदो यथा—

'अतिथिं नाम काकुत्स्थात्पुत्रमाप कुमुद्वती ।
पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना ॥'

इह चेतनायामाप्नोतीत्यन्वेति, न त्वापेति भूतकालः । अत आपेति प्रकृतकालेनोपमाया अनिर्वाहात्क्रमभङ्गः । न च अतीतायां प्राप्तौ चेतनान्वयः संभवत्येवेति वाच्यम् । त्रैकालिकप्राप्तेरेव विवक्षितत्वात्, अतीतत्वेन तात्पर्याभावादिति वदन्ति ।

पुरुषभेदो यथा—

'प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः
कौसुम्भरागरुचिरस्फुरदंशुकाभा।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपिप्रभवा लतेव॥'

अत्र वासवदत्तायां विभ्राजसे इति मध्यमपुरुषोऽन्वेति लतायां तु वि-भ्राजते इति प्रथम एव॥ विधिभेदो यथा—'गङ्गेव प्रवहतु ते स-कीर्तिः' इत्यत्र कीर्तौ विध्यर्थः संभवति। न तु गङ्गायां सिद्धत्वात्। एव-

'पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं भवतः पितेव।'
'चिरं जीवतु ते सूनुर्मार्कण्डेयो मुनिर्यथा।'

इत्यादावपि बोध्यम्। न चात्र दोषत्वमेव नास्ति, कुतोऽतिरेकाद-भावविचारः। तथाहि कालादिविशेषान्वितधर्मातिरिक्तेनोभयान्वयिना ... पातेन वाक्षिप्तेन सामान्यधर्मेण उपमासंभवे कालविशेषावरुद्धधर्मस्य उ-मानान्वयविरहेऽपि क्षत्यभावात्। यथा 'प्रत्यग्रमज्जन—' इत्यत्र विवि-मूर्तित्वादिना धर्मेण लतानायिकयोरुपमासिद्धौ विभ्राजस इत्यस्य ना-कायामेवान्वयसंभवेन लतायामन्वयानभ्युपगमात्।

वस्तुतस्तु—साधारणधर्मप्रयोगस्थले इवपदेन तस्यैवोपस्थापनमिति ... गुक्ततया विभ्राजनमिति धात्वर्थमात्रं तेनोपस्थाप्यते न त्वाख्यातार्थ-

---

वेशो न दोषः॥ [अन्यमिति। उ इति पादपूरणे। यमीति संबोधनम्॥ लिबुज-ब्दस्य छन्दसि लतापर्यायत्वमित्यभिप्रेत्याह—लतेवेति।] प्रत्यग्रेति। वत्सराजोक्ति-... विविक्तत्वं रमणीयत्वम्॥ कौसुम्भेति। शैषिकोऽण्॥ [अग्निरिवेति। न च ... वक्तुरशक्त्यनुन्नयनात्कथं दोषत्वमिति वाच्यम्। न ह्येषां तदुन्नायकत्वेन दोषत्वम्, कि-बोधविलम्बदशाकर्षादिजनकत्वेनैव तस्य च लोकवेदयोरविशिष्टत्वात्।] पुत्रमि-... रघुं प्रति कौत्सवाक्यम्—'आशास्यमन्यत्पुनरुक्तभूतं श्रेयांसि सर्वाण्यधिजग्मुष-...

---

१. अस्य 'अन्यमू षु त्वं यम्यन्य उ त्वां परिष्वजाते लिबुजेव वृक्षम्।' इति ... तु वैदिकोदाहरणरूपं मूलं पुस्तकद्वयेऽपि नोपलभ्यते. २. अस्यापि मूलं वैदिकोदा-... मूलपुस्तकद्वयेऽपि नोपलभ्यते.

ऽपि तथा च 'लतानिष्ठान्योन्याभावप्रतियोगितावच्छेदकसमानाधिकरणत्वे सति लतानिष्ठात्यन्ताभावप्रतियोगि यद्विभ्राजमानादि तद्वती त्वम्' इति शाब्दबोधः । न चात्र पुरुषभेदः प्रतिकूलम् । एवं विधिभेदस्थलेऽपि प्राप्तेः सामान्यधर्मत्वाभावेन तत्राक्षिप्तसामान्यधर्मद्वारिकैवोपमा । अतस्तस्या उपमानपदेऽनन्वय एव ॥ अथ यत्र कालाद्यवरुद्ध एवार्थः साधारणतया विवक्षितस्तत्र का गतिः। यथा 'युधिष्ठिर इवायं सत्यं वदति' इति । युधिष्ठिरे हि 'अवादीत्' इत्यन्वेति, न तु वदतीति चेत् । सत्यम् । तत्रापि 'युधिष्ठिर एव सत्यवादी अयं सत्यं वदति' इति सत्यवादित्वरूपाक्षिप्तधर्मेणोपमास्वीकारेण वदतीत्यस्य युधिष्ठिरेऽन्वयानङ्गीकारात् । न चात्र पौनरुक्त्यापत्तिरिति वाच्यम् । यथा 'धनेन पुष्णाति' इति वक्तव्ये पुषेर्णमुलि 'रैपोषं पुष्णाति' इत्यत्रानुप्रयोगे न पौनरुक्त्यम्, तद्वदत्रापि ॥ अथ तत्रानुप्रयोगानुशासनबलात्तथा, अत्र तु न किमपि प्रमाणमस्तीति चेत् । यथा 'युधिष्ठिरः सत्यमवादीत्तथायं सत्यं वदतीति कल्पने बाधकाभावात् । न चात्र मानाभावः । 'उतो त्वस्मै तन्वं विसस्रे जायेव पत्ये उशती सुवासाः' इति मन्त्रे महाभाष्यनिरुक्तकाराभ्यां 'तद्यथा जाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते एवं वाग्वाग्विदे स्वमात्मानं विवृ-

---

इति पूर्वार्धम् ॥ रैपोषमित्यत्र रैशब्दो धनार्थक इति दर्शयन्नाह—**धनेनेति** । 'अर्थरैविभवा अपि' इत्यमरः । उपमानोपमेयोभयविशेष्यकबोध उपमादुष्टत्वव्यवस्थापनाय कैश्चिदाश्रितोऽप्यन्यैः प्रथममेव निरस्त इत्याशङ्कते—**न चेति** । **उतो इति** । 'उतत्वः पश्यन्न ददर्श वाचमुतत्वः शृण्वन्नशृणोत्येनाम्' इति पूर्वार्धम् । उतेत्यपिशब्दार्थे त्वशब्दः सर्वादिरन्यपर्यायः । प्रत्यक्षेण शब्दस्वरूपमुपलभमानेऽपि प्रकृत्यादिविभागतदर्थापरिज्ञानान्न सम्यग्वेत्तीत्यविन्निन्दापूर्वार्धार्थः ॥ उत्तरार्धार्थे त्वाह—**महाभाष्येति** । एतेन तादृशबोधस्य प्रामाणिकत्वसूचनम् । उशतीत्यस्य विवरणं कामयमानेति । तन्वमित्यत्र 'अमि पूर्वः' इत्यत्र 'वा छन्दसि' इत्यनुवृत्तेर्यणादेशः । तस्य विवरणम्—**स्वमात्मानमिति** । 'विवव्रे' इत्यस्य छान्दसलकारव्यत्ययेन लडर्थकत्वमित्याह—**विवृणुत इति** । प्रकाशयतीत्यर्थः । त्वस्मै अन्यस्मै इत्यत्र भेदस्य प्रतियोग्यपेक्षायां पूर्वार्धोपस्थितस्याविदुष एव तत्वेनान्वयः । तथा च विद्वानत्र लभ्यत इत्याह—**वाग्विद इति** ॥ **चक्षुष एवेति** । चाक्षुषज्ञान एव वीक्षणस्य

णुते' इति व्याख्यातत्वात् । अत एव 'चन्द्र इव मुखम्' इत्यत्रोभय
शेष्यकबोधाङ्गीकर्तृमते यथा चन्द्रस्तथा मुखमित्यादिषु प्रकारवाचिथाल्
त्ययवशात्तथात्वेऽप्यत्र मानाभाव एवेत्यपि दूषणं न युक्तम् । सत्यवदक
त्रस्येवपदेनोपस्थापने 'तादृशसत्यवदनानुकूलकृतिमान्' इति बोधेऽपि
धकाभावादिति चेत् । सत्यमुक्तम् । परं तु प्रस्तुतार्थप्रतीतिविघा
सहृदयानुभवसिद्धत्वाद्दोषविषयत्वमेव । एवमसादृश्यासंभवावप्यनुचित
तायामेव पर्यवस्यतः—" इत्याहेति दिक् ॥

यत्तु—

'परिणामः क्रियार्थश्चेद्विषयी विषयात्मना ।
प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा ॥'

अत्र परिणामालंकारः पृथगेव । तथा हि वीक्षणे चक्षुष एव कर
न त्वब्जस्येति निर्बाधम् । दृगब्जेत्यत्र रूपकस्वीकारे चाब्जप्राधान्याद्वी
णानुपपत्तिः । न चोपमैवास्त्विति वाच्यम् । प्रसन्नत्वरूपसामान्यधर्मप्र
गस्य बाधकत्वात् । तस्मादब्जस्य दृगात्मना परिणामेन प्रकृतोपयोगाद
कारान्तरमेवेति ॥

---

निरूढत्वात् । नन्वेवं 'तदैवैक्षत बहुस्यां प्रजायेय:' इत्यादावीक्षणपूर्वकसृष्टिश्रवणाद
नस्य सांख्याभिमतस्य प्रधानस्य जगत्कारणत्वं नेत्यर्थकस्य 'ईक्षतेर्नाशब्दम्'
वेदान्तसूत्रस्यानुपपत्तिः । ब्रह्मणोऽपि चाक्षुषज्ञानाभावेन तत्रापीक्षणस्य गौ
पत्त्या गौणत्वेन तस्य कार्योन्मुखत्वमर्थमादाय प्रधानेऽपि तदाञ्जस्य संभवेन सांख्य
द्विनिगमकाभावादिति चेत्, सत्यम् । तथापि वेदान्तमते विशिष्टवाचकस्य सामान्य
लक्षणायामपि शक्यतावच्छेदकव्यापकजातिपरत्वम् । सांख्यमते तु तदपि नेति
शेषसंभवात् । वस्तुत ईक्षतेर्ज्ञानसामान्यवाचकत्वेऽपि प्रकृतसंगतेः । पद्मस्यापि
क्षुषहेतुत्वात्कारणत्वमात्रमुपेक्ष्याह—**कारणत्वमिति** । अब्जप्राधान्यादि
रूपकसमासे उत्तरपदार्थविशेष्यत्वनियमात् । **वीक्षणानुपेति** । अब्जस्य कर
वीक्षणं प्रत्यन्वयानुपपत्तिरयोग्यत्वादित्यर्थः ॥ **न चेति** । तथा च अब्जसदृश
शेति पूर्वपदार्थप्राधान्यादन्वयोपपत्तिरित्यर्थः । **सामान्यधर्मेति** । 'उपमितं
दिभिः सामान्याप्रयोगे' इति वचनात् सामान्यधर्मप्रयोगे उपमितसमासविरह
तस्मादिति । विषयिणोऽब्जस्य विषयभूतदृक्तादात्म्यापत्त्यैव वीक्षणक्रियायामु

१. 'कारणत्वम्' इति मूलपुस्तकद्वयपाठः.

तत्र न्यायपञ्चाननादयः—उपमैवेयं भवितुमर्हति । न च प्रसन्नत्वरूपधर्मप्रयोगस्तद्बाधकः, तदतिरिक्तरमणीयत्वादिधर्मनिमित्तकसादृश्यस्य विवक्षितत्वात् । उपमानिमित्तधर्मप्रयोग एवोपमितसमासनिषेधस्य 'भाष्याब्धिः क्वातिगम्भीरः' इत्याद्यनुरोधेन स्वीकारादित्याहुः ।

यत्तु रसगङ्गाधरे—

'महर्षेर्व्यासशिष्यस्य श्रावं श्रावं वचःसुधाम् ।
अभिमन्युसुतो राजा परां मुदमवाप्तवान् ॥'

इत्युदाहृतम्, तच्चिन्त्यम् । अत्रोपमितसमास एव, बाधकाभावात्, सामान्यधर्मप्रयोगाभावात् ॥

एवं च क्वचिद्विषयमात्रस्य स्वरूपेण प्रकृतानुपयोगात्तस्यारोप्यमाणाभिन्नत्वेन परिणामः । यथा—

'वदनेनेन्दुना तन्वी शिशिरीकुरुते दृशौ ।'

अत्र वदनमात्रस्य शिशिरीकारकत्वाच्चन्द्राभिन्नत्वेनावस्थानम् । यथा—

---

गात् । ननु धर्मान्तरप्रयुक्तसाम्यविवक्षायामपि प्रसन्नत्वरूपसामान्यधर्मप्रयोगात् कथं समासः, सामान्यधर्मसामान्याभाव एव एतद्विधानादित्यत आह—**उपमानिमित्तेति** । विवक्षितेत्यर्थः । तथा च साम्यप्रयोजकत्वाभिमतधर्मसामान्यवाचकपदाभावे समासविधानादन्तापिधर्मनिष्ठाभिमतात्यन्ताभावप्रयुक्तविशिष्टाभावसत्त्वात्समास इति भावः । **भाष्याब्धिरिति** । 'क्वाहं मन्दमतिस्ततः । छात्राणामुपहास्यत्वं यास्यामि पिशुनात्मनाम् ॥' इति तदुत्तरचरणत्रयमित्ययं कैयटस्य प्रयोगः । न हि भाष्याब्धिरिति रूपकं विवक्षितम् । प्रकृतभाष्यप्राधान्यत्यागापत्तेः । अतो विततदुरवगाहत्वादिधर्मप्रयुक्तसाम्यविवक्षया गाम्भीर्यस्य तत्प्रयोजकत्वमपहाय तत्सत्त्वेऽपि उपमितसमासाभ्युपगमादित्यर्थः ॥ न च तत्राप्येतन्मते परिणामाभ्युपगमेनैव भाष्यप्राधान्यसंभवात्कथमेतदुपन्यासः । पक्षसमत्वादिति वाच्यम् । सूत्रस्य यथोक्तार्थकत्वेनातिरिक्तकल्पनायोगात् । न च सूत्रेण सामान्याप्रयोग इत्येवोक्तत्वात् उक्तरीत्या तदर्थसंकोचोऽनुचित इति वाच्यम् । सामान्यमात्राप्रयोगस्य बाधितत्वात् । उपमानिमित्तत्वेन धर्मविशेषणेऽपि धर्ममात्रस्योपमानिमित्ततया बाधतादवस्थ्यात् । तदुपमानिमित्तत्वेन विवक्षितो वा यो धर्मस्तदप्रयोग इत्येव सूत्रार्थपर्यवसानात् । **बाधकाभावादिति** । प्रत्युत श्रावं श्रावमित्यस्य रूपकसमासं प्रत्येव बाधकत्वादित्यपि बोध्यम् । प्रकारान्तरेण परिणामव्याख्यानमाह—**एवं चेति** । **वदनमात्रस्येति** । चन्द्रपदार्थे तादात्म्येन प्रकारता-

---

१. 'मतान्ताभावप्र' क-ख. २ 'मात्र' ख.

'वदनेनेन्दुना तन्वी स्मरतापं विलुम्पति ।'

अत्रेन्दोः स्वरूपेण स्मरतापानपवादकत्वात् वदनाभेदेनावस्थानमि
रूपकभेद एवायम् । विषयविषयितावच्छेदकान्यतररूपेण निश्चीयमान
दन्यतरकत्वस्यैव रूपकत्वात् ।

'तद्रूपकमभेदोऽयमुपमानोपमेययोः ।'

इति उक्तेरिति वदन्ति । अत्र यद्यपि समासे विशेषणप्रतियोगिका
दस्यैव संसर्गत्वान्न शाब्दबोधे इन्द्वभिन्नत्वेन वदनस्य पर्यवसानं संभव
तथापि तत्र मानसेनैव विशेष्यप्रतियोगिकाभेदसंसर्गकबोधेन निर्वाहोऽ
सेयः । न चाननचन्द्रेणेत्यत्र चन्द्रपदस्याह्लादकत्वे लक्षणा, तथा चाह्ला
केन मुखेन विरहतापः शाम्यति' इति बोध्यम् । एवं चात्र न कश्चिदलंका
मुखस्य चन्द्रतादात्म्योपपादकस्य लक्षणादेरभावात् । चन्द्रादौ मुखादित
दात्म्यापत्त्या वर्णनीयमुखादेरनुत्कर्षेण परिणामस्यालंकारत्वासंभवात्
'मुखचन्द्रेण तापः शाम्यति' इत्युक्तौ च उपमितसमासस्यैव संभवाच्चे
न्यायपञ्चाननादयः ॥ एवं च—

---

मनापन्नस्येत्यर्थः । शिशिरीकारकत्वेति । मुख्यं तदित्यर्थः । स्वरूपेणेति
तादात्म्यसंबन्धावच्छिन्नां मुखविशेष्यतानिरूपितां प्रकारतामनासाद्येत्यर्थः ॥
उभयप्रतियोगिकाभेदस्य कथं रूपकत्वम्, उपमेयविशेष्यकोपमानाभेदारोपस्यैव रू
त्वप्रसिद्धेरत आह—विषयेति । भावप्रत्ययावच्छेदकपदार्थयोरुभयत्रान्वयः । त
न्यतरेति । उपमेयोपमानान्यतरेत्यर्थः । रूपकप्रकरणवक्ष्यमाणरीतिमनुसंधायाह
एवं चेति । विशेषणेति । तत्र पूर्वनिपातनियमानुरोधेन पूर्वपदार्थस्यैव विशे
त्वाभ्युपगमात् । वाक्ये तु विवक्षाविशेषवशादुभयस्यापि विशेषणत्वसंभवात्कथं
त्स्यादपि तथा बोध इत्यतः समास इत्युक्तम् । एतच्च सर्वमग्रे स्फुटम् ॥ लक्षणेति
चन्द्रपदस्याह्लादकत्वे योगसत्त्वेऽपि पङ्कजादिपदवद्रूढ्यर्थविशेषणत्वेनैव योगार्थबोध
वयवशक्त्या बोधस्य नियमितत्वात्केवलयोगार्थबोधाय लक्षणाया आवश्यकत्वात्
लक्षणादेरिति । गौणस्यारोपलक्षणाया इत्यर्थः । अनुत्कर्षेणेति । अभेदा
गित्वेन वर्णनीयप्रतीतेरेव तदुत्कर्षबीजताया उभयसंमतत्वादत्र वैपरीत्य
मानाभावात् । संभवादिति । न चात्रापि तापशान्तिरूपसामान्यधर्मप्रयोगोऽस्त्ये

१. 'नेति' ख.

'असारे संसारे विषमविषयारण्यसरणौ
मम भ्रामं भ्रामं विगलितविरामं जडमतेः।
परिश्रान्तस्यायं तरणितनयातीरनिलयः
समन्तात्संतापं हरिनवतमालस्तिरयतु ॥'

इत्यत्राप्युपमितसमासादुपमैव। न चात्र तापहरणं सामान्यधर्म इति वाच्यम्। तत्र धर्मान्तरेण सादृश्यसिद्धावेव तस्य विधेयत्वात् साधारण्येनाविवक्षितत्वात्। वृक्षान्तरेऽपि तत्सत्त्वेन तमालपत्रोपमायां मेचकत्वादिकस्यैव तन्निर्वाहकत्वाच्च।

यद्यपि रसगङ्गाधरे—

'अहीनचन्द्रा लसताननेन ज्योत्स्नावती चापि शुचिस्मितेन।
इयं हि योषा सितपक्षदोषा तोषाय केषां न महीतले स्यात् ॥'

अत्र केषां तोषाय न स्यादित्युक्त्या विरहिणामपि तोषजनकत्वप्रतीतेः। शुक्लपक्षरात्रेश्च तत्तोषजनकत्वाभावान्नायिकायास्तादात्म्यापत्त्या तदुपपत्तिरित्युक्तम्। तदप्यसत्। योषादोषयोः समासाभावेऽपि क्षतिविरहेण शुक्लपक्षरात्र्यभिन्ना योषेति रूपकेणैव तत्संभवात्।

यत्तु—

'नरसिंह महीपाल के वयं तव वर्णने।
अपि राजानमाक्रम्य यशो यस्य विजृम्भते ॥'

इति विद्याधरेण परिणामध्वनावुदाहृतम्। तत्तुच्छम्। राजशब्दस्योभयार्थत्वात्तदुपस्थापितयोश्चन्द्रनृपयोरभेदान्वयस्य 'विद्वन्मानस—'इत्यादाविव

---

वाच्यम्। तन्निमित्तकसाम्यस्यानभिमतत्वात्। आननस्मितपदोत्तरतृतीयाया अभेदोऽर्थः॥ **विरहिणामपीति**। सर्वयुवतोषजनकत्वस्य ततो लाभादित्यर्थः। **क्षतिविरहेणेति**। योषेत्यस्य पृथक्पदत्वे बाधकाभावादित्यर्थः। न चात्र समासविवक्षायां का गतिः। मुखस्मिताभिन्नचन्द्रज्योत्स्नयोरेवात्र उपमानिमित्तत्वादुपमितसमासासंभवादिति वाच्यम्। प्रागुक्तरीतेरेवाश्रयणीयत्वात्। **विद्याधरेणेति**। राजपदेन चन्द्ररूपविषये निर्दिष्टे तत्रारोप्यमाणस्य नृपस्याक्रमणरूपकार्योपयोगिनः प्रतीतेः परिणामो व्यज्यत इत्यर्थः॥ **उभयार्थत्वादिति**। 'राजा प्रभौ नृपे चन्द्रे' इति कोश-

संभवेन परिणामस्य वाच्यत्वात् । एतेन—एतदसाधुत्वसाधुत्व
चित्रमीमांसारसगङ्गाधरयोः कलहो निरस्तः ॥ एतेन—इवार्थशक्तिमू
रिणामध्वनिप्रकरणे—

'पान्थ मन्दमते किं वा संतापमनुविन्दसि ।
पयोधरं समाशास्व येन शान्तिमवाप्स्यसि ॥'

इत्युदाहरन् रसगङ्गाधरोऽपि परास्तः । तत्रापि पयोधरपदवाच्ययो
स्तनयोरभेदान्वयसंभवात् ध्वनित्वानौचित्यात् ॥

यदपि—

'चिराद्विषहसे तापं चित्तचिन्तां परित्यज ।
नन्वस्ति शीतलः शौरेः पदाब्जनखचन्द्रमाः ॥'

इति चित्रमीमांसोदाहृतं परिणामध्वनित्वं रसगङ्गाधरे दूषितम्
आरोप्यमाणस्य विषयात्मकत्वेन प्रकृतकार्योपयोगे परिणाम इति स्व

---

दर्शनात् । **वाच्यत्वादिति** । तादात्म्यप्रतियोग्यनुयोगिनोः शब्दोपात्ततया तु
चन्द्रेणेत्यादिविशेषानिरुक्तेः । पदैक्यभेदयोरप्रयोजकत्वादन्यथा 'विद्वन्मानस—'इत्याद
वाच्यरूपकाङ्गीकारविरोधापत्तेः । **एतेनेति** । चित्रमीमांसायां हि परिणामध्व
दूषितम् । तत्र ह्यारोपमाणस्य नृपस्य नृपात्मनैव कर्मत्वेनाक्रमणोपयोगो न तु च
त्मनेति विषयतादात्म्यापत्त्या प्रकृतानुयोगादिति । रसगङ्गाधरे तु—परिणामध्व
युक्तमेव । विजृम्भणं हि प्रागल्भ्यमात्रं न कवेरभिप्रेतम्, येन यशःकर्तृकाक्रमणे
त्मनैव विषयिणो नृपस्य कर्मतारूपोपयोगः स्यात् । किंतु स्वसमानजातीयद्वितीय
त्यरूपः प्रौढिविशेषः । आक्रमणं तु न्यक्कार एव । एतादृशविजृम्भणे च चन्द्रकर्म
वाक्रमणस्योपयोगो न तु नृपकर्मकस्य, तेन यथोक्तप्रागल्भ्यानुपपत्तेः । एवं च वि
त्वेन व्यज्यमानस्यापि नृपस्य विषयभूतचन्द्रात्मनैव प्रकृतोपयोगात्, विद्याधरो
निरवद्यमेव । तदुभयमपि अनुपपन्नं नृपस्यापि राजपदार्थतया परिणामस्य व्यङ्ग्य
योगादित्यर्थः ॥ **अर्थशक्तीति** । यद्यप्ययं शब्दशक्तिमूलत्वेनैव तत्र लिखि
पयोधरपदस्य परिवृत्त्यसहत्वात् । तथाप्यर्थशक्तिमूलपरिणामध्वनिप्रकरणे इ
समास्ते इति विशेषो बोध्यः । अत्र तापशमनहेतुत्वेनोपस्थिते पश्चान्मन्दरूपसंबो
विशेष्यकस्मरतापकतावैशिष्ट्यबुद्धौ सत्यां सहृदयस्य तादृशतापशामकरमणीयत्व
विषयताद्रूप्यबुद्धिर्भवतीति परिणामध्वनिरिति तस्यार्थः । तस्माद्यत्र नानार्थकशब्द
तात्पर्यनियामकं प्रकरणादिकमस्ति तत्रैव परिणामस्य व्यङ्ग्यत्वं युक्तमिति ध्वे
तथा 'इन्दुना परसौन्दर्यसिन्धुना बन्धुना विना । ममायं विषमस्तापः के

वोक्तम् । तत्र प्रकृतकार्योपयोगित्वं न परिणामशरीरम्, अपि तु विषयिगतायाः प्रकृतकार्योपयोगिताया अवच्छेदकीभूतं विषयिणो विषयताद्रूप्यम् ॥ एवं चात्र नखचन्द्रसद्भावप्रदर्शनेन तन्निषेवणात् अयं तव तापं शान्तिं नेष्यतीति प्रकृतोपयोगिताया व्यङ्ग्यत्वेऽपि तदवच्छेदकीभूतस्य विषयिणि विषयताद्रूप्यरूपस्य परिणामस्य वाक्यवाच्यत्वाच्छक्यसंसर्ग-

---

शमयिष्यते ॥' इत्यत्र वक्तुर्विरहित्वेन व्यङ्ग्यरमणीयमुखाभिन्नत्वेनाभिमतस्येन्दोर्विरहसंतापशमनहेतुत्वात्, मुखस्य चन्द्राभिन्नत्वेन बोधे तेन विरहतापशमनरूपप्रकृतकार्यानुपपत्तेः । चन्द्रस्य विषयिणो विषयभूतमुखाभिन्नत्वं व्यङ्ग्यमिति परिणामध्वनिर्युक्त इत्यप्यवधेयम् ॥ यदपि 'तारानायकशेखराय जगदाधाराय धाराधरच्छायाधारकन्धराय गिरिजासङ्गैकशृङ्गारिणे । नद्या शेखरिणे दृशा तिलकिने नारायणेनास्त्रिणे नागैः कङ्कणिने नगेन गृहिणे नाथाय सेयं नतिः ॥' इति वैयधिकरण्येन परिणाम इति चित्रमीमांसोक्तं तत्र दूषितम्—रूपकमेवेदं नतु परिणामः । गिरिजासङ्गैकशृङ्गारिणि भगवति भवे प्रणामस्य प्रक्रान्तत्वात् । शृङ्गारितया च शेखरादिभूषणानामपेक्षितत्वात् । आरोप्यमाणानां शेखरादीनां स्वरूपेणैवोपयोगात् । न तु नद्यादितादात्म्येनेति । नद्यादिपदोत्तरमभेदार्थकतृतीयावशान्नद्यादितादात्म्येन शेखरादीनामवगमाद्विषयाभिन्नत्वेन विषय्युपस्थितौ सत्यामपि विषयतादात्म्येन प्रकृतानुपयोगात् । इति, तदपि चिन्त्यम् । 'नारायणेनास्त्रिणे' इत्यंशस्य शृङ्गारितायामनुपयोगात् । तदुपादानबलेन प्रकृते शृङ्गारित्वस्य नमस्कार्यत्वप्रयोजकत्वावगमात् । अन्यथा क्रमभङ्गापत्तेः । अस्त्रस्य नारायणतादात्म्यापत्त्यैव तद्गुणीभावेन शिवोत्कर्षपर्यवसानात् । केवलशेखरादीनां शृङ्गार्यन्तरसाधारण्येन नद्यादितादात्म्यापत्त्यैव तदुत्कर्षावगमाच्च ॥ एवम् 'द्विर्भावः पुष्पकेतोर्विबुधविटपिनां पौनरुक्त्यं विकल्पश्चिन्तारत्नस्य वीप्सा तपनतनुभुवो वासवस्य द्विरुक्तिः । द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकारस्य कुर्वन्नानन्दं सज्जनानां जगति विजयते श्रीनृसिंहः क्षितीन्द्रः ॥' इत्यत्र दूषणमुक्तम्—राज्ञो नृसिंहस्य प्रतिपिपादयिषितौ केचिदानन्दजननजगदुत्कर्षौ आरोप्यमाणद्वितीयमन्मथादिताद्रूप्येण यथा संभवतो न तथा केवलस्वरूपेणेति । विषयिणः स्वात्मनैवोपयोगो न तु विषयात्मनेति न परिणामत्वमिति, तदपि सावद्यम् । मन्मथादिप्रत्येकसाध्यतत्तत्कार्येषु एकस्यैव राज्ञो हेतुत्वेन चमत्कारातिशयसमुल्लासाद्राज्ञः स्वरूपेणैव तत्रोपयोगादेवोत्कर्षसिद्धेर्विषयतादात्म्यापेक्षया या अनावश्यकत्वादिति विभावनीयम् ॥ **शरीरत्व इति** । परिणामस्वरूपपर्याप्त्यधिकरणत्व इत्यर्थः । **मानाभावादिति** । विशिष्टस्यैव परिणामालंकारत्वाभ्युपगमाद्विषयिणि विषयताद्रूप्यमात्रस्यापि तच्छरीरत्वाभावादित्यर्थः ॥ नतु विशिष्टस्यैव

---

१. 'गमात्रं' ख. २. 'तापः शान्तिमेष्यति' ख.

त्वाद्वा सर्वथैव न व्यङ्ग्यत्वमिति ॥ तदपि चिन्त्यम् । एकदेशस्य वा
त्वेऽप्यलंकारस्य व्यङ्ग्यत्वानपायात् । अत एव

'धन्यासि या कथयसि प्रियसंगमेऽपि
विस्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः सरामि यदि किंचिदपि सरामि ॥'

इत्यत्र व्यतिरेको व्यङ्ग्य इति काव्यप्रकाशव्याख्याने 'धन्या
इत्यत्र । धन्यासीति लक्षणाया आवश्यकत्वात् । उत्तरार्धे 'अहं ध
इत्यस्यैव व्यङ्ग्यत्वम् । एवं च व्यतिरेकघटकस्य त्वमधन्येत्यंशस्य व्यङ्ग्य
त्वाभावेऽपि अहं धन्या इत्यस्यैव व्यङ्ग्यत्वम् । एवं च व्यतिरेकघटक
त्वमधन्येत्यंशस्य व्यङ्ग्यत्वाभावेऽपि अहं धन्येत्यस्य व्यङ्ग्यतामा
व्यतिरेकस्य व्यङ्ग्यत्वोक्तिरिति चण्डीदासादयः ॥ ताद्रूप्यस्योपयोगिता
च्छेदकत्वेऽपि परिणामशरीरत्वे मानाभावाच्चेत्यलमतिप्रसङ्गेन ।

---

तथात्वेऽपि तदेकदेशस्य विषयिणि विषयताद्रूप्यस्य शाब्द(धी)[1]विषयत्वात्कथं लि
ष्टस्य व्यङ्ग्यत्वमित्याह—**एकदेशस्येति** । तत्र प्राचीनसंमतिमाह—**अत एवेति**
**धन्यासीति** । नायिकायाः सखीं प्रत्युक्तिः । 'नीविराप्रथनं नार्या जघनस्थ
वाससः' इति नाममाला ॥ शया(पा)मीत्यत्र स्वाभिप्रायाविष्करणमात्रस्य विवक्षि
दात्मनेपदाभाव इति शाब्दिकाः । **आवश्यकत्वादिति** । अन्वयानुपपत्तेः पू
प्रतिसंधानात् । विरोधलक्षणया धन्यपदस्याधन्यार्थकत्वादित्यर्थः ॥ **चण्डीदासेति**
इदमुपलक्षणम् । इन्दुनेति त्वदुक्तपरिणामध्वन्युदाहरणेऽपि विषयिणो विषयताद्रू
व्यङ्ग्यत्वेऽपि उत्तरार्धे विरहतापोपशमनरूपप्रकृतकार्योपयोगितायाः शाब्दविषय
दुक्तगतेरवश्यं शरणीकार्यत्वादित्यर्थः । केचित्तु सामान्येन निरूपितस्यार्थस्य सुख
पत्तये तदेकदेशं निरूप्य तयोरवयवावयविभाव उच्यमान उदाहरणालंकारः । उ
इत्यर्थान्तरन्यासवारणं तत्र व्यङ्ग्यत्वात् । तदुक्तिश्च इव यथा निदर्शनदृष्टान्तादि
बोध्या । न च इवादीनां सादृश्यार्थकतया सामान्यविशेषभावार्थकत्वं नास्तीति
च्यम् । लक्षणया तत्संभवात् । अन्यथा संभावनार्थकत्वमपि न स्यात् । इवपदेन व
'अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति । निखिलरसायनराजो गन्धे
लशुन इव ॥' अत्र सत्पदार्थलशुनयोर्दोषोग्रगन्धयोश्च सामान्यविशेषभावः । न
पमैवेति वाच्यम् । विशेषस्य सामान्यावच्छिन्नप्रतियोगिताकभेदरहितत्वात् । उपमा

1. 'शाब्दबोधीयविषय' क.

स्थानस्थानविकीर्णविचारमुपमागतं सुखेनैव ।
एकत्र द्रष्टुं ये वाञ्छन्ति तदर्थमेष मे यत्नः ॥

इत्यलंकारकौस्तुभे सपरिकरमुपमानिरूपणम् ।

च्छेदकावच्छिन्नप्रतियोगिताकभेदस्य चोपमेयवृत्तेरुपमाव्यवस्थापकत्वात् । अत्र एवात्र सदृशादिशब्दानामप्रयोगः संगच्छते । नाप्यर्थान्तरन्यासविशेषः । तत्र इवादिपदप्रयोगविरहात् । न चार्थत्ववाच्यत्वमात्रं तावता स्यान्नत्वतिरेक इति वाच्यम् । सामान्यार्थसमर्थको हि विशेषवाक्यार्थो द्विविधः । अनुभवाद्यंशस्यैव विशेषरूपत्वम्, विधेयांशस्तु सामान्यगत एवेत्येकः । अंशद्वयेऽपि विशेषत्वमेवेत्यपरः । तत्राद्ये उदाहरणालंकारः, द्वितीये त्वर्थान्तरन्यासविशेष इति विभाग इत्याहुः ॥ प्राचीनानुसारिणस्तु—उपमैवेयं 'निर्विशेषं न सामान्यम्' इति न्यायेन प्रथमोक्तसामान्यस्य किंचिद्विशेषपर्यवसानावश्यकतया तेनैव सह चरमोक्तविशेषस्योपमानिष्पत्तिसंभवादेकविशेषवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्य विशेषान्तरेष्ववाधितत्वात् । सामान्यविशेषभावस्य प्रथमं प्रतीतावपि अन्ततः सादृश्य एव विश्रामाच्चेत्याहुः । वस्तुतस्तु पूर्वार्धोपात्तसामान्यस्य विशेषान्तरमादाय न पर्यवसानम् । उत्तरार्धोपस्थितविशेषमादायैव तदावश्यकत्वात् । अन्यथा तदुपादानवैयर्थ्यात्, उभयोः समर्थ्यसमर्थकत्वप्रत्ययाच्च । अतोऽर्थान्तरन्यास एवायम् । अनुवाद्यांशस्य विशेषरूपत्वम्, विधेयांशस्तु सामान्यगत एवेत्यवान्तरभेदेऽपि तद्वैविध्यस्यैवोचितत्वात् । इवादिपदप्रयोगस्तु सामान्यव्याप्तिग्रहस्थलविशेषप्रदर्शनार्थः । अतएव सदृशादिपदानामप्रयोगोऽपि संगच्छते । एवं च दोषः सत्पदार्थस्यापि गर्हाहेतुरिति हेतुहेतुमद्भावस्य लशुनस्थल एव ग्रह इति । परमार्थतस्तु—निदर्शनाविशेष एवायं विशेषवाक्ये कार्यतावच्छेदकधर्मस्य सामान्यवाक्यगततादृशधर्मव्याप्यतायामेव विशेषेण सामान्यस्य समर्थरूपार्थान्तरन्यासस्य व्यवस्थापयिष्यमाणत्वात् । प्रकृते च 'उन्नतं पदमुपैति यो लघुर्हेलयैव स पतेदिति ध्रुवम् । शैलशेखरगतो दृषत्कणश्चारु मारुतधुतः पतत्यधः ॥' इत्यतो वैलक्षण्यानिरुक्तेः । उन्नतपदप्राप्तो लघुर्निश्चयेन पतति, शैलाग्रवर्ती मन्दमारुतोद्धतो दृषत्कण इव, इत्यतोऽपि तत्समानाकारकप्रतीतेरेवोदयात् । 'विश्रब्धघातदोषः स्ववधाय खलस्य वीरकोपकरः । वनतरुभङ्गध्वनिरिव हरिनिद्रातस्करः करिणः ॥' इत्यादावपि तथात्वदर्शनात् । परं तु इवपदप्रयोगाभावे द्वितीयवाक्ये तत्क्रियापदस्य पुनः प्रयोगः । इवपदसत्त्वे तु तद्बलादेव तत्र तदन्वयोपपत्तेर्न तथेति । वाक्यभेदस्तूभयत्राप्यविशिष्टः ॥ यत्तु—उदाहरणालंकारे इवादिपदप्रयोगे वाक्यभेदाभावो निदर्शनादिशब्दप्रयोगे तु न सः—इत्युक्तम् । तन्मन्दम् । सामान्यधर्मवाचकपदस्य पृथक्प्रयोगविरहेऽपि वाक्यभेदस्यावश्यकत्वात् । वाक्यैकवाक्यतायाश्चोभयत्राप्यविशेषादिति संक्षेपः । तदेतत्सर्वं ध्वनयन्नाह—इत्यलमिति ॥

इत्युपमालंकारनिरूपणम् ।

१. 'शब्देऽपि' क.

अथानन्वयमाह—

यत्रैकावच्छिन्ने स्तामुपमानोपमेयत्वे ।
अन्यसदृशं निषेद्धुं तमनन्वयसंज्ञमाचख्युः ॥ १ ॥

उपमानतावच्छेदकधर्म एव यत्रोपमेयतावच्छेदकः सोऽनन्वय इत्यर्थः। यद्धर्मावच्छिन्नप्रतियोगिताकं सादृश्यं तद्धर्मावच्छिन्नतदनुयोगिताकत्वं यावत् । अत उपमेयोपमायां नातिव्याप्तिः । अनन्वयपदार्थमाह—अन्येति । कर्मधारयोऽयम् । स्वभिन्नमुपमानमित्यर्थः । सदृशपदं सादृश्यप्रतियोगिपरत्वात् । न विद्यते तद्भिन्नस्य सादृश्यप्रतियोगिन उपमानत्वेनान्वयो यत्रेत्यर्थः ।

यथा—

'आघूर्णितं पक्ष्मलमक्षिपद्मं प्रांशुद्युति श्वैत्यजितामृतांशु ।
अस्या इवास्याश्चलदिन्द्रनीलगोलामलश्यामलतारतारम् ॥'

---

भेदगर्भसादृश्यावगाह्युपमानिरूपणानन्तरं भेदनिर्मुक्तसादृश्यावगाहितयानन्वयः प्रसंगतिक इत्याह—अथेति । 'द्वन्द्वात्परं श्रूयमाणं प्रत्येकमभिसंबध्यते' इति न्यायाद् उपमानोपमेयत्वेत्यत्र त्वपदार्थस्योपमानपदार्थेनाप्यनन्वयः । तदेव स्पष्टयति— उपमानत्वेति । ननु 'हासः प्रसूनमिव हास इव प्रसूनम्' इत्युपमेयोपमायां पूर्वोप- मायामुपमेयतावच्छेदकं प्रसूनत्वमेवोत्तरोपमायामुपमेयतावच्छेदकमिति तत्रातिव्याप्ति- रत आह—यद्धर्मेत्यादि । तत्र तु प्रसूनत्वावच्छिन्नप्रतियोगिताकसादृश्ये प्रसून- त्वावच्छिन्नानुयोगिताकत्वं नास्ति, इति न व्यभिचार इत्यर्थः । अन्यसदृशनिषेध- त्वस्य लक्षणे प्रवेशभ्रमं निवारयति—अनन्वयपदार्थमाहेति । अन्यस्य सदृशं- षष्ठीसमासे 'इन्दुरिन्दुरिव श्रीमान्' इत्यादिना घटाद्युपमाननिषेधानुपपत्तेरनन्वयो न स्यादत आह—कर्मधारय इति । नन्वेवमपि नाभीष्टसिद्धिरुपमानान्तरस्यापि कस्य- चिदन्यत्वादत आह—स्वभिन्नमिति । सन्निधानवशात्प्रकृतस्यैव प्रतियोगित्वे- ऽभेदेऽन्वय इति भावः । ननु सदृशपदस्य सादृश्याश्रयपरत्वात्कथमुपानलाभ इत्यत आह—सदृशपदस्येति । अनन्वयपदस्य योगशक्त्या उक्तार्थपरत्वं दर्शयति— न विद्यत इति । न विद्यतेऽन्वयो यत्रेत्यर्थे 'नञोऽस्त्यर्थानां वाच्यो वाचोत्तरपदलोपः' इति वार्तिकेन बहुव्रीहौ कृते विद्यमानपदलोपः । अन्वयश्च किं निरूप्य इत्याह— स्वभिन्नस्योपमानत्वेनेत्युक्तम् । उपमेयभिन्नस्य सादृश्यादेरेवान्वयसत्वात् । बाध-

अत्र भैमीनेत्रमिव भैमीनेत्रमिति एकस्यैवोपमानोपमेयभावः। नन्वयमुपमातो नातिरिच्यते। तथा हि। किं तद्भेदकम्, न तावदिवार्थभेदस्य स्वस्मिन्नसंभवः, व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्य स्वस्मिन्नपि संभवात्। देशकालादिभेदेन स्वस्मिन्नपि स्वभेदसत्त्वाच्च। नापि फलभेदः। चन्द्र इव मुखमित्यादौ मुखे चन्द्रगतधर्मप्रतीतिः। चन्द्र इव चन्द्रः इत्यत्र तु अन्यस्मिंश्चन्द्रनिष्ठसादृश्यप्रतियोगित्वाभावो बुध्यते, न तु चन्द्रगतधर्मवत्त्वम्। तस्य साधारणधर्मज्ञानकाल एव सिद्धत्वात् इति वाच्यम्। चन्द्रगतधर्मप्रतीतौ बाधकाभावात्। न चेवार्थभूतेऽन्योन्याभावे उपमेयप्रतियोगिकत्वस्य भानेन चन्द्रप्रतियोगिकभेदसमानाधिकरणत्वभानं न संभवति चन्द्रनिष्ठान्योन्याभावो न चन्द्रप्रतियोगिक इति बाधज्ञान-

---

उपमानत्वेनेति, न त्वेतदपि समासकोटिप्रविष्टमिति द्रष्टव्यम्। **भैमीनेत्रमिवेति।** यद्यप्यस्या इवास्या इति यथाश्रुतेन भैमीप्रतियोगिकसादृश्याश्रयस्य भैम्या नेत्रमुक्तविशेषणविशिष्टमित्येवायाति तथाप्यत्र वर्णनस्यैव प्रक्रमात्। अस्या नेत्रमिवास्या नेत्रमित्यन्वयो नेत्रपदावृत्त्यावश्यं कार्य इत्यर्थः॥ **न तावदिति।** इदं च इवार्थभेदस्योपमेयान्वय इति पक्षमङ्गीकृत्योक्तम्। **व्यासज्येति।** घटपटोभयत्वावच्छिन्नप्रतियोगिताकभेदस्य पटादावपि सत्त्वादित्यर्थः। **देशेत्यादि।** पूर्वक्षणादिवृत्तित्वविशिष्टस्यैतत्क्षणादिवृत्तिविशिष्टस्य च चैत्रस्य भेदप्रतीतेः। **नापीति।** वाच्यमित्यनेनान्वितम्। फलभेद इत्यनन्तरं उपमाभेदक इत्यस्यानुषङ्गः। तमेव फलभेदं दर्शयति—**चन्द्र इवेत्यादिना। सिद्धत्वादिति।** धर्मे चन्द्रवृत्तित्वज्ञानकाले चन्द्रस्य धर्माश्रयत्वमपि बुध्यते समानवित्तिन्यायात्। ततश्च तद्बोधस्य पुनर्वैयर्थ्याच्चन्द्रस्यान्यदुपमानं नास्तीत्येव बुद्धिर्भवति। शब्दाधिक्यादर्थाधिक्यमिति न्यायादित्यर्थः। ननु शाब्दादौ समानवित्तिवेद्यत्वन्यायो नास्त्येव, तस्य व्युत्पत्तिविशेषनियतत्वात्। मानसं च तत्‌ज्ञानं शाब्दे न प्रतिबन्धकम्। अन्यथा योग्यताज्ञानस्यावश्यंकतया शाब्दोच्छेदापत्तेः। सत्यम्। एतद्दोषस्याप्यत्र बोध्यत्वात्॥ **बाधकाभावादिति।** श्रुतिप्राप्ते प्रकरणादीनामनवकाशादिति न्यायेन शब्दगम्यमर्थमुपेक्ष्य प्रकारान्तरेण तद्बोधानुसरणस्यानुचितत्वादित्यर्थः। ननु धर्मस्य तदन्वयसंभवेऽपि इवार्थभेदस्य तदन्वयायोग्यतया नैवं बोधः स्यादित्याशङ्कते—**न चेति।** यद्यपि विशिष्टतया भेदः पूर्वमेवोक्त इत्यत इयं शङ्का न पुनरुदेतुमर्हति। तथापि सिद्धान्तवक्ष्यमाणरीत्या उक्तविधभेदस्य तद्वाक्यजन्यशाब्दबोधविषयत्वाभावनिश्चयदार्ढ्यादिदमुक्तम्। भेदमात्रोपपत्तिमाश्रि-

सत्त्वादिति वाच्यम्। 'एतत्कालीनचन्द्रस्तत्कालीनचन्द्रसदृशः' इति
प्रति 'चन्द्रो न चन्द्रभिन्नः' इति बाधज्ञानस्याप्रतिबन्धकत्वात्। बाधबु
प्रतिबध्यप्रतिबन्धकभावे विरोधिप्रकारत्वनिवेशस्यावश्यकत्वात्। भेदस्य
कालिकाव्याप्यवृत्तितया तदविरुद्धत्वादिति चेन्न। तथा सति 'चन्द्र
चन्द्रः' इत्यतः 'एतत्कालीनश्चन्द्रस्तत्कालीनचन्द्रसदृशः' इति बोधापत्ते
अत एव संयोगसंसर्गकपर्वतविशेष्यकवह्निप्रकारकज्ञानसत्त्वे न समवा
सर्गकतादृशधीः। तदयं फलितार्थः। यद्युक्तरीत्या बोधोऽभ्युपगम्यते त
तस्योपमात्वमस्माकमपीष्टम्। 'चन्द्रश्चन्द्रवृत्तिधर्मवान्' इति बोधोऽप्यनु

---

त्याह—**एतत्कालीनेति**। **आवश्यकत्वादिति**। अन्यथा 'शाखावच्छे
कपिसंयोगाभाववान्वृक्षः' इति ज्ञानस्य 'मूले वृक्षः कपिसंयोगी' इत्येतद्बोधविरोधि
पत्तेः। तथा च बाधबुद्धौ तदवच्छेदकतया भासते तदवच्छेदेनैव प्रतियोगिवि
बोधो न भवति। अत्र च बाधबुद्धौ तत्कालावच्छेदकतया भासते विशिष्टबुद्धौ त
त्काल इति न विरोधित्वमिति भावः। **बोधापत्तेरिति**। योग्यताज्ञानघट
शाब्दबोधप्रवेशावश्यकत्वादित्यर्थः॥ **अत एवेति**। उक्तावश्यकत्वरूपहेतोरेवेत्य
संयोगसंसर्गकपर्वतविशेष्यकवह्निप्रकारकयोग्यताज्ञानसत्त्वे पर्वतो वह्निमानिति व
त्समवायं संसर्गीकृत्य पर्वतविशेष्यकवह्निप्रकारकशाब्दबोधो न भवति विशेष्यप्र
योर्योग्यताज्ञानविषयतापन्नयोरेव भासनवत्संसर्गस्यापि तादृशस्यैव भानादित्य
पदार्थयोर्विशेष्यतायां पदोपस्थितस्यैव संसर्गविशेषस्य शाब्दबोधविषयतायां योग्य
ज्ञानविषयत्वस्य नियामकत्वमित्यत्र तात्पर्यम्। नन्वेवमपि एतत्कालादेः संसर्ग
प्रकृते भानविरहात्, पदार्थत्वाभावाच्च कथं शाब्दबुद्धिविषयत्वमिति चेत्, सत्य
चन्द्रपदस्य तादृशचन्द्रे लक्षणास्वीकारात्। नन्वेवमपि योग्यताज्ञानविषयत्वस्य
यत्वनियमकल्पनमसंगतम्। लक्षणास्वीकारे पदार्थत्वेनैव तदुपस्थितिसंभवा
चेत्, सत्यम्। चन्द्रपदार्थस्य पूर्वकालावच्छिन्नप्रतियोगित्वेन भेदे तस्य चैतत्काला
न्नानुयोगित्वेन चन्द्रपदार्थेऽन्वय इत्यर्थात्। नन्वेवमप्येतत्कालीनश्चन्द्र इत्याद
बोधानुपपत्तिरेव संसर्गांशनिविष्टपदार्थस्यान्वयप्रतियोगिपदार्थविशेषणत्वेन बोधा
दिति चेत्, सत्यम्। तादृशबोधस्यैव विवक्षितत्वात्। वस्तुतस्तु चन्द्रपदस्यैतत्का
नचन्द्रलक्षणया 'एतत्कालीनश्चन्द्रः' इत्यादिरेव बोधः। पदोपस्थितपदार्थानां त
ताज्ञानविषयसंसर्गस्य चावश्यं शाब्दे भानमित्यत्र चात एवेत्यादिकथनमिति सं
**अस्माकमपीति**। ननु भवदभिमतस्थलेऽपि आरोपितभेदेनोपमैवालंकार इति
णिकसंमतमित्यनन्वयालंकारोऽनवकाश एव। तथा हि—उत्तरमीमांसायां प्रथमा

वसिद्धत्वादिष्टत्वं दुरुपह्नव एव । न च तद्भेदभाने संभवति तत्र च भेदांशभानाभावेनानन्वय इति व्यवस्था, तस्माद्वृत्तित्वं भेदश्चेवार्थः । 'चन्द्रवृ-

---

तृतीयपादे 'दहर उत्तरेभ्यः' इत्यधिकरणे, 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' इति श्रुतौ । ब्रह्मपुरं शरीरं जीवस्य ब्रह्माभिन्नतया तन्निवासरूपत्वात् । दहरं परिच्छिन्नम् । अल्पमिति यावत् । पुण्डरीकं तत्संनिवेशं हृदयमित्यर्थः । तत्संबन्धितया तदन्तर्गत आकाश उक्तः । स किं भूताकाशः । उत परं ब्रह्मेति संदिह्य भूताकाशस्य विवक्षितत्वे 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति श्रूयमाण उपमानोपमेयभावो न संभवतीति शङ्कायां पूर्वपक्षिणावच्छिन्नानवच्छिन्नभेदेन बाह्याकाशहृदयावच्छिन्नाकाशयोर्भेदमारोप्य उपमानोपमेयभावः समर्थितः । सिद्धान्तेऽपि भेदारोपेण तदुपादानमगतिकगतिरिति नात्र तदङ्गीकरणं युक्तमित्यभिहितम् । तथा च भाष्यकृतः—'अगतिका हीयं गतिर्यत्काल्पनिकभेदाश्रयणम्' इति ॥ वाचस्पतिमिश्रैरपि भामत्यामुक्तं तद्व्याख्यानावसरे—'तेन तस्योपमेयत्वं रामरावणयुद्धवत् । अगत्यां भेदमारोप्य गतौ सत्यां न युज्यते ॥' तदपि तत्कल्पतरौ व्याख्यातम्—ह्यस्तनाद्यतनत्वादिना युद्धे भेदारोपः क्रियते । 'गगनं गगनाकारं सागरः सागरोपमः । रामरावणयोर्युद्धं रामरावणयोरिव ॥' इत्यत्र—इति ॥ एतावता हि एवंविधस्थले भेदारोपेण उपमैवेत्यभिप्रायो लभ्यते त्वया च नात्र भेदविवक्षोच्यत इति विरोधः ॥ पूर्वमीमांसायामपि तद्व्यपदेशाधिकरणे—'श्येनेन यजेत' इत्यत्र गुणविधित्वपक्षे श्येनपदस्य पक्षिविशेषे निरूढतया तस्यैव विधेयत्वापत्तौ 'यथा वै श्येनो निपत्यादत्ते, एवमयं द्विषन्तं भ्रातृव्यमादत्ते' इति उपमानोपमेयभावो न संगतः स्यात् । स्वस्य स्वसादृश्याभावात्—इत्युक्तम् । तथा पञ्चमाध्याये 'तेन तुल्यम्' इति सूत्रे कैयटेनाप्युक्तम्—शयितेन तुल्यं शयितव्यमित्यत्र नास्त्युपमानोपमेयभावः । यथा 'गौरिव गौरिति' येनैव हेतुना एका गौस्तेनैवापरोऽपीति उपमानोपमेयभाव इति ॥ अत्रोच्यते—न तावत् गगनमित्यत्र भेदारोपेणोपमेत्येतद्विरोधः । तत्र भेदविवक्षायामुपमाया अस्माभिरपि स्वीकारात् । यदा तूपमानान्तरव्यावृत्तावेव तात्पर्यं तदानन्वय एव । कैयटग्रन्थादपि हि उपमानोपमेयभावो नास्तीत्युक्त्या तत्र सादृश्यपर्यवसानं नास्तीत्यर्थो लभ्यते । तेन चान्यप्रतियोगिकसादृश्यानाश्रयत्वविवक्षायां न कोऽपि विरोध इति अनुभवसिद्धस्य ग्रन्थविरोधेनापलापानर्हत्वाच्चेति ॥ एवं च 'उपमानानि सामान्यवचनैः' इति सूत्रे यन्महाभाष्ये दृश्यते—'यद्युपमानोपमेययोरैक्यं तदा गौरिव गौरित्यत्राप्युपमानोपमेयभावः प्राप्नोति' इति ॥ तदपि उक्ताभिप्रायकमेवेति ॥ **इवार्थ इति** । लक्षणयेति शेषः । खण्डशक्तिपक्षेऽपि अर्थैकदेशमपहाय तदेकदेशप्रवृत्तौ लक्षणावश्यकत्वात् । शक्यतापर्याप्त्यधिकरण एव शक्तेः सिद्धान्तसिद्धत्वात् । अत एव लक्षणाप्रसङ्गभिया दहराधिकरणे आकाशस्याकाशसाम्याश्रयणं निराकृतम् । उक्त-

त्तिधर्मवांश्चन्द्रः' इति बोधः । उपमानान्तरव्यावृत्तिस्त्वं व्यङ्ग्यैवान

यत्तु चित्रमीमांसायाम्—स्वस्मिन् स्वसादृश्यस्याप्यसंभवादुपमाना रव्यावृत्तिः—इति, तदसत् । असंभवस्याभावात् तस्मात्तथाविवक्षैव णम् । अत एव 'असादृश्यविवक्षातः' इत्युक्तं प्राचीनैः । अत एवानु त्वकृतोत्कर्षविवक्षेति न्यायपञ्चाननादयः ॥

अस्य च भेदा उपमावदेव । अयं तु विशेषः । धर्मोऽनुगामिमात्र बिम्बप्रतिबिम्बभावादिना धर्मोक्तौ हि धर्मान्तरावच्छिन्ने तत्र धर्मान्त वच्छिन्नतत्साम्योक्तावुपमात्वमेव स्यात् । एवं तद्दोषा अप्यत्र केचिदे हीनत्वादीनां स्वस्मिन् स्वापेक्षया न्यूनत्वाधिक्याद्यसंभवेनाभावात् । अनु मिधर्मश्च क्वचिदुपात्तः क्वचित्त्वर्थगम्यः । आद्यमुदाहृतम् ।

'सत्येव जगति बहवोऽप्यर्थास्तेजस्त्वजात्यवच्छिन्नाः ।
तदपि प्रसिद्धमेव ह्यत्र विवस्वानिव विवस्वान् ॥'

अस्य ध्वनिर्यथा रामायणे—

'त्वां कृत्वा परतो मन्ये नूनं धाता स लोककृत् ।
न हि रूपोपमात्रान्या तवास्ति जगतीतले ॥'

---

व्यङ्ग्यस्य तत्रानुयोगाच्चेति ध्येयम् । व्यङ्ग्यैवेति । स्ववृत्तिधर्मवत्तया चमत्का जीवनादित्यर्थः ॥ आद्यमुदाहृतमिति । 'आघूर्णितं पक्ष्मलमक्षिपद्मम्' इत्यत्र घूर्णितत्वादिविशेषणानामनुगतानां नेत्रद्वयान्वयित्वादित्यर्थः । आद्यं शब्दाक्षेपा नुगामिधर्मवद्वाक्यमित्यर्थः । एवं द्वितीयमित्यत्रापि क्लीबत्वमुपपाद्यम् । विवस्वा निति । अत्र प्रकाशकत्वातिशयादिरूपधर्मोऽनुपात्त इत्यर्थः । ध्वनिरिति । यद्य पमानान्तरव्यावृत्तिरत्र शब्दोपात्तैव, तथापि तन्निरूपितसादृश्यस्यैवानन्वयशरीरतया व्यङ्ग्यत्वमित्यर्थः । त्वां कृत्वेति । सुन्दरकाण्डे सीतां प्रति रावणस्योक्तिः । कृदित्यनेनादौ संसारे नानाविधसौन्दर्यनिर्माणजन्याभ्यासातिशयसूचनम् । इति रूपकरणान्निवृत्त इत्यर्थः । एवं च पूर्वरूपनिर्माणाभ्यासेन सीतारूपातिशयज देतद्रूपनिर्माणाभ्यासेनैतदुत्तरनिर्मितरूपेऽर्थादुत्कर्षेऽपि सेत्स्यतीति नाशङ्कनीयम् । तदुत्तरं रूपनिर्माणान्निवृत्त्या एतदुत्कृष्टरूपाभावसिद्धावपि यदभ्यासेनैतद्रूपस्यैव तज्जन्यनायिकान्तररूपाणां एतत्समानकालीनानां एतत्सादृश्यं स्यादेवेति चेत्, तादृशविलक्षणाभ्यासेनैतद्रूपस्यैव निर्माणमित्याशयात् ॥ तदाह—न हीत्यादि

---

1. 'स्तु.'

अन्या त्वत्सदृशी नास्तीति भेदगर्भसादृश्यनिषेधात्त्वमेव त्वत्सदृशीति व्यङ्ग्यम् । यत्तु—सर्वथैवोपमाननिषेधोऽसमालंकारः । अयं चानन्वये

त्तरार्धेन । रूपोपमेति । तवेत्यस्य सोपेक्षत्वाद्रूपान्वयः । उपमीयते इत्युपमा, त्वद्रूपं उपमेयं यस्या इति समासः । स्वकीयरूपनिष्ठोपमानताद्वारेणोपमानत्वं बोध्यम् । यदि त्वङ्प्रत्ययस्य कर्मण्यभिहितत्वात्कथमुपमीयत इति व्युत्पत्त्या, उपमानपदस्योपमेयपरत्वमिति विभाव्यते । तदा छान्दसत्वमाश्रयणीयम् । अथ तस्याप्यगतिकगतित्वात्त्राप्यपरितोषस्तदा उपमापदस्य तद्वत्वपरत्वमाश्रयणीयम् । पृथिवीतल इति च लोकमात्रपरं रूपकरणात्तस्योपरमे हेत्वभावादन्यत्रापि तादृशरूपोऽपीत्यनुपपत्तेः । अत्र त्वदुपमान्या नास्तीति, अन्यस्या एवैतन्निष्ठसादृश्यप्रतियोगिभूतायाः प्रतिषेधादभेदगर्भसादृश्याभिमतत्वात्त्वमेव त्वत्सदृशीत्यनन्वयो ध्वन्यते । यथा वा नैषधे—'जागर्ति मर्त्येषु तुलार्थमस्या योग्येति योग्यानुपलम्भनं न । यद्यस्ति नाके भुवनेऽथवाधस्तदा न कौतस्कुतलोकबाधः ॥' इदं च 'भैमी स्ववृत्त्यसाधारणधर्मनिमित्तकस्वजातीयप्रतियोगिकसादृश्यवती वस्तुत्वात्, घटादिवत्' इत्यनुमित्या भैम्या अन्यसदृशत्वसिद्धौ, अर्थात्तद्वृत्तिसादृश्यप्रतियोगिनायिकान्तरसिद्धिरित्याशङ्क्योच्यते । इह भैम्युपमानभूताया भूतले योग्यानुपलम्भादेवाभावसिद्धिः । भूतलं यदि भैमी वृत्तिसादृश्यप्रतियोगिनायिकाधिकरणं स्यात्, तदा तद्वृत्तयोपलभ्येतेत्यापादनसंभवात् । अथ यदधिकरणं यदसंनिकृष्टं तत्र तस्य कथं तदभावनिर्णयः । अधिकरणज्ञानरूपकारणविरहात् इति चेत्, उपलम्भस्य प्रत्यक्षशाब्दादिसाधारणस्य विवक्षितत्वात् ॥ तथा च देशान्तरे तत्सत्वे तद्दर्शिजनान्तरवाक्यादिना तत्प्राप्नोतीति संभवात् । स्वर्गपातालयोस्त्वनुमानेन तदभावः साध्यते । तथा हि—'स्वर्गपाताले भैमीवृत्तिसादृश्यप्रतियोगिनायिकाविरहिते भैमीदर्शनविषयकोत्कटेच्छावत्स्ववृत्तिकत्वात्' इति सामान्यव्याप्तिमूलकानुमानेनाभिमतार्थः सिध्यति । न चात्र प्रतियोग्यसिद्धिः । भेदसाधारणसादृश्यविवक्षया भैम्या एव सादृश्याप्रसिद्धेः । न चैवं तदभावेनैव सिद्धसाधनं भैम्यभावाश्रयत्वेनानभिमतत्वे सतीति पक्षविशेषणात् । तथा च बाधेन भैम्यभावमादाय साध्यानुपसंहारात् । केचित्तु 'स्वर्गपातालवृत्तिनायिकाभैमीवृत्तिसादृश्यप्रतियोगित्वाभाववत्यः स्वसमानदेशानां भैमीदर्शनविषयकोत्कटेच्छानिवृत्त्यजनकत्वात्' इत्यनुमानमित्याहुः । एवं च भैमीभिन्नतदुपमाननिषेधे भैम्यामेव भैम्युपमानत्वं व्यज्यत इति । इदं त्ववधेयम् । वाच्यानन्वये यथा श्रुतमात्रस्य चमत्कारमाधायकतया उपमानान्तरव्यावृत्त्यनुसरणमिति सर्वसिद्धम् । यत्र तूपमानान्तरव्यावृत्तिरेव वाच्या तत्र तस्या चमत्कारोल्लासकत्वात् । तदनुल्लासकस्वनिष्ठस्वप्रतियोगिकसादृश्याश्रयत्वव्यञ्जनं न ध्वनिव्यवहारप्रयोजकं वाच्यापेक्षया तस्यानतिशयादिति वस्तुगतिः । तथापि ग्रन्थान्तरानुसारेण स्पष्टार्थं च तदुद्भावनमिति दिक् ॥ कैश्चित्पृथग्गणितस्यासमालंकारस्यानन्वयेऽन्तर्भाव्यत्वादत्रैव तमाशङ्कते—यत्त्विति । एवमन्यत्रापि यस्य यत्रान्तर्भावस्तस्य तत्रैवोद्भावनम् । अन्यथान्तर्भावयितुमशक्य-

व्यङ्ग्योऽपि दीपकादावुपमावत्पृथगेवालंकारः । अन्यथा दीपकादावपि दृश्यव्यङ्ग्यतासत्त्वादुपमानान्तर्भावापत्तेः ।

यथा—

'भूमीनाथ सहावदीन भवतस्तुल्यो गुणानां गणै-
रेतद्भूतभवत्प्रपञ्चविषये नास्तीति किं ब्रूमहे ।
धाता नूतनकारणैर्यदि पुनः सृष्टिं नवां भावये-
न्न स्यादेव तथापि तावकतुलालेशं दधानो नरः ॥'

अत्रानन्वयध्वनिनैवोपपत्तेः । आरोपे सतीत्यादिन्यायाच्च । अ- व्यङ्ग्योपमादीनामपि सर्वेषामलंकारान्तरत्वापत्तेश्चेति दिक् ॥

इत्यनन्वयः ।

---

त्वादित्यवधेयम् । **सर्वथैवेति** । उपमानलुप्तायामुपमायामतिव्याप्तिवारणा- प्रतीतिविषयस्यैवोपमानत्वनिषेधे तात्पर्यात् । प्रतीत्यविषयस्योपमानत्वसंभवे थोपमाननिषेधस्याविवक्षितत्वात् । न त्वसमस्यालंकारान्तरत्वेऽनन्वयस्यालंकारान्त- पपत्तिः । तत्राप्यसमालंकारध्वनिनैवोपपत्तेरिति चेत्, सत्यम् । अलंकारान्तरे- न्तरध्वननस्यालंकारानपवादकत्वात् । एतद्रीत्यैवानन्वयध्वनिनापि नास्य गतार्थ- त्याह—**अयं चेति** । उपमावद्व्यङ्ग्योऽपीत्यन्वयः । **पृथगिति** । दीपकादि- शेषः । तदेव स्पष्टयति—**अन्यथेति** ॥ नन्वसमालंकारध्वनिनानन्वयस्यैव कुतो न स्याद्विनिगमकाभावादित्यत आह—**आरोप इति** । अनन्वयस्योभयसि- तद्ध्वनिनास्यैव गतार्थयितुमुचितत्वादिति भावः ॥ ननूभयसिद्धत्वमप्रयोजकम् । न्वयस्य गतार्थत्वमापादयता तस्य पृथक्त्वेनानभ्युपगमस्यैव संभवादसिद्धं च । नन्वयस्य शरीरं स्वस्य स्वसादृश्यम्, अस्य तूपमाननिषेधः । तत्रानन्वयेन चमत्- उपमानान्तरव्यावृत्तिरुपजीव्यते । एवं चोपमेयोत्कर्षप्रयोजकमनुपमत्वमेवासमस्य स्वरूपमिति तस्यैवालंकारत्वमुचितम्, न तु वैपरीत्यम् । असमस्थले स्वेन स्वसा- व्यङ्ग्यत्वे चमत्कारानुपपत्तेः । तावन्मात्रस्य चमत्कारसामर्थ्ये च अनन्वयेऽपि उप- न्तरव्यावृत्तिध्वननवैयर्थ्यापत्तेः । एवं चावश्योपजीव्येनानुपमत्वेनानन्वयस्यैव गता- मुक्तमिति । अत्रोच्यते—चमत्कारजनकमात्रोपमानान्तरव्यावर्तनरूपं तच्चानन्वये- म्, असमे च वाच्यमिति । यत्र तद्व्यङ्ग्यम्, तस्यैवालंकारान्तरत्वमङ्गीकार्यम् । ह्यर्थो वाच्यापेक्षया व्यङ्ग्यः सन्नधिकं चमत्कारमावहतीति सर्वसंमतत्वादिति । कालत्रय उपमाननिषेधोऽसमालंकारः, तदनन्तर्भाव्यैवोपमाननिषेधस्तु अनन्वय- एवं चासमस्य न्यूनवृत्तित्वम्, अनन्वयस्य चासमव्यापकतयाधिकविषयत्वं स्प-

उपमेयोपमामाह—

उपमायां पूर्वस्यां प्रतियोग्यनुयोगिनौ यौ स्तः ।
तौ विपरीतौ परतश्चेदुपमेयोपमा त्वेषा ॥ १ ॥

पूर्वोपमायामुपमेयस्य द्वितीयोपमायामुपमानत्वं तत्रोपमेयस्योपमानत्वं यत्र सोपमेयोपमेत्यर्थः । यथा—

'हासः प्रसूनमिव हासमिव प्रसूनं
पाणिः प्रवाल इव पाणिरिव प्रवालः ।
केशो द्विरेफ इव केश इव द्विरेफः
सा भाति वीरुदिव सेव विभाति वीरुत् ॥'

कथं वैपरीत्यमिति दिक् । अलंकाररत्नाकरकारस्तु—तेन तदेकदेशेन वावसितभेदेनोपमानतया कल्पितेन सादृश्यमनन्वयः । उपमेयेनैवोपमानतया कल्पितेनोपमेयस्योपात्ततो भासमानं साधर्म्यमेकोऽनन्वयः प्रसिद्ध एव । यथा—'युद्धेऽर्जुनोऽर्जुन इव प्रथितप्रतापः' इति । उपमेयैकदेशस्य तथैवोपमानताकल्पनमपरः । यथा 'एतावति प्रपञ्चे सुन्दरमहिलासहस्रभरितेऽपि । अनुहरति सुभग तस्या वामार्धं दक्षिणार्धस्य ॥' उपमेयस्यैव प्रतिबिम्बादिरूपेण भेदकल्पनयोपमानत्वकथनं तृतीयः । यथा—'गन्धेन सिन्धुरधुरंधरचक्रमैत्रीभैरावणप्रभृतयोऽपि न शिक्षितास्ते । स त्वं कचत्रिनयनाचलरत्नभित्ति स्वीयप्रतिच्छविषु यूथपतित्वमेषि ॥' चक्रमैत्री एकसार्थवर्तित्वमित्यर्थः । 'कच दीप्तौ' इत्यस्य कचदिति रूपम् । एषु त्रिष्वप्युपमानान्तरविरहप्रतीतेरनन्वयत्वमित्याह ॥ अत्र रसगङ्गाधरकृतः—उपमानान्तरव्यावृत्तिमात्रमनन्वयशरीरम्, उतैकोपमानोपमेयकत्वविशिष्टम् । आद्ये 'स्तनाभोगे पतन्भाति' इत्यादेः कविकल्पितोपमाया अप्यनन्वयत्वापत्तिः । यद्यर्थोक्तिरूपातिशयोक्तावप्यतिप्रसङ्गश्च ॥ द्वितीये दक्षिणार्धवामार्धयोर्वस्तुतो भिन्नयोः सादृश्ये कथमनन्वयत्वशङ्का । किंच 'गगनं गगनाकारम्' इत्यादौ स्वातिरिक्तोपमानविरहप्रतीतिद्वारा उपमेयस्य निरुपमत्वसिद्धिः । अत्र तु वामार्धस्य दक्षिणार्धे सादृश्यनिबन्धनं निरुपमत्वमुपजीव्यविरुद्धतया नोल्लसत्येव । नायिकागतनिरुपमत्वप्रत्ययस्तु नानन्वयफलं भवितुमर्हति । तस्याः प्रकृतोपमेयत्वाभावात् । वामार्धस्यैवोपमेयत्वात् । उपमेयगतनिरुपमत्वप्रत्ययस्यैवानन्वयफलत्वकल्पनाच्च । एतेनानन्वयध्वनित्वमत्रेत्यलंकारसर्वस्वकारोक्तमपि निरस्तमित्याहुः ॥

इत्यनन्वयः ।

एवं स्वभिन्नसादृश्यव्यवच्छेदफलकमनन्वयं निरूप्य, उपमानोपमेययोः परस्परातिरिक्तसादृश्यव्यावृत्तिफलक उपमेयोपमालंकारो निरूपणमर्हतीत्याह—**उपमेयोपमामिति** । उपमानत्वमित्यनन्तरं पूर्वोपमानस्योपमेयत्वमित्यपि द्रष्टव्यम् । तौ विपरीतौ परत

ननु—

'रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसंनिभैः ।
भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलम् ॥'

इति परस्परोपमायामतिव्याप्तिः । न चेयं लक्ष्यैवेति वाच्यम् । तृतीयसदृशव्यवच्छेदस्य फलस्याभावात् । तथा हि । चन्द्र इव मुखमिति मुखे चन्द्रसाम्ये वर्णिते चन्द्रेऽपि मुखसादृश्यमर्थतः सिध्यति साधारणधर्मस्योभयानुगामित्वात् । तत्र चन्द्रे मुखसाम्ये शब्दतो वर्ण्यमाने मुखचन्द्रयोः परस्परमेव साम्यं न त्वन्येनेति सदृशान्तरव्यवच्छेदः फलति । रजोव्याप्तत्वेन धर्मेण गगने भूतलसाम्ये वर्णिते तु भूतले मेघतुल्यगजैर्गगनसाम्यं नार्थतः सिध्यति रजोव्याप्तत्वमेघतुल्यगजव्याप्तत्वयोर्धर्मयोरुपमाद्वये भिन्नत्वात् । अतः पूर्वोपमयासिद्धमेव गगनसाम्यं भूतले वर्ण्यत इति गगनभूतलयोः परस्परमेव साम्यमिति सदृशान्तरव्यवच्छेदो न फलतीति चेत्, मैवम् । पूर्वोपमायां साधारणधर्मस्यैव द्वितीयोपमायां तादृशत्वे उपमेयोपमात्वमित्यभिप्रायात् । इदं चोपमानोपमेययोरुत्तरोपमायां वैपरीत्यमित्यनेन लभ्यते । तस्य हि तावानेव विशेषो न तु साधारणधर्मवैपरीत्यकृतोऽपीत्यर्थः । धर्मश्चानुगामी बिम्बप्रतिबिम्बभावापन्नो वेति नाग्रहः । स्पष्टार्थमुदाहरणानि ।

अनुगामी यथा मम—

'त्वन्नयनमुत्पलमिव त्वन्नयनमिवोत्पलं कान्ते ।
विद्रुम इव त्वदधरस्त्वदधर इव विद्रुमः शोणः ॥'

पूर्वार्धे[1] आर्थः, द्वितीयार्धे शाब्द इति विशेषः ।

---

इति कारिकायास्तदर्थकत्वात् । अन्यथा रशनोपमायामतिव्याप्तेरनिवारणात् । फलस्याभावादिति । उभयोरन्योन्यातिरिक्तसादृश्यव्यावृत्तिफलकत्वे सतीत्यस्यापि एतदीयलक्षणान्तर्गतत्वादिति भावः ॥ फलतीति । सादृश्यैव विधेयत्वेन प्रतिष्ठानादिति भावः । लभ्यत इति । उपमानं उपमेयं धर्मश्चेति त्रयमुपमाघटकम् । तत्र द्वयोर्वैपरीत्योक्त्या धर्मस्य तद्भावो लभ्यते इति भावः । धर्मलोपस्तावदुदाहृतो 'हासप्रसूनम्' इत्यादिना । धर्मवत्त्वे त्वाह—धर्मश्चेति । अनुगामीत्यादि । उपचारादे-

1. 'उत्तरार्धे' क.

बिम्बप्रतिबिम्बभावो यथा मम—

'युधि निसर्गनिरर्गलमार्गणाः प्रविगलन्निरवग्रहवर्षणः ।
वसुमतीतिलक त्वमिवाम्बुदोऽम्बुद इव त्वमुदेषि महीमुदे ॥'

अत्र वृष्टिबाणानां बिम्बप्रतिबिम्बभावः ॥

उपचारो यथा मम—

'अचला इव विद्वांसो विद्वांस इवाचला गुरवः ।
शास्त्राणि तोयनिधिवत्तोयनिधिः शास्त्रवद्बहुगभीरः ॥'

अत्र गुरुत्वगभीरत्वयोर्विद्वच्छास्त्रेषूपचारः ॥

समासभेदो यथा मम—

'उल्लसितकुसुमहस्ता रमणीयस्तवकवक्षोजा ।
वल्लिरिव वामनयना विभाति वल्ली च वामनयनेव ॥'

श्लेषो यथा ममैव—

'विचरद्ग्राहसमूहश्चन्द्रमयूखाङ्कुरोल्लसितः ।
आकाश इव समुद्रः समुद्र इव सोऽयमाकाशः ॥'

प्रथमपादे शब्दश्लेषो द्वितीये त्वर्थश्लेष इति विशेषः । अत्रेदमवधेयम्—

'रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसंनिभैः ।
भुवस्तलमिवं व्योम कुर्वन्व्योमेव भूतलम् ॥'

इत्यादावुपमेयोपमैवालंकारसर्वस्वकारादीनामभिमता । अन्यथा 'द्वयोः पर्यायेण तस्मिन्नुपमेयोपमा' इति तदुक्तलक्षणस्य तत्रातिव्याप्तिप्रसङ्गात् ।

---

ष्युपलक्षणम् ॥ **ग्राहेति** । समुद्रपक्षे ग्राहाणां जलचराणां समूहः । आकाशपक्षे ग्रहाणां नक्षत्राणां संबन्धी ग्राहः स चासौ समूहश्च ग्राहसमूहः । विचरन् ग्राहसमूहो यत्रेति बहुव्रीहिः ॥ पूर्वं 'रजोभिः स्यन्दनोद्धूतैः' इत्यस्यालक्ष्यत्वमत्रोक्तं संप्रति प्रकारान्तरेण । तस्य लक्ष्यत्वमानयन् तस्य लक्ष्यत्वव्यवस्थापकग्रन्थसमर्थनाय प्रक्रम्यते—**अत्रेदमिति** । **पर्यायेणेति** । यौगपद्यविरहेणेत्यर्थः । **तस्मिन्निति** । उपमानोपमेयभावेत्यर्थः । अत्र पर्यायेणेत्यनेन वाक्यभेदनियमोऽपि दर्शितः । द्वयोरिति च स्पष्टार्थमेव । अनन्वये पर्यायाभावात् । अतस्तद्वैयर्थ्यशङ्कानवकाश इति ध्येयम् । यदप्युक्तं रसगङ्गाधरे—'अहं लतायाः सदृशीत्यखर्वगौराङ्गि गर्वं न कदापि यायाः । गवेषणेना-

वाक्यभेदः शाब्द आर्थश्च । आद्यः 'रजोभिः—' इत्यादौ, अन्त्यः 'तद्वल्गुना—' इत्यादाविति तद्व्याख्यातृभिरुक्तत्वात् ॥

यत्त्वत्र चित्रमीमांसा-रसगङ्गाधरादयः—नात्रोपमानान्तरतिरस्कारः प्रतीयते, उपमयोरेककर्मकत्वाभावात्, आद्योपमाया अनुगामिधर्मप्रयोज्य-

---

लमिहापरेषामेषापि तुल्या तव तावदस्ति ॥' इत्यत्र प्रतिपाद्यायामुपमायामतिव्याप्तिः। 'तद्वल्गुना युगपदुन्मिषितेन तावत्सद्यः परस्परतुलामधिरोहतां द्वे । प्रस्पन्दमानपरुषेतरतारमन्तश्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥' इत्यत्र युगपत्प्रवृत्तायामुपमेयोपमायां वाक्यभेदाभावादव्याप्तिरिति, तदशुद्धम् । उपमायां विधेयत्वविशेषणदानेनाद्यदोषाभावात्तत्र हेतुत्वेनानुवाद्यत्वात् ॥ पर्यवसितवाक्यभेदमादाय द्वितीयदोषाभावाच्चेति हृदि निधाय रजोभिरित्यादेर्लक्ष्यत्वं चाविर्भविष्यतीति हृदि निधायाह—वाक्यभेद इति। यत्त्वेवमपि 'सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः । यामिनयन्ति दिनान्यपि सुखदुःखवशीकृते मनसि ॥' इत्यत्रातिव्याप्तिरिति, तदप्यसत् । तथा हि—उपमाद्वये एकधर्मनिमित्तकत्वविशेषणमावश्यकं तृतीयसदृशव्यवच्छेदस्य धर्मैक्यमन्तरेणानुपपत्तेरिति सर्वसंमतम् । एवं च सविता विधवतीत्यत्र सुखप्रदत्वं धर्मः विधुरपि सवितरतीत्यत्र च दुःखप्रदत्वमिति । कथमतिव्याप्तिशङ्केति सहृदयैर्विभावनीयम् । चित्रमीमांसायां तु 'अन्योन्येनोपमा वाच्या व्यक्त्या वृत्त्यन्तरेण वा । एकधर्माश्रया या स्यादुपमेयोपमा मता ॥' अन्योन्यप्रतियोगिकत्वविशिष्टा व्यञ्जनया शक्त्या वा बोध्या। एकधर्मप्रयोज्या उपमा उपमेयोपमेति तस्यार्थः । इदं तच्च सममित्युभयविश्रान्तोपमावारणाय विशिष्टान्तम् । तत्रान्योन्यप्रतियोगिकत्वांशस्य व्यञ्जनगम्यतया सादृश्यांशस्य शक्तिवेद्यतया विशिष्टसादृश्यैकव्यापारबोध्यत्वविरहात् । वाशब्देन परस्परनैरपेक्ष्याभिधानात् । व्यङ्ग्योपमेयोपमासंग्रहाय व्यक्तेति । वाच्यतत्संग्रहाय वृत्त्यन्तरेति । रजोभिः स्यन्दनोद्धूतैरित्यत्रातिव्याप्तिनिषेधाय एकधर्मेत्युक्तम् ॥ अत्रापि रसगङ्गाधरकृतः 'अहं लतायाः सदृशी' इत्युदाहृतश्लोकेऽतिव्याप्तिः । तत्र तृतीयसदृशव्यवच्छेदानवगमनेन लक्ष्यत्वानौचित्यादिति वदन्ति, तन्न । विधेयत्वविशेषणेनैवात्रापि व्यभिचारनिरासात् । यदपि तैरुक्तम्—'अन्योन्यप्रतियोगिकत्वविशिष्टा उपमा एकवृत्तिमात्रवेद्येत्युक्तम् । 'खमिव जलं जलमिव खम्' इत्यादावपि खजलादेः सादृश्यान्वये प्रतियोगित्वस्य संसर्गत्वेन वृत्त्यविषयत्वात् । पदार्थसंसर्गस्य वृत्तिवेद्यत्वविरहादिति, तदप्यसत् । मात्रपदस्य वृत्त्यन्तरव्यवच्छेदमात्रपरत्वात् । एवं च प्रतियोगित्वस्य संसर्गतया बोधेऽपि वृत्त्यन्तरबोध्यत्वाभावसत्त्वेन मात्रपदविरोधाभावादिति ॥ रजोभिरित्यस्य लक्ष्यत्वाविरहशङ्कामवतारयति—यत्त्वेति । अनुगामीति । भूतलप्रतियोगिक[illegible]योमानुयोगि-

त्वात्, द्वितीयायाश्च विम्बप्रतिविम्बभावापन्नधर्मप्रयोज्यत्वात्—इति, तत्तुच्छम्। रजसां मेघतुल्यगजानां च विम्बप्रतिविम्बभावविवक्षायां बाधकाभावात्। न च परस्परसदृशयोरेव बिम्बप्रतिविम्बभाव इति वाच्यम्, बाधकाभावात्। न च परस्परसदृशयोरेव, रजोगजानामपि सादृश्यसत्त्वात्। त्वन्मतेऽप्यनुगामित्वप्रयोजकरजसा बाहुल्यस्यावश्यकत्वादिति वाच्यम्। यत्किंचिद्रजोयोगेन पृथिवीसादृश्यासिद्धेरिति तदाशय इति कृतं बहुना॥

इत्युपमेयोपमा।

---

कोपमायां रजसामेवोभयानुगतानां साधारणधर्मत्वादिति भावः। **बिम्बेति**। व्योमप्रतियोगिकभूतलोपमायां घनसदृशगजरूपधर्मनिमित्तकत्वात्। आकाशे गजानां भूतले च घनानामभावात् उभयोर्विम्बप्रतिविम्बभावाङ्गीकारेण सामान्यधर्मसंपत्तेरिति भावः॥ **बाधकाभावादिति**। आद्योपमायां रजसां धर्मत्वम्, द्वितीयोपमायां तु मेघतुल्यगजानामिति हि तैरुभयत्र धर्मभेद उक्तः। यदि तु घनसंनिभैरित्यस्योभयत्रान्वयं कृत्वा मेघसादृश्यावच्छिन्नानां रजसां तादृशगजानां च, विम्बप्रतिविम्बभावः स्वीक्रियते, तदोपमाद्वयेऽपि धर्मैक्यमक्षतमेव। न च रजसो भूमावपि सत्त्वात्तत्र तावन्मात्रेणैवैतत्प्रतियोगिकोपमानिर्वाह इति वाच्यम्। सत्त्वमात्रस्य साधारण्यनियामकत्वविरहात्। रजोगजानां परस्परसादृश्यसूचनाय च घनसंनिभैरित्यस्योभयत्रान्वयस्तदाह—**रजोगजानामपीति**। ननु विम्बप्रतिविम्बभावेन धर्मैक्यं कृत्वा उपमाद्वयस्वीकारे पूर्वोपमायां रजसां विम्बत्वम्, गजानां च प्रतिविम्बत्वम्, द्वितीयोपमायां तु वैपरीत्यम्। उपमेयवृत्तिधर्मस्यैव विम्बत्वात्। उपमानवृत्तेश्च प्रतिविम्बत्वात्। इति चेत् मैवम्, अभेदसादृश्यादिना रजसां रजानां चोभयत्र धर्मत्वाविरोधात्। अन्यथा विम्बप्रतिविम्बभावापन्नधर्मप्रयोज्याया उपमेयोपमायाः सर्वाभ्युपगताया विलयप्रसङ्गात्॥ तदेतत्सर्वमभिसंधायाह—**कृतमिति**। इदं चात्रावधेयम्—औचित्यबलादुपमानोपमेयसादृश्यवाचकपदानामुभयत्रैक्यमेव युक्तम्। तद्वैपरीत्ये दोषः सहृदयोद्वेगात्। क्रमेण यथा—'वदनं कमलायते तदीयं शतपत्रं वदनायते सुदत्याः। असितोत्पलमालिकन्त्यपाङ्गा नयनान्तन्त्यसितोत्पलस्य मालाः॥' 'निर्णीतमेतत्कविभिः समोहैः सर्वां विचिन्वद्भिरपि त्रिलोकीम्। भूसावृभुक्षत्यति स क्षितीशः स्वर्गे क्षितीशायत इत्यृभुक्षाः॥' उपमादोषा अपीह स्वयमूहनीयाः। स्पष्टत्वाद्विस्तृतिभयाच्च कण्ठतो न लिख्यन्ते॥ एतदलंकारध्वनिर्यथा—'संसारसिन्धावनुविम्बमत्र जागर्ति जाने तव वैरसेनि। विम्बानुबिम्बौ हि विहाय धातुर्न जातु दृष्टातिसरूपसृष्टिः॥' अत्र वस्तुतो नलस्यापि दमयन्त्या नलभिन्नत्वेन ज्ञानात्। युवयोरेवान्योन्यप्रतियोगिकं सादृश्यम्, न त्वन्यस्येति। तृतीयसदृशव्यवच्छेदफलकमन्योन्यसादृश्याश्रयत्वं प्रतीयते। यदि तु भेदस्यापि पारमार्थिकमेवाभिमतं तदेदं मदीयम-

अथोत्प्रेक्षां निरूपयति—

**संभाव्यते सह यदा साम्यप्रतियोगिना तदुपमेयम् ।**
**तामुत्प्रेक्षामाहुर्भिन्ना हेत्वादिविषयत्वात् ॥ १ ॥**

---

भिरामराघवपद्यमुदाहरणीयम्—'दृष्ट्वा रावणमेघनादमथनौ तद्वृत्तिलोकोत्तरं सौभ्रात्रं च पराक्रमश्च सहसाभातामसामान्यवत् । आलोकाद्भवदीययोरपि तयोः पूर्वोपजातापि धीः स्वप्रामाण्यविपर्ययप्रतिपदैवास्कन्दनं नीयते ॥' भरतं प्रति हनुमदुक्तिरियम् । अत्रासामान्यपदस्य सादृश्यानिरूपकत्वार्थकतया श्रीरामलक्ष्मणवृत्तिस्नेहपराक्रमयोरन्यनिष्ठसादृश्यप्रतियोगित्वान्यप्रतियोगिकसादृश्याश्रयत्वोभयाभाववत्त्वेन ज्ञानस्य भरतशत्रुघ्नोभयवृत्तिस्नेहपराक्रमदर्शनोत्तरम्, अप्रामाण्यज्ञानास्कन्दनाभिधानात् । श्रीरामादिवृत्तिस्नेहपराक्रमयोर्भरतादिवृत्तिस्नेहपराक्रमयोश्च, परस्परप्रतियोगिकमेव सादृश्यं न त्वन्यदीयस्नेहादिप्रतियोगिकमित्युपमेयोपमाध्वनिः । यथा च नैषध एव—'कर्णाक्षिदन्तच्छदबाहुपाणिपादादिनः स्वाखिलतुल्यजेतुः । उद्वेगभागाद्दयिताभिधानादिहैव वेधा व्यधित द्वितीयम् ॥' अत्र भैमीसंबन्धिकर्णाद्यवयवानामद्वैताभिमानभङ्गाय तत्सजातीयावयवान्तरविधानोक्त्या तत्तदवयवद्वयस्यान्योन्यप्रतियोगिकमेव साम्यमिति तृतीयसदृशव्यवच्छेदो व्यज्यत इति संक्षेपः ॥

इत्युपमेयोपमा ।

---

एतदनन्तरं सादृश्योपजीवकप्रकृतविशेष्यकाप्रकृतप्रकारकसंभावनात्मकतयोत्प्रेक्षालंकारः प्राप्तसंगतिक इत्याह—**उत्प्रेक्षामिति । संभाव्यत इति ।** संभावनाविषयीक्रियत इत्यर्थः । विषयत्वस्याख्यातार्थत्वात् । साम्यप्रतियोगिना सहेत्यन्वयः । संभावनं च साधारणधर्मदर्शननिमित्तकं प्रकृतविशेष्यकं तादात्म्यसंसर्गकमप्रकृतप्रकारकं निश्चयानात्मकं ज्ञानम् । अस्ति हि मुखादौ सत्यपि तत्प्रकारकज्ञाने किमिदं चन्द्र इत्यादिकमाहार्यज्ञानमनुभवसिद्धम् । तन्न तावद्भ्रमः, विशेषदर्शनसत्वात् । निश्चयानात्मकत्वाच्च । नापि संशयः, अनेककोट्यनुल्लेखात् । नाप्यनध्यवसायः । विशेषतोऽनुल्लिखितनानाकोटिकत्वं हि तदिति लीलावत्युपायादौ स्पष्टम् । यथानुपलब्धपक्षसपक्षविपक्षवृत्तिचारस्यासाधारणधर्मस्य दर्शनात् । पनसादौ किं स्विदयमिति, यथा वा किं पनसः स्विदयमिति । आद्येऽनुल्लेखितनानाविरुद्धकोटिसमुल्लेखात् । किं स्विदिति नानाकोटिकत्वेऽपि तदनुल्लेखात् द्वितीये पनसस्य तदन्यस्य च किंचित्त्वेन विरोधिनानाकोट्युल्लेखेऽपि किंचित्त्वस्य सामान्यरूपत्वेन विशिष्य कोटिसमुल्लेखो नास्तीति विशिष्टाभावस्योभयत्राप्यविशेषात् । इह च विशेष्य एकस्या एव कोटेः समुल्लेखात् । तस्मात्संभावनमनध्यवसायभिन्नमिति । तस्योपमेये उपमानताप्रत्यायकत्वादलंकारत्वमिति चक्रवर्तिनः । न्यायपञ्चाननादयस्तु संभावनात्मकव्यवसायविषयीविशेषाश्चिन्त्यः । अत्रापि शाब्दबोधे मुखत्वादेर्भानेऽपि

उपमेये उत्कटोपमानकोटिकः संशय उत्प्रेक्षेत्यर्थः । संभावनपदस्योत्कटकोटिकसंदेहार्थकत्वात् । उत्कटा प्रकृष्टस्योपमानस्येक्षा ज्ञानमत्रेति व्युत्पत्तेः । संदेहालंकारेऽतिव्याप्तिवारणाय उत्कटेति कोटिविशेषणम् । तत्र तुल्यकोटिकत्वमेवेति नातिव्याप्तिः । 'संभविनोऽर्थस्य तादृशासंभविवस्तुरूपतया संभावनम् उत्प्रेक्षा' इति काव्यप्रदीपः ॥

---

अलंकारताप्रयोजकसंभावने तस्य विशेष्यानुल्लेखात् । 'किं चन्द्रोऽयमिति, किं पनसः खिदयमितिवद्विशिष्य नानाकोट्यनुल्लेखसत्वात् । तस्मादुत्कटोपमानकोटिकं प्रकृतविषयकसंभावनमुत्प्रेक्षा । संदेहालंकारे तु तुल्यकोटिकमेवेति तद्भेद इत्याहुः । तदेतद्दर्शयति—**उपमेये इति** । विषयत्वं सप्तम्यर्थः । **संशय इति** । अनेककोटिकत्वमात्रसाधर्म्येण संशयत्वोक्तिः संभावनमित्यत्रैव तात्पर्यम् । **संशयार्थकत्वादिति** । यथोक्तानध्यवसायरूपसंभावनार्थकत्वादित्यर्थः ॥ उत्प्रेक्षापदमाहात्म्यादेवोक्तार्थलभ इत्याह—**उत्कटेति** । उत्कृष्टेत्यर्थः । कोटिनिष्ठोत्कटत्वद्वारकं च ज्ञानस्योत्कटत्वमिति बोध्यम् । **प्रकृष्टेति** । प्रसिद्धत्वेन उपमानस्य प्रकर्ष इत्यर्थः । ईक्षापदार्थमाह—**ज्ञानमिति** । यद्यपि उपसर्गाणां वाचकत्वपक्षेऽपि प्रशब्दार्थस्य प्रकृष्टस्य विषयतासंबन्धेन ज्ञाने धात्वर्थेऽन्वयो न संभवति । प्रेक्षत इत्यादौ ईक्षणादिनिष्ठस्य प्रकर्षस्य बोधेऽपि तस्य कर्मत्वादिना धात्वर्थान्वयानुभवात् । घटं प्रेक्षत इत्यादौ प्रकृष्टघटबोधानुदयात् । अन्यथा उपसर्गत्वमेव न स्यात् । 'उपसर्गाः क्रियायोगे' इति सूत्रेण क्रियासंबन्ध्यर्थबोधकतायामेव तद्विधानात् । प्रकर्षस्य च आश्रयतयोपमानपदार्थेऽन्वयस्योक्तरीत्या लाभेन क्रियानन्वयात् । प्रकर्षमात्रस्य प्रशब्दार्थतया तदन्वयमिति योग्याश्रयरूपार्थस्योपस्थापकपदाभावात् । क्रियायामेवोपसर्गार्थान्वयाच्च । प्रकृष्ट एवोपसर्गशक्तिस्वीकारेऽपि तस्य तादात्म्येन धात्वर्थेऽन्वयः स्यात् । न तु विषयत्वादिनेति परमार्थः । तथापि तादृशार्थपरत्वमुत्प्रेक्षाशब्दस्येत्यत्र तात्पर्यम् । यद्वा प्रकृष्टविषयकत्वमेवात्र कथंचिदुपसर्गार्थः । तथा चोत्कटस्य प्रकृष्टविषयकस्य च तादात्म्येनैव धात्वर्थान्वयः । द्योतकत्वे तु तादृशार्थे धातोर्लक्षणेति । एवमेव 'विनानार्थेन च संदेहे हरणं हार उच्यते । नानासंदेहहरणाद्व्यवहारः प्रवर्तितः ॥' इति कात्यायनादिवाक्येष्वपि द्रष्टव्यम् ॥ **संदेहालंकारेति** । उपमेयविषयकोपमानकोटिकज्ञानत्वस्य संदेहेऽपि सत्त्वादित्यर्थः । ननु तत्रापि कोटेरुत्कटत्वसंभवात्कथं ततोऽतिव्याप्तिनिरास इत्यत आह—**तत्र तुल्येति** । ननु संदेहे कोटिद्वयस्य समानत्वमिति नियमोऽसिद्ध एव कोटिनिष्ठोत्कटत्वस्य संशये मणिकारादिसर्वसंमतत्वादनुभवसिद्धत्वाच्चेति चेत् । सत्यम् । तथापि संशयस्य समकोटिकस्यैवालंकारत्वमिति अलंकारभूतसंशयेऽतिव्याप्तेरुत्कटत्वविशेषणेन वारणसंभवात् । अत एव संदेहालंकारेऽतिव्याप्तिवारणं प्रयोजनमुक्तम् । ननु संदेहमात्रे इति न कोऽपि दोषः ॥ **संभविन इति** । लोकप्रसिद्धस्येति विषयविशेषणम् ॥ **तादृशेति** । तन्निष्ठसादृश्यप्रतियोगीत्यर्थः । **असंभवीति** । लोकप्रसिद्धत्वाभा-

तत्र हेतूत्प्रेक्षा नाम प्रकृतकारणस्याप्रकृतकारणेन समेन संभावनम्। यथा—

'रुषारुणा सर्वगुणैर्जयन्त्या भैम्याः पदं श्रीः स्म विधेर्वृणीते ।
ध्रुवं सतामच्छलयद्यतः सा भृशारुणैतत्पदभाग्विभाति ॥'

इह हि भैमीचरणयोरारुण्यसंबन्धः प्रकृतः तत्कारणं चादृष्टविशेषः तत्समेन छलनेन संभावनं संभावनाविषयस्य चाप्रयोगादध्यवसानम् । अदृष्टविशेषच्छलनयोः साम्यं चारुण्यचरणसंबन्धजनकतयेति बोध्यम् ॥ यद्वा स्वाभाविक आरुण्यसंबन्धः उक्तच्छलनहेतुकसंबन्धत्वेन संभाव्यत इति बोध्यम् ।

स्वरूपोत्प्रेक्षा तु प्रकृतस्याप्रकृतेन समेन संभावना ।

यथा—

'वहइ व महिअलभरिओ णोल्लेइ व पच्छओ धरेइ व पुरओ ।
पेल्लेइ व पासगओ गरुआइ व उवरिसंठिओ तमणिवहो ॥'

अत्रान्धकारस्य सर्वदेशव्यापित्वं प्रकृतं तत्राधोदेशव्यापित्वे प्रकृते तस्य स्वाधिष्ठितवस्तुतिरोधायकत्वसाधर्म्येण वहनरूपतया पृष्ठदेशव्यापित्वे प्रकृते तत्संयोगप्रतिबन्धकत्वेन साम्येन साधारणत्वेन पार्श्वदेशव्यापित्वे प्रकृते

---

चेऽपि कविप्रतिभामात्रकल्पितेत्यर्थः ॥ न चैवं 'मुखं चन्द्रः' इत्याद्युत्प्रेक्षायामतिव्याप्तिः संभाव्यमानस्य तस्य चन्द्रादेः स्वतःसंभावितत्वादिति वाच्यम् । चण्डीदासेनैव समर्थनात् । तथा ह्याह—क्वचिदेकरूपमात्रस्यासत्वं क्वचित्तु संभाव्यमानस्यापि, तत्राद्यं यथा ममैव—'कण्ठे लुठत्काञ्चनपट्टसूत्रः संवीज्यमानः सितचामरेण । श्यामो बभासे तडितोपगूढश्चलद्बलाकः किमु वारिवाहः ॥' अत्र संभाव्यमानतादात्म्याख्यधर्ममात्रस्यैवासत्वं न तु संबन्धिनः । द्वितीयं यथा—'स वः पायादिन्दुर्नवबिलसताकोटिकुटिलः स्मरारेर्यो मूर्ध्नि ज्वलनकपिशे भाविनिहितः । स्रवन्मन्दाकिन्याः प्रतिदिवससक्तेन पयसा कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव ॥' अत्र संभाव्यमानस्य कपालाङ्कुरस्यापि शशविषाणसगोत्रत्वमेवेति । हेत्वादीत्यादिपदेन कार्यस्वरूपोभयग्रहणम् । यद्यपि हेतुकार्ययोरपि स्वरूपत्वमस्त्येव, तथापि तदुभयातिरिक्तस्यैवात्र स्वरूपपदार्थतयाविवक्षितत्वमिति प्राचां ग्रन्थकृतां व्यवहारसमर्थनादत्रापि तथैवोक्तम् ॥ 'वहतीव महीतलभरितो नोदयतीव पृष्ठतो [illegible]यतीव पुरः । प्रेरयतीव पार्श्वगतो गुरु[illegible] इवोपरि०

तिर्यक्संयोगप्रतिबन्धकत्वसाधर्म्येण नोदनत्वेनोर्ध्वदेशव्यापित्वे प्रकृते शिरोनमनहेतुत्वसाधर्म्येण गुरुकार्यमानत्वेन संभावनम् ॥ एवम्—

'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।'

इत्यादावपि बोध्यम्। नन्वियमुपमैव कुतो न भवति इवपदस्य सादृश्यार्थकत्वे बाधकाभावात्। यत्तु—उपमायामिवेन नित्यसमासानुशासनात्प्रकृते समासस्यासंभवात् 'नाम्नां समासो युक्तार्थः' इत्युक्तेराख्यातस्य नामत्वाभावात्। अतोऽत्र न सादृश्यमिवार्थ इति। तच्चिन्त्यम्। इवेन सह समासस्य नित्यत्वाभावस्य उपमाप्रकरण एव दर्शितत्वात्। अन्यथा इवपदस्य संभावनापरत्वेऽपि समासानुपपत्तेः। न हि इवेन समासः सादृश्य एवेत्यत्र प्रमाणमस्ति। 'इवेन समासः' इति सामान्यत एवोक्तेः॥

अथ यत्र समासप्राप्तिस्तत्रैव नियमः आख्यातेन सह तु समासप्रसङ्ग एव नास्तीति विनैव समासमयं प्रयोग इति चेत्। तर्हि सादृश्यार्थतायामपि समासाप्रसङ्गेन विनैव समासमिवपदप्रयोगे बाधकाभावादिति चेत्। मैवम्। उपमानाभावस्यैवोपमाबाधकत्वात्। तथा हि। किमत्रोपमानम्। न तावत्कर्ता, वैयाकरणमते आख्यातार्थस्य कर्तुर्भावनायां विशेषणीभूतत्वेन तस्यैवार्थे सादृश्ये स्वप्रतियोगिकत्वसंबन्धेनान्वयासंभवात्। अन्यवि-

---

स्थितस्तमोनिवहः॥' सेतुकाव्ये तमोवर्णनम्। प्रसिद्धोदाहरणमपि तद्विचारसौकर्याय प्रदर्शयति—**एवं लिम्पन्तीवेत्यादि**। 'असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता' इत्युत्तरार्धम्। मृच्छकटिकाख्यनाटके तमोवर्णनम्॥ जयरामभट्टाचार्योक्तं समाधानमाह—**यत्त्विति**। **नाम्नामिति**। कातन्त्रवचनमेतत्। यद्यपि 'आख्यातमाख्यातेन क्रियासातत्ये' इति वचनेन पचतभृज्जतेत्यादौ आख्यातान्तयोरपि समासो भवत्येव, तथाप्यत्र तादृशविशिष्यविधायकं नास्तीति भावः। **सामान्यत एवेति**। यद्यपि इवेनेत्यादि वार्तिकमपि विभक्त्यलोपपूर्वपदप्रकृतिस्वरत्वयोरेव विधायकं न तु समासस्यापि 'सह सुपा' इत्यनेनैव समाससिद्धेरिति कैयटेनैवाभिहितत्वात्। तथापि प्रसिद्धिवशादेवमुक्तम्। उक्तसमासस्य नित्यानित्यत्वचिन्तामपहायैवाह—**अथेति**। तथैव परिहरति—**तर्हीति**। नैयायिकादिभिः कर्तुराख्यातार्थत्वानभ्युपगमादाह—**वैयाकरणेति**। **भावनायामिति**। धात्वर्थ इत्यर्थः। भावना धातुवाच्येति तदभ्युपगमात्। **स्वप्रतियोगिकेति**। यद्यप्यन्वयासंभवादित्येव वक्तुमुचितं संबन्धान्तरेणाप्यन्वयविरहात्। तथापि प्रकृते उक्तसंबन्धेनैवान्वयः संभावित इति विशिष्य संबन्धोपदानम्। नन्वेकनान्वयबोधेऽप्यपरेणापि सममन्वयबोधः कुतो न भवतीत्यत आह—**अन्येति**।

शेषणस्यान्यत्रान्वयायोगात् । तदेतदुक्तमाचार्यदण्डिना—

'कर्ता यद्युपमानं स्यान्न्यग्भूतोऽसौ क्रियापदे ।
स्वक्रियासाधनव्यग्रो नालमन्यद्व्यपेक्षितुम् ॥'

न च यथा पृथिव्यामेव गन्ध इत्यादौ सप्तम्यर्थविशेषणस्यापि पृथिव्यादेरेवकारार्थेऽन्योन्याभावेऽन्वयाय व्युत्पत्तिवैचित्र्येण पृथिव्यादेः सप्तम्यर्थे एवकारार्थे च युगपदेवान्वयः । यद्वा एवकारस्य समभिव्याहृतपदार्थतावच्छेदकावच्छिन्नान्यत्त्वबोधकत्वस्वीकारेण पृथिवीत्वावच्छिन्नान्यत्वबोधकत्वमिति स्वीक्रियते । तदा आख्यातार्थस्य कर्तुर्भावनायां सादृश्ये चान्वयः । यद्वा इवपदस्य कर्तृप्रतियोगिकसादृश्यपरत्वमिति नानुपपत्तिरिति वाच्यम् । उक्तरीत्या कर्तुः सादृश्यविशेषणत्वेऽपि 'वहनकर्तृसदृशं तमः' इति बोधासंभवात् । वैयाकरणानां भावनाविशेष्यकबोधाभ्युपगमात् । न च 'वहनकर्तृतमः

---

एकत्र जनितान्वयबोधत्वेन निराकाङ्क्षत्वादिति भावः । उक्तार्थे प्राचीनसंमतिमाह—**तदेतदिति** । **न्यग्भूत इति** । विशेषणतामापन्न इत्यर्थः । **क्रियापद इति** । क्रियापदार्थे भावनायामित्यर्थः । **स्वक्रियासाधनव्यग्र इति** । स्वविशेष्यभूतक्रियान्वयेन चरितार्थतयान्यत्रान्वयानाकाङ्क्ष इत्यर्थः । अन्यत्साहश्यादिपदार्थं व्यपेक्षितुं स्वप्रकारकान्वयबोधे विशेष्यतामापादयितुं न समर्थ इत्यर्थः । **अन्वयायेति** । पृथिव्यन्यसमवेतत्वाभावस्य तत्र गन्धे ग्राह्यत्वादित्यर्थः । **व्युत्पत्तिवैचित्र्येति** । उभयान्वयाकाङ्क्षावशेनेत्यर्थः । **युगपदिति** । क्रमेणान्वये तु पूर्वान्वयेनैव निराकाङ्क्षतया द्वितीयान्वयो न स्यात् । अत एव भुक्त्वा व्रजतीत्यत्र भोजनकर्ता भोजनानन्तरव्रजनकृतिमानिति 'विशेष्ये विशेषणम्' इति न्यायेन युगपदेव भोजनस्यान्वय इति द्रव्योपायविवरणेऽप्यङ्गीकृतम् । ननु प्रकृत्यर्थस्य प्रत्ययार्थेनैव समुत्थिताकाङ्क्षत्वात्प्रथमं तत्रैवान्वयेन भवितव्यमित्यत आह—**यद्वेति** । तथा च न तत्र एकस्यैव पृथिवीपदार्थस्य उभयत्रान्वयः । किंतु तस्य सप्तम्यर्थ एव । समभिव्याहारव्युत्पत्त्या च पृथिवीत्वावच्छिन्नप्रतियोगिताकभेद एव एवकारार्थ इत्यर्थः । **वैयाकरणानामिति** । मत इति शेषः । **बोधाभ्युपगमादिति** । धात्वर्थस्य वहनस्य वक्ष्यमाणयुक्त्या कर्तृविशेषणत्वेनान्वयायोगाच्चेत्यपि द्रष्टव्यम् । किंच इवपदस्य कर्तृविशिष्टसादृश्यपरत्वे आख्यातार्थकर्तुरनन्वयापत्तिः । एतद्दोषपरिहारार्थमेवाह—**न चेति** । तथा च क्रियाविशेष्यकत्वस्याख्यातार्थकर्त्रन्वयस्य च लक्षणमिति भावः । आख्यातार्थकर्तरि धात्वर्थस्य कर्तुश्च सादृश्येऽन्वय इत्य

सदृशा वहनक्रिया' इति बोधोऽस्त्विति वाच्यम् । तन्मते धात्वर्थस्याख्यातार्थे प्रकारतयान्वयाभावात् । आख्यातार्थकर्तृप्रकारकबोधं प्रति धातुजन्योपस्थितिः कारणमिति तत्कार्यकारणभावात् । अत एव कर्तुः सादृश्यान्वयोऽपि निरस्तः । अत्रैव भिन्नकार्यकारणभावकल्पने तु गौरवं प्रमाणाभावश्च । अथ नैयायिकमते कृतिराख्यातार्थः तस्याश्च स्वाश्रयप्रतियोगिकत्वसंबन्धेन सादृश्येऽन्वयोऽस्तु । तथा च—'वहनकृत्याश्रयप्रतियोगिकसादृश्यवत्तमः' इति बोध इति चेन्न । तन्मते आख्यातार्थप्रकारकबोधं प्रति

---

दूषणमाह—**तन्मत इति** । **अन्वयाभावादिति** । उक्तकार्यकारणभावबलेन आख्यातार्थप्रकारकधात्वर्थविशेष्यकबोधत्वस्यैव कार्यतावच्छेदकत्वात् । वहनस्य कर्त्रन्वयं निरस्य कर्तुः सादृश्यान्वयमप्युक्तरीत्या प्रत्याचष्टे—**अत एवेति** । नन्विवसमभिव्याहारे धात्वर्थप्रकारकबोधे आख्यातजन्यकर्त्रुपस्थितेराख्यातार्थकर्तृप्रकारकबोधे च, इवपदजन्यसादृश्योपस्थितेर्हेतुत्वं कल्पनीयम् । सामान्यकार्यकारणभावबलेन च आख्यातार्थकर्तुर्वहनादिधात्वर्थेऽन्वयः । अत उक्तबोधसिद्धिरित्यत आह—**अत्रैवेति** । प्रामाणिकत्वे गौरवमपि सह्येतेत्याशङ्क्याह—**प्रमाणेति** । इदं च सर्वं आख्यातार्थस्यैव कर्तुरुभयथान्वय इति पक्षमधिकृत्योक्तम् । यदि तु कर्तृसादृश्यमेव लक्षणया इवपदार्थ इति द्वितीयः पक्ष आशङ्क्यते, तत्रेदं वक्तव्यम् । एवमपि वहनस्य धात्वर्थस्य इवार्थैकदेशे कर्तरि विशेषणतया, आख्यातार्थकर्तरि च विशेष्यतयेत्येकपदार्थस्य वारद्वयमन्वयबोधापत्तिः । यदि तु समभिव्याहृतधात्वर्थकर्तृसादृश्यमेव लक्षणया इवपदार्थ इत्युच्यते । तदोपमानस्यापि इवपदार्थत्वापत्तिः । न चेष्टापत्तिः । तस्य इवपदार्थबहिर्भावनियमदर्शनात् । एतेन कर्तृसादृश्य इवार्थत्वमपि निरस्तम् । अपि च किं धातुर्वहनपरत्वे आख्यातं च कर्तृपरत्वे इवपदस्य तात्पर्यग्राहकम्, उत धातुरेव विशिष्टवहनकर्तृपरत्वे नाद्यः । विशेषणकलितयोरेव वहनकर्त्रोर्बोधापत्तेः । न च प्रत्येकोपस्थितौ विशिष्टमन्वयबलमलभ्यमिति वाच्यम् । तथापि वहने कर्तरि च इवपदस्य लक्षणा, सादृश्ये च शक्तिरिति वृत्तिद्वयविरोधापत्तेः । तस्य दोषत्वानभ्युपगमेऽपि लक्षणाद्वयगौरवात् । न द्वितीयः, आख्यातमादाय विनिगमनाविरहात् । न च वहतीत्येतद्विशिष्टमेव वहनकर्तृपरत्वे तात्पर्यग्राहकमिति वाच्यम् । एकस्मिन्पदे तात्पर्यग्राहकत्वस्वार्थवाचकत्वोभयकल्पने गौरवात् । वहतीत्यस्य यत्प्रकारकयद्विशेष्यकबोधजनकत्वं तादृशार्थ एव तात्पर्यग्राहकत्वसंभवेन विपरीतान्वितार्थे तात्पर्यग्राहकत्वासंभवाच्चेति संक्षेपः ॥ प्रकारान्तरेण शङ्कते—**अथेति** । कृतेरेव प्रतियोगित्वेन सादृश्यान्वये विवक्षितं कर्तृसादृश्यं न सिध्येदित्यत आश्रयत्वमपि संसर्गकोटौ निवेश्याह—**कृत्याश्रयेति** । अन्या-

अन्याविशेषणीभूतप्रथमान्तपदजन्योपस्थितेः कारणतया इवार्थे सादृश्ये उक्तसंबन्धेन कृतेरन्वयासंभवात् । न च चैत्रो न पचतीत्यत्र कृतेरपि प्रतियोगितासंबन्धेन नञर्थेऽभावेऽन्वयदर्शनादव्ययस्थले तादृशकार्यकारणभावसंकोचावश्यकत्वेन प्रकृतेऽपि निरुक्तसंसर्गेणेवार्थे सादृश्ये कृतेरन्वयः स्यादेवेति वाच्यम् । इवपदसमभिव्याहृतपदार्थस्य प्रतियोगित्वसंबन्धेनैवान्वयस्य व्युत्पन्नतया प्रकृते स्वाश्रयप्रतियोगित्वसंबन्धेनान्वयानौचित्यात् । सादृश्यप्रतियोगिनियतान्वयित्वमिवशब्दस्येति सिद्धान्तभङ्गप्रसङ्गाच्च । किं चेत्यादावुक्तरीत्या वहनकृत्याश्रयेत्यादिरेव बोधः स्यात् । न चेष्टापत्तिः । वहनकर्तृसादृश्यस्यैव विवक्षितत्वात् । न च वहनकृत्याश्रयप्रतियोगिकान्योन्याभावेत्यादिरेव बोधोऽस्त्विति वाच्यम् । आश्रयत्वस्य

---

**विशेषणीभूतेति** । यथा पचतीत्यत्र कृतेः तादृशचैत्रेऽन्वयः । 'गज इव चैत्रो गच्छति' इत्यत्र गजस्यापि प्रथमान्तपदोपस्थाप्यतया तत्र कृत्यन्वयवारणाय, अन्याविशेषणेति । गजस्य तु प्रतियोगितया इवार्थसादृश्ये विशेषणीभूतत्वान्न तदापत्तिः । स्थीयतेत्यादिभावार्थलकारे धात्वर्थस्यान्याविशेषणत्वात्तत्र तदन्वयवारणाय प्रथमान्तेति । ननु कृतिप्रकारकबोधत्वस्य कार्यतावच्छेदकत्वे रथो गच्छतीत्यत्र व्यापारलक्षणायां तस्य रथान्वयो न स्यात् । न च कृतिपदमाख्यातार्थमात्रपरमिति वाच्यम् । वर्तमानत्वादेरपि चैत्रादावेवान्वयप्रसङ्गात् । एवमन्यत्रापीति चेत् न । तदतिरिक्ताख्यातार्थस्यैव कृतीत्यनेन विवक्षणीयत्वादिति ॥ **इवार्थ इति** । एतेन प्रथमान्तपदानुपस्थाप्यत्वसूचनम् । **अभाव इति** । चैत्रः कृत्यभाववानिति बोधात् कृतेरभावे तस्य चैत्रेऽन्वयादित्यर्थः । **संकोचेति** । यत्रार्थे कृतेः प्रकारत्वेनान्वयोऽनुभवसिद्धस्तत्र तदुपस्थितेर्विशेष्यहेतुत्वकल्पनादित्यर्थः । **इवपदेति** । इवपदार्थ इत्यर्थः । **पदार्थस्येति** । इवपदार्थविशेषणतापन्नस्येत्यर्थः । **अनौचित्यादिति** । संबन्धभेदेन कार्यकारणभावभेदात्तत्कल्पने गौरवादिति भावः । न चाव्ययेभ्यः प्रथमाविभक्तिरेवोत्पद्यत इति पक्षस्यैव महाभाष्ये सिद्धान्तितत्वात् तस्या 'अव्ययादाप्सुपः' इत्यनेन लोपे सादृश्यस्यापि प्रथमान्तपदजन्योपस्थितिरस्त्येवेति वाच्यम् । तथापि तस्य प्रतियोगितया तदर्थपदार्थादौ विशेषणतापन्नत्वेन अन्याविशेषणीभूतत्वाभावात् ॥ ननु संबन्धभेदेऽपि प्रकृतिप्रकारतानिरूपितविशेष्यताया निपातार्थे कल्पनान्न तथा गौरवमित्यत आह—**सादृश्येति** । कृतेः सादृश्यप्रतियोगित्वस्यापि प्रकृते विरहादिति भावः ॥ ननु कर्तृभेदादीनामिव चिदस्य कृतेरपि तथात्वमस्त्वित्यत आह—**किं चेति** । **उक्तेति** ।

संसर्गकोटिप्रविष्टतया तस्यापदार्थत्वात्, न। चैतादृशस्थले समभिव्याहृतपदार्थाश्रयप्रतियोगिक एवान्योन्याभावो व्युत्पत्तिवैचित्र्याद्भासते इति वाच्यम्। गौरवप्रसङ्गात् ॥

ननु लेपनमेवोपमानमस्त्विति चेत्, न। लेपनक्रियातमसोः साधारणधर्माभावात् लेपनस्यैव तद्धर्मत्वासंभवात् धर्मधर्मिभावस्य भेदनियतत्वात् ॥

तदिदमुक्तम्—

'यदि लेपनमेवेष्टं लिम्पतिर्नाम कोऽपरः ।
स एव धर्मो धर्मी चेत्यनुन्मत्तो न भाषते[1] ॥'

दीनां परस्परान्वये पूर्वोक्तप्रकारेण सतीत्यर्थः । **अपदार्थत्वादिति** । कृतिभेदयोरेव पदार्थतया कृतेः प्रतियोगितया भेदान्वयसंभवेऽपि आश्रयत्वस्य तत्र भानासंभवात् । स्वाश्रयप्रतियोगित्वं च नैतादृशस्थले संसर्गतया क्लृप्त इत्याह—**गौरवेति** । न चाख्यातस्यैव कृत्याश्रये लक्षणा गौरवान्मानाभावाच्चेति भावः । तस्मात्स्थितमेतत्कृतेः स्वाश्रयप्रतियोगिकत्वेन भेदान्वयमङ्गीकृत्य न कृत्याश्रयसादृश्यलाभसंभवः । पदार्थप्रतियोगितावच्छेदकीकृत्य संसर्गांशप्रविष्टपदार्थप्रतियोगिकपदार्थीभूतविशेष्यकबोधस्याव्युत्पत्तेः । पर्वते वह्निर्भवतीत्यस्माद्वह्निनिष्ठप्रतियोगित्वावगाहिभेदविशेष्यकबोधस्यैवोदयात् । अन्यथा लक्षणामन्तरेणापि कदाचिद्वह्निं प्रतियोगितावच्छेदकीकृत्यापि तस्माद्वह्निमान्न भवतीत्यस्मादिव शाब्दबोधप्रसङ्गात् ॥ अस्तु तर्हि धात्वर्थ एवोपमानमिति शङ्कते—**नन्विति** । **लेपनमेवेति** । 'लिम्पतीव तमोऽङ्गानि' इत्युदाहृताभिप्रायेणेदम् । एकस्यैव धर्मधर्मिभावः कुतो न स्यादित्याशङ्क्याह—**धर्मेति** । **तदिदमुक्तमिति** । आचार्यदण्डिनेति शेषः । दृष्टमित्यनन्तरं पूर्वमुपमानमिति शेषः । लिम्पन्तीति धातुनिर्देशे श्तिप् तस्य लक्षणयार्थपरत्वं 'यदुपास्तिम्'[1] इत्यादिवत् धर्मभूतो लेपपदार्थस्तदा को वा स्यात्तस्योपमानत्वेन धर्मत्वासंभवादिति भावः । ननु भेदाभेदवादिनो भेदविरहेऽपि धर्मधर्मीभावमङ्गीकुर्वन्तीत्यत आह—**स एवेति** । वस्तुतस्तु तन्मतेऽपि भिन्नप्रकारोपस्थितावेव धर्मधर्मिभावः । नीलो घट इत्यादिवत् भेदमादाय न पौनरुक्त्यम्, अभेदमादाय सामानाधिकरण्यमिति तत्सिद्धान्तात् । अत एव कार्यादिस्थलेऽप्यन्यप्रकारेणैव भेदाभ्युपगमः । तदुक्तं भामत्याम्—'कार्यरूपेण नानात्वमभेदः कारणात्मना । हाटकाद्यात्मना भेदः कुण्डलाद्यात्मना भिदा ॥' इति । त-

1. 'भाषसे' क.

1. 'स्वर्गापवर्गयोर्द्वारमामनन्ति मनीषिणः । यदुपास्तिमसावत्र परमात्मा निरूप्यते ॥' इत्युदयनाचार्यैरुक्तम्.

तस्मादुपमानस्य दुर्लभतया नात्रोपमा संभवति ॥

तदुक्तम्—

'केषांचिदुपमाभ्रान्तिरिवश्रुत्येह जायते ।
नोपमानं तिङन्तेनेत्यतिक्रम्याप्तभाषितम् ॥'

तथाहि। 'धातोः कर्मणः—' इति सूत्रे 'अश्मा लुलुठिषते, कूलं पिपतिषति' इत्यत्राचेतनस्य पाषाणादेरिच्छाया असंभवात्सन्प्रत्ययो न स्यादिति विचारे लुलुठिषत इव लुलुठिषते इति प्रयोगसमाधानमाशङ्क्य भाष्यकारेणोक्तम्—'न वै तिङन्तेनोपमानमस्ति' इति। व्याख्यातं च कैयटेन—'तिङन्तेनेति तिङन्तार्थेनेत्यर्थः। क्रियायाः साध्यैकस्वभावत्वा-

---

त्सर्वमतेऽपि एकस्यैव लेपनस्य धर्मधर्मिभावोऽनुपपन्न एवेत्यर्थः। नन्वेवमप्यनुपात्तधर्मनिमित्तकमेव सादृश्यमस्तु न ह्युपमायां सर्वत्र धर्मोपादाननियमः प्रामाणिकः। धर्मलुप्तोपमोच्छेदप्रसङ्गादिति चेत्सत्यम्। ययोः सादृश्यमप्रसिद्धं तत्र धर्मोपादानस्यावश्यकत्वात्। युक्त्यन्तरस्याप्यनन्तरमेव वाच्यत्वात्। **तदुक्तमिति**। आचार्यदण्डिनेति शेषः। भ्रान्तिकारणमाह—**इव श्रुत्येति**। तद्रूपसमानधर्मदर्शनादित्यर्थः। भ्रान्तित्वे प्रमाणमाह—**नोपमानमिति**। उक्तवचनस्य निष्प्रमाणतानिरासाय। आप्तेति। यथार्थदर्शीत्यर्थः। इदमेव दर्शयन्व्याचष्टे—**अस्यार्थ इति**। **असंभवादिति**। इच्छायाश्चेतनामात्रधर्मतया समवायेनान्यत्रानुपपत्तेरित्यर्थः। **न स्यादिति**। सन्प्रकृत्यर्थविषयकेच्छायामेव सन्प्रत्ययविधानादित्यर्थः। **इति विचारे इति**। तदर्थम् 'आशङ्कायां सन्वाच्यः' इति वार्तिकमारभ्यमिति प्रसङ्ग इत्यर्थः। **लुलुठिषत इवेति**। यथा लुठनेच्छावतोऽवयवशैथिल्यादिकं भवति तथा तस्यापि सत्त्वादित्यर्थः॥ वाचनिकत्वमात्रनिरासाय—**व्याख्यातं चेति**। तिङन्तत्वस्य शब्दमात्रधर्मत्वादाह—**तिङन्तार्थेनेति**। उपमानाभावे हेतुमाह—**क्रियाया इति**। तिङन्तपदोपस्थाप्याया इत्यर्थः। पाक इत्यादौ सत्त्वधर्मापन्नतद्बोधात्। सिद्धत्वप्रतीत्यविशेषेऽपि तादृशप्रतीत्यभावात्। उक्तं हि भट्टैः—'यादृशी भावनाख्याते धात्वर्थश्चापि यादृशः। नामां तेनैव रूपेण कथ्यतेऽन्यैः पदैः क्वचित् ॥' क्रिया च फलानुकूलतादृशव्यापारसमूहः। तदाह—'गुणभूतैरवयवैः समूहः क्रमजन्मनाम्। बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥' **साध्यैकेति**। सिद्धरूपेणोपस्थितिविरहनियमादित्यर्थः। साध्यत्वं च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वमिति वैयाकरणाः पचतीत्युक्ते क्रियान्तराकाङ्क्षानुदयात्। पाक इत्युक्ते च क्रियान्तराकाङ्क्षाभ्युदयात्। नैयायिकास्तु 'एवं सति

---

१. 'क्रम' क.

दनिष्पन्नरूपत्वादिदं तदिति परामर्शगोचरवस्तुविषयत्वादुपमानोपमेयभावस्येदं तदिति परामर्शाभावादिति भावः। इवशब्दप्रयोगे तु अध्यारोपस्तु विद्यते। 'रोदितीव गायति नृत्यतीव गच्छति देवदत्तः' इति। परिपूर्णेन च न्यूनस्योपमा भवति। क्रिया च सर्वस्वाश्रये समासेतिन्यूनत्वासंभवस्तस्याम्। तदुक्तम्—

'येनैव हेतुना हंसः पततीत्यभिधीयते।
आतौ तस्य समाप्तत्वादुपमार्थो न विद्यते॥'

---

भुक्त्वा व्रजतीति क्त्वाप्रत्ययस्थले शुद्धा क्रिया भासते' इति शाब्दिकसिद्धान्तविरोधः। भुक्त्वेत्यत्र क्रियान्तराकाङ्क्षासत्त्वात्। तस्मात् क्रियान्तराकाङ्क्षत्वतदनाकाङ्क्षत्वयोः समभिव्याहारविशेष एव नियामक इत्याहुः। **अनिष्पन्नेति**। सिद्धस्यैव साधनत्वादित्यर्थः। **इदं तदिति परामर्शाभावादिति**। सिद्धस्यैव एवंविधबोधविषयत्वान्न ह्ययं पचत्यपचतीत्यादौ यथा देवदत्तादीनां इदमादिभिः परामर्शः, तथा देवदत्त इदमित्यादिप्रयोगे इदमादिभिः पचतीत्यादिक्रियापरामर्शो दृश्यत इत्यर्थः। एतदभावेऽपि कुतो नोपमानतेत्यत आह—**इदं तदिति**। एतादृशज्ञानविषयभूतं यद्वस्तु सिद्धस्वरूपं तद्विषयक एवोपमानोपमेयभाव इति भावः। ननु किमत्र नियामकमिति चेत्। उच्यते—उपमायां तावत्साधारणधर्म आवश्यकः। तद्व्यतिरेके तत्स्वरूपस्यैवानुल्लासात्। धर्मस्य चोपमानवृत्तित्वं स्वीकार्यम्, न चासिद्धस्य धर्माधिकरणत्वसंभवः। एवं च यदि धर्माधिकरणत्वं तत्र स्वीक्रियते तदा सिद्धत्वापत्त्या साध्यत्वनियमभङ्गापत्तिः। यदि तु न तदङ्गीकारस्तदोपमानिमित्तसामान्यधर्माभावात्सुतरां न सेति कैयट एव पञ्चमाध्याये स्पष्टम्। न चासिद्धेऽपि प्रागभावप्रतियोगित्वादिधर्माश्रयत्वमस्त्येवेति वाच्यम्। तथाप्युपमाप्रयोजकधर्मस्य तत्र सत्त्वे मानाभावादिति भावः॥ एवं क्रियायामुपमानत्वासंभवमुक्त्वा उपमेयत्वासंभवमाह—**परिपूर्णेनेति**। तद्धर्मवत्तया प्रसिद्धेनेत्यर्थः। **न्यूनस्येति**। उपमानवृत्तिधर्मापेक्षापकर्षाश्रयतज्जातीयधर्मवत इत्यर्थः। **समासेति**। क्रियान्तरापेक्षया न्यूनत्वविरहविशिष्टेत्यर्थः। **न्यूनत्वेति**। उपमानत्वाभिमतवृत्तिधर्मापेक्षापकर्षाभाववत्त्वादित्यर्थः। अत्र भर्तृहरिकारिकां प्रमाणयति—**तदुक्तमिति**। **येनेति**। पतनक्रियारूपेणेत्यर्थः। **आताविति**। 'शरातिरातिराटिश्च बलाका विषकण्ठिका' इत्यमरः। तस्य पतनक्रियारूपस्य। समाप्तत्वात् न्यूनत्वाभावात्। हंसबलाकोभयसंबन्धिपतनस्याधःसंयोगजनकत्वसाम्येन तत्रान्योन्यापेक्षयोत्कर्षापकर्षाभावादित्यर्थः। **न विद्यत इति**। तद्वृत्तिधर्माधिकधर्मवत्प्रतियोगिकसादृश्यवर्णनेनैव न्यूनधर्मोत्कर्षलाभादत्र तदभावादिति भावः। ननु तर्हि भिन्नानामेवाक्रियाणां तद्वस्तु

इति । 'भिन्नजातीयानां च क्रियाणां सादृश्यं नास्ति भुङ्क्ते इव गच्छ-तीति-' इति ॥ तथा चैतद्भाष्यविरोध इत्याचार्यदण्डिनोऽभिप्रायः। अतोऽत्र संभावनैव इवार्थ इति सिद्धम् । तदयं निष्कर्षः—'वहतीव तमः' इत्यत्र धातोर्वहनक्रियायां शक्तिः, अधोदेशव्यापने लक्षणा । आख्यातार्थो लक्षणया विषयत्वं संभावनमिवार्थः । तथा च—'तमःकर्तृकाधोदेशव्यापनं वहनप्रकारकसंभावनाविषयः' इति बोधः ॥ यद्वा 'वहनप्रकारकसंभावना-विषयाधोदेशव्यापनाश्रयस्तमः' इति बोधः । प्रथमबोधे इवार्थसंभावनाया विशेष्यतया आख्यातार्थे तमसश्च कर्तृत्वसंबन्धेन धातुलक्ष्याधोदेशव्यापने धातुशक्यवहनस्य प्रकारतासंबन्धेन संभावनायामन्वयः । द्वितीये तु श-क्यवहनस्य प्रकारतया संभावनायां तस्या निरूपितत्वेन संबन्धेन विषयते तस्य लक्ष्येऽधोदेशव्यापने तस्याश्रयतया तमसि इति विशेषः । इदमिहा-वधेयम् । एवमपि व्युत्पत्तिभङ्गसाम्ये किमर्थमुपमैवेयं नोक्ता । तथा हि। लिपधातोर्लेपने शक्तिरधोदेशव्यापने लक्षणेति युगपद्वृत्तिद्वयनिबन्धनो दोषः । ततो लेपनक्रियाया इवार्थसंभावनेऽन्वय इति प्रत्ययानां प्रकृत्यर्था-न्वयनियमव्युत्पत्तिभङ्गः । तस्य हि प्रकृत्यर्थप्रकारकबोधे प्रत्ययजन्यो-

---

परस्परवृत्तिधर्माभाववत्वादित्यत आह—**भिन्नेति** । क्रियात्वादिना सादृश्यं तु अप्रयो-जकमेवेति भावः ॥ उक्तग्रन्थाभिप्रायेण काव्यादर्शकारिकाव्याख्यानमुपसंहरति—**तथा चेति** । वैयाकरणमतेन क्रियाविशेष्यकबोधमाह—**तथा चे**त्यादिना। नैयायिकरीत्या प्रथमान्तविशेष्यकबोधमाह—**यद्वेति** । **कर्तृत्वसंबन्धेनेति** । ननु वैयाकरणमते कर्ता आख्यातार्थ एवेति तस्य पदार्थत्वात्कथं संसर्गत्वमिति चेत्। सत्यम् । आख्यातस्य प्रकृते विषयलक्षणाया उक्तत्वात् । कर्तृत्वस्य संसर्गतया सङ्ग-त्वात् । युगपद्वृत्तिद्वयस्वीकारे तु कर्ता व्याख्यातार्थ एव व्याख्येयः ॥ **युगपदिति**। एकस्यैव पदस्य युगपच्छक्यलक्ष्योभयार्थबोधकतायाः प्राचीनैरनभ्युपगमादित्यर्थः। तदङ्गीकर्तृमणिकारादिमते तु दोषान्तरमाह—**तत इति** । **प्रत्ययानामिति**। 'प्रकृतिप्रत्ययौ स्वार्थं सह ब्रूतः' इति कात्यायनवार्तिकात् । **तस्य हीति** । व-प्रकृत्यर्थप्रकारकबोधं प्रति प्रकृतिजन्योपस्थितिर्हेतुरित्यपि तदर्थः । अन्यथा वैयाक-रणानां आख्यातार्थस्य कर्तुर्धात्वर्थभावनायां विशेषणत्वेनान्वयानुपपत्तेः । प्रकृतिप्रत्य-यान्यतरार्थप्रकारकशाब्दबोधे तदन्यतरजन्योपस्थितेर्हेतुत्वमिति तदर्थपर्यवसानात्। तथापि तयोः प्रत्ययार्थः [illegible] प्रकृते प्रकृत्यर्थविशेष्य-

स्थितिर्हेतुरिति शरीरम् ॥ अपि च । इवार्थसंभावनाया विषयतासंबन्धेन व्यापनान्वयोक्तौ धात्वर्थनामार्थयोः साक्षाद्भेदेनान्वयस्याव्युत्पन्नतया तदतिक्रमः । न च निपातातिरिक्तनामार्थस्थल एव सा व्युत्पत्तिः । 'न कलञ्जं भक्षयेत्' इत्यत्र नञर्थस्य विशेषसंबन्धेन धात्वर्थान्वयस्वीकारादिति वाच्यम् । 'चैत्रो न पचति' इत्यादौ कृतेरप्यभावान्वयदर्शनेन कृतेः प्रथमान्तपदोपस्थाप्य एवान्वय इति नियमस्याप्यवश्यं संकोचनीयतयोक्तरीत्या कृतेरपीवार्थसादृश्यान्वये बाधकाभावात् । यत्तु—अन्यत्र सादृश्ये

---

प्रत्ययार्थप्रकारकबोधस्याप्यभावाच्च । ततोऽपि न तत्समाधानमित्यभिप्रायेण प्रकृत्यर्थप्रकारकेत्युक्तम् । अत एव उक्तव्युत्पत्तिसंकोचादेव कर्तृप्रकारकभावनाविशेष्यकबोध इति समुद्घोषो वैयाकरणानाम् । ननु प्रत्ययार्थनिष्ठविशेष्यतानिरूपितविशेषणतासंबन्धेन शाब्दबुद्धौ प्रकृतिजन्योपस्थितेः कारणतेत्यस्य आख्यातार्थकृतिवर्तमानत्वयोः परस्परान्वयाभ्युपगमादिना पूर्वमेव निराकृतत्वान्नायं दोष इत्यपरितोषादाह—अपि चेति । तण्डुलं पचतीत्यादौ तण्डुलादेर्विभक्त्यर्थान्वयद्वारा धात्वर्थान्वयो न भवत्येवेत्यत आह—**साक्षादिति** । स्तोकं पचतीत्यादौ स्तोकस्याभेदसंबन्धेन साक्षादेव धात्वर्थान्वयदर्शनादाह—**भेदेनेति** । अभेदातिरिक्तसंबन्धेनेत्यर्थः । तथा च वहनरूपधात्वर्थस्य प्रकारत्वसंबन्धेन इवार्थसंभावनायामन्वयो युक्त इत्यर्थः । **निपातेति** । तदतिरिक्तत्वं नाम्नो विशेषणम् । **न कलञ्जमिति** । भक्षयेदित्यत्र विधिप्रत्ययस्य कृतिसाध्यत्वेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वत्रितयवाचकतया कलञ्जभक्षणे इष्टसाधनत्वकृतिसाध्यत्वयोः सत्त्वेन तन्निषेधस्य बाधाद्बोधयितुमशक्यत्वाद्बलवदनिष्टाननुबन्धित्वमेव प्रतियोगित्वसंबन्धेन नञर्थाभावेऽन्वेति । स च विशेषणतया भक्षणे । तथा च कलञ्जभक्षणं बलवदनिष्टाननुबन्धित्वाभाववदिति । नञर्थप्रकारकतानिरूपितविशेषणताविशेषसंसर्गावच्छिन्नधात्वर्थनिष्ठविशेष्यताको बोध इति निपातार्थधात्वर्थयोः साक्षाद्भेदान्वयोऽपि भवत्येवेत्यर्थः ॥ **चैत्र इति** । न पचतीत्यत्राख्यातार्थकृतेरभावे, तस्य चैत्रेऽन्वयः । पाकानुकूलकृत्यभाववांश्चैत्र इति कृतिप्रकारतानिरूपितप्रतियोगित्वनिष्ठसांसर्गिकविषयतानिरूपिताभावनिष्ठविशेष्यताख्यप्रकारतानिरूपितविशेषणतानिष्ठसांसर्गिकविषयतानिरूपितचैत्रत्वावच्छिन्नविशेष्यताकबोधस्य तत्रानुभवसिद्धत्वादित्यर्थः ॥ यत्तु तत्रापि न कृतेरभावान्वयः । अभावसंबन्धेन कृतेरेव साक्षात्प्रथमान्तपदोपस्थाप्य चैत्रेऽन्वयः । नञ्पदं च तात्पर्यग्राहकम् । अतो नाख्यातार्थकृतिप्रकारकबोधं प्रति प्रथमान्तपदजन्योपस्थितिः कारणमित्यस्य संकोच इति ॥ तन्न, प्रतियोग्यन्वये अभावस्य संसर्गत्वे मानाभावात् । प्रतियोगितदभावयोर्विरुद्धत्वेन प्रतियोगिप्रकारतायां अभावस्य संसर्गत्वेन भानस्यानुभवविरुद्धत्वाच्च । अन्यथा घटाभाववति भूतले अभावं

प्रतियोगितयान्वयः अत्र तु स्वाश्रयप्रतियोगितयेति गौरवमिति, तन्तु-च्छम्। लक्षणादिकृतगौरवापेक्षया तस्याकिंचित्करत्वात्॥ किं च संसर्गांशगौरवापेक्षया पदार्थांशगौरवमेव बलवदिति विपरीतं गौरवम्॥ अथ कृतेरुक्तसंबन्धेन सादृश्यान्वये भावनाविशेष्ये संख्यान्वय इति नियमभङ्ग इति चेत्, न। चैत्रो न पचति इत्यादौ तस्यापि स्वीकृतत्वात्। तस्मा-दाख्यातसमभिव्याहृतेवादिस्थले उपमादुर्वारेति विज्ञैर्विभावनीयम्। न

---

संसर्गांकृत्य घटद्भूतलमित्यादिप्रत्ययप्रसङ्गात्। नञ्समभिव्याहृताख्यातार्थस्य एवं कल्पते इति चेत्, न विरुद्धार्थस्य कल्पयितुमशक्यत्वात्। अन्यत्र तत्प्रकार-यत्संसर्गकयद्विशेष्यकबोधोऽनुभवसिद्धतया न विरुद्धस्तदनुसारेणैव कल्पनोल्लासात्। त-द्वैपरीत्ये च लाघवस्याप्रयोजकत्वात्। अभावप्रकारकबोधस्यैव तत्रानुभविकत्वात्। वस्तुतः संबन्धभेदेन कार्यकारणभावभेदस्यावश्यकतया समवायसंसर्गककृतिप्रकारकचै-त्रादिविशेष्यकबोधार्थमेकः, अभावसंसर्गककृतिप्रकारकचैत्रविशेष्यकबोधार्थं कृत्यभाव-प्रकारकविशेषणतासंसर्गकचैत्रादिविशेष्यकबोधार्थं चापरः कार्यकारणभावः कल्प्यत इति न लाघवावकाशः। प्रकारकविशेष्यैक्यरक्षणमात्रस्य चाकिंचित्करत्वात्। एव-चाख्यातस्यैव कृत्यभावे लक्षणा। नञ्पदं तात्पर्यग्राहकमिति कथं प्रकारकप्रतीत्युप-त्तिरित्यप्यनाशङ्क्यम्। कार्यकारणभावभेदस्यावश्यकत्वादिति कृतं बहुना नन्वत्र व्युत्पत्तिरक्षणलक्षणागौरवमेव सह्यतामित्यत आह—**किं चेति**। अन्यत्रोक्तैतावत्त-र्थानामुक्तरीत्या त्वयाननुभवादत्रैव लक्षणादिकल्पनामपेक्ष्य संसर्गान्तरेण कृत्यपदा-न्वयस्यैव युक्तत्वादित्यर्थः॥ **भावनाविशेष्य इति**। चैत्रः पचतीत्यादौ यत्र कृत्यन्वयस्तत्रैव संख्यान्वय इति व्युत्पत्तिः। तथा चाख्यातार्थसंख्याप्रकारकबोधं प्रति कृतिविशेष्यार्थकपदजन्योपस्थितिः कारणमिति फलितम्। अत एव 'चैत्रो पचति' 'चैत्राः पचन्ति,' इत्यादिप्रयोगनियम उपपद्यते। 'वहतीव तमः' इत्यत्र न कृतेः स्वा-यप्रतियोगिकत्वसंबन्धेन इवार्थे सादृश्ये संख्यायाश्च तमस्यन्वयो न स्यात्। तत्र कृतिविशेष्यत्वविरहादिति भावः। **तस्यापीति**। भावनाविशेष्ये संख्यान्वय इ-नियमभङ्गस्यापीत्यर्थः। न पचतीत्यत्र कृतेरभावान्वयेऽपि संख्यायाश्चैत्रेणैवान्वयानु-गमात्। तथा च भावनाविशेष्ये संख्यान्वय इत्युत्सर्ग एवेति तात्पर्यम्॥ नन्वेवं वहनकृत्याश्रयप्रतियोगिकभेदसामानाधिकरणेत्यादिबोधः पर्यवसितः। तथा च पदा-वच्छिन्नप्रतियोगिताकसंसर्गैकदेशप्रतियोगिकप्रतियोगित्वीयसंसर्गतानिरूपितपदार्थीभूत-भेदविशेष्यकान्वयबोधः कथं स्यात्। वह्निर्न भवतीत्यस्माद्वह्न्यवच्छिन्नप्रतियोगि-बोधानुदयादिति पूर्वमेवोक्तत्वादिति चेत्, सत्यम्। कृत्याश्रये आख्यातस्य लक्षणा-दोषाभावात्। तथा ... अत्रैव ... अपि लक्षणास्वीकारे तथापि लाघवसंभव

च महाभाष्यवचनविरोधः, तेन क्रियाया उपमेयत्वस्यैव निषेधस्याभिमतत्वात् ।

एवं च—

'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥'

इत्यत्रेवशब्दोपादानमपि यत्रोपमा न संभवति तत्रोत्प्रेक्षात्वमित्यभिप्रायेणेति । न त्वाख्यातसमभिव्याहृतेवादिस्थले उत्प्रेक्षैवेति नियमाभिप्रायेणेति ।

यथा—

'बालेन्दुवक्राणि विकाशभावाद्बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥'

इत्यादौ हि उपमाङ्गीकारे अन्यदीयनखक्षतैरपि सादृश्यसंभवेन वसन्तसमागमविशिष्टवनस्थलीसंबन्धित्वेन तद्विशेषणं व्यर्थं स्यात् । संभावनार्थत्वे तु अन्यत्र स्थितानां नखक्षतानां वनस्थलीषु संभावनानुपपत्त्या तन्निष्ठत्वं वाच्यम् । तच्च न नायकसंबन्धं विनेति वसन्तेनेत्यादि विशेषणं सार्थकं भवति ।

एवम्—

'यन्मौलिरत्नमुदितासि स एष जम्बू-
द्वीपस्त्वदर्थमिलितैर्युवभिर्विभाति ।

---

**महाभाष्येति** । 'न वै तिङन्तेनोपमानमस्ति' इति प्रागुपन्यस्तेत्यर्थः । **उपमेयत्वेति** । क्रियानिष्ठोपमानतानिरूपितेति शेषः । अतो न पञ्चमाध्यायाकरविरोधः ॥ तत्र हि 'तेन तुल्यं क्रिया चेद्वतिः' इत्यत्र क्रियाया एवोपमेयत्वे वतिरिति व्यवस्थापितम् । नन्वेवमपि न तद्विरोधनिस्तारः, क्रियाया एवोपमानत्वस्यापि तत्र व्यवस्थापितत्वात् । **क्रियेति** । प्रकृत्यर्थविशेषणमिति पक्षे प्रत्ययार्थस्य तथात्वलाभः, प्रत्ययार्थविशेषणमिति पक्षे प्रकृत्यर्थस्य च तथात्वलाभः, सामर्थ्यादिति तत्र भाष्यकृद्भिरेव व्याख्याततत्वादिति चेत्, सत्यम् । क्रियाशब्देन सत्वधर्मानापन्नायास्तस्या विवक्षिततत्वात् । तथा हि 'तेन तुल्यम्' इति तृतीयासमर्थाद्वतिः । उपमानं क्रियेति सूत्रार्थः । तत्र क्रियायास्तृतीयासमर्थत्वमनुपपन्नं सत्ववाचिन एव तृतीयोपपत्ते-

दोलायितेन बहुना भवभीतिकम्प्रः
कंदर्पलोक इव खात्पतितस्त्रुटित्वा ॥'

इत्यादावप्युपमायां स्वस्थानादभ्रष्टेनापि कामिलोकेन सादृश्यसंभवा-त्तत्पातविशेषणस्य व्यर्थताप्रसङ्गात्संभावनोपयोगादित्यलं पल्लवितेन ॥

अत्र प्राचामयं सिद्धान्तः । सर्वत्र विषये विषयिणोऽभेदेनैव संसर्गे-णोत्प्रेक्षणम्, न तु संबन्धान्तरेण । तथा च काव्यप्रकाशे—

'संभावनमथोत्प्रेक्षा प्रकृतस्य परेण यत् ।'

ततश्च—

'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।'

इत्युदाहृत्य अत्र 'व्यापनादि लेपनादिरूपतया संभावितम्' इति व्याख्या-तम् । 'नूनं मुखं चन्द्रः' इत्यादौ नामार्थयोरभेदान्वयात्स्पष्टमेव तथा ।

न च—

'अस्यां मुनीनामपि मोहमूहे भृगुर्महान्यत्कुचशैलशीली ।
नानारदाह्लादिमुखं श्रितोरुर्व्यासो महाभारतसर्गयोग्यः ॥'

इत्यादौ भैम्यां मोहरूपस्य धर्मस्य भेदसंबन्धेनैवोत्प्रेक्षणान्नायं नियमः इति वाच्यम् । तत्रापि न भैम्यां विषयतासंबन्धेन मुनिनिष्ठमोहस्योत्प्रेक्षा किं तु मुनिसंबन्धिनि धर्मान्तरे विषयभूतेऽभेदेन मोहस्यैवेति वाच्यत्वात् संभावनाविषयस्य च निगीर्णत्वात्साध्यवसानतयानुपादानम् ।

एवम्—

'चौरस्य यद्भीतिपलायितस्य भालत्वचं कण्टकिनो वनान्ताः ।
अद्यापि किं वानुभविष्यतीति व्यपाटयन्द्रष्टुमिवाक्षराणि ॥'

---

रिति पूर्वपक्षे 'ब्राह्मणवदधीते' इत्यादौ ब्राह्मणादिपदानां ब्राह्मणादिवृत्त्यध्ययनादिलक्षणया गौणत्वेन समाहितं भाष्यकारैः । न ह्यन्यथा सूत्रार्थः संभवति । न च तैलपाकेन तुल्यो घृतपाक इत्यादौ क्रियाया अपि तृतीयासमर्थत्वमस्त्येव भोक्तुं पाक इति क्रियायोगनिबन्धनतुमुनादिदर्शनादिति वाच्यम् । उपमानिष्पत्त्यर्थं साधारणधर्माधारत्वविवक्षायां तस्य क्रियारूपत्वाभावात् । तत्र हि तुमुनादयो धातुवाच्यासत्वभूतक्रियापेक्षाः । तत्र तृतीयादयस्तु स्वरूपाश्रया न तु क्रियारूपाश्रया इति कैयटेनैव समाहितत्वात् ।

इत्यत्रापि फलोत्प्रेक्षायां वनान्तेषु भालविटप(पाट)नहेतुललाटाक्षरदर्शनमेव नोत्प्रेक्ष्यते, किं तु तदक्षरदर्शनहेतुकत्वग्विपाटनं कण्टकजन्यविपाटने उत्प्रेक्ष्यत इति ॥

अत्र नवीनाः । अभेदेनैवोत्प्रेक्षणमिति नियमे मानाभावः । 'अस्यां मुनीनामपि मोहमूहे—' इत्यादौ भेदेनापि संसर्गेण तद्दर्शनात् । न च तत्राप्युक्तरीत्याश्रयणेन निर्वाहः शङ्क्यः । तादृशनियम एव प्रमाणविरहादेतादृशदुराग्रहस्य निर्मूलत्वात् । एवं 'लिम्पतीव तमोऽङ्गानि' इत्यत्रापि लेपनकर्तृत्वं तमआदिषूत्प्रेक्ष्यम् । अनुकूलव्यापारस्याख्यातार्थस्याश्रयत्वसंबन्धेन प्रथमान्तार्थेऽन्वयात् । 'भावप्रधानमाख्यातम्' इत्यस्य व्यापारार्थकं तदित्यर्थात् । तेन लिम्पतीत्यादौ भेदेनाभेदेन वा तिङन्तार्थस्य प्रथमान्तार्थ एवोत्प्रेक्षणं न तु धात्वर्थस्य स्वनिगीर्णे व्यापनादौ ॥

एवम्—

'सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥'

इत्यत्रापि निश्चलत्वनिमित्तकनिःशब्दत्वविषये विश्लेषदुःखहेतुकमौनमभेदेन नोत्प्रेक्षते, किं तु मौनहेतुत्वेन नूपुरे विश्लेषदुःखमेव । उत्प्रेक्षायामिवशब्दान्वयिन एवोत्प्रेक्ष्यत्वस्य सर्वसिद्धत्वात् । विषयस्य निगीर्णतया विषयिणो विधेयत्वानुपपत्तेश्च । निःशब्दत्वमौनयोः संभावनानिमित्तभूतधर्मान्तरगवेषणापत्तेश्च । एककालीनत्वादिधर्मस्य च चमत्कारानाधायकत्वेनोपमावदुत्प्रेक्षायामप्यप्रयोजकत्वात् । न च नूपुरविषयमौनोत्प्रेक्षायामपि को धर्म

---

भर्तृहरिणोक्तम्—'साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना । सत्वभावस्तु यस्तस्याः स घञादिनिबन्धनः ॥' ननु तथापि तृतीयाध्यायस्थो 'न वै तिङन्तेन' इति भाष्यग्रन्थः कथमुपपादितः । सामान्यधर्माधिकरणत्वविवक्षायामुपमेयभूताया अपि क्रियायास्तदुक्तन्यायेनैव सत्वधर्माश्रयत्वप्रसङ्गादिति चेत् । तर्ह्युपमानोपमेयत्वोभयनिषेधवादिना त्वयापि पञ्चमाध्यायस्थसूत्रभाष्यादिग्रन्थाः कथमुपपादिताः । क्रियाया उपमेयत्वस्य तत्र साक्षादेवाभिहितत्वात् । उपमेयभूताया अपि क्रियायाः सामान्यधर्माधिकरणत्वविवक्षायां स्वरूप[illegible] । नन्वेवमपि क्रियाया उपमेयत्वनिषे-

इति वाच्यम् । निश्चलत्वनिमित्तकं यन्निःशब्दत्वं ताद्रूप्येणाध्यवसितस्य मौनस्यैव तत्त्वात् । तस्य विश्लेषदुःखसमानाधिकरणत्वात् नूपुरवृत्तित्वाच्च। तस्मात्तद्भिन्नत्वेन प्रमितस्य पदार्थस्य रमणीयतद्वृत्तिधर्मनिमित्तकं तादात्म्येन संभावनम् । धर्मिस्वरूपोत्प्रेक्षायास्तदभाववत्त्वेन प्रमितस्य पदार्थस्य तत्समानाधिकरणधर्मनिमित्तकं तद्वत्त्वेन संभावनं धर्मस्वरूपोत्प्रेक्षाया लक्षणमित्याहुः ।

इत्युत्प्रेक्षा ।

ससंदेहमाह—

प्रकृते तदन्यविषया सादृश्यज्ञानजन्या या ।
बुद्धिर्निश्चयभिन्ना तामाचख्युः ससंदेहम् ॥ १ ॥

उपमेये उपमानविषय[कोटि]कः संशयः ससंदेह इत्यर्थः । भ्रान्तिमदतिव्याप्तिवारणाय निश्चयभिन्नेति । स्थाणुर्न वेत्यादिवारणाय प्रकृते इति। रसानुकूलत्वेन प्रकृतेत्यर्थकम् ।

'अमुष्य धीरस्य जयाय साहसी तदा खलु ज्यां विशिखैः सनाथयन्।
निमज्जयामास यशांसि संशये स्मरस्त्रिलोकीविजयार्जितान्यपि ॥'

इत्यादिसंशयनिषेधाय सादृश्येति ॥

---

धपरत्वं तृतीयाध्यायभाष्यस्य व्यवस्थापयता त्वया क्रियाया उपमेयत्वमाश्रित्य प्रवर्तमानाः पञ्चमाध्यायभाष्यादिग्रन्थाः कथमुपपादनीया इति चेत्सत्यम्[1] ॥ .................................................................... निर्णयानामप्रस्तुतविशेष्यकाप्रकृतारोपरूपत्वसंगत्या उत्प्रेक्षानन्तरं संदेहालंकारनिरूपणमर्हतीत्यभिप्रायेणाह—**प्रकृत इति** । तत्पदार्थमाह—**उपमेयेति** । तदन्यपदार्थमाह—उपमानेति । विषयपदार्थमाह—**कोटिक इति** । **निश्चयभिन्नेति** । भ्रान्तेश्च निश्चयात्मकतया तद्भिन्नत्वाभावान्नातिव्याप्तिरित्यर्थः । **स्थाणुरिति** । स्थाणुपुरुषोभयसाधारणोर्ध्वत्वादिरूपसाधारणधर्मज्ञानजन्यतया तत्संशयस्य सादृश्येत्यनेनापि न व्यभिचारकरणमिति भावः । ननु स्थाण्वादेरपि प्रकृतत्वं कुत्राप्यस्त्येवेति कथं तत्पदेन व्यभिचारवारणमित्यत आह—**रसेति** ॥ **सादृश्येतीति** । अत्र संशयस्य दुर्जयविजयोद्यमनिबन्धनत्वान्न सादृश्यज्ञानजन्यत्वमिति भावः ॥ ननु यशांसि संशये निमज्जयामा-

1. इतः परं पाठत्रुटितो भवेदिति प्रतीयते.

अस्य भेदद्वयमाह—

**उक्ते विशेषधर्मे प्रकृतस्य भवेदनुक्ते च ।**

प्रथमं द्विधा । निश्चयान्तनिश्चयगर्भताभेदात् । यत्र प्रकृतेऽन्यसंशये जाते प्रकृतनिष्ठविशेषधर्मदर्शनेन प्रकृतनिर्णयस्तत्र निश्चयान्तत्वम् ।

यथा—

'किं तावत्सरसि सरोजमेतदारा-
दाहोस्विन्मुखमवभासते युवत्याः ।
संशय्य क्षणमथ निश्चिकाय कश्चि-
द्विब्बोकैर्बकसहवासिनां परोक्षैः ॥'

अत्र विब्बोको भावविशेषोऽचेतने सरोजे नास्तीति मुख्यव्याप्यतया तद्बोधोत्तरं मुखनिश्चये सति तदुत्तरं न चन्द्रत्वादिना संदेहः ।

---

त्युक्त्या यशःस्थैर्यमाप्स्यति न वेति संदेहो लभ्यते । स च सादृश्यजन्य एव, असाधारणधर्मदर्शनजन्यविप्रतिपत्तिजन्यसंशयान्यसंशयस्य साधारणधर्मदर्शनजन्यत्वनियमात् । तथा च न्यायसूत्रम्—'समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यानुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्षः संशयः' इति । अत्र ह्यसाधारणधर्मदर्शनजन्यः साधारणधर्मदर्शनजन्यो विप्रतिपत्तिजन्यश्चेति संशयस्य त्रैविध्यमेवाभिहितमिति चेत्सत्यम् । सादृश्यपदेन चमत्कारजनकसादृश्यस्य विवक्षितत्वान्न कोऽपि दोषः । एवं च चमत्कारजनकसंदेहत्वमेव लक्षणमिति फलितार्थः । संदेहेन सह वर्तते वर्ण्यत्वेनेति ससंदेह इत्यलंकारसंज्ञेयम् । यदाहुः—'साम्यादप्रकृतार्थस्य या धीरनवधारणा । प्रकृतार्थाश्रया तज्ज्ञैः ससंदेहः स उच्यते ॥' संदेह इत्यप्यस्य संज्ञान्तरम् । "स्यात्स्मृतिभ्रान्तिसंदेहैस्तदेवालंकृतित्रयम्" ॥ इति चन्द्रालोकादिदर्शनात् । **विशेषधर्म इति** । उपमानतादात्म्यबुद्धिप्रतिबन्धकेत्यर्थः । स च द्विविधः, उपमेयतावच्छेदकव्याप्यः, उपमानतावच्छेदकव्याप्यश्च । तत्राद्यस्य प्रकृतनिर्णयहेतुत्वात् । तद्दर्शने विशेष्यनिर्णयसत्त्वात्संशयान्तरानुदयः । द्वितीयस्य तु तत्कोटिभानमात्रविरोधितया प्रकृतनिर्णयहेतुत्वाभावादेकसंदेहनिवृत्त्यनन्तरं अन्यकोटिकसंशयोत्पत्तिरिति दर्शयन्नाह—**प्रथममित्यादि** । विशेषधर्मोक्तिविशिष्टसंदेहस्वरूपमित्यर्थः ॥ **किं तावदिति** । माघे जलविहारवर्णनम् । अत्र इदं कमलं मुखं वेति पुरोवर्तिविशेष्यकः अभेदसंबन्धेन कोटिद्वयप्रकारकः सौन्दर्यातिशयरूपसमानधर्मदर्शनजन्यसंशयः । अत्र विब्बोकस्य कमलेष्वसंभवात् । तस्य नायिकाधर्मत्वेन नायिकानिर्णयानन्तरे मुखनिर्णयः ॥ **भावविशेष इति** । तथा च भगवान् भरतः—'इष्टानामर्थानां प्राप्तावभिमानगर्वसंभूतः । स्त्रीणामनादरकृतो वि-

यत्र तूपमाननिष्ठो विशेषधर्म उच्यते तत्रोपमेयप्रकारान्तरेण संदेहो भवत्येव स निश्चयगर्भः।

यथा मम—

'इयं विद्युद्वल्ली किमु न रुचिरस्थास्थिरतरं
लता किं वा हैमी न हि भवति तस्यां कृतिततिः।
रतिः साक्षात्किं वा न भजति दृशोः सा विषयता-
मिति त्वां पश्यन्तः प्रविदधति संदेहनिकरान्॥'

अत्र नायिकायामियं विद्युन्न वेति संशये जाते क्षणावस्थायित्वं विद्युद्धर्म उक्तः। तेन च तत्संशये निवृत्तेऽपि पुनर्लतात्वादिना संशय इति निश्चयगर्भोऽसौ। परं तु निश्चयान्ते स वाच्य एव। अत्र तु वैधर्म्यमात्रोक्त्या निश्चयव्यङ्ग्य इति चमत्कारानुरोधेन केचिन्निश्चयगर्भमेवाद्रियन्ते इति विशेषः॥

---

व्वोको नाम विज्ञेयः॥' एवं च मुखपदं मुखत्वपरम्, व्याप्यत्वं च परम्परयावधेयम्। यत्र त्विति। तेन तत्कोटिकसंशयाभावेऽपि प्रकृतनिर्णयाभावात् कोट्यन्तरमादाय संशयोत्पत्तेरिति भावः। इयमिति। यत्र चिरस्थायिरुचित्वाभावो विद्युत्त्वव्याप्य इति चिरस्थायिरुचित्वज्ञाने विद्युत्कोटिकसंशयो निवर्तते। प्रकृतनिर्णायकसामग्र्यभावाच्च। प्रकारान्तरेण संदेहः। एवमग्रेऽपि बोध्यम्। कृतिततिरिति। कृतिपदं चेष्टापरम्, प्रकृतेरप्यात्मधर्मतया शरीरेऽनुपपत्तेः। लतायामप्यन्यप्रेरणाया कर्मोत्पत्तिर्भवात् चेष्टापर्यन्तानुधावनम्। अदृष्टवदात्मसंयोगासमवायिकारणिकायाः शरीरक्रियाया एव चेष्टापदार्थत्वात्। अत एव तदनन्तरमचेतनकोटिकसंशयस्यानुपपन्नत्वादाह—रतिरिति। दृशोरिति। दृष्टिजन्यज्ञानविषयत्वाद्व्यापारानुबन्धिविषयताभिप्रायेण दृग्विषयत्वमभिहितम्। एवं रतित्वाभावव्याप्यदृग्विषयत्वदर्शने रतिकोटिकसंदेहनिवृत्तिरित्यर्थः। एवं च यत्रैककोटितावच्छेदकव्याप्यधर्मोपन्यासस्तत्र निश्चयान्तः। यत्र त्वेककोटितावच्छेदकाभावव्याप्यधर्मोपन्यासस्तत्र निश्चयगर्भ इति विभागो ज्ञेयः॥ तेन चेति। तदभावेनेत्यर्थः। एवं च विद्युत्संशयनियमनिवृत्तिकारणीभूतदर्शनविषयाभाव-प्रतियोगित्वेन तेनेत्युक्तमित्यदोषः। ननूद्भटभट्टादिभिः प्राचीनैर्निश्चयगर्भ एव संदेहोऽलंकारत्वेन स्वीकृतस्तत्कथं निश्चयान्तोऽप्युपन्यस्त इत्यत आह—परं त्विति। आद्ये प्रकृतव्याप्यधर्मोक्त्या प्रकृतनिर्णयो वाच्य एव, द्वितीये त्वप्रकृतव्याप्यधर्माभावमात्रोक्त्या प्रकृतनिर्णयो व्यङ्ग्य एव, वाच्यविवक्षया च व्यङ्ग्यस्य चमत्कारातिशयजनकत्वमि-

विशेषधर्मानुक्तौ यथा—

'अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः॥'

अत्र हि चन्द्रादावेतन्निर्मातृत्वसंशये पूर्वपूर्वसंदेहव्यावर्तकविशेषधर्मो नोक्तः। अत्रास्या निर्माता चन्द्रो वा वसन्तो वा मदनो वेति 'स्थाणुर्वा पुरुषो वा' इतिवद्विरुद्धनानाभावकोटिकः संशय इति केचित्। चन्द्रो मदनो वसन्तो वास्याः स्रष्टेति एककोटिकनानाधर्मिकः संशय इति दीक्षिताः॥

अन्ये तु—भावाभावकोटिकज्ञानमेव संशयो न तु विरुद्धनानाकोटिकमपि तस्य संशयलक्षणेऽलक्ष्यत्वोक्तेः। स्थाणुर्वा पुरुषो वेति ज्ञाने सति तदुत्तरं स्थाणुर्न वा पुरुषो न वेति संशयानुत्पत्तेरनुभवसिद्धत्वात्। तस्य संशयत्वे तु संशयात्मकज्ञानस्याप्रतिबन्धकतया तदुत्तरं संशयोत्पत्तिः स्यात्। अतः चन्द्रो निर्माता न वा, मदनो निर्माता न वा, वसन्तो नि-

---

भट्टोद्भटेन तदेवाभिहितम्। अन्यैस्तु निश्चयान्तेऽपि वैचित्र्यानुभवादुभयोरपि व्युत्पादनं कृतमिति भावः॥ **दीक्षिता इति**। एवं च विरुद्धानेककोट्यवगाहित्वं संशयलक्षणं न कार्यम्। प्रकृतस्थलेऽव्याप्तेः। एतेष्वेतन्निर्मातृसंदेहमिति प्रतीतेरेककोटिकसंशयस्यापि स्वीकर्तुमुचितत्वात्। वृक्षः कपिसंयोगवान्, तदभाववांश्चेत्येतत्समूहालम्बनवारणाय गुणः कपिसंयोगी न वेत्यस्य च संग्रहाय तदधिकरणान्तर्भावेन कोटिद्वयांशे विरोधमानस्वीकारमपेक्ष्य तदधिकरणावृत्तित्वज्ञानस्वीकारस्यैवोचितत्वात्। ततः 'चन्द्रो मदनो वसन्तो वास्या निर्माता' इत्यत्र एककोट्यन्वये चन्द्रादिवृत्तित्वमदनावृत्तित्वादिरूपो विरोधः संसर्गमर्यादया भासत इति दीक्षितमतं समर्थ्यमिति जयरामभट्टाचार्याः॥ तेषामेव सिद्धान्तमाह—**अन्ये त्विति**। ननु भावाभावकोटिकज्ञानस्यैव संशयत्वे कथं स्थाणुर्वेत्यादेस्तथात्वमित्यत आह—**स्थाणुरिति**। विशेष्यतावच्छेदकावच्छेदेन तत्तदभावान्यतरकोट्यवगाहिसमानधर्मिकतत्तदभावप्रकारकज्ञानस्यैव संशयत्वात्। वाशब्देन तदभावोपस्थापनात्। स्थाणुतदभावपुरुषतदभावोभयकोटिकसंशयद्वयमेव तत्रेत्यर्थः। अन्यत्र यथा तथास्तु, प्रकृते चन्द्रो निर्माता न वेत्यादिकश्चन्द्रादिविशेष्यकनिर्मातृत्वतदभावकोटिका नानासंशया एव युक्ताः, न तु निर्मातृधर्मिकचन्द्रा-

र्माता न वा, इत्येव संशयः । निर्मातृत्वोपपादकस्य कान्तिप्रदत्वादेश्चन्द्रादिषु निर्देशादित्याहुः । युक्तं चैतत् । अन्यथा एकसंशयत्वपक्षे विशेषधर्मानुक्त्युदाहरणत्वानुपपत्तेः ॥

केचित्तु—वितर्कालंकारमप्यतिरिक्तं वदन्ति । संशयोत्तरमनिर्णये ऊहो वितर्कः । नुशब्दादिश्च तद्व्यञ्जक इति ॥

अत्राहुः—वितर्कहेतुत्वेन संशयस्यावश्यमङ्गीकार्यतया संशय एवालंकारः । न च संशये सति ब्रह्मा यदि निर्माता स्यान्निर्माणसामग्रीमान् स्यादिति तर्कस्यापाद्यं निर्माणसामग्रीमत्त्वं 'वेदाभ्यासजडः' इत्यादिना निषिध्यत इति वितर्कोऽपि पृथगिति वाच्यम् । सर्वस्रष्टृब्रह्मसत्त्वे कथमेतन्निर्मातृत्वं तत्र नास्तीत्याशङ्कामपनेतुं 'वेदाभ्यासजडः' इत्याद्युक्तेः । एवम् 'अयं मार्तण्डः किम्' इत्यादावपि यद्ययं मार्तण्डः स्यादिति तर्कापाद्यं 'समतुरगत्वं स खलु' इत्यादिना न निषिध्यते किं तु मार्तण्डत्वादिप्रकारकसंदेहे सति कथं कृशानुत्वादिप्रकारकसंशय इति मार्तण्डत्वप्रकारकसंशयनिवृत्त्यर्थमेव तदिति ॥

'इह नमय शिरः कलिङ्गवद्वा समरमुखे करहाटवद्धनुर्वा ।'
इत्यादौ तु 'यवैर्व्रीहिभिर्वा यजेत' इतिवद्व्यवस्थितविकल्पार्थो वाशब्दो न तु संशयार्थ इति । एतेन 'सज्जीक्रियन्तां करा दानाय, शस्त्र-

---

दिनानाकोटिकाः चन्द्राद्यनेकधर्मिकनिर्मातृत्वकोटिको वा संशयः । विशेषधर्मानुक्त्युदाहरणत्वविरोधापत्तेः । पूर्वसंशयव्यावर्तकधर्ममनुक्त्वैव यत्र संशयान्तरमुपनिबध्यते तस्यैव तदर्थकत्वात् । एकसंशयत्वपक्षे च पूर्वोत्तरत्वाभावादिति प्रतिबन्धेनाह—**युक्तं चैतदित्यादिना** । **तद्व्यञ्जक इति** । यथा—'किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखम्' इति ॥ **किं त्विति** । तदभेदबोधस्य तदन्यतादात्म्यज्ञानप्रतिबन्धकत्वादित्यर्थः । **मार्तण्डत्वादि प्रकारकेति** । अल्पान्तरत्वादुक्तम् । अयं मार्तण्डः किमिति शब्दात्तु अभेदसंसर्गकमार्तण्डप्रकारकसंशय एव लभ्यत इति ध्येयम् ॥ इह नमयेत्यत्र संशयालंकार इति दीक्षितमतं निरस्यति—**इहेति** । **व्यवस्थितेति** । 'असामर्थ्ये संधिः क्रियताम्, सामर्थ्ये तु विग्रहः' इत्यत्र तात्पर्यादित्यर्थः । **यवैरिति** । यागत्वसामानाधिकरण्येन व्रीहिजन्यत्वस्य यागत्वसामानाधिकरण्येन यवजन्यत्वस्य च तेन बोधनादित्यर्थः । सज्जीक्रियन्तामिति । हर्षचरिते इषुर्मुनिः । सिंहव-

ग्रहणाय वा, गृह्यन्तां दिशश्चामराणि वा, नमन्तु शिरांसि धनूंषि वा, कर्णपूरीक्रियतामाज्ञा मौर्वी वा' इत्यादयो व्याख्याताः ॥

एवमेव—

'सिंहवत्प्रान्तरं गच्छ गृहं सेवस्व वा श्ववत् ।'

इत्यादावप्यवधेयम् ।

'सिन्दूरैः परिपूरितं किमथ वा लाक्षारसैः क्षालितं
लिप्तं वा किमु कुङ्कुमद्रवभरैरेतन्महीमण्डलम् ।
संदेहं जनयन्नृणामिति परित्रातत्रिलोकस्त्विषां
व्रातः प्रातरुपातनोतु भवतां भव्यानि भासां निधेः ॥'

इत्यत्र तु जगन्मण्डलविशेष्यकः सिन्दूरपरिपूरितत्वादिकोटिकः संशयः । अत्र किमिदं सिन्दूररजो वा लाक्षारसो वा इत्यादिसूर्यकिरणधर्मिकसंशयानुगुण्यं दधाति । तत्रारोप्यारोपविषययोः समानविभक्तिकत्वाभावाद्रविकिरणरूपस्य धर्मिणोऽध्यवसानमिति प्राञ्चः ।

रसगङ्गाधरे तु—सूर्यकिरणधर्मिकसंशयस्य गुणीभूतस्य व्यञ्जनागम्यत्वाद्विषयविषयिणोरारोपानुकूलविभक्त्यनपेक्षत्वात्तद्विनैवारोपसंभवान्नाध्यवसानमित्युक्तम् । तच्चिन्त्यम् । मानससंशयेऽपि धर्मिण इदंत्वेनैवोपस्थितेः । सूर्यकिरणत्वस्य संशये विशेष्यतावच्छेदकत्वेनाभानात्सूर्यकिरणत्वं धर्मितावच्छेदकीकृत्याभेदसंसर्गकसिन्दूरादिप्रकारकसंदेहस्यासंभवात् । तथा च प्राचामुक्तिः रमणीयैव ॥

इत्यलंकारकौस्तुभे ससंदेहालंकारनिरूपणम् ।

---

दिति । अन्यानपेक्षजीवनसामर्थ्ये सतीत्यर्थः । 'प्रान्तरं दूरशून्योऽध्वा' इत्यमरः । श्ववदिति । स्वातन्त्र्येण जीवितुमसामर्थ्ये सतीत्यर्थः ॥ **तत्रेति** । सूर्यकिरणधर्मिकसंदेहे इत्यर्थः । **समानेति** । शाब्दतादात्म्यारोपे पदद्वयस्य समानविभक्त्यन्तत्वापेक्षणादिति भावः । **विभक्त्यनपेति** । शाब्दारोप एव तदपेक्षणादित्यर्थः । इदंत्वेन सूर्यकिरणभानेऽप्यनध्यवसानमूलकत्वमस्त्येवेत्याह—**तच्चिन्त्यमित्यादि** । सूर्यकिरणत्वं धर्मितावच्छेदकत्वेन संशये कुतो न भासते इत्यत आह—**सूर्येति** । संशयधर्मितावच्छेदकीभूतधर्मः संशये आरोप्यतावच्छेदकतया आरोप्यतया वा न भासते । तन्निश्चयसत्वे तत्संशयानुपपत्तेरित्यर्थः । **तथा चेति** । [illegible] विभक्त्यभावा-

रूपकमाह—

तद्रूपकं त्वभेदः स्यादुपमानोपमेययोर्यत्र ।

सत्यामेव भेदप्रतीतावतिसादृश्यवशेन यत्र भेदमपह्नुत्योपमानेन सम-

---

दिति । हेत्वनुपपत्तिस्तदवस्थैव, तथाप्यध्यवसानमात्रसमर्थनमात्रेण तदुक्तिरामणीय-कमिति ध्येयम् । वस्तुतस्तु तदनुकूलविभक्तेरित्यस्य विभक्तिपदं ज्ञानपरमेव । तथा चारोपस्थले रूपकवद्विषयतावच्छेदकप्रकारेण विषयज्ञानाभावान्न सारोप इत्यर्थः । एतेन यदुक्तं रसगङ्गाधरे—"एतेनाध्यवसानमूलतां संशयस्य निरूपयतो विमर्शनीका-रस्योक्तिरपास्तेति, तदपास्तम् । विषयतावच्छेदकरूपेण विषयस्यानुपस्थित्या अध्य-वसानस्यावश्यकत्वात् ॥ यदपि तत्र संशयध्वनेरुदाहरणम्—'तीरे तरुण्या वदनं सहासं नीरे सरोजं च मिलद्विकासम् । आलोक्य धावत्युभयत्र मुग्धा मरन्दलुब्धालि-किशोरमाला ॥' अत्र पुरोवर्तिनि कमलमिदं वेति संशयो व्यङ्ग्य इति, तच्चिन्त्यम् । मुग्धपदेनोभयत्र धावनसहकारेण संशयस्य वाच्यत्वात् । 'मुग्धः सुन्दरमूढयोः' इत्य-नुशासनात्तेन विपरीतज्ञानवत्तालाभात् । उभयत्र धावनेन च भ्रमरत्वनिवृत्त्या संशय-त्वपर्यवसानात् ॥ चित्रमीमांसायां तु 'कांचित्काञ्चनगौराङ्गीं वीक्ष्य साक्षादिव श्रियम् । वरदः संशयापन्नो वक्षःस्थलमवैक्षत ॥' अत्र संशयस्य पदोपात्तत्वेऽपि तावन्मात्र-स्यानलंकारत्वात्तदलंकारत्वप्रयोजकस्य वक्षोगतैव लक्ष्मीस्ततोऽवतीर्य किं पुरतस्तिष्ठतीति संशयाकारस्य चतुर्थचरणेन व्यङ्ग्यत्वात्संशयध्वनिरयम् । यथा—'दर्पणे च परिभो-गदर्शिनो पृष्ठतः प्रणयिनो निषेदुषः । वीक्ष्य बिम्बमनुबिम्बमात्मनः कानि कान्यपि चकार लीलया ॥' अत्र कानि कान्यपीति सामान्यतो निर्दिष्टानुभावविशेषप्रतीतये लज्जाशब्दप्रयोगेऽपि तस्या विभावानुभावाभ्यां रसानुगुणाभिव्यक्तिरूपो ध्वनिरेवमत्रापि' इत्युक्तम् ॥ अत्र रसगङ्गाधरकृतः संशयापन्नपदेन विरुद्धनानापदार्थसंबन्धावगाहिज्ञानस्य साक्षादेवाभिधानात् । विरुद्धपदार्थविशेषाकाङ्क्षायां वक्षःस्थलावेक्षणगम्य उक्तार्थो व्यञ्जन-व्यापारेण बोध्यमानः शब्दोपात्तसामान्यभेदेन पर्यवस्यति । एवं च संशयकोटिभूतस्य वक्षःस्थलेत्यादिभागस्य विरुद्धनानार्थत्वरूपसामान्यरूपेण शब्दशक्तिगम्यत्वाद्वाच्यार्थ-संशयाङ्गत्वाच्च न ध्वनित्वं युक्तम् । वाच्यवृत्त्यचुम्बनस्यैव तत्त्वमिति सिद्धान्तादित्याहुः । जयरामभट्टाचार्यास्तु 'साक्षादिव श्रियं वीक्ष्य' इत्यनेन हेतूपन्यासेन इयं लक्ष्मीर्न वेति संशयस्य संशयपदबोध्यस्यैव नायिकोत्कर्षाधायकस्यात्रालंकारत्वं युक्तमिति न ध्वनित्व-मित्याहुः ॥ इति संदेहः ॥

उपमानतावच्छेदकावच्छिन्नाभेदविषयकत्वेन संशयानन्तरं रूपकनिरूपणमित्यभि-प्रायेणाह—रूपकमाहेति । [लक्षणादीनां स्वरूपमात्रकथनपरतया लक्षणप्रकर-

१. अस्य कोष्ठकान्तर्गतस्य टीकाग्रन्थस्य मूलग्रन्थोऽस्माभिः पुस्तकद्वयेऽपि नोपलब्धः।

मुपमेयस्याभेदः सारोपलक्षणया प्रतीयते तद्रूपकमित्यर्थः । [[1]..........

वैयर्थ्यादिदं [न] लक्षणमिति सूचयन्नाह—**लक्षणं त्विति** । इतरभेदसाधक इत्यर्थः । **उपमेयतेति** । मुखं चन्द्र इत्यत्र मुखत्वमुपमेयतावच्छेदकं तदधिकरणे मुखे चन्द्रतादात्म्यं प्रतीयत इति लक्षणसमन्वयः । **भ्रान्तिमतीति** । अतिशयोक्तेरप्युपलक्षणम् । **अप्रतीतेरिति** । इदंत्वेनैव तत्रोपमेयताभानादुपमेयतावच्छेदकप्रकारकतद्भानाभावादिति भावः । न च भानविरहेऽपि तत्सामानाधिकरण्यं वस्तुतोऽस्त्येवेति कथं न व्यभिचार इति वाच्यम् । उपमेयतावच्छेदकधर्मितावच्छेदकत्वेति(दकयोः) सामानाधिकरण्ये तात्पर्यात् । **अविशिष्टत्वादिति** । पूर्वमुपमेयतावच्छेदकप्रतीत्यभावादपह्न(ह्नु)तौ च तत्रोपमेयतावच्छेदकनिषेधात् । उपमेयतावच्छेदकधर्मधर्मितावच्छेदकीकृत्योपमानतादात्म्यप्रतीतिविरहस्तुल्य एवेत्यर्थः । **अविरोधेति** । कोटिद्वयांशे उत्कटत्वादिरूपविशेषविरहे इत्यर्थः । उत्प्रेक्षायां चोपमानतादात्म्यकोटेरेवोत्कटत्वान्न व्यभिचार इत्यर्थः । संशये तु प्रसङ्ग एव नास्ति । उपमेयतावच्छेदकमुखत्वादिधर्मितावच्छेदकस्य चन्द्रादितादात्म्यकोटिकस्य मुखं चन्द्रो वेत्याकारकसंशयस्यानुपपत्तेः। मुखं चन्द्रभिन्नं न वेत्यादेश्चोपमानतादात्म्यानवगाहित्वात् । न चात्र चन्द्रभेदाभावांशे चन्द्रतादात्म्यावगाहित्वमस्त्येवेति भेदाभावस्यापि प्रतियोगिरूपत्वादिति वाच्यम् । प्रतियोगितावच्छेदकधर्मरूप एव भेदात्यन्ताभाव इति स्वीकारेणाभिधानात् ॥ नन्वेवमप्ययुक्तम्, न हि 'रूपके सर्वत्रोपमानतादात्म्यमेव भाति' इत्यस्ति नियमः । उपमानतावच्छेदकारोपस्यापि रूपकत्वाङ्गीकारात् । तथा चाग्रे उदाहरिष्यत एव । अन्यैरपि 'अस्याः पूर्णशशाङ्कतानयनयोस्तादात्म्यमम्भोरुहम्' इत्यादि उदाहृतम् । अतः संसर्गारोपरूपकसंग्रहाय उपमेयतावच्छेदकधर्मधर्मितावच्छेदकोपमानतादात्म्यतदवच्छेदकान्यतरवत्तावगाहित्वं लक्षणमावश्यकमेव । उपमानतादात्म्योपमानतावच्छेदकसंसर्गयोरननुगमासहिष्णुताया तूपमानभेदज्ञानप्रतिबन्धकज्ञानविषयत्वेन उपमानतावच्छेदकात्यन्ताभावज्ञानप्रतिबन्धकज्ञानविषयत्वेन वा उभयोरनुगमं कृत्वा प्रवेशः कार्यः । भवति च चन्द्रोऽयमिति ज्ञानं 'नायं चन्द्र इति ज्ञाने चन्द्रत्वाभाववानयम्' च ज्ञाने, 'चन्द्रत्ववानयं' इति ज्ञानं च 'नायं चन्द्र' इत्यत्र चन्द्रत्वाभाववानित्यत्र च ज्ञाने प्रतिबन्धकम् । एवं च चन्द्राभेदात्यन्ताभावस्य चन्द्रत्वरूपत्वेऽपि तत्संसर्गारोपोऽस्त्येव । एवं मुखं चन्द्रत्ववन्न वेत्यादावपीति कथं न संशयेऽतिव्याप्तिशङ्केति चेत् ॥ सत्यम् । संशये उपमानतावच्छेदकसंसर्गभानेऽपि तज्ज्ञानस्य चन्द्रभेदादिज्ञानविरोधित्वविरहात् । चन्द्रभेदस्यापि तत्र ज्ञाने कोटित्वेन स्फुरणात् । न च तत्प्रतिबन्धस्वरूपयोग्यत्वमात्रं तत्राप्यस्तीति वाच्यम् । अत्र तदुपहितत्वस्यैव विवक्षणीयत्वात् । न चैवं यत्र मुखं चन्द्र इति ज्ञानेन

1. अत्र कियान्मूलपाठस्त्रुटित इति प्रतीयते टीकायां व्याख्यानदर्शनात्, परंतु पुस्तकद्वयेऽपि नोपलभ्यः।

चन्द्रत्वाभावचन्द्रभेदादिविषयकज्ञानप्रतिबन्धेनोपाहितस्तत्र प्रायशोऽव्याप्तिरिति वाच्यम्। एवं तदनुरोधेन स्वरूपयोग्यत्वविवक्षायामपि संशयस्य प्रतिबन्धकतावच्छेदकधर्मानवच्छिन्नतया स्वरूपयोग्यत्व एव मानाभावादिति संक्षेपः ॥

चित्रमीमांसाकृतस्तु—'बिम्बाविशिष्टे निर्दिष्टे विषये यद्यनिह्नुते। उपरञ्जकतामेति विषयीरूपकं तदा ॥' आद्येन विषयविशेषणेन 'त्वत्पादनखरत्नानां यदलक्तकमार्जनम्। इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥' इति निदर्शनायां व्यभिचारवारणम्, तत्र मार्जनस्यालक्तकादिरूपबिम्बविशिष्टत्वात्। तत्स्थानापन्नश्रीखण्डरूपप्रतिबिम्बधर्मस्य विषयकोट्युपन्यासात्। द्वितीयेन तद्विशेषणेन निगीर्याध्यवसानरूपाया अतिशयोक्तेर्निरासः। तत्र मुखत्वाद्युपस्थापकपदप्रयोगविरहात्। तृतीयेनापह्नुतेर्वारणम्, तत्र मुखादेर्निषेधेन निह्नुतत्वात्। उपरञ्जकतां आहार्यतादात्म्यनिश्चयगोचरतां एतीत्यनेन संदेहोत्प्रेक्षासमासोक्तिपरिणामभ्रान्तिमत्सु व्यभिचारवारणम्, आद्यद्वये निश्चयाभावात्। तदुत्तरद्वये(प्रिय)विषयताद्रूप्यानवगाहनात्। अन्त्ये आहार्यत्वविरहादित्याहुः ॥

अत्र रसगङ्गाधरकृतः आद्यविशेषणं निदर्शनावारकं व्यर्थमेव, तत्रापि वाक्यार्थरूपस्वीकारेण निदर्शनात्वाभावात्। निर्दिष्टपदस्यापि किं 'कथंचिदभिहिते' इत्यर्थः। उत—'उपमेयतावच्छेदकरूपेणाभिहिते' इति। नाद्यः। 'सुन्दरं कमलं भाति लतायामिदमद्भुतम्' इत्यतिशयोक्तौ सुन्दरत्वेन रूपेण वदनस्याप्यभिधानादतिव्याप्तेः। न द्वितीयः, अपह्नुतिवारकविशेषणवैयर्थ्यात्। तत्रोपमेयतावच्छेदकस्य निषेध्यतया तेन रूपेण विषयस्यानिर्देशादत एव तद्व्यावृत्तेः। भ्रान्तिमद्वारणायाहार्येतिनिश्चयविशेषणवैयर्थ्याच्च तत्रोपमेयतावच्छेदकप्रकारकप्रतीत्यभावादेव व्यभिचारानवकाशादित्याहुः॥ तच्चिन्त्यम्। रूपकसमाप्त्यवसरे सप्रपञ्चं वाक्यार्थरूपकस्य निराकरिष्यमाणत्वेन 'त्वत्पादनखरत्नानाम्–' इत्यत्र रूपकत्वाभावस्य व्यवस्थापनीयतया तत एवाद्यदोषस्य निरासात् ॥ ननु तथापि बिम्बाविशिष्टेति विषयविशेषणे 'कन्दर्पद्विपकर्णकम्बु मलिनैर्दानाम्बुभिर्लाञ्छितं संलग्नाञ्जनपुञ्जकालिमकलं गण्डोपधानं रतेः। व्योमानोकहपुष्पगुच्छमलिभिः संछाद्यमानोदरं पश्यैतच्छशिनः सुधासहचरं बिम्बं कलङ्काङ्कितम्॥' इत्यत्र रूपकेऽव्याप्तिः। अत्र शशिमण्डलरूपविषयस्य कलङ्करूपबिम्बविशिष्टत्वात्। तत्स्थानीयदानजलादिरूपप्रतिबिम्बानां विषयीभूतेषु कम्बुप्रभृतिषु निर्देशात्। न चेदं रूपकमेव न भवतीति वाच्यम्। अनुभवविरोधात्। संमतापेक्षा वैलक्षण्यानिरुक्तेश्च। अलंकारसर्वस्वविवरणकारादिभिः रूपकत्वेन। स्वीकारादिति चेत् सत्यम्। अत तेनैव समाहितत्वात्। तथा च कुवलयानन्दे निदर्शनाप्रकरणे दीक्षितैरुक्तम्। 'यत्र तु विषयविषयिविशेषणानां परस्परसादृश्येन बिम्बप्रतिबिम्बभावोऽस्ति 'ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थीन्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम्। द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्रा कपाले न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन॥'

१. इत्यधिकं ख-पुस्तके।

.......... ।] अत्राभेद एव रूपकं तस्य प्रतीतिराहार्या । भ्रान्तिमति

---

इति सावयवरूपकोदाहरणे, तत्रापि विषयविषयिणोस्तद्विशेषणानां च प्रत्येकमेवैक्यारोपः । न तु ज्योत्स्नादिविशिष्टरात्रिरूपविषयस्य भस्मादिविशिष्टकापालिकी रूपविषयिणश्च विशिष्टरूपेणैक्यारोपोऽस्तीति । ननु तत्र ज्योत्स्नादीनां भस्मादीनां च परस्परारोपवशात्केवलानां तेषां रात्रिविशेषणतया कापालिकीविशेषणतया च शाब्दबोधाभावात् । अस्तु विषयविषयिणोर्बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टत्वाभावः । कन्दर्पद्विपेत्यादौ तु कलङ्कादीनां चन्द्रमण्डलविशेषणतया दानजलादीनां च कम्बुप्रभृतिविशेषणतया शाब्दबोधोदयात् । विषयस्य वैशिष्ट्यं दुर्वारमेव । न चात्रापि शशिमण्डले कम्बुतादात्म्यस्यैवारोपः कलङ्कदानजलादीनां चाभेदबोधः पृथगेवेति बिम्बवैशिष्ट्यं नास्ति कलङ्कस्य विषयतावच्छेदकत्वानभ्युपगमादिति वाच्यम् । चन्द्रादिविशेषणत्वेन प्रतीयमानानां कलङ्कादीनां विषयतावच्छेदकत्वाद्यनभ्युपगमे मानाभावात् । स्वकल्पितनियमानुरोधेन शाब्दविषयस्यार्थस्यानपवादात् । उच्यते अत्राङ्कितत्वलाञ्छितत्वयोर्वस्तुप्रतिवस्तुभावापन्नत्वेन तद्विशेषणतयैव बिम्बप्रतिबिम्बभावेन कलङ्कदानजलत्वयोरुपादानात् । विषयस्य शशिमण्डलस्य बिम्बाविशिष्टत्वेनाव्याप्त्यनवकाशात् ॥ नन्वेतावता विषयस्य बिम्बवैशिष्ट्यमक्षतमेव, बिम्बभावाविशेष्यतया वस्तुप्रतिवस्तुभावेन धर्मोक्तिस्थलेऽप्युपमायाः सर्वसंमतत्वात् ॥ उच्यते—रूपकलक्षणे साक्षात् बिम्बप्रतिबिम्बभावापन्नधर्मविशिष्टत्वाभावस्यैव बिम्बाविशिष्टपदेन विवक्षितत्वमिति वाच्यत्वात् । 'त्वत्पादनखरत्नानाम्' इत्यत्रातिव्याप्तिवारणस्य तावतैव भानात् । तत्र मार्जनपाण्डुरीकरणयोर्विषयविषयीभावापन्नत्वेन तत्र साक्षादेवालक्तकश्रीखण्डलेपयोर्विषयविशेषणत्वात् ॥ यच्च निर्दिष्टपदे दूषणमुक्तम्, तदपि न । उपमेयतावच्छेदकरूपेणैवाभिधानस्य विवक्षितत्वात् । अपह्नुतौ चोपमेयस्य निषेधेऽपि तद्रूपेणाभिधानसत्त्वादतिव्याप्तिसंभवेन तद्वारकविशेषणान्तरस्यावश्यकत्वात् । न च तथापि निश्चये आहार्यत्वविशेषणवैयर्थ्यमेव, तत्रोपमेयतावच्छेदकरूपेणानभिधानादेव व्यभिचारविरहादिति वाच्यम् । इष्टापत्तेः । उपरञ्जकतापदार्थस्य प्रकृते तन्निर्मुक्तस्यैवाभिधानेऽपि क्षतिविरहात् ॥ यदप्युक्तम्—'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसी मुखम्' इति कुवलयानन्दे दीक्षितोक्तायामपह्नुतावतिव्याप्तिः । तत्र चन्द्रे सुधांशुत्वनिषेधेऽपि आरोपविषयस्य मुखस्यानिह्नवात् । न चेदं रूपकमेवेति वाच्यम् । स्वोक्तिविरोधापत्तेरिति ॥ तदपि न । तथा हि तत्र प्रसिद्धचन्द्रे सुधांशुत्वनिषेधान्मुखे प्रसिद्धचन्द्राभेदो नारोप्यते बाधात् । किंतु सुधांशुपदवाच्यत्वं चन्द्रे निषिध्य मुखमेव सुधांशुपदवाच्यमित्येव बोध्यते । 'इन्द्रो मरुत्वान्मघवा' इत्यादिवत् । एवं 'साक्षात्सुधांशुर्मुखमेव भैम्या दिवः स्फुटं लाक्षणिकः शशाङ्कः । एतद्भुवौ मुख्यमनङ्गचापं पुष्पं पुनस्तद्गुणमात्रवृत्त्या ॥' इत्यत्रापि लाक्षणिकादिपदभङ्ग्या प्रसिद्धचन्द्रादौ चन्द्रत्वादिकं निषिध्य मुखादेश्चन्द्रादिपदवाच्यत्वमेव व्यवस्थाप्यते इति दिक् ।] चक्रवर्तिमतमाह—अत्रेति । अभेद इति । शाब्द-

त्वनाहार्यैवेति केचित्। अभेदारोप एव रूपकमिति काव्यप्रदीपः। अन्ये तु—

'उपमैव तिरोभूता भेदा रूपकमिष्यते।'

इति प्राचीनोक्तिविरुद्धमेतत्। उपमा हि साधर्म्यरूपा भेदांशविनिर्मुक्तं साधर्म्यमेव रूपकमिति तदर्थात्[1]। तस्मात्

'यदोपमानशब्दानां गौणवृत्तिव्यपाश्रयात्।
उपमेये भवेद्वृत्तिस्तदा तद्रूपकं भवेत्॥'

इत्युक्तदिशा सारोपलक्षणालभ्यं सारूप्यमेव रूपकमित्याहुः॥ ननु मुखचन्द्रः इत्यत्र चन्द्रपदस्य मुखत्वेन मुखलक्षणायां पौनरुक्त्यम्। चन्द्र-

---

बोधविषयीभूत इति शेषः। **आहार्येति**। मुखत्वादिरूपधर्मोपस्थित्यानाहार्याभेदज्ञानानुपपत्तेरित्याशयः॥ 'तद्रूपकमभेदो य उपमानोपमेययोः' इति काव्यप्रकाशस्वरसोऽप्यत्रेति ध्येयम्॥ एवमारोप्यमाणो भेद एव रूपकमित्युक्त्वा अभेदारोप एव रूपकमिति मतमाह—**अभेदारोप इति**। इदं च चण्डीदासस्याभिमतम्। यदाह—अलंकारश्चात्राहार्यस्तादात्म्यारोप एवेत्यवसेयमिति। जयरामभट्टाचार्यमतमाह—**अन्ये त्विति**। **प्राचीनेति**। सरस्वतीकण्ठाभरणादीत्यर्थः। **एतदिति**। उक्तमतद्वयमित्यर्थः। **सादृश्येति**[1]। तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्त्वरूपमित्यर्थः। **भेदांशेति**। भेदानवगाहिज्ञानविषयेत्यर्थः। **गौणवृत्तीति**। गौणसारोपलक्षणेत्यर्थः। **उपमेय इति**। चन्द्रादिपदानां तत्सादृश्यविशिष्टलक्षणया उपमेयप्रतिपादकत्वमित्यर्थः। किंच भेदस्य तदारोपस्य वा रूपकत्वे तस्य व्यङ्ग्यत्वमेव स्यात्। तथा च—'भ्रमिमरतिमलसहृदयतां प्रलयं मूर्छां तमः शरीरसादं च। मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम्॥' इत्यत्र विषपदव्यङ्ग्यं हालाहलम्, वाच्यस्य भुजगरूपकस्य सिद्धिकृदिति पञ्चमोल्लासविरोधः स्यात्। अभेदतदारोपयोरवाच्यत्वात्। सादृश्यस्य रूपकत्वे तु तस्य लक्ष्यतया तदविरोधः। न चैवं 'नियतारोपणोपायः स्यादारोपः परस्य यः' इति परम्परितरूपकस्य आरोपरूपकत्वकथनमयुक्तम्। रूपकसामान्यस्य तदुक्तरीत्या सादृश्यरूपत्वादारोपत्वाभावे तद्विशेषस्य परम्परितस्यापि आरोपरूपत्वानुपपत्तेः। काव्यप्रदीपादिरीत्या तु आरोपस्यैव रूपकशरीरत्वाभ्युपगमान्नानुपपत्तिरिति वाच्यम्। तत्रारोपपदस्य तत्प्रयोजकसाधर्म्यपरत्वादिति तद्ग्रन्थशेषार्थः॥ लक्षणाप्रकारं वक्तुं शङ्कते—**नन्विति**। **पौनरुक्त्यमिति**। मुखत्वप्रकारकबोधस्य चन्द्रपदलक्षणाज-

---

१. 'तदर्थलाभात्' ख.

---

१. 'साधर्म्यं' इति मूलपुस्तकपाठः.

गतलावण्यादिगुणेन लक्षणायामन्यगुणस्यान्यत्र वृत्तिनिमित्तत्वानुपपत्तिः । मुखगतलावण्यादिगुणेन लक्षणायां मुख्यार्थसंबन्धरहितगुणेन तदनुपपत्तिरिति चेत्—

अत्राहुः—मुखचन्द्रोभयानुगतलावण्यादिसामान्यमुखेन लक्षणेति ।

केचित्तु—रूपकस्थले न लक्षणा, चन्द्रत्वरूपेण व्यधिकरणधर्मेण चन्द्रशब्देन शक्त्यैव मुखबोधसंभवात् । नामार्थयोरभेदान्वयव्युत्पत्तेः—इत्याहुः ॥

ननु 'मुखं न चन्द्रः' इति बाधनिर्णयसत्त्वे योग्यताज्ञानाभावात्कथं मुखचन्द्र इत्यादावभेदान्वयबोध इति चेत्—

अत्र नैयायिकाः—आहार्यज्ञाने बाधबुद्धेरप्रतिबन्धकतया आहार्ययोग्यताज्ञानादेव तत्रान्वयबोधः । न चाहार्यात्मकः शाब्दबोध एवास्तु किमाहार्ययोग्यताज्ञानकल्पनयेति वाच्यम् । तथा सति परोक्षज्ञानमनाहार्यमेवेति

---

जन्यतावच्छेदकत्वोपगमे मुखपदेन मुखत्वप्रकारकबोधजननात् । मुखं इतिवदयोग्यत्वाचेति भावः । **चन्द्रगतेति** । तथा च 'चन्द्रगतलावण्यादिमन्मुखम्' इति बोध इत्यर्थः । अन्येति । चन्द्रगतगुणानां चन्द्रपदस्य मुखे प्रवृत्तिनिमित्तत्वं न स्यात् । लक्ष्यवृत्तिगुणानामेव तथात्वादित्यर्थः । पदार्थनिदर्शनातो वैलक्षण्यानुपपत्तिरपि द्रष्टव्या । **मुखगतेति** । तथा च मुखगतलावण्यादिमन्मुखमिति बोध इत्यर्थः । **मुख्यार्थेति** । चन्द्रस्यैव मुख्यार्थत्वात्तत्र च मुखगुणसंबन्धराहित्यादित्यर्थः । **व्यधिकरणेति** । उपमेयतावच्छेदकव्यधिकरणेत्यर्थः । **नामार्थयोरिति** । समानविभक्त्यवरुद्धत्वेन तदभेदः संसर्गतया भासत इत्यर्थः । एषां च चन्द्रगतत्वावच्छिन्नप्रकारतानिरूपिताभेदनिष्ठसंसर्गतानिरूपितमुखत्वावच्छिन्नविशेष्यताकबोध एवंविधस्थले संमतः । स चानुपपन्नः । 'मुखं न चन्द्रः' इति मुखत्वावच्छिन्नविशेष्यताकचन्द्रत्वावच्छिन्नप्रतियोगिताकभेदप्रकारकज्ञानसत्वे तदसंभवादित्याह—**नन्विति** । **योग्यतेति** । मुखं चन्द्राभिन्नमिति योग्यताज्ञानस्यैव तादृशशाब्दबोधहेतुत्वात् । 'मुखं चन्द्रः' इति ज्ञानसत्वे च तदनुदयात् । तद्व्यतिरेकेण न शाब्दानुदयादिति भावः । न च प्रकृते भेदस्य सांसर्गिकविषयतया भानाभ्युपगमात्कथं तत्र भेदप्रकारकज्ञानस्य प्रतिबन्धकत्वमिति वाच्यम् । अभेदविषयकज्ञानस्यैव भेदज्ञानप्रतिबध्यतावच्छेदकत्वात् ॥ **आहार्येति** । सत्यप्युक्तबाधज्ञाने मुखत्वावच्छिन्नविशेष्यताक(अ)भेदसंसर्गकचन्द्रत्वावच्छिन्नप्रकारकबोधो जायतामितीच्छया मुखं चन्द्राभिन्नमिति योग्यताज्ञानं संभवत्येव । इच्छाधीनज्ञाने बाधबुद्धेरप्रतिबन्धकत्वादित्यर्थः । **परोक्षेति** । प्रत्यक्षभिन्नज्ञानमित्यर्थः । योग्यताज्ञानस्य चोक्तस्य मानसप्रत्यक्ष-

सिद्धान्तभङ्गापत्तेः । एवं च 'सेको न वह्निकरणकः' इत्ययोग्यताज्ञानसत्त्वेऽपि आहार्ययोग्यताज्ञानाद्वह्निना सिञ्चति इत्यादावपि शाब्दबोधो भवत्येवेत्याहुः ॥

यत्तु—शाब्दबोधस्याप्याहार्यत्वमस्तु बाधकाभावादिति, तत्तुच्छम्। तथा सत्यनुमित्यादावनाहार्यस्यैव परामर्शस्य हेतुत्वात् वह्निव्याप्यधूमवान् पर्वत इत्यादिशाब्दात्मकपरामर्शस्थलेऽपि कारणतावच्छेदककोटावनाहार्यत्वनिवेशे गौरवप्रसङ्गात् । एवमन्यत्रापि बोध्यम् ।

केचित्तु—'मुखं चन्द्रः' इत्यादौ 'मुखं न चन्द्रः' इत्याद्ययोग्यतानिर्णयसत्त्वेऽभेदान्वयो न जायते, किं तु चन्द्रपदस्य चन्द्रसादृश्यविशिष्टलक्षणया चन्द्रसादृश्यविशिष्टभिन्नं मुखमित्येव बोध इत्याहुः ॥

अथैवमुपमारूपकयोरभेदापत्तिः । सादृश्यप्रत्ययस्योभयत्राप्यविशिष्टत्वात् । न चोपमायां सादृश्यमुपमेयविशेषणम्, रूपके तु तद्वानिति भेद इति वाच्यम् । बोधवैलक्षण्येऽपि विच्छित्तिसाम्येन पार्थक्यानुपपत्तेः। अत

---

रूपतया आहार्यत्वस्वीकारेऽपि सिद्धान्तविरोधाभावादिति भावः ॥ नन्वेवं वह्निना सिञ्चतीत्यादावप्याहार्ययोग्यताज्ञानाच्छाब्दबोधः स्यादित्याशङ्क्येष्टापत्तिमाह—एवं चेति । गौरवेति । सिद्धान्ते तु शाब्दस्यानाहार्यत्वनियमात्तादृशस्थले प्रयोजनाभावादनाहार्यत्वं न निवेश्यत इति भावः । **एवमिति** । यत्रानाहार्यज्ञानस्यैव हेतुता तत्र परोक्षज्ञानीयहेतुतायामनाहार्यत्वं कारणतावच्छेदककोटौ न निविशत इति भावः। अन्ये त्विति । अयोग्यतानिर्णयदशायां शाब्दधीवारणायैव हि योग्यताज्ञानस्य हेतुता कल्प्यते । यदि त्वयोग्यतानिर्णयकालेऽपि उक्तरीत्या शाब्दबोध इष्यते तर्हि तद्धेतुत्वकल्पनमेव दुर्लभं स्यात् । अतस्तत्राभेदानन्वयबोधो न भवतीत्येवाभ्युपगन्तव्यमित्येषामभिप्रायः ॥ कथं तर्हि तत्रान्वयबोध इत्यत आह—**किं त्विति** । चन्द्रपदस्य चन्द्रसादृश्ये लक्षणा अतश्चन्द्रसदृशाभिन्नं मुखमित्येव बुद्धिरिति भावः । अत्र चन्द्रसादृश्यमात्रे लक्षणायां सादृश्यस्य निपातभिन्ननामार्थत्वेन आश्रयत्वसंबन्धेन मुखान्वयो न स्यात् । अतो भेदान्वयार्थं विशिष्टलक्षणेत्यवधेयम् ॥ स्यादेतदेवं सत्युपमाया रूपकस्य च किं भेदकमित्याशङ्कते—**अथैवमिति । उभयत्रेति** । चन्द्र इव मुखमित्यत्रापि चन्द्रसादृश्यस्य मुखवृत्तित्वावगाहनादित्यर्थः । **सादृश्यमिति** । तावन्मात्रस्य इवपदार्थत्वात् । तस्य चानुयोगित्वेन मुखान्वयादित्यर्थः । **रूपके त्विति** । सादृश्यविशिष्टलक्ष्यतया अभेदसंसर्गेण मुखान्वयादिति भावः । यदि तु विशेषणादिकृतवैलक्षण्य

एव चन्द्र इव मुखं चन्द्रसदृशं मुखमित्यादौ न पृथगलंकारः सादृश्यतदाश्रययोरुपमेयविशेषणतायाः सत्त्वादिति चेत्—

अत्राहुः—सादृश्यप्रतीतेरुभयत्राविशेषेऽपि लक्षणायाः फलीभूततादूप्यज्ञानमादाय रूपकस्योपमातो भेदः। चन्द्र इवेत्यादौ च लक्षणाविरहान्न तादूप्यप्रतीतिरिति नोक्तदोषः। तादूप्यज्ञानं च विषयितावच्छेदकस्य चन्द्रत्वादेर्मुखादौ बोधः। न च लक्षणाजन्येऽपि तत्सदृशबोधे कथं तादूप्यप्रत्यय इति वाच्यम्। श्लेषादेकपदोपस्थापितव्यञ्जनयैव तत्संभवात्। न चैवमपि चन्द्रसादृश्यविशिष्ट एव चन्द्रतादूप्यप्रत्ययः स्यात्, तयोरेवैकशब्दोपात्तत्वात्। इष्यते च मुखत्वविशिष्टे मुखे चन्द्रतादूप्यप्रत्यय इति

---

मात्रेणालंकारान्तरत्वमित्यङ्गीक्रियते, तत्राह—अत एवेति। चन्द्र इव मुखमित्यत्र सादृश्यमुपमेयविशेषणम्, 'चन्द्रसदृशं मुखम्' इत्यत्र च तद्विशिष्टो मुखविशेषणम्। अतो द्वितीयस्थलेऽपि रूपकमेव स्यात्। वाच्यलक्ष्यत्वभेदस्याप्रयोजकत्वात्। न चेष्टापत्तिः। चन्द्रसदृशमित्यादावार्थी उपमैवेति सर्वसंमतत्वात्। एवं च पृथगित्यस्य रूपकातिरिक्तालंकारापादनं नार्थः किंतु चन्द्र इव मुखमित्येतद्वाक्यवृत्त्यलंकारातिरिक्तालंकारापादनमेवेति रूपकापादान एव पर्यवस्यतीति ध्येयम्॥ **लक्षणाया इति**। चन्द्रपदस्य चन्द्रसादृश्यविशिष्टलक्षणाया इत्यर्थः। नन्वेवं चन्द्र इवेत्यादावपि कुतो न तादूप्यप्रत्ययः, सादृश्यप्रत्ययमात्रस्यैतदवगमकत्वेऽत्रापि तदविशेषादित्याशङ्क्याह—चन्द्र इत्यादि॥ **लक्षणाविरहादिति**। तथा च सादृश्यमात्रस्य न तदाक्षेपकत्वं किंतु लक्षणाया एवेति भावः। **विषयितेति**। आरोप्यतावच्छेदकेत्यर्थः। ननु लक्षणाया सादृश्यविशिष्टजनकत्वेऽपि कथं ततस्तादूप्यप्रत्ययो भविष्यतीत्यत आह—**न चेति**। लक्षणाजन्यत्वमात्रस्याप्रयोजकत्वात्। सादृश्यस्यैव तदाक्षेपकत्वे तु उक्तदोषतादवस्थ्यादिति भावः॥ अभिप्रायमाह—**श्लेषादित्यादि**॥ **एकपदेति**। चन्द्रपदेन चन्द्रस्य शक्त्या चन्द्रसादृश्यस्य च लक्षणया बोधात्, तन्मूलकव्यञ्जनया उभयोरभेदबोधादिति भावः। नन्वेवमपि चन्द्रसादृश्य एव चन्द्रत्वरूपविषयितावच्छेदकधर्मबोधः स्यान्न तु मुखे तस्यैकशब्दानुपात्तत्वात्। एवं च मुखे चन्द्रतादूप्यप्रत्ययोऽनुपपन्न एवेत्याशङ्क्ते—**न चैवमिति**॥ **इष्यते चेति**। उपमा[न]रूपकयोर्भेदसिद्ध्यर्थमित्याशयः।

---

1. 'श्लेषादिवदेकपदो' क-ख. २. 'पदोपादानोत्थापि' ख.

---

1. 'अन्यथा' ख.

वाच्यम् । चन्द्रसादृश्यविशिष्टे चन्द्रताद्रूप्यप्रत्यये जाते चन्द्रसादृश्य-विशिष्टाभिन्ने मुखेऽपि चन्द्रताद्रूप्यप्रत्ययसंभवात्—इति ॥

केचित्तु—चन्द्रसदृशे लक्षणायामपि न तेन रूपेण मुखादिभिरभेदान्वयः, किं तु चन्द्रत्वेनैव । तत्तत्पदलक्षणाज्ञानस्य तत्तत्पदवाच्यतावच्छेदकप्रकारकलक्ष्यविशेष्यकशाब्दत्वमेव कार्यतावच्छेदकं कल्प्यते, शाब्दपदार्थोपस्थित्योः समानप्रकारकत्वनियमोऽप्येतदतिरिक्तस्थलमात्रपरः । प्रकृते लाक्षणिकबोधवैलक्षण्यस्यानुभवसिद्धत्वाच्च न गौरवादिदोषः । मुखे

---

चन्द्रसादृश्येति । प्रथममुक्तरीत्या चन्द्रसदृशविशेष्यकचन्द्रत्वप्रकारकबोधस्य लक्षणयाभ्युदये ततश्चन्द्रसदृशाभिन्ने मुखेऽपि चन्द्रत्वप्रकारकबोधः । अतो मुखे चन्द्रताद्रूप्यप्रत्ययः सिद्ध एवेति भावः । न च लक्षणां विनैव नामार्थयोरभेदान्वयव्युत्पत्त्या चन्द्रप्रकारकाभेदसंसर्गकमुखविशेष्यकबुद्धिसंभवात्किमर्थं लक्षणास्वीकार इति वाच्यम् । अस्ति हि चमत्कारकसाधारणधर्मानुपस्थितिदशायामुपमाया इव रूपकस्याप्यनिष्पत्तिश्चमत्काराभावश्चेति सर्वानुभवसिद्धम् । कथमन्यथा । 'भारतं नाकमण्डलं नगरं विधुमण्डलम्' इत्यादौ रूपकालंकारानुल्लासेऽपि सुपर्वालंकृतत्वसकलङ्कत्वादिरूपधर्मोपस्थित्या रूपकोल्लासश्चमत्कारोदयश्च । परं तूदाहृतस्थले अप्रसिद्धतया धर्मस्य शब्दत उपादानमपेक्ष्यते मुखं चन्द्र इत्यादौ तु प्रसिद्धतया तद्बोध इति न नियमस्तस्य शाब्दमुपादानमिति विशेषः । एवं च यदि रूपके सादृश्यस्यानुप्रवेशो नास्ति, तदुक्तधर्मानुपस्थितिदशायां कथं न रूपकपर्यवसानं तदाप्यभेदबोधकसामग्र्या अवैकल्पात् । न चाहार्याभेदबुद्धौ चमत्कारे वा सादृश्यज्ञानं कारणमिति वाच्यम् । 'यद्यनुष्णो भवेद्वह्निर्यदशीतं भवेज्जलम् । मन्ये दृढव्रतो रामस्तदा स्यादप्यसत्यवाक् ॥' इत्यादौ सादृश्यज्ञानाभावेऽप्यभेदबुद्धेरुदयात् । न चोपमानोपमेयस्थल एवैवं कल्प्यत इति वाच्यम् । प्रमाणाभावात् । अतोऽत्र सादृश्यलक्षणाया आवश्यकत्वमेवेति एतदर्थशेषो द्रष्टव्यः ॥ साक्षादेव विषयितावच्छेदकप्रत्ययं लक्षणापक्षेऽप्यङ्गीकुर्वतां मतमाह—केचित्त्विति । तेन रूपेणेति । लक्ष्यतावच्छेदकप्रकारेणेत्यर्थः । चन्द्रत्वेनेति । शक्यतावच्छेदकधर्मेणैवेत्यर्थः । ननु चन्द्रसदृशलक्षणाज्ञानस्य चन्द्रसादृश्यप्रकारकज्ञानत्वमेव कार्यतावच्छेदकं क्लृप्तमिति चन्द्रसदृशत्वेनैवान्वयो युक्तो न तु चन्द्रत्वेन लक्षणाज्ञाननिष्ठकारणतानिरूपितलक्ष्यतावच्छेदकावच्छिन्नप्रकारताकज्ञानत्वरूपकार्यतावच्छेदकानवच्छिन्नत्वादित्यत आह—तत्पदेति । ननु येन रूपेण पदार्थोपस्थितिस्तेनैवेतरपदार्थान्वयो भवति तत्कथमत्र चन्द्रसदृशत्वेनार्थोपस्थितौ चन्द्रत्वेन शाब्दबोधो भविष्यतीत्यत आह—शाब्देति । नन्वेवं सति लक्षणाज्ञानस्य लक्ष्यतावच्छेदकप्रकारकज्ञानत्वरूपकार्यतावच्छेदकमपहाय यथोक्तं कार्यतावच्छेदकान्तरकल्पनागौरवमित्यत आह—प्रकृत इति ।

चन्द्रत्वादिप्रतिपत्तेश्च चन्द्रगतधर्मप्रतिपत्तिः फलम् । तां विना चन्द्रत्वनियतगुणानां मुखे प्रतीत्यनुपपत्तेः—इति वदन्ति ॥ तन्न । चन्द्रत्वावच्छिन्नप्रकारताकाभेदसंसर्गकमुख्यविशेष्यकज्ञानं प्रति बाधबुद्धेरत्र प्रतिबन्धकत्वाविशेषात् । ईदृशज्ञाने बाधबुद्धेरत्र प्रतिबन्धकत्वाविशेषे कल्पनेऽपि शक्तिजन्यैतादृशबोध एवाप्रतिबन्धकत्वस्य कल्पयितुमुचितत्वात् । चन्द्रत्वावच्छिन्नप्रकारताकमुखविशेष्यकज्ञानं च चन्द्रसदृशे लक्षणां विनापि शक्त्यैव तद्बोधोपपत्त्यभावादेव नात्र प्रमाणं भवितुमर्हति । अत एव 'गङ्गायां घोषः' इत्यादावपि गङ्गात्वेनैव तटस्य नान्वयः, गङ्गात्वेन प्रकारेण प्रवाहे घोषबाधबुद्धौ तेनैव प्रकारेण तीरेऽपि तदन्वयानुपपत्तेः । न च गङ्गात्वेन प्रवाहे घोषबाधबुद्धेर्गङ्गात्वप्रकारकप्रवाहविशेष्यकघोषान्व-

---

एतादृशकल्पनायां बीजमाह—**मुखे इति** । ननु विषयतावच्छेदकप्रतीतिं विनापि तत्समानाधिकरणधर्माणां प्रतीतिः स्यादेवेति किं चन्द्रत्वादिप्रतिपत्त्येत्यत आह—**तां विनेति** । चन्द्रत्वव्याप्यत्वेनावगतानां आह्लादकत्वविशेषादिरूपधर्माणां चन्द्रत्वबोधं विना मुखे प्रहीतुमशक्यत्वादिति भावः । दूषयति—**तन्नेति** । मुखं न चन्द्र इति बाधज्ञानस्य प्रतिबध्यतावच्छेदकं चन्द्रप्रकारकाभेदसंसर्गकमुखविशेष्यकज्ञानत्वरूपमेव, तच्चोक्तस्थले साधारणमेवेति कथं तत्सत्त्वे चन्द्रत्वरूपेणाभेदान्वयबोधो भवितुमर्हतीत्याह—**चन्द्रत्वेति** । ननु शक्तिजन्यतादृशबोधे सत्येव प्रतिबन्धकत्वं वाच्यमित्यत आह—**ईदृशेति** । तादृशबाधबोधसत्त्वे उक्तबोधस्येष्टत्वे शक्तिलक्षणाजन्यत्वस्याप्रयोजकत्वादिति भावः । ननु चन्द्रत्वेन रूपेणाभेदावगाहि शाब्दबोध एवात्र प्रमाणमित्यत आह—**चन्द्रत्वावच्छिन्नेति** । तादृशबोधस्योक्तरीत्या शक्त्यैवोपपत्त्या न तदन्यथा तस्य लक्षणाजन्यत्वं कल्प्यत इति भावः ॥ ननु गङ्गायां घोष इत्यत्र गङ्गात्वेन तटस्य बोधात् युक्तमेव लक्षणाजन्यबोधे बाधस्याविरोधित्वकल्पनं तद्विना तन्नियतशैत्यपावनादिधर्माणां तटे बोधानुपपत्तेः । तत्संबन्धबोधस्यैव तदाक्षेपकत्वे तु गङ्गातीरे घोष इत्यतोऽपि तत्प्रत्ययप्रसङ्गात् । उक्तं हि काव्यप्रकाशे—'तटादीनां गङ्गादिशब्दैः प्रतिपादनेन तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसंप्रत्ययः' इति । अत आह—**अत एवेति** । **नान्वय इति** । किंतु तत्संबन्धित्वस्यैव लक्षणया बोधः । व्यञ्जनया तु तद्वृत्त्यनन्तरं शक्यलक्ष्ययोरभेदबोध इति भावः । गङ्गात्वेन तटं कुतो न लक्ष्यते इत्यत आह—**गङ्गात्वेनेति** । ननु यदा गङ्गात्वेन प्रवाह एव गृह्यते तत्रैव बाधबुद्धेः प्रतिबन्धकत्वम् । यदा तु तीरमेव तद्रूपेण गृह्यते तत्र तु न तथा, भिन्नविषयत्वादित्याशङ्क्य—**न चेति** । तद्रूप धर्मितावच्छेदकत्वेन बाधज्ञाने भासते

यबुद्धित्वमेव प्रतिबध्यतावच्छेदकम्, न तु गङ्गात्वप्रकारकतीरविशेष्यकबुद्धित्वमिति वाच्यम्। समानप्रकारकत्वेनैव बाधबुद्धीनां प्रतिबन्धकत्वात्। अन्यथा पर्वतत्वं धर्मितावच्छेदकीकृत्य पर्वते वह्न्यभाववत्ताज्ञाने पर्वतत्वमेव धर्मितावच्छेदकीकृत्य महानसविशेष्यकवह्निमत्ताज्ञानप्रसङ्गात्। अतस्तत्रापि लाक्षणिकशाब्दबोधोत्तरं व्यञ्जनयैव गङ्गाद्यभेदबुद्धिरिति न्यायपञ्चाननादयः॥ एवं प्रकृतेऽपि चन्द्रत्वेन बाधबुद्धौ सत्यां कथं तेनैव रूपेण लाक्षणिकोऽप्यन्वयबोधः स्यादिति दिक्॥

अन्ये तु—अभेदगर्भं सादृश्यं रूपके प्रतीयते, उपमायां तु भेदगर्भमेवेति विशेषः, मतान्तरे तु भेदगर्भसादृश्यज्ञानात्कथमभेदप्रतीतिरित्यनुपपत्तिः स्यात्—इत्याहुः॥

वस्तुतस्तु—'मुखं न चन्द्रः' इत्येतादृशबाधबुद्धिप्रतिबन्धकतायां सा-

---

तद्रूपावच्छिन्नविशेष्यतावच्छेदकतद्विशिष्टबोधो न भवतीत्याह—**समानेति**। वैपरीत्ये नियामकमाह—**अन्यथेति**। तत्रैकत्र पर्वतत्वेन पर्वतस्य परत्र च महानसस्य भानाद्विशिष्टबुद्ध्यापत्तिरिति भावः। नन्वेवं सति कथं तटे शैत्यादिप्रत्यय इत्यत आह—**अत इति**। न च शक्तिलक्षणाजन्यबोधो यथा बाधान्न भवति, एवं व्यञ्जनयापि कथमभेदबुद्धिः स्यात्प्रतिबध्यतावच्छेदकधर्मावलीढत्वादिति वाच्यम्। व्यञ्जनाधर्मिग्राहकमानेन तद्बोधकत्वेनैव सिद्ध्या तन्मूलकज्ञाने बाधज्ञानस्य प्रतिबन्धकत्वविरहादित्यालंकारिकसिद्धान्तात्। तथा च काव्यप्रदीपे—"शब्देन लाक्षणिकेऽर्थे प्रतिपादिते तत्र मुख्याभेदो व्यञ्जनया प्रतिपाद्यते। 'न च व्यञ्जने बाधः प्रतिबन्धकः' इति काव्यविदां पन्थाः" इति॥ केचित्तु सत्यामपि बाधबुद्धौ शब्दाभेदान्वयबोधः। तदुक्तं खण्डनकृता—'अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि' इति। अतो गङ्गात्वेनैव तटादिबोध इत्याहुः॥ एतदाद्यपरितोषान्मतान्तरमवतारयति—**अन्ये त्विति**। **अभेदगर्भमिति**। भेदगर्भेति बहुव्रीहिं कृत्वा ततो नञ्समासः। तेन भेदनिर्मुक्तमित्यर्थः। **विशेष इति**। भेदावगाहनानवगाहनाभ्यां विषयभेदस्य स्फुटत्वादिति किं भेदकान्तरगवेषणप्रयासेनेत्याशयः। सादृश्यस्योपमासाधारणस्यैवात्र प्रवेशे दोषमाह—**मतान्तरे त्विति**। **कथमिति**। भेदज्ञानस्याभेदप्रतीत्यनुपायत्वात्। प्रत्युत विरोधित्वादिति भावः। आरोप्यतावच्छेदकरूपेणैवाभेदबोधं समर्थयितुमाह—**वस्तुतस्त्विति**। **प्रतिबन्धकतायामिति**। मुखं चन्द्राभिन्नमित्यतादृशज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितायामित्यर्थः। **सादृश्यातिशयेति**। चमत्कारकानेकधर्मविषयिण्या इत्यर्थः। एकस्यां प्रतिबन्धकतायां विषयविशेषप्रतीतेरुत्तेजकत्वं न संभवति। सादृश्यस्य उक्तसादृश्यज्ञानसत्त्वे वह्न्यभाववत्ताज्ञानसत्त्वेऽपि वह्निमत्ता ज्ञानप्रसङ्गात्।

दृश्यातिशयप्रतीतेरुत्तेजकत्वमङ्गीकार्यम् । बाधबुद्धिप्रतिबध्यप्रतिबन्धकभावानां तत्तद्विशेष्यतावच्छेदकप्रकारतावच्छेदकान्तर्भावेनैव वाच्यतया तेषां भिन्नभिन्नत्वात् । तथा चोत्कटसादृश्यज्ञानाभावविशिष्टमेव 'मुखं न चन्द्रः' इत्येतादृशबाधज्ञानं प्रतिबन्धकम् । यत्र सादृश्यज्ञानं नास्ति तत्रोक्तबाधनिर्णयसत्त्वेऽभेदान्वयबोधो न भवत्येव ॥ न चैवं मुखं न चन्द्रसदृशं किं तु चन्द्र एव 'सिंहेन सदृशो नायं किं तु सिंहो महीपतिः' इत्यादावभेदान्वयबोधो न स्यात् सादृश्यज्ञानाभावादिति वाच्यम् । तत्रापि चन्द्रसादृश्यज्ञानाभावेन भेदाभावज्ञानपर्यवसितेन भेदज्ञानस्यैव प्रतिबन्धात् । तथा च प्रतिबन्धकाभावादेव तत्र कार्योत्पत्तिः । एतावांस्तु भेदः । कुत्रचिद्विशेषणाभावाद्विशिष्टाभावः, अत्र तु विशेष्याभावादेवेति । न हि 'चन्द्रसदृशं न' इति ज्ञानस्य साधारणधर्मवत्तानिषेधकत्वं संभवति । तथा सति

---

नाभावविशिष्टबाधाभावसत्त्वादत आह—**बाधेति** । तद्विशेष्यकतत्प्रकारकज्ञाने तद्विशेष्यकतदभावप्रकारकज्ञानत्वेन विशिष्यैव प्रतिबन्धकत्वं कल्प्यते । एवं च प्रकृते 'मुखं चन्द्राभिन्नम्' इति ज्ञानं प्रति 'मुखं न चन्द्रः' इति ज्ञानं प्रतिबन्धकं तत्रैव सादृश्यप्रतीतेरुत्तेजकत्वं स्वीकार्यमित्यर्थः । फलितार्थमाह—**तथा चेति** । सादृश्यज्ञानसत्त्वे च तदभावविशिष्टबाधाभावो विशेषणाभावनिबन्धनोऽस्त्येवेति प्रतिबन्धकाभावादभेदबोधः सुघट एवेति भावः । नन्वेवं सादृश्यज्ञानाभावकाले बाधधीसत्त्वे अभेदान्वयबोधो न स्यादित्याशङ्क्येष्टापत्त्या परिहरति—**यत्रेति** ॥ एवं सति यत्र सादृश्याभावोऽवगाह्यते तत्राभेदान्वयबुद्धिरनुभवसिद्धा तत्र निर्वाहो न स्यादित्याशङ्क्ते—**न चैवमिति** । एवं सादृश्यज्ञाने उत्तेजकत्वस्वीकारे इत्यर्थः । इत्यादावित्यादिपदेन 'आसीदियं दशरथस्य गृहे यथा श्रीः श्रीरेव वा किमुपमानपदेन सैषा । कष्टं बतान्यदिव दैववशेन जाता दुःखात्मकं किमपि भूतमहो विपाकः ॥' इत्यादिसंग्रहः । **सादृश्यज्ञानाभावादिति** । तथा च तद्विशिष्टबाधोऽस्त्येवेति प्रतिबन्धकसाम्राज्ये कथं कार्योत्पत्तिरिति भावः । **भेदाभावेति** । सादृश्याभावज्ञानेऽपि तेन तद्घटकभेदाभावमात्रोल्लेखनात्तत्र प्रतिबन्धकभेदज्ञानाभावो विशेष्याभावायत्त एवेति अविकल एव प्रतिबन्धकाभाव इति भावः । **कुत्रचिदिति** । मुखं चन्द्र इत्यादौ विशेषणाभावेति तत्र बाधज्ञानसत्त्वेऽपि सादृश्यज्ञानसत्त्वेन तदभावप्रयुक्तो विशिष्टाभाव इत्यर्थः । **अत्रेति** । 'सिंहेन सदृशो नायम्' इत्यस्मिन्नुदाहृत इत्यर्थः । तथा च तत्सत्त्वे मुखं न चन्द्र इत्येतादृशबाधबुद्धेरेवाभावान्नानुपपत्तिलेशोऽपीत्यर्थः । ननूक्तस्थले सादृश्याभावो नावगाह्यते, किंतु तद्घटकभेदाभाव एवेत्यत्र नियामकाभाव इत्यत आह—**न हीति** ।

रूपकमेवेदं न स्यात् । भेदगर्भसादृश्यस्यैव रूपकशरीरत्वेन सर्वसंमतत्वादित्यलं बहुना ॥

तद्भेदानाह—

**आरोप्याः शाब्दाश्चेत्कथयन्ति समस्तवस्तुविषयं तत् ॥ १ ॥**

आरोप्या इति बहुवचनमतन्त्रम् । अतो बहुत्वे द्वित्वे वा न दोषः। यत्रारोपविषयविषयिणोः शब्देनोपादानं तद्रूपकं समस्तवस्तुविषयमित्यर्थः।

यथा—

'सोहइ विसुद्धकिरणो गअणसमुद्दम्मि रअणिवेलालग्गो ।
तारामोत्तापअरो फुडविघडिअमेहसिप्पिसंपुडमुक्को ॥'

अत्र गगनादौ समुद्रत्वादिकमारोप्यमाणं सर्वं शब्दोपात्तम् ॥ नन्विदं

---

साधर्म्यज्ञानाभावेऽपि रूपकं कुतो न स्यादत आह—**भेदगर्भेति** । रूपकशरीरेति । तद्घटकत्वेनेत्यर्थः । **सर्वेति** । येषां तादृक्सादृश्यमूलकारोपविषयाभेदो रूपकम्, येषां तादृशाभेदारोपस्तत्रैषामुभयेषां विशेषणतया, येषां त्वभेदप्रतीतिजनकप्रतीतिविषयः सादृश्यमेव रूपकं तेषां विशेष्यतया, सादृश्यस्य रूपकघटकत्वादित्यर्थः। एतेन यदुक्तं प्राक् रूपकस्थले सादृश्यलक्षणानङ्गीकारे धर्मानुपस्थितावप्यभेदबोधसामग्रीसत्त्वाद्रूपकनिर्वाहचमत्कारापत्तिरिति, तदपास्तम् । सादृश्यज्ञानस्य बाधबुद्धिप्रतिबन्धकतायामुत्तेजकत्वे तदभावविघटकत्वेनोपयोगस्योक्तत्वात् । किंच रूपकापत्तिरित्यनेन यदि अभेदबुद्धित्वावच्छिन्नमापाद्यते तदेष्टापत्तिरेव, यदि तादृशवाक्ये सालंकारत्वव्यवहारापत्तिरित्युच्यते तदा आपादकाभावः । न ह्यभेदज्ञानमात्रेणालंकारव्यवहारोऽभ्युपेयते, अत एव चमत्कारापत्तावप्यापादकाभाव एवेति उपस्कारकरणोक्तं सर्वमवधेयम् । इत्यादिकमभिसंधायाह—**इत्यलमिति** ॥ सामान्यलक्षणानन्तरं विभागः प्राप्तसंगतिकः, स च तत्स्वरूपकथनेनैवाविर्भविष्यतीत्यभिसंधिनावतारयति—**तद्भेदानिति** । रूपकं तावत् त्रिविधम् । सावयवं निरवयवं परम्परितं च । आद्यं द्विधा। समस्तवस्तुविषयं एकदेशविवर्ति चेति । तत्राद्यमाह—**आरोप्या इतीति** । **अतन्त्रमिति** । अविवक्षितमित्यर्थः । आरोप्या इत्यत्र पदार्था इति शेषः। आरोप्यपदं चारोपनिरूपकत्वपरतयारोपविशेष्यविशेषणोभयपरमिति दर्शयन्नाह—**यत्रारोपेति** । **समस्तेति** । आरोपनिर्वाहकतया आरोप्यं तद्विषयश्च समस्तशब्दार्थः तद्रूपस्य वस्तुनः शब्दोपात्तत्वेन विषयत्वादित्यवयवार्थः । 'शोभते विशुद्धकिरणो गगनसमुद्रे रजनिवेलालग्नः । तारामुक्ताप्रकरः स्फुटविघटितमेघशुक्तिसंपुटमुक्तः ।

रूपकमेवेत्यत्र मानाभावः। तारा मुक्ता इवेत्यादिरूपोपमितसमासस्यापि संभवात्संदेहसंकरादिति चेन्न। विशुद्धकिरण इति सामान्यधर्मप्रयोगसत्त्वादुपमितसमासाभावात्। तथा च पाणिनिसूत्रम्—'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति। अस्यार्थस्तु—उपमितमुपमेयं व्याघ्रादिभिरुपमानैः सह समस्यते सामान्यस्य साधारणधर्मस्य प्रयोगेऽसति। पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्र इत्युदाहरणम्। सामान्याप्रयोगे इति किम्। पुरुषोऽयं व्याघ्र इव शूरः इत्यत्र 'पुरुषव्याघ्रशूरः' इति मा भूत्। अतस्तारा इव मुक्ताः इति 'मयूरव्यंसकादयश्च' इति समासः।

**एककदेशविवर्ति श्रौतार्थत्वे तु, साङ्गे द्वे।**

यत्र केचिदारोप्यमाणाः शब्दोपात्ताः केचिच्चार्थगम्यास्तदेकदेशे विशेषेण वर्तते इत्येकदेशविवर्ति। विशेषस्तु स्वसामर्थ्यादन्यारोपाक्षेपकत्वरूपः॥ पूर्वोक्तं समस्तवस्तुविषयमेकदेशविवर्ति चेति द्विविधमपि रूपकं साङ्गं सावयवमित्यर्थः।

यथा—

'पीणपओहरलग्गं दिसाणँ पवसन्तजलअसमअविइण्णम्।
सोहग्गपढमइण्हं पम्माअइ सरसणहपअं इन्दहणुम्।

अत्रेन्द्रधनुषो नखपदत्वेन रूपणात् दिशां नायिकात्वमाक्षिप्यते। कथमिति चेत्। नखक्षतं नायिकानायकान्यतराधिकरणत्वव्याप्यमिति [अत्र]

---

सेतुकाव्ये शरद्वर्णनम्॥ द्वितीयमाह—**एकेति**। मात्रानुरोधादेककेति शब्दप्रयोगः। तदेव स्पष्टयितुमेकदेश इत्याद्यर्थं वक्ष्यति। एकदेशवर्तीत्यर्थस्य विशुद्धरहितं संज्ञान्तरमिति चण्डीदासः॥ श्रौतत्वार्थत्वयोः प्रतियोगिसापेक्षत्वात्कारिकायामनुक्तं प्रतियोग्यंशं संदर्शयति—**यत्र केचिदारोप्यमाणा इति**। साङ्गे द्वे इत्यस्यार्थमाह—पूर्वोक्तमिति। 'पीनपयोधरलग्नं दिशां प्रवसज्जलदसमयवितीर्णम्। सौभाग्यप्रथमचिह्नं प्रम्लायति सरसनखपदं इन्द्रधनुः॥' सेतुकाव्ये शरद्वर्णनम्। नखपदं नखक्षतपदम्। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यभिधानात्। अत एव 'नखपदलेखालाञ्छितं बाहुमूलम्' इति तत्र क्षीरस्वामिनोदाहृतम्। **अधिकरणत्वेति**। बहुव्रीहिसमासोत्तरत्वप्रत्ययबलात् तदन्यतरवृत्तित्वं लभ्यते। नन्वन्यतरवृत्तित्वलाभेऽपि कथं दिशा नायिकात्वाक्षेपो नायकवृत्तित्वेनापि पर्यवसानसंभवादित्यत आह—अत्र

जलदसमयवितीर्णत्वोक्त्या नायकाधिकरणत्वबाधेन नायिकाधिकरणत्वसिद्धेः । नखक्षते चानुरागपूर्वकत्वं विशेषणम् । अतो न किंचिदाद्यव्यभिचारशङ्का ॥

**निरवयवं तु तदुक्तं यद्येकारोपसाधकं नान्यत् ॥ २ ॥**

यत्र क्वचित्किंचिदारोप्यत इत्येतावन्मात्रम्, न तु तदुपपादकमारोपान्तरं तद्रूपकं निरवयवं शुद्धमित्यर्थः ।

यथा—

'दैवात्पश्येर्जगति विचरन्मत्प्रियां मालतीं चे-
दाश्वास्यादौ तदनु कथयेर्माधवीयामवस्थाम् ।
आशातन्तुर्न च कथयतात्यन्तमुच्छेदनीयः
प्राणत्राणं सपदि स करोत्यायताक्ष्याः स एकः ॥'

अत्राशायास्तन्तुत्वेन रूपणमात्रम् ।

**मालारूपकमुक्तं त्वेकस्मिन्भूयसां यदारोपः ।**

यत्र परस्परनिरपेक्षा एकस्मिन्ननेके आरोपास्तन्मालारूपकम् ॥

यथा—

'मम्महधणुणिग्घोसो कमलवणक्खलिअलच्छिणेउरसद्दो ।
सुव्वइ कलहंसरवो महुअरवाहित्तणलिणिपडिसंलावो[1] ॥'

अत्रैकस्मिन्कलहंसरवे मन्मथधनुर्निर्घोषाद्यनेकारोपः ।

---

**जलदेति** । ननु नखक्षतस्यान्यत्रापि संभवात्कथमेतदन्यतरवृत्तित्वनियम इत्यत आह—**नखक्षतेत्यादि** । एवं द्विविधं सावयवमभिधाय द्वितीयभेदमाह—**निरवयवं त्विति** । अभेदान्तरप्रयोज्यत्वाभाववदभेदावयंवत्वनिरवयवत्वमिति दर्शयति—**यत्रेति** । एवं चैतद्व्युत्पत्तिकथनादभेदान्तरप्रयोज्यतदभेदकत्वसावयवत्वमिति रीत्येन पूर्वभेदस्यापि लक्षणं दर्शितं भवतीत्यवधेयम् । **रूपणमात्रमिति** । न हि तेत्वमाशायास्तदारोपोपपादकमारोपान्तरमपीत्याशयः । **एकस्मिन्निति** । विषयभूते । **भूयसामिति** । विषयिणामित्यर्थः ॥ 'मन्मथधनुर्निर्घोषः कमलवनस्खलितलक्ष्मीनूपुरशब्दः । श्रूयते कलहंसरवो मधुकरव्याहृतनलिनीप्रतिसंलापः ॥' सेतुकाव्ये

---

[1] 'महुअरि (मधुकरी)' इति सेतुपाठः.

अनेकपदमेकभिन्नपरं यथा—

'नन्दकुलकालभुजगीं कोपानलबहलधूमलताम् ।
अद्यापि बध्यमानां बध्यः को नेच्छति शिखां मे ॥'

**अन्यारोपाभावप्रयोजकस्य त्वभावस्य ॥ ३ ॥**
**प्रतियोगी परकीयारोपो यस्तत्परम्परितम् ।**

यत्र यदारोपं विनान्यत्रारोपो न संभवति तत्परम्परितं नाम रूपकम् । परम्परा एकारोपस्यान्यारोपहेतुत्वमित्येवंरूपा संजातात्रेति तारकादेराकृतिगणत्वादितजित्यर्थः । तस्य द्वैविध्यमाह—

**तच्च श्लेषभिदाभ्यामारोपनिमित्तशब्दस्य ॥ ४ ॥**

---

नम् । अनेकपदस्य त्रिप्रभृतिमात्रपरतामाशङ्क्याह—**अनेकपदमिति** । एकभिन्नत्वस्यैवावयवार्थत्वादयमेव मुख्योऽनेकपदार्थः । अत एव 'अनेकमन्यपदार्थे' इति वचनविहितो बहुव्रीहिश्चित्रगुरित्यादौ प्रसिद्ध इति भावः । इदं त्ववधेयम्—मालारूपकस्थले विरोधालंकारध्वनिरावश्यक एकस्य विरुद्धोभयतादात्म्यस्यात्र विषयीक्रियमाणत्वात् । यथोदाहृते कलहंसरवे धनुःशब्दनूपुरशब्दाद्यभेदावगाहनम् । अत एव 'यस्तर्कतन्त्रशतपत्रसहस्ररश्मिर्गङ्गेश्वरः सुकविकैरवकाननेन्दुः' इति श्लोकं व्याचक्षाणैरेकस्मिन्वर्धमानोपाध्याये सूर्यचन्द्रोभयाभेदप्रतीत्या विरोधालंकारध्वनिरिति पक्षधरमिश्रैः कुसुमाञ्जल्युपायविवरणे विभावितमिति ॥ परम्परितमाह—**अन्यारोपेति** । अन्यविशेष्यकान्यप्रकारकारोपाभावप्रयोजकाभावप्रतियोग्यन्यविशेष्यकान्यप्रकारकारोपः परम्परितमित्यर्थः । ननु सावयवरूपकात्परम्परितस्य को भेदः तत्राप्यारोपान्तराणां रूपकान्तरसिद्धिहेतुत्वादिति चेत् । अत्र वदन्ति—यत्र प्रकारान्तरेण सादृश्यनिर्वाहसंभवेऽपि चमत्कारविशेषजननार्थं रूपकान्तरमुपन्यस्यते तत्र सावयवं यथा 'शोभते विशुद्धकिरणः' इत्यादौ गगनसमुद्रान्तर्गतत्वादिप्रत्ययमन्तरेणापि शुभ्रत्वादिना तारासु मौक्तिकारोपसिद्धेः । रूपकान्तरोपन्यासे तु चमत्कारातिशय एवमुल्लसति । 'विद्वन्मानसराजहंस–'इत्यादौ तु राज्ञि हंसाभेदारोपहेतुसाधारणधर्मान्तरस्य चमत्कारहेतोरप्रसिद्धतया हृदये सरोरूपकेण तद्वृत्तित्वरूपधर्ममादाय राज्ञि हंसाभेदारोपो निर्वहतीति परम्परितमिति भेदः । तस्माद्रूपकान्तरमनपेक्ष्य यद्रूपकमेव न स्वात्मानमासादयति तत्परम्परितं यत्र तु रूपकान्तरमनपेक्ष्यापि रूपकान्तरमविकलमात्मानमाप्नोति तत्र रूपकान्तरमुपन्यस्यमानं चमत्कारसमुद्वेलनार्थमेवापेक्ष्यत इति सावयवत्वमिति ॥ तदेतत्सर्वं विशदयन्नाह—**यत्रेत्यादि** । अन्ये तु सावयवं बह्वारोपकं इदं त्वारोपद्व-

---

१. 'तत्र' इत्यलंकारमुक्तावल्यां पाठः ।

अन्यत्रान्यारोपहेतुर्यदारोपस्तदर्थकपदस्य श्लेषसामर्थ्यादारोप्यारोपाधिकरणवाचकत्वे आरोप्यारोपविषयवाचकपदयोर्भेदे च परम्परितं संभवतीति द्विविधं तदित्यर्थः । आद्यं यथा—

'पाउसलच्छीपओहरेहि पडिपेल्लिओ विञ्झो ।
उव्वहइ णवतिणङ्कुररोमञ्चपसाइआइ अङ्गाइं ॥'

अत्र हि तृणाङ्कुरेषु रोमाञ्चत्वारोपः पयोधरो मेघः, एवं पयोधरः स्तनः इति मेघे स्तनत्वारोपं विना न संभवति मेघालिङ्गनेन रोमाञ्चानुपपत्तेरिति मेघे स्तनत्वारोपो नवतृणाङ्कुरेषु रोमाञ्चत्वारोपे निमित्तमिति पयोधरपदोपस्थाप्ययोर्मेघस्तनयोरभेदसंबन्धेनान्वयादुक्तार्थलाभः । यथा वा—

'भुवि भ्रमित्वानवलम्बमम्बरे विहर्तुमभ्यासपरम्परा परा ।
अहो महावंशममुं समाश्रिता स कौतुकं नृत्यति कीर्तिनर्तकी ॥'

अत्र राज्ञि महावंशो महाकुलसंभवः एवं महान्वंशो वेणुरिति वेणुत्वारोपः कीर्तौ नर्तकीत्वारोपे निमित्तम् । उभयत्र पयोधरमहावंशपदयोः श्लिष्टत्वम् ।

भेदे यथा—

'धृतैव या हाटकपट्टकालिके बभूव केशाम्बुदविद्युदेव सा ।
मुखेन्दुसंबन्धवशादिवायुषः स्थिरत्वमूहे नियतं तदायुषः ॥'

---

यात्मकमित्येव विशेष इत्याहुः । 'प्रावृट्लक्ष्मीपयोधरैः प्रतिप्रेरितो विन्ध्यः । उद्वहति नवतृणाङ्कुररोमाञ्चप्रथितान्यङ्गानि ॥' [इति च्छाया ।] गाथाकोशे वर्षाकालीननवप्ररूढतृणाङ्कुरवर्णनम् । अत्र पयोधरपदेन मेघस्तनयोरुपस्थापनात्तयोरभेदबोधे स्तनाभिन्नमेघालिङ्गनजन्यत्वतृणाङ्कुरेषु रोमाञ्चाभेदारोप इत्याह—अत्र हीत्यादि । नन्वत्र तीक्ष्णाग्रत्वादिनापि तृणाङ्कुररोमाञ्चरूपकनिर्वाह इत्यत आह—यथा चेति । अत्र महावंशपदे बहुव्रीहिं कर्मधारयं चाश्रित्य तदुपस्थाप्यार्थयोरभेदारोपः । अत्र महावंशाश्रयरूपधर्मेण कीर्तौ नर्तकीतादात्म्यारोपः, तन्निमित्तासाधारणधर्मान्तरानुपस्थितेरेव तदारोपं विना द्वितीयरूपकासिद्धेरित्याह—अत्रेत्यादि । उदाहरणद्वयस्यैकविषयत्वं दर्शयति—उभयत्रेति । पयोधरपदं पूर्वोदाहरणाभिप्रायेण, वंशपदं द्वितीयोदाहरणाभिप्रायेणेत्यवगन्तव्यम् । रूपकान्तरसिद्धिहेतुभूतरूपकघटकशब्दभेदोदाहरणमाह—यथेति । उत्तरार्धे तु [illegible] मित्यवगन्तव्यम् ।

इह केशेषु मेघत्वारोपः सुवर्णपट्टिकायां विद्युत्त्वारोपे निमित्तम्, केशाम्बुदयोर्भिन्नत्वं च । वाचके श्लिष्टे मालारूपं परम्परितं यथा—

'विद्वन्मानसराजहंस कमलासंकोचदीप्तद्युते
दुर्गामार्गणनीललोहित समित्स्वीकारवैश्वानर ।
सत्यप्रीतिविधानदक्षविजयेप्राग्भावभीमप्रभो
साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥'

अत्र विदुषां मानसं मन एव मानसं सर इति श्लेषमूलकाभेदाध्यवसायलभ्यं मानसवासित्वं राज्ञि हंसत्वारोपे निमित्तम् । न च हृदयस्य सरस्त्वेनारोपणे राज्ञो हंसत्वेन रूपणं संभवति, तन्निमित्तसाधारणधर्मस्य मुखे कमलत्वाद्यारोपनिमित्तधर्मवत्प्रसिद्धस्याभावात् । अत्र मानसेत्यत्रार्थश्लेषः । कमलासंकोचेत्यादौ शब्दश्लेषः इति विशेषः । यद्यपि मानसादिपदान्यत्र परिवृत्त्यसहानि, न हि चित्तादिपदोपादानेनोक्तार्थः प्रत्याययितुं शक्यते, हंसादिपदानि च तत्सहानि पर्यायान्तरोपादानेऽप्युक्तार्थसिद्धे-

---

स्त्रापि भास्वरत्वादिधर्मेण सुवर्णपट्टिकायां विद्युत्तादात्म्यारोपसंभवात्केशाम्बुदरूपकव्यतिरेकस्य तद्रूपकव्यतिरेकप्रयोजकत्वं नास्तीति विभाव्यते तदेदमुदाहार्यम् ॥ प्रथमं परम्परितरूपकं मालात्मकमवतारयति—**वाचक इति** । 'मानसं सरसि स्वान्ते' इत्यनुशासनम् । कमला लक्ष्मीस्तस्या असंकोच एव कमलत्वानां पद्मानामसंकोचो विकासस्तज्जनकतया सूर्याभेदारोपः । दुर्गाणाममार्गणं तदाश्रयणार्थमनन्वेषणम्, असमर्थानामेव तदन्वेषणनियमात् । तदेव दुर्गायाः पार्वत्या मार्गणं तेन शिवाभेदारोपः । समितां संग्रामाणां स्वीकार एव समिधां काष्ठानां स्वीकारः तेन विन्ध्यारोपः । सत्यवाक्ये प्रीतिरेव सत्यां दक्षकन्यायामप्रीतिः । तत्र दक्षः प्रवीणः । अथ च दक्षः प्रजापतिविशेषः । विजयो वैरितिरस्कारः । तस्य प्राग्भावे पूर्वकाले भीमो भयजनकस्तदुत्तरं सौम्यत्वात् । अथवा विजयोऽर्जुनः । 'बीभत्सुर्विजयः कृष्णः' इति महाभारतात् । तत्पूर्वकालोत्पत्त्या भीमः पाण्डवविशेषः । वत्सरशतमित्यत्र 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । **परिवृत्त्येति** । परिवृत्तिः पर्यायान्तरोपादानं न सहन्ते । तेन प्रकृतार्थनिर्वाहादित्यर्थः । तदेवं दर्शयति—**न हीति** । **उक्तार्थ इति** । हृदयाभिन्नसरोरूप इत्यर्थः । **तत्सहानीति** । परिवृत्तिसहानीत्यर्थः । हंसादीत्यादिपदेन दीप्तद्युतिनीललोहितवैश्वानरपदसंग्रहः । दक्षभीमपदयोस्तु तत्सहत्वे मानसादि-

रिति शब्दार्थोभयश्लेषोऽयम्, तथाप्यलंकारसर्वस्वकारादीनां प्राचीनानां प्रसिद्धिमनुसृत्यार्थालंकारमध्ये पाठः। कैश्चित्त्विदमेकदेशविवर्तीति व्यवह्रियते। तथा हि। यथा रणेऽन्तःपुरत्वारोपे खड्गलतारिपुसेनयोर्नायिकाप्रतिनायिकात्वारोपः सामर्थ्यात्। तथा मनसि सरस्त्वारोपे तद्गताद्राज्ञि हंसत्वारोपः इति।

नवीनास्तु—रणस्यान्तःपुरत्वं सुखसंचारास्पदत्वादपि असिलतादौ नायिकात्वाद्यारोपो लिङ्गविशेषकरग्रहादिनायिकाधर्मारोपादपि संभवति। विद्वन्मानसेत्यादौ तु मनःसरोवराधेयत्वं विना राज्ञि हंसत्वारोपनिमित्तसाधर्म्यान्तरविरहेण हृदये सरस्त्वारोपं विना राज्ञि हंसत्वारोपो न संभवति इतीदं परम्परितमेव न त्वेकदेशविवर्तीत्याहुः॥

---

पदसादृश्येव गतिरित्यवधेयम्। **शब्दार्थेति**। शब्दार्थान्यतरान्वयव्यतिरेकानुविधानस्यैव तत्तदलंकारतायां प्रयोजकत्वादित्यर्थः॥ ननु पूर्वाचार्यैरप्युपमालंकारोऽयं किमित्यर्थालंकारमध्ये उदाहृतो बीजाभावादित्यत आह—**कैश्चित्त्विति**। पूर्वोक्तैरेवेत्यर्थः। **रणेऽन्तःपुरेति**। प्रसिद्धोदाहरणाभिप्रायेण 'जस्स रणन्तेउरए करे कुणन्तस्स मण्डलग्गलडाम्। रससंमुही वि सहसा परम्मुही होइ रिउसेणा॥' 'यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम्। रससंमुख्यपि सहसा पराङ्मुखी भवति रिपुसेना॥' इति च्छाया॥ 'कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्' इत्यमरः। **सामर्थ्यादिति**। रणेऽन्तःपुरत्वारोपे केवलमण्डलाग्रलतायाः तत्संबन्धानर्हतया तत्समानाधिकरणवस्त्वन्तरावच्छिन्नाया एव तस्यास्तथात्वात्। औचित्यवशात्तस्यां नायिकातादात्म्यप्रतीतेरावश्यकत्वादित्यर्थः। अन्तःपुरं नायिकाप्रतिनायिकाधिकरणमिति व्याप्तिरेव सामर्थ्यमिति चक्रवर्तिनः। दार्ष्टान्तिकमाह—**तथेति**। एवं च तादात्म्यारोपस्यार्थगम्यत्वेन शब्दालंकारत्वविरहात्। युक्तमेवात्रोदाहरणमिति चण्डीदासादयः। दृष्टान्तत्वाभिमते प्रकृताद्वैषम्यमाह—**रणस्येति**॥ **सुखेति**। तथा च तस्य खड्गलताविशेष्यकनायिकातादात्म्यप्रतीतिमन्तरेणाप्यनुपपत्तिविरहान्नावश्यं तदपेक्षेति भावः॥ ननन्वेवं खड्गलतानायिकातादात्म्यप्रतीतिः कथं सेत्स्यतीत्यत आह—**असीति**॥ **लिङ्गविशेषेति**। स्त्रीत्वरूपेत्यर्थः। इयं च स्त्रीत्वादिलिङ्गमर्थनिष्ठमिति मते यथा श्रुतमेव। शब्दनिष्ठमिति पक्षे तु परम्परया संगमनीयम्। प्रकृते ततो वैषम्यमाह—**हृदयेति**। **विद्वदिति**। ननु राजहंसयोरपि द्रव्यत्वादिकृतसादृश्यमस्त्येवेत्यत आह—

१ 'तदारोपणया' ख.

वाचकभेदे मालारूपं परम्परितं यथा—

'ववसाअरइपओसो रोसगइन्दस्स सङ्कलापडिबन्धो ।
कह कह वि दासरहिणो जअकेसरिपञ्जरो गओ घनसमओ ॥'

अत्र हि व्यवसायादौ रवित्वाद्यारोपं विना घनसमये प्रदोषत्वाद्यारोपो न संभवतीति परम्परितम् । रविप्रदोषयोरारोप्यारोपविषययोर्भिन्नपदवाच्यत्वं च ।

यथा वा—

'माणदुमपरुसपवणस्स मामि सवङ्गणिव्वुइअरस्स ।
उअऊहणस्स भद्दं रइणाडअपुव्वरंगस्स ॥'

मानरत्योर्द्रुमनाटकाभेदारोपोऽत्र उपगूहनपवनपूर्वरङ्गाभेदारोपे निमित्तम् । अत्र विरोधितासंबन्धेनानुग्राह्यानुग्राहकभाव इति विशेषः ।

अभेदारोपस्य संसर्गारोपानुग्राहकत्वं यथा मम—

'दृशौ नीलाम्भोजे वरतनु कुचौ कोकतरुणौ
चकास्तीयं रोमावलिरपि च शैवाललतिका ।
प्रवाहो लावण्यं त्रिवलिरियमाभाति लहरी
कवीन्द्राणामन्तः स्फुरति सरसीत्वं त्वयि ततः ॥'

संसर्गारोपस्याभेदारोपानुग्राहकत्वं यथा ममैव—

'मन्दाकिनीत्वमिह मौक्तिकमञ्जुदाम्नि
स्थूलेन्द्रनीलगुलिकासु च जाम्बवत्त्वम् ।
ध्वान्तत्वमुन्नतमृगीमदकर्दमेऽत्र
वक्षोरुहः सुतनु ते तपनीयशैलः ॥'

एवमन्येऽपि भेदाः स्वयमूह्या इति ।

---

चमत्कारप्रयोजकेत्यर्थः । 'व्यवसायरविप्रदोषो रोषगजेन्द्रस्य शृङ्खलाप्रतिबन्धः । कथ कथमपि दाशरथेर्जयकेशरिपञ्जरो गतो घनसमयः ॥' [इति च्छाया ।] सेतुकाव्ये शरदारम्भवर्णनम् ॥ प्रातिकूल्येन तदनुग्राहकमुदाहरति—यथा वेति । 'मानद्रुमपरुषपवनस्य मातुलि सर्वाङ्गनिर्वृतिकरस्य । उपगूहनस्य भद्रं रतिनाटकपूर्वरङ्गस्य ॥' [इति च्छाया ।] विरोधितेति । मानं द्रुमारोपे तदनुकूलत्वेनोपगूहने पवनारोपः सिद्ध-

अत्राक्षिपन्ति—समासगतपरम्परितरूपकस्थले तत्पुरुषावयवभूते कर्मधारये पूर्वपदार्थस्याभेदसंसर्गेणोत्तरपदार्थविशेषणत्वेनोपमेये उपमानाभेदसमर्थकत्वं न संभवति । 'यत्संबन्धिनि यत्संबन्ध्यभेदस्तस्मिंस्तदभेदः' इति व्युत्पत्तेः । 'सौजन्यचन्द्रिकाचन्द्रः' इत्यादौ हि चन्द्रिकायां सौजन्याभेदो राज्ञि चन्द्राभेदसमर्थक इत्यभिमतम् । तच्च सौजन्यविशेष्यकाभेदसंसर्गकचन्द्रिकाप्रकारकारोपेण सिध्यति, न तु चन्द्रिकायां सौजन्याभेदेन । तद्यथा—

'सौजन्यं ते धराधीश चन्द्रिका त्वं सुधानिधिः ।'

अत्र हि राजसंबन्धिनि सौजन्ये चन्द्रसंबन्धिचन्द्रिकातादात्म्यसिद्ध्या राज्ञि चन्द्रतादात्म्यमुपपन्नम् । न च चन्द्रिकायां सौजन्याभेदबोधे सौजन्ये तदभेदोऽपि भासते समानवित्तिवेद्यत्वात्, स्वस्य स्वाभिन्नाभिन्नत्वादिति वाच्यम् । प्रत्यक्षे सामग्रीसाम्यादेकवित्तिवेद्यत्वम्, शाब्दे तु व्युत्पत्तिविशेषनियत एव बोध इति अतिरिक्तस्याभानात् । एवं 'मुखचन्द्र' इत्यादिसमासेऽपि कथं मुखविशेष्यकचन्द्राभेदारोपः—इति ॥

---

तीति भावः । तत्पुरुषावयवेति । पूर्वपदभूतेत्यर्थः । यत्संबन्धिनीति । यन्निरूपितसंबन्धिधर्मिको यत्संबन्धिप्रतियोगिकाभेदः प्रतीयते तत्राभेदप्रतियोगिसंबन्धिनिरूपकः प्रतियोगिकाभेदः अभेदधर्मिसंबन्धिनिरूपकधर्मिकः सिध्यति । एवं च यत्संबन्धिनोरभेदबोधे यत्संबन्धी प्रतियोगितया स एव द्वितीयाभेदे प्रतियोगितया यत्संबन्धीवाश्रयतया स एव द्वितीयाभेदे आश्रयतयेति फलितार्थः ॥ चन्द्रिकायामिति । चन्द्रिकाविशेष्यकसौजन्यप्रतियोगिकाभेद इत्यर्थः । यादृशेन प्रकृतविवक्षारुपन्यस्ता तदुदाहरति—तद्यथेति ॥ राज्ञीति । राजविशेष्यकचन्द्रप्रतियोगिकाभेदेत्यर्थः ॥ नन्वन्यविशेष्यकान्यप्रतियोगिकाभेदबुद्ध्या कथमन्यविशेष्यकान्यप्रतियोगिकाभेदावगाहनमित्यत आह—समानेति । तुल्यसामग्रीकत्वात् । यद्धि विना न भासते तद्धि हेतोस्तद्बोधकत्वमिति सिद्धान्तात् । सामग्रीति । इन्द्रियसंनिकर्षादिरूपेत्यर्थः । व्युत्पत्तीति । आकाङ्क्षेत्यर्थः । तथा च यादृशरीत्या पदादुपस्थितिस्तथैव बोधः । आकाङ्क्षादीनां तत्प्रकारकतद्विशेष्यकादितत्तद्बोधविशेष्यनियतत्वात्तद्वैपरीत्येन शाब्दानुदयादिति भावः । अन्यत्राप्याक्षेपमाह—एवमिति । मुखचन्द्रे मुखविशेष्यकचन्द्रप्रतियोगिकाभेदवन्मुखप्रतियोगिकाभेदवांश्चन्द्र इत्येवात्र शाब्दं संभवति । न तु चन्द्रप्रतियोगिकाभेदवन्मुखमिति । तथा च [illegible] पर्यवसानं स्यादिति भावः । रसगङ्गाधरादीनां समाधानमाह

अत्र केचित्—कर्मधारये ह्यभेदो विशेषणस्य संसर्गः । 'मुखं चन्द्रः' इति वाक्ये 'चन्द्रप्रतियोगिकाभेदवन्मुखम्' इति प्रतियोगित्वमुखः । 'मुखचन्द्रः' इत्यादिसमासे तु मुखानुयोगिकाभेदप्रतियोगी चन्द्र इत्यनुयोगित्वमुखः । तदुभयत्रापि चन्द्राभेद एव संसर्गः । वाक्ये प्रतियोगित्वमुखः, समासे त्वनुयोगित्वमुखः इत्येव विशेषः । मुखचन्द्र इत्यत्र मुखाभेदस्तु न संसर्गः, चन्द्ररूपकानापत्तेः । विशेषणप्रतियोगिक एवाभेदः संसर्गो न तु तदनुयोगिक इति तु दुराग्रहः निर्बीजत्वादिति । तथा च 'सौजन्यनिष्ठाभेदप्रतियोगिनी चन्द्रिका' इति भङ्ग्यन्तरेण सौजन्ये चन्द्रिकातादात्म्यसिद्धौ राज्ञि चन्द्राभेदसिद्धिः—इति ।

अत्रोच्यते—'नीलघटः' इति कर्मधारये नीलप्रकारकाभेदसंसर्गकघटविशेष्यकज्ञानोदयात् विशेषणप्रतियोगिक एवाभेदः संसर्गः, न तु विशेष्यप्रतियोगिकः—इति । संसर्गमात्रे चायमेव नियमः । प्रकारप्रतियोगिक एव संसर्गो न तु विशेष्यप्रतियोगिक इति । 'पर्वतो वह्निमान्' इत्यादौ

---

अत्र केचिदिति । **अभेद इति** । 'तत्पुरुषः समानाधिकरणः कर्मधारयः' इति वचनात् । उभाभ्यां प्रवृत्तिनिमित्ताभ्यामेकस्य धर्मिणो बोधनीयत्वादित्यर्थः । मुखचन्द्रेति । एवं च विशेषणविशेष्यभाववैचित्र्येऽपि चन्द्रप्रतियोगिकाभेदवन्मुखमित्यनेन समानार्थकत्वमेवेति भावः । **वाक्य इति** । विशेषणस्य प्रतियोगित्वावगाहिज्ञानविषय इत्यर्थः । **समासे त्विति** । तत्र विशेषणस्यानुयोगित्वावगाहि ज्ञानवितय इत्यर्थः । एतन्मतमूलग्रन्थे तु प्रतियोगित्वानुयोगित्वयोर्विशेष्यनिष्ठत्वेन निर्देशोऽभिमतः । वाक्येऽभेदं प्रति विशेष्यभूतस्य मुखस्यानुयोगित्वभानात् । समासे च विशेष्यभूतस्य चन्द्रादेरुपमानस्य प्रतियोगित्वभानात् । अतस्तत्र वाक्येऽनुयोगित्वमुखसमासे प्रतियोगित्वमुख इति व्यवहृतमित्यविरोधः । एवं च यदाभेदस्य प्रतियोगीमुखत्वं तत्र रूपकस्यानुवाद्यत्वम् यथा मुखचन्द्र इति समासे । यत्र त्वनुयोगित्वमुखत्वं तत्र विधेयत्वम्, यथा मुखं चन्द्र इति वाक्ये इत्यर्थः । क्वचिद्विशेषणप्रतियोगिकत्वेन संसर्गभानेऽपि । अन्यत्र चैतद्वैपरीत्यमपि दृश्यते ॥ तदानुपपत्तिबलादत्रापि मुखनिष्ठाभेद एव संसर्गतया कल्पेतेति शङ्कामपकर्तुं सर्वत्रापि विशेषणप्रतियोगिक एव संसर्ग इति नियम एवायं न तूत्सर्ग इत्यभिप्रायेणाह—**संसर्गमात्रे चेति** । सांसर्गिकविषयतापन्नसंसर्गमात्र इत्यर्थः । अन्यथा दण्डसंयोग इत्यादि शाब्दबोधे पदार्थीभूतसंयोगस्य दण्डनिष्ठत्वेनापि भानादनुपपत्तिः स्यात् । शाब्दातिरिक्तस्थलमेवोदाहरति—**पर्वत इति** । [illegible] विशेषणप्रतियोगिक एव संसर्गो भासते

पर्वतानुयोगिकत्वेन वह्निप्रतियोगिकत्वेनैव तस्य भानात् ॥ यत्तु—दुराग्रहमात्रमेतदिति । तदेव दुराग्रहः, भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वम्, भासमानवैशिष्ट्यानुयोगित्वं च विशेष्यत्वमिति सिद्धान्तात् । संसर्गस्य विशेषणानुयोगिकत्वस्वीकारे च तद्विरोधस्य स्फुटत्वात् ॥ किं च । सौजन्यविशेष्यकाभेदसंसर्गकचन्द्रिकाप्रकारकबोधः शाब्दस्तस्मान्मास्तु । एतावता का नाम हानिर्भवतः, येनात्र विशेषणानुयोगिकत्वं भासत इत्यङ्गी-

---

इत्यत्र बीजाभाव इति किं दर्शनमात्रनिबन्धननियमस्वीकारेणेत्याशङ्कते—यत्त्विति । दुराग्रहेति । बीजाभावादित्यर्थः । उपहसति—तदेवेति । प्रामाणिकस्य दुराग्रहत्वोद्भावनमेव दुराग्रहपर्यवसायिभ्रान्तिरूपत्वादित्यर्थः । तथा स्वीकारे बीजं दर्शयति—भासमानेति । दण्डी पुरुष इत्यत्र संयोगाख्यं दण्डपुरुषयोर्वैशिष्ट्यं भासते तत्र दण्डः संयोगे प्रतियोगीति विशेषणम् । पुरुषस्तु तत्रानुयोगीति विशेष्यम् । एवं च यदि त्वदुक्तरीत्या संसर्गे विशेषणं अनुयोगित्वेनापि गृह्यते तदा विशेषणविशेष्यलक्षणयोर्विशेषणे चातिव्याप्तिः स्यादिति भावः । इदं च प्राचीनमतमनुसृत्य समाहितम्, विशेष्यत्वप्रकारत्वादिकमतिरिक्तविषयताविशेषस्वरूपमेवेति नूतनपक्षमूलकं पूर्वमतास्वरसं हृदि निधाय प्रकृतानुपपत्तिं च प्रकारान्तरेण निराकर्तुमभिसंधाय विशेषणानुयोगिकोऽत्र संसर्ग इति कल्पनमेवाक्षिपति—अपि चेति[1] । मास्त्विति । यद्यपि सौजन्यचन्द्रिकेति कर्मधारये सौजन्यविशेष्यकाभेदसंसर्गकचन्द्रिकाप्रकारकबोधो न तेन स्वीकृतः प्रकृते बाधात् । किंतु सौजन्यनिष्ठाभेदप्रतियोगिनी चन्द्रिकेति चन्द्रिकाविशेष्यक एवेत्ययमप्रसक्तप्रतिषेधः प्रतिभाति । तथापि सौजन्यनिष्ठत्वेन चन्द्रिकाप्रतियोगिभेदावगाहनसाम्येन तत्प्रतिषेधः कृतः । तात्पर्यं तु सौजन्यनिष्ठाभेदेत्यादिबोधनिषेध एव । न च निषेधप्रतियोगिबोधं साक्षादनुपादाय तत्समानविषयकान्तरनिषेधोऽनुचित इति वाच्यम् । यथात्र सौजन्यविशेष्यकबोधो न संभवति, तथा त्वदभिमतः सौजन्यनिष्ठेत्यादिबोधोऽप्यनुपपत्तिसूचनार्थत्वात् ॥ अत एव येनात्र विशेषणानुयोगिकत्वं भासत इत्यङ्गीक्रियते (इत्यत्र) तन्मतं यथा श्रुतमेवानुवदिष्यति—का नाम हानिरिति । कानुपपत्तिरित्यर्थः । येनेति । येनेति हेत्वर्थे निपातः । यदि हि तादृशकल्पनं विना चन्द्राभेदसमर्थनमनुपपन्नं स्यात् । तदा तद्बलादेवान्यत्र दृश्यमानमपि नियममवभूय तथैव कल्पेत । तदुक्तम्—'अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका । विनष्टि दृष्टवैमत्यं सैव सर्वबलाधिका ॥' इति । अत्र तु वक्ष्यमाणरीत्या तदन्यथाप्युपपन्नमिति न दृष्टपरित्यागः प्रमाणवानित्यभिप्रायः । अन्यथोपपत्तिर्नोक्ते

---

1. 'अपि च' इति टीकासंमतपाठः।

क्रियते ॥ ननु राज्ञि चन्द्राभेदसमर्थकत्वानुपपत्तिरेवात्र मानमिति चेत्, न । तदुत्तरकालीनसौजन्यविशेष्यकाभेदसंसर्गकचन्द्रिकाप्रकारकमानसबोधत एव संभवात् ॥ अथ शाब्दस्यैव तादृशाभेदज्ञानस्य तत्समर्थकत्वमिति चेत् । तत्किं सौजन्यनिष्ठभेदप्रतियोगिनी चन्द्रिका इति बोधः शाब्द इति त्वदभिमतम् । ओमिति चेत् । भ्रान्तभाषितमेवैतत् । सौजन्यं प्रकारः अभेदः संसर्गः चन्द्रिका च विशेष्यं ततश्च सौजन्याभिन्ना चन्द्रिका इत्येव शाब्दबोधः, प्रतियोगित्वानुयोगित्वयोः पदार्थतत्संसर्गोभयभिन्नत्वेन शाब्दबोधाविषयत्वात् । न च समूहालम्बनाद्विशिष्टज्ञानस्य भेदान्यथानुपपत्त्या संबन्धसंबन्धाङ्गीकर्तृमते तद्भानसंभव इति वाच्यम् । तन्मतेऽपि विशेषणप्रतियोगिकत्वं विशेष्यानुयोगिकत्वं च संसर्गस्य भासते इत्येवाङ्गीकारात् । तथा चैकस्मिन्नंशे तन्मतमनुसरन्नपरत्र च वैपरीत्यमाश्रयन्कथं नालज्जिष्ठाः ।

---

वेत्यभिमानात् । तत्समर्थनानुपपत्तिमेवोद्भावयति—**नन्विति** । अन्यथोपपत्तिं दर्शयति—**तदुत्तरेति** । सौजन्यप्रतियोगिकाभेदवती चन्द्रिकेत्येतद्बोधोत्तरेत्यर्थः । तदुत्तरं यथोक्तशाब्दबोधासंभवादाह—**मानसेति** । सौजन्यप्रतियोगिकमभेदं चन्द्रिकायामवगाहने शाब्दबोधे वृत्ते तदुत्तरं स्वस्य स्वाभिन्नाभिन्नतया चन्द्रिकाप्रतियोगिकमभेदे सौजन्ये गाहमानं मानसमुत्पद्यते तेनैव राज्ञि चन्द्राभेदारोपः समर्थित इत्यर्थः ॥ अभेदमात्रस्य संसर्गत्वेऽपि तत्संसर्गतायां प्रतियोगित्वानुयोगित्वादिकं कुतो न शाब्दबोधे भासत इत्यत आह—**पदार्थेति** । पदार्थतत्संसर्गाणामेव तद्विषयनियमादतिरिक्तस्य भानासंभवादित्यर्थः । यद्यपि विशिष्टबुद्धिमात्रे विशेषणविशेष्यतत्संसर्गातिरिक्तस्य भानं नास्तीति नियमात् । शाब्दबोधेऽपि विशेषोपादानमसंगतम् । तथापि प्रकृतत्वात्तथोक्तम्—**समूहेति** । दण्डपुरुषसंयोगा इति समूहालम्बनात् । दण्डी पुरुष इति विशिष्टज्ञानस्य वैलक्षण्यानुभवसिद्धम् । तच्चोभयत्रापि विषयसाम्यादनुपपन्नम् । अतोऽन्यथानुपपत्त्या विशिष्टज्ञाने विशेषणविशेष्ययोः संबन्धस्य संयोगादेः संबन्धः प्रतियोगित्वानुयोगित्वरूपो दण्डपुरुषादिनिष्ठो भासते । समूहालम्बने तु न तथेति । विषयवैषम्याद्वैलक्षण्यमुपपन्नमिति केषांचिन्मतम् । एवं चात्रापि विशिष्टबुद्धित्वात्तद्भाने संभव इत्यर्थः । **एकस्मिन्निति** । संबन्धस्यापि संबन्धो भासत इत्यंशे इत्यर्थः । **अन्यत्रेति**[1] । विशेषणस्यानुयोगित्वं विशेष्यस्य च प्रतियोगित्वं अभेदं प्रति भातीति त्वया

---

1. 'अन्यत्र' इति टीकासंमतपाठः.

1. 'त्वन्वया स्त्री' ख.

वस्तुतस्तु—विशिष्टज्ञानस्य समूहालम्बनाद्भेदोऽन्यथैव, न तु संबन्धसंबन्धमानेनेति सिद्धान्तानुसारिणां नेयं शङ्का भवितुमर्हति इत्यन्यदेतत्। तथा च 'सौजन्याभिन्ना चन्द्रिका' इति शाब्दबोधे जाते तदुत्तरभाविना 'सौजन्यनिष्ठाभेदप्रतियोगिनी चन्द्रिका' इति बोधे राज्ञि चन्द्राभेदारोपः समर्थ्यत इत्यवश्यं वक्तव्यम्। तदपेक्षया तदुत्तरभाविना 'चन्द्रिकाप्रतियोगिकाभेदवत्सौजन्यम्' इति बोधेनैव तत्समर्थ्यताम्, अलमसांदृष्टिकार्थकल्पनया भङ्ग्यन्तरेणोक्तार्थकल्पनयेति॥ अपि च बिम्बप्रतिबिम्बभावस्थले भिन्नानां धर्माणां परस्पराभेदस्य शाब्दबोधविषयत्वाभावेऽपि मानसाभेदारोपमाश्रित्य साधारणसंपत्त्योपमानुकूलत्वं तावदालंकारिकत्वावच्छेदेन स्वीकृतम्॥ एवम्

'तं जगत्यभजन्मर्त्यश्चञ्चा चन्द्रकलाधरम्।'

इत्यादौ चन्द्रमौलिभजनराहित्यस्य साधारणधर्मस्य चञ्चायां शाब्दान-

---

स्वीकाराद्वैपरीत्यमित्यर्थः। न च विशेषणयोः संबन्धसंबन्धोऽपि भासत इत्येव तन्म-तम्। न तु विशेष्यानुयोगिको विशेषणप्रतियोगिकश्चेत्येतावत्पर्यन्तमपीति वाच्यम्। तावत्पर्यन्तस्यैव तन्मतत्वात्। तथा चानुमितिलक्षणे पक्षधरमिश्रैरुक्तम्—'वि-शेष्यविशेषणानुयोगिकप्रतियोगिकसंबन्धस्यैव विशिष्टधीविषयत्वात्—' इति। समवायविचारेऽपि प्रत्यक्षालोके तैरुक्तम्—'विशेषणे प्रतियोगित्वस्य विशेष्ये चानु-योगित्वस्य भानात्' इति॥ न च विशेष्यत्वादिकं भासमानवैशिष्ट्यानुयोगित्वादिस्व-मिति पक्षे संसर्गस्य विशेषणप्रतियोगिकत्वनियमो न त्वतिरिक्ततत्पक्षेऽपीति वाच्यम्। तत्पदार्थस्यातिरिक्तानतिरिक्तत्वमात्र एव हि विवादो न तु वस्तुस्वरूपे, तस्योभयत्रा-विशिष्टत्वात्॥ तदेवमभ्युपेत्यापि प्रतियोगित्वादिबोधं दूषणमभ्यधायि। संप्रति तदेवानुपपन्नमित्याह—वस्तुतस्त्वति। अन्यथैवेति। तत्प्रकारकत्वमेव विशि-ष्टज्ञानत्वं तच्च स्वरूपसंबन्धविशेषः। समूहालम्बनव्यावृत्तमित्येव तद्वैलक्षण्यमिति भावः। न त्विति। दण्डपुरुषतदुभयानुयोगिकप्रतियोगिकसंयोगा इति समूहालम्बनात् दण्डी पुरुष इति विशिष्टज्ञानभेदानुपपत्तिप्रसङ्गादनवस्थानाच्चेति भावः। शाब्दस्यैव तादृश-बोधस्य तादृशारोपसमर्थकत्वमित्यत्र प्रमाणाभावमाह—अपि चेति। विषयत्वा-भावेऽपीति। तत्र बिम्बप्रतिबिम्बभावापन्नपदार्थानामुपमेयोपमानविशेषणता-त्वेन परस्परमभेदान्वयासंभवादिति भावः। सर्वेषामविवादसूचनाय—आलंकारि-कत्वावच्छेदेनेति। अनुगामिधर्मस्थलेऽप्याह—एवमिति। शाब्दान्वया-

याभावेऽपि मानसतद्वृत्तित्वज्ञानेन साधारण्यमपि सर्वसंमतम्। अत्र तु शाब्दस्यैव सौजन्ये चन्द्रिकाभेदारोपस्य राज्ञि चन्द्रारोपसमर्थकत्वमिति दुराग्रहो नातीव भवतो हितहेतुः॥ अथ राज्ञि चन्द्राभेदारोपोपपादकः सौजन्ये चन्द्रिकाप्रतियोगिकाभेद एव साक्षादुच्यताम् अलं तदापेक्षकचन्द्रिकाविशेष्यकसौजन्याभेदारोपेणेति चेत्, सत्यम्। वाक्ये तथैव प्रयोगात्। समासे तु पूर्वनिपातनियमवशाच्चन्द्रमुखमिति प्रयोगो न संभवतीत्यत्र किं कुर्मः। अन्यथा वाक्य इव चन्द्रप्रतियोगिकाभेदवन्मुखम् इति बोधजनकमुखचन्द्र इति समासेऽपि कथं न प्रयोगः इति प्रश्नेवापि किमुत्तरमिति दिक्।

---

वेऽपीति। चन्द्रायाः स्त्रीलिङ्गत्वेन भिन्नलिङ्गावरुद्धत्वादित्यर्थः—पूर्वनिपातेति। तथा च तत्र चन्द्रमुखमिति प्रयोगे तस्यासाधुत्वापत्तिरित्यर्थः। एतादृशवैषम्यं तत्पक्षेऽपि सुसमाधानमेवेत्याह—अन्यथेति। इदं च सर्वं संभवादुक्तम्। वस्तुतस्तु सौजन्यचन्द्रिकेति शाब्दात्पूर्वं सौजन्याभिन्ना चन्द्रिकेति योग्यताज्ञानस्याहार्यस्यावश्यकतया तत्र च समानवित्तिवेद्यन्यायेन चन्द्रिकायां सौजन्याभेदस्याप्यवगाहनसंभवात्तत एव राज्ञि चन्द्राभेदारोपसिद्धिः॥ अतः सौजन्यचन्द्रिकेति शाब्दाव्यवधानेनैव राज्ञि चन्द्रारोपस्यानुभविकत्वात्कथं तदुत्तरभाविबोधेन तत्समर्थनमित्यपि न। प्रत्यवस्थेयम्। अत एव तस्य शाब्दसमानकालीनतया रणेऽन्तःपुरत्वारोपो विद्वदित्यत्र हृदये सरस्त्वारोप 'आलानं जयकुञ्जरस्य' इत्यादौ जये कुञ्जरत्वारोप इत्यादिग्रन्थाः संगच्छन्ते। वस्तुतः संबन्धिनोरभेदबोधस्तदभेदबोधे हेतुरित्येव हेतुहेतुमद्भाव उचितः। परस्पराभेदबोधप्रतिबन्धकभेदज्ञानविघटकत्वाविशेषात्। न हि तत्संबन्धभेदबोधोऽपि स्वातन्त्र्येण तदभेदबोधे हेतुः, किंतु भेदज्ञाननिरासद्वारैवेति चन्द्रिकासौजन्ययोरभेदबुद्धया राजचन्द्रयोरभेदारोपः सिद्ध्यत्येवेति न प्रयासलेशोऽप्यादरणीयः। परंतु मुखचन्द्र इति समासगतरूपके चन्द्रप्रतियोगिकाभेदवन्मुखमिति बोधानुरोधेन मानसज्ञानाश्रयणं तत्रैव युक्तम्। अत एव 'विद्यासंध्योदयोद्रेकादविद्यारजनीक्षये। यदुदेति नमस्तस्मै कस्मैचिद्विश्वचक्षुषे॥' इति किरणावलिश्लोके, 'विद्याविद्ययोः संध्यारजनीनिरूपणाद्रविरुदेता लभ्यते' इति प्रकाशग्रन्थे, 'विभक्तिपरिणामेन संध्यारजन्योर्विद्याविद्याभ्यां निरूपणात्'[1] इति तद्विवरणमिश्रग्रन्थश्च मानसशाब्दबोधावभिसंधाय संगच्छते इति तदेतत्सर्वं मनसि कृत्वाह—दिगिति। वाक्यार्थरूपकं

1. 'नीभ्यां रूप' ख.

अत्रेदमप्यधिकं वदन्ति—वाक्यार्थे विषये वाक्यार्थान्तरारोपे विषये वाक्यार्थरूपकम् । यथा विशिष्टोपमायां विशेषणानामुपमानोपमेयभावोऽर्थगम्यस्तथात्रापि वाक्यार्थघटकपदार्थानां रूपकमर्थगम्यम् ॥ तद्यथा—

'आत्मनोऽस्य तपोदानैर्निर्मलीकरणं हि यत् ।
क्षालनं भास्करस्येदं सरसैः सलिलोत्करैः ॥'

न च ययोरिवादिशब्दप्रयोगे उपमानोपमेयभावः, तयोरेकत्रारोपे रूपकमिति नियमान्नेदं रूपकमिति वाच्यम् । अत्रापीवादिशब्दप्रयोगे उपमासंभवात् ॥

'त्वयि कोपो महीपाल सुधांशाविव पावकः ।'

इत्यत्रोपमा,

'त्वयि कोपो महीपाल सुधांशौ हव्यवाहनः ।'

इत्यत्र रूपकस्यापि स्वीकर्तुमुचितत्वात् । न चात्र व्यज्यमानोत्प्रेक्षेति वाच्यम् । अभेदनिश्चयात् । उत्प्रेक्षायां च निश्चयायोगात् । अन्यथा 'मुखं चन्द्रः' इत्यत्रापि तदापत्त्या रूपकविलयप्रसङ्गादिति ॥

प्राचीनास्तु—ईदृशस्थले निदर्शनामेव स्वीकुर्वन्ति, न तु रूपकम् । तथा च सर्वस्वकारादयः—

'त्वत्पादनखरत्नानां यदलक्तकमार्जनम् ।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥'

इति निदर्शनामुदाहृतवन्तः ॥

---

कैश्चिदुक्तं खण्डयितुमुपन्यस्यति—**अत्रेदमपीति** । **अधिकमिति** । प्राचीनेभ्योऽधिरिक्तमित्यर्थः । **वाक्यार्थेति** । एकस्मिन्वाक्यार्थे वाक्यार्थान्तरारोपो वाक्यार्थरूपकमित्यर्थः । **विशिष्टोपमायामिति** । 'पाण्ड्योऽयमंसार्पितलम्बहारः कॢप्ताङ्गरागो हरिचन्दनेन । आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥' इत्यादौ विशेषणानां बिम्बप्रतिबिम्बभावापन्नहारनिर्झरादीनामुपमानोपमेयभावसादृश्यम् । एतच्च 'तेषां परस्परसादृश्यज्ञानेन विशिष्टोपमानिर्वाहः' इति पक्षे । तदभेदज्ञानेनैव तथात्वमिति पक्षेऽपि सादृश्यमभेदरूपमेव ग्राह्यम् । **तद्यथेति** । तपोदानसलिलोत्करादीनामर्थादभेदो गम्यत इत्यर्थः ॥ एतद्दूषयितुमाह—**प्राचीनास्त्विति** । **निदर्शनामिति** । अन्यथा तत्र वाक्यार्थरूपकत्वस्यैवापत्त्या निदर्शनोदाहरणत्वं विरुध्येत

अत्राप्याक्षिपन्ति—यद्यत्राप्यभेदारोपं श्रौतमपि रूपकसाधकमनादृत्य निदर्शनेत्युच्यते, तर्हि मुखं चन्द्र इत्यादावपि निदर्शनैव स्वीक्रियतामलं रूपकेण ॥ किं च । इयं पदार्थनिदर्शना, वाक्यार्थनिदर्शना वा । नाद्यः । विशिष्टार्थयोरेवात्राभेदप्रतीतेः, धर्म्यन्तरे पदार्थे तत्सदृशधर्म्यन्तरीयधर्मस्यारोपविरहाच्च ।

'त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः ।'

इत्यादिवत् ॥ न द्वितीयः । वाक्यार्थरूपकोच्छेदापत्तेः । न चेष्टापत्तिः । वाक्यार्थनिदर्शनोच्छेदेऽपीष्टापत्तेः कर्तुं शक्यतया विनिगमनाविरहात् ।

'त्वत्पादनखरत्नानि यो रञ्जयति यावकैः ।
इन्दुं चन्दनलेपेन पाण्डुरीकुरुते हि सः ॥'

इति निर्माणे वाक्यार्थनिदर्शनाविषयसत्त्वाच्च । न च रूपके बिम्बप्रतिबिम्बभावो नास्तीति वाच्यम् । मानाभावात् ।

---

त्यर्थः । न त्वनभ्युपगममात्रेण वाक्यार्थरूपकखण्डनं न सुघटमित्यभिप्रायवानाह—**अत्रापीति** । ननु 'मुखं चन्द्रः' इत्यत्र निदर्शनालक्षणाभावाद्रूपकस्वीकारेऽपि प्रकृते निदर्शनालक्षणाक्रान्तत्वान्न तद्बहिर्भावः साधयितुं शक्यो विनिगमकाभावादित्यत आह—**किं चेति** । **पदार्थेति** । धर्म्यन्तरसंबन्धिधर्मस्य धर्म्यन्तरे आरोपरूपेत्यर्थः । **वाक्यार्थेति** । 'वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना ।' इत्युक्तलक्षणेत्यर्थः । **विशिष्टार्थयोरिति** । पदार्थनिदर्शनायां तु शुद्धपदार्थस्यैवारोप इत्यर्थः । सोऽपि तत्र भेदेनारोप्यते । अत्र त्वभेदेनेति वैषम्यान्तरमपि दर्शयति—**अभेदप्रतीतेरिति** । तदेव स्पष्टयति—**धर्म्यन्तरेति** । तत्र हि नेत्रादिरूपे धर्मिणि तत्सदृशनीलाम्बुजन्मरूपस्य धर्मिणो लीलारूपो धर्म आरोप्यत इत्यर्थः । ननु वाक्यार्थरूपकोच्छेदापत्तिरिष्टापादनमेव तदर्थमेव तेषां प्रवृत्तत्वादित्यत आह—**न चेष्टेति** । यदि हि स्वानभिमतत्वमात्रेण वाक्यार्थरूपकोच्छेदस्त्वया इष्टापत्त्या परिहर्तव्यः । तदा मया वाक्यार्थरूपकमेव स्वीकृत्य वाक्यार्थनिदर्शनोच्छेदेऽपीष्टापत्तिरेव कर्तव्येति भावः । किं च मत्पक्षे वाक्यार्थनिदर्शनाया विषयान्तरसत्त्वान्नात्यन्तं तदुच्छेदः । तव तु वाक्यार्थरूपकस्य निरवकाशत्वापत्तिरेवेति बहूनामनुग्रहो न्याय्य इति न्यायेन मत्पक्ष एव प्रमाणवानित्याह—**त्वत्पादेति** । नन्वलक्तकचन्दनादीनां बिम्बप्रतिबिम्बभावसत्त्वादलक्तकमार्जनरूपस्य अलक्तकरूपबिम्बविशिष्टत्वात्कथमेतद्रूपकं तत्र बिम्बप्रतिबिम्बभावानङ्गीकारात् । अत एव बिम्बाविशिष्टे इति विषयविशेषणं चित्रमीमांसायां रूपकलक्षणे विहितमित्यत आह—**न चेति** ॥ **मानाभावादिति** । रूपकशरीरभूताभेदप्र-

'कन्दर्पद्विपकर्णकम्बुमलिनैर्दानाम्बुभिर्लाञ्छितं
संलग्नाञ्जनपुञ्जकालिमकलं गण्डोपधानं रतेः।
व्योमानोकहपुष्पगुच्छमतिभिः संछाद्यमानोदरं
पश्यैतच्छशिनः सुधासहचरं बिम्बं कलङ्काङ्कितम्॥'

इत्यत्र दानजलादिकलङ्कादीनां विम्बप्रतिबिम्बभावस्वीकाराच्चेति॥

अत्रेदं प्रतिभाति—उपमेयतावच्छेदकपुरस्कारेणोपमेये शब्दान्निश्चीयमानमुपमानतादात्म्यं रूपकमिति लक्षणं तावद्भवतैवोक्तम्। तत्र चोपमानोपमेयभावो भेदगर्भ एवावश्यं वाच्यः। अन्यथा 'चन्द्रचन्द्र—' इत्यादेरपि रूपकत्वापत्तेः। तथा च 'आत्मनोऽस्य तपोदानैः' इति श्लोके निर्मलीकरणक्षालनयोरभेदारोपो न रूपकं भवितुमर्हति। तयोर्भेदाभावात्। 'क्षल शौचे' इत्यनुशासनेन शौचमात्रे क्षालनपदशक्तेः। न च—तपोदानजन्यस्य सलिलजन्यस्य च शौचस्य भेद एवेति वाच्यम्। विशेष्याभेदे विशिष्टभेदस्य विशेषणभेद एव पर्यवसानात्। उपमानतावच्छेदकधर्मस्योपमेयताव-

---

तिकूलत्वविरहेण तदनङ्गीकारस्यानुचितत्वादित्यर्थः॥ ननु लक्ष्यानुरोधेन लक्षणप्रणयनं लक्ष्येषु च विषयो विम्बविशिष्टो न दृश्यत इति तद्बहिर्भावो युक्त एव। न च प्रकृतस्थले विम्बवैशिष्ट्यमस्तीति वाच्यम्। अस्य रूपकत्वेन उभयसंप्रतिपत्तिविषयत्वविरहादित्याशङ्क्य उभयाभिमतरूपकस्थल एव विम्बवैशिष्ट्यं दर्शयति—कन्दर्पेति। कलङ्कविशिष्टे चन्द्रे दानाम्बुलाञ्छितकम्बुतादात्म्यारोपादत्र विषयस्य विम्बवैशिष्ट्यमस्त्येवेति भावः। स्वीकारादिति। अलंकारसर्वस्वविवरणकृतेत्यर्थः। ननु क्षालनपदस्य जलसंबन्धार्थकत्वात्कथं भेद इत्याशङ्क्याह—क्षल शौचे इतीति। विशेष्याभेद इति। स विशेषणे हीति न्यायेन दण्डिकुण्डलिन्चैत्रभेदस्य दण्डकुण्डलभेदपर्यवसानादित्यर्थः। तदुक्तं टीकाकारचरणैः—'देशकालौ कामं विभाव्येयातां न तु तदालिङ्गितस्वभावः पद्मरागमणिः' इति॥ नन्वौपाधिकभेदमादायैव तर्हि रूपकमस्तु इत्यत आह—उपमानतेति। उपमानपदप्रवृत्तिनि[1]मित्तेत्यर्थः। एवमुपमेयतावच्छेदकेत्यत्रापि भान्तव्यम्। अन्यथा तपोदानानामुपमेये, सलिलस्य चोपमाने, विशेषणत्वे, नोपमेयोपमानतावच्छेदकतया तद्भेदसत्त्वेन रूपकत्वापत्तेरपरिहारात्। नन्वेवमपि सर्वस्वीयोदाहृतनिदर्शनास्थले रूपकमवारणीयमेव तत्र त्वदुक्तधर्मयोर्भेदसत्त्वादित्यत आह—

1. 'निमित्तमित्यर्थः' ख.

च्छेदकधर्माभेदस्य च रूपकौपयिकत्वात् । किं च । 'त्वत्पादनखरत्नानाम्' इत्यत्रापि न रूपकसंभवः । तथा हि नखानां स्वत एव नैर्मल्यादिगुणयोगात्तत्र यावकसंवन्धो निरर्थक इत्यत्रास्य तात्पर्यम् । तच्चालक्तककरणकत्वन्नखकर्मकमार्जनं चन्दनकरणकचन्द्रकर्मकपाण्डुरीकरणाभिन्नमिति वोधेन न सिध्यति । मार्जनस्य निषेधप्रतियोगितया विवक्षितत्वेन तस्योपमेयत्वासंभवाच्च । एतादृशभेदारोपस्य सादृश्यामूलकतयालंकारकत्वाभावाच्च । यत्किंचिद्धर्मघटितसादृश्यस्यालंकारतायामप्रयोजकत्वाच्च । तस्माज्जन्यतासंवन्धेन पावकाभावो नखशोभायां प्रतिपाद्यः । तथा तेनैव संबन्धेन श्रीखण्डलेपाभावश्चन्द्रनिष्ठपाण्डुरतायाम् । तेन च निदर्शनायां सर्वत्राभेदप्रतियोग्यनुयोगिनोर्वाक्यार्थयोर्मध्येऽभेदप्रतियोगिनो वाक्यार्थस्याप्रसिद्धत्वनियम एव, रूपके तु न तथा । तद्यथा—

'यदा तु सौम्यता सेयं पूर्णेन्दोरकलङ्कता ॥'

---

किं चेति । तात्पर्यमिति । तथा शाब्दवोधाभावादिति भावः ॥ न सिध्यतीति । न च वाक्यार्थयोरभेदारोपस्य निदर्शनानिर्वाहार्थं त्वयापि वाच्यत्वात्कथमेतद्बोधाक्षेप इति वाच्यम् । न ह्यभेदारोपस्योपमाक्षेपो येनोक्तदोषः स्यात् । किंतु तस्यालंकारत्वविरहमात्रे तात्पर्यम् । इदं चाग्रे स्वयमेव विशदीकरिष्यति ॥ किंच यत्र धर्मिणः किंचित्प्रतियोगिकाभेदवत्ताप्रयुक्तोत्कर्षविवक्षा तत्र रूपकालंकारः । अत्र तु मार्जनस्य यथोक्तपाण्डुरीकरणाभेदप्रयुक्तोत्कर्षो न विवक्षित इत्याह—मार्जनस्येति । यदुत्कर्षं उक्तवाक्यतात्पर्यं तस्यैवोपमेयत्वात् । तादृशाश्चात्र नखा एव न तु मार्जनमित्यर्थः । ननु परम्परया मार्जनधर्मिकपाण्डुरीकरणप्रतियोगिकाभेदवोधस्यापि नखोत्कर्षपर्यवसायित्वमस्त्येवेति नोक्तदोष इत्याह—एतादृशेति । ननु वैयर्थ्यप्रतियोगित्वरूपधर्मप्रयोज्य एवोभयोस्तादात्म्यारोपः आरोप्यमात्रे सादृश्यस्य हेतुत्वादित्याह—यत्किंचिदिति । स्वाश्रयोत्कर्षपर्यवसायिन एवाभेदस्यालंकारत्वात् । वैयर्थ्यप्रतियोगित्वरूपधर्ममूलकतादात्म्यारोपस्य च मार्जनापकर्ष एव पर्यवसानादिति भावः । सादृश्यस्येति । यथा तादृशसादृश्यं नोपमा तथा तन्मूलकतादात्म्यारोपो न रूपकमपीत्यर्थः । उभयोर्वैयर्थ्यमेव दर्शयति—तस्मादिति । मूलयुक्तिमुक्त्वावान्तरयुक्तिमाह—तेन चेति । अप्रसिद्धत्वेति । यथा प्रकृत एव चन्द्रस्य चन्दनजन्यपाण्डुरीकरणमप्रसिद्धमित्यर्थः । रूपकत्वेति । मुखं चन्द्र इत्यादौ चन्द्रादेः प्रसिद्धत्वादिति भावः । निदर्शनान्तरे अभेदप्रतियोग्यप्रसिद्धिं दर्शयति—तद्यथेति । अत्र पूर्णेन्दोरकलङ्कत्वमप्रसिद्धमे-

'क सूर्यप्रभवो वंशः क चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥'

'सोऽयं कुरङ्गैः कचग्रहः केसरिणः, भेकैः करपातः कालसर्पस्य, वत्सकैर्बन्दीग्रहो व्याघ्रस्य, अलगर्दैर्गलाक्षेपो गरुडस्य, दारुभिर्दाहादेशो दहनस्य, तिमिरैस्तिरस्कारो रवेः, यो मौरवाणां मालवैः परिभवः ।'

इत्यादौ च ॥

ननु नायं नियमः—

'प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः
सुधासूतेश्चन्द्रोपलजललवैरर्घ्यघटना ।
स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं
त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम् ॥'

'वियोगे गौडनारीणां यो गण्डतलपाण्डिमा ।
अदृश्यत स खर्जूरीमञ्जरीगर्भरेणुषु ॥'

इत्यादौ च तदभावादिति चेत् ॥ किं ततः । न ह्यभेदारोपमात्रेण रूपकालंकारत्वं निर्वहतीत्युक्तत्वात् । अन्यथा घटः पटः इत्यादेरपि तत्त्वापत्तेः ॥

---

वेत्यर्थः । एवं क सूर्येत्यादावपि बोध्यम् । **सोऽयं कुरङ्गैरिति** ॥ हर्षचरिते राज्यवर्धनस्योक्तिः । सर्वेषामपि मालवैः परिभव इत्यत्राभेदारोपः ॥ एतावन्मात्रमेव वैधर्म्यबीजमिति भ्रमेण तत्र व्यभिचारमुद्भावयति—**नन्विति** । **नायमिति** । अभेदप्रतियोग्यप्रसिद्धिरूप इत्यर्थः । **प्रदीपेति** । सौन्दर्यलहर्यां भगवत्पादानामुक्तिः । अत्र नीराजनादीनां स्वतः प्रसिद्धत्वेन संभवित्वमेवेत्यर्थः । अत्र वाक्यार्थनिदर्शनायामभेदप्रतियोगिनो वाक्यार्थस्याप्रसिद्धत्वमित्येव विवक्षितम् । 'वियोगे गौडनारीणाम्' इति तु पदार्थनिदर्शनैवेति न व्यभिचारः । वाक्यार्थनिदर्शनातद्रूपकयोरेवात्र वैधर्म्यस्य प्रस्तुतत्वात् । प्रदीपेत्यत्र तु यद्यपि वाक्यार्थनिदर्शनैव तथापि तद्धर्माभाववति तत्संवन्धजनका एव नीराजनादयोऽभिमताः । तथैव प्रकृतोत्कर्षसिद्धेः । सूर्यनीराजनादयश्च सूर्यादावालोकाद्यभाववति आलोकसंवन्धादिजनकत्वविशिष्टा अप्रसिद्धा एवेति न व्यभिचार इति समाधातुं शक्यते । तथापि निदर्शनायामभेदप्रतियोगिनो वाक्यार्थस्य प्रसिद्धेरप्यभ्युपगमस्य सर्वप्रसिद्धत्वात् । तदपहायान्यदेवाह—**किं तत इति** । न हीति । अत्र रूपकत्वाभावे पूर्वमेव युक्तिरुक्ता । इदं त्ववान्तरवैधर्म्यसंभवन

अथ तवाप्यहृद्येनापि धर्मेण तदभेदारोपः कथमिति चेत् । न हि वयं तत्राभेदारोपो न संभवतीति ब्रूमः । [1]अपि तु तस्यालंकारत्वाभावमात्रमिति दोषाभावात् । ततश्चाभेदारोपमात्रस्य चमत्कारजनकत्वाभावात्क्वचिद्वैयर्थ्यमादाय पर्यवसानम्, क्वचिदन्यथेत्यन्यदेतत् । ततश्च पाण्डुनखमार्जने पाण्डुरीकरणाभेदारोपस्य नखोत्कर्षपर्यवसानस्यात्राभेदस्यालंकारत्वमुचितम् ।

किं च—

'त्वत्पादनखरत्नानि यो रञ्जयति यावकैः ।'

इति पाठेऽपि कथं न रूपकम् । कर्त्रोरभेदस्य तत्रापि प्रतीतेः ॥ यत्तु—क्रिययोरभेदस्य शाब्दत्वात्तस्यैव सर्वभरसहिष्णुत्वान्निदर्शनैवेति, तदसत् । कर्त्रोरभेदेन रूपकत्वापत्तेरपरिहारात् । यदपि 'मुखं चन्द्रः' इत्यादौ श्रौताभेदारोपस्य रूपकजीवातुत्वस्य क्लृप्तत्वादिहापि तथा । अभेदारोपस्य निदर्शनाजीवातुत्वं तु न संभवति । 'इन्दुशोभां वहत्यास्यम्' इति निदर्शनायामभेदारोपाभावादिति, तदप्यसत् । अभेदारोपमात्रस्य रूपककल्पकत्वाभावात् । कथमन्यथा सादृश्यामूलकस्यापि कार्यकारणतादीनां क-

---

त्वादुक्तम् । न त्वेतदेव रूपकवैलक्षण्यसाधकम्, येनैव तद्व्यभिचारेण वाक्यार्थनिदर्शनास्थलेऽपि वाक्यार्थरूपकमापाद्येतेत्यर्थः ॥ तदेतावता एतादृशाभेदरोपस्यालंकारत्वाभाव उक्तः । अलंकारत्वं न निर्वहतीत्युक्तेः । तत्राभेदारोप एव निषिध्यत इति भ्रान्तिं दर्शयति—**अथेति** । **न हीति** । येनात्र निदर्शनात्वमप्यभेदारोपमूलकं न स्यादिति दोषः प्रसज्येतेति भावः । **किं त्विति** । तथा चाभेदमात्रस्य चमत्कारजनकत्वविरहात्तावन्मात्रशरीरं रूपकमत्र नालंकारमर्थः ॥ यत्तु पूर्वं पाठान्तरेण त्वत्पादनखरत्नेति श्लोक एव निदर्शनावकाशो दर्शितस्तत्खण्डयति—**किं चेति** । **कर्त्रोरिति** । यत्तच्छब्दपरामृष्टयोर्मार्जनपाण्डुरीकरणकर्त्रोरित्यर्थः । अवान्तरविचारमुक्त्वा वाक्यार्थरूपकस्वीकर्तॄणां मूलयुक्तिं खण्डयितुमुपन्यस्यति—**यदपीति** । **जीवातुत्वेति** । तल्लक्षणत्वेत्यर्थः । ननूदाहृतस्थले निदर्शनास्वीकारात्तस्या अपि अभेदारोपनिबन्धनत्वाभेदं वैधर्म्यमित्यत आह—**निदर्शनाजीवातुत्वं त्विति** । निदर्शनात्वावच्छेदेनोपजीव्यत्वादित्यर्थः । व्यभिचारमाह—**इन्दुशोभामिति** । तत्राश्रयत्वादिनैव शोभादेर्मुखादावारोपादिति भावः । एवं चालंकारसाक्षाद्विभाजकोपाध्यवच्छेदेन रूपके तादृशो-

---

1. 'किं तु' इति टीकासंमतपाठः.

लिपतस्य ताद्रूप्यस्य रूपकत्वाभ्युपगमे तदमूलकानां स्मृत्यादीनामपि रूपकत्वापत्तिरिति रूपकदूषणं संबन्धान्तरप्रयुक्ततादात्म्यविवक्षायामपि रूपकमिति रत्नाकरमधिकृत्य स्वयमेवाभ्यधायि॥ किं च रूपकत्वावच्छेदेन न श्रौताभेद उपजीव्यः अभेदस्य विशेष्यतायां तदभावात्। तथा च भवदीयमेवोदाहरणम्—

'कैशोरे वयसि क्रमेण तनुतामायाति तस्याः स्तना-
वागामिन्यखिलेश्वरे रतिपतौ बाल्ये मनागञ्चति।
आस्ये पूर्णशशाङ्कता नयनयोस्तादात्म्यमम्भोरुहां
किंचासीदमृतस्य भेदविगमः साचिस्मिते तात्त्विकः॥'

अवान्तरधर्मावच्छेदेन तदुपजीवकत्वं तु निदर्शनायामपि समानम्॥ अथ—अभेदारोपपदेनाभेदसंसर्गकाभेदविशेष्यकोभयारोपसंग्रहाद्रूपकत्वावच्छेदेन तदुपजीवकत्वमक्षतम्—इति चेत्। तथापि निदर्शनात्वसामानाधिकरण्येन रूपकत्वावच्छेदेन चाभेदारोपोपजीवकत्वमिति विशेषस्याप्रयोजकत्वात्। 'मुखं चन्द्रतादात्म्यवत्' इत्यादौ च तदभावात्। अभेदविषयकारोपत्वेन तदनुगमेऽपि तद्वृत्त्यसाधारणविषयकारोपोपजीवकत्वं निदर्शनात्वावच्छेदेनास्तीत्यस्याप्यनुगमस्य कर्तुं शक्यत्वात्॥

यदपि निदर्शनायां तादृशपदार्थयोः परस्पराभेदमात्रं शरीरम्, रूपकं तूपमेयगत उपमानाभेद इति, तत्तुच्छम्। तथा हि—त्वन्मते विशिष्टवाक्यार्थरूपके तद्घटकपदार्थानामभेदस्यार्थगम्यतया तत्र रूपकत्वानापत्तेः। तत्राभेदस्य मानसगम्यतया परस्परप्रतियोगिकत्वेन परस्परानुयोगिकत्वेन च विषयीकरणे बाधकाभावात्। 'मुखं चन्द्रः' इत्यादौ तु शाब्दबोधस्य

पाधिसामानाधिकरण्येन च निदर्शनायाममेदारोपस्यापेक्षितत्वात्। तस्य रूपकस्यापातित्वमेवेत्याशयः। अभेदः—

१. क-पुस्तके इदं नास्ति.

१. इतः परं टीका पुस्तकद्वयेऽपि नोपलब्धा. न ज्ञायते 'इयत्येव रचिता भवेद्' अग्रेऽपि इति.

व्युत्पत्तिनियन्त्रितत्वेनोपमानप्रतियोगिक एवाभेदो विषय इत्युक्तम् । तत्र तु परस्परभेदावगाहने न किंचिदस्ति बाधकम् । नाप्युपमानप्रतियोगिकाभेदमानं रूपकनियतम् । मुखचन्द्र इत्यादिसमासस्थले तदभावात् । न च तत्रापि मुखनिष्ठाभेद एव संसर्ग इति वाच्यम् । तस्य प्रथममेव निरस्तत्वात् । किं च शाब्दबोधे चन्द्रप्रतियोगिकाभेदावगाहनेऽपि मानसगम्यपरस्पराभेदमादाय तत्रापि [1]रूपकं न स्यात् । न हि शाब्द एवाभेदबोधोऽलंकारत्वप्रयोजक इति शक्यते वक्तुम्, निदर्शनास्थले आर्थाभेदबोधस्यालंकारत्वप्रयोजकतायास्त्वयैव स्वीकारात् ॥ एवं च मानसाभेदबोधस्योभयत्रैव संभवान्निदर्शना रूपकं चेति दुःकर एकशेषः स्यात् । तस्मात् 'त्वत्पादनखरत्नानाम्' इत्यादौ निदर्शनैवेति वाक्यार्थरूपकं निर्मूलमिति दिक् ॥

इत्यलंकारकौस्तुभे रूपकनिरूपणम् ।

---

अपह्नुतिं लक्षयति—

**प्रकृतं निषिध्य भिन्नात्मतया प्रोक्तावपह्नुतिः कथिता ।**

यत्र प्रकृतमुपमेयं कथंचिच्छब्दतोऽर्थतो वा निषिध्य तत्सदृशाप्रकृतार्थताद्रूप्येण वर्ण्यते सापह्नुतिरित्यर्थः । रूपकातिव्याप्तिवारणाय निषिध्येत्यन्तम् । तत्र तु मुखे चन्द्रताद्रूप्यवर्णनेऽपि न मुखनिषेधपूर्वकं तदिति न दोषः ।

अत्र केचित्—सादृश्यस्थल एवापह्नुतिः ।

'न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणां यतः ।'

इत्यादौ तु नापह्नुतिः । किं तु '[3]प्रकृतस्य यदन्यत्वम्' इत्येवंरूपातिशयोक्तिरित्याहुः ॥

अन्ये तु—

'गोपनीयं कमप्यर्थं द्योतयित्वा कथंचन ।
यदि श्लेषेणा[4]न्यथा वा प्रथयेत्सा त्वपह्नुतिः ॥'

इति साहित्यदर्पणोक्तदिशा किंचिदपह्नुत्य कस्यचिद्दर्शनमपह्नुतिः ।

---

1. 'रूपकत्वं' ख. २. 'दुष्करः' ख. ३. 'प्रस्तुतस्य' ख. ४. 'ण काक्वा' ख.

[1]'केसेसु बलामोडिअ तेण समरम्मि जअसिरी गहिआ ।
जह कन्दराहिं विहुरा तस्स दढं कण्ठअम्मि संठविआ ॥'

इत्यत्र साम्याभावेऽपि न पलाय्य गतास्तद्वैरिणः, अपि तु ततः पराभवं संभाव्य कंदरा एव न तान्न त्यजन्तीत्यपह्नुतिर्व्यज्यते इति काव्यप्रकाशकारेण तदभ्युपगमादित्याहुः ॥

[2]तत्र शाब्दे प्रकृतनिषेधे यथा मम—

'नेयं मेघघटा परंतु विरहोद्दामाग्निधूमावली
न भ्राम्यद्बिसकण्ठिकावलिरसौ बन्धस्तु पान्थात्मनाम् ।
नैतानि स्तनितानि किं तु मदनस्याध्वन्यनिर्भर्त्सनाः
केतक्या न रजांसि दग्धपथिकव्रातीयभस्मानि तु ॥'

इह प्रकृतान्मेघघटादीन्निषिध्य धूमादिरेव तत्स्थानेऽभिषिक्तः ॥

आर्थिके यथा—

'विनिद्रपुष्पालिगतालिकैतवान्मृगाङ्कचूडामणिवर्जनार्जितम् ।
दधानमाशासु चरिष्णु दुर्यशः स कौतुकी तत्र ददर्श केतकम् ॥'

अत्र हि भ्रमरे व्याजत्वोक्त्या नैते भ्रमराः किं तु दुर्यशः इति भ्रमरनिषेधप्रतीतिरर्थात् । न हि भ्रमराणां सत्यत्वविवक्षायां कैतवोक्तिर्घटते ॥

सावयवा यथा मम—

'नेदं कूजितमस्ति कार्मुककृतं, किं तूर्जितं गर्जितं
नैवा[3]जिह्मगराजिरा[4]जिवदने, किं त्वभ्रधाराततिः ।
नेयं सायककाञ्चनद्युतिघटा, सौदामिनी किं त्वसौ
नायं वीरकुलाग्रणीरुदयते, किं त्वेष धाराधरः ॥'

अत्रापह्नवान्तराणां वीरापह्नवानुग्राहकत्वात्सावयवत्वम् ॥

क्वचिदपह्नवान्तरानुगृहीतस्यापह्नवस्यापह्नवान्तरानुग्राहकत्वम् । यथा—

१. 'केशेषु बलात्कारेण तेन समरे जयश्रीर्गृहीता । यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः ॥' इति च्छाया. २. 'निषेधश्च द्विविधः, शाब्द आर्थश्च' इत्यलंकारमुक्तावल्यामधिकम्. ३. अजिह्मगराजिर्बाणपङ्क्तिः. ४. आजिवदने संग्राममुखे.

'सितं नैतत्किं तु प्रकृतिरमणीयं विकसितं
मुखं ब्रूते मूढः कुसुममिदमुद्यत्परिमलम्।
स्तनद्वन्द्वं मिथ्या कनकनिभमेतत्फलयुगं
लता सेयं रम्या भ्रमरकुलनम्या न रमणी॥'

अत्र सितापह्नवो मुखापह्नवानुग्राहकः। मुखस्तनापह्नवौ तु नायिकापह्नवानुग्राहकावित्यभिप्रायः सावयवापह्नुतावुदाहरतामवसेयः।

मालारूपा यथा—

'क्वापि क्षीरनिधिच्छलात्क्वचिदपि प्रोत्फुल्लकुन्दच्छला-
त्कुत्रापीन्द्रगजच्छलात्क्वचिदपि प्रालेयरश्मिच्छलात्।
कुत्रापि स्मरवैरिदेहमिषतः कुत्रापि शेषच्छला-
त्त्रैलोक्यं हिमतुल्यकीर्तिरटति श्रीवाजचन्द्रप्रभोः॥'

अत्र बहून्निषिध्यैकस्यारोपः।

एकं निषिध्य बहूनामारोपो यथा—

'नारीणामनुरञ्जनानुनयनात्पञ्चाशुगस्याशुगा-
ञ्शत्रूणामवधीरणापकरणव्यापारतः पाण्डवान्।
कामानामनुपूरणात्सुरतरून्भीतार्तसंजीवना-
त्प्राणान्पाणिरयं बिभर्ति नृपतेः पञ्चाङ्गुलीव्याजतः॥'

अत्र वाजचन्द्राङ्गुलिनिषेधपूर्वकं तत्र कामबाणाद्यभेदारोपः।

यत्तु—

'अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सा।
नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्॥'

इति॥ तत्राहुः—

'प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः।'

इत्यपह्नुतिसामान्यलक्षणानाक्रान्तत्वान्नायमपह्नुतिभेदः। किं तु उपमेयोपमानतावच्छेदकयोः सामानाधिकरण्यस्य भासमानत्वाद्रूपकमेव दृढारोपमेतत्।

1. 'मानतद्रूपक' क्व.

'न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।'

इत्यादौ तदङ्गीकारादिति[1] ॥

यत्तु—क्वचिन्निषेधपूर्वक आरोपः, क्वचित्त्वारोपपूर्वको निषेध इति भेदवर्णनं तच्चमत्कारविशेषानुपलम्भादिहोपेक्षितम् ।

अपह्नुतिध्वनिर्यथा मम—

'त्वत्प्रत्यनीकनरनायकनायिकानां
हृद्भिर्वियोगदहनज्वरदह्यमानैः ।
प्राणावसानमिलितैर्द्रुतकिंचिदंश-
पीयूषमिन्दुमबुधाः सकलङ्कमाहुः ॥'

अत्र 'नायं कलङ्कः, किं तु तप्तमनोयोगद्रुतपीयूषच्छिद्रम्' इति प्रतीतिः।

चित्रमीमांसायां तु—

'त्वदालेख्ये कौतूहलतरलतन्वीविरचिते
विधायैका चक्रं विलिखति सुपर्णीसुतमपि ।
अपि स्विद्यत्पाणिस्त्वरितमपसृज्यैतदपरा
करे पौष्पं चापं मकरमुपरिष्टाच्च लिखति ॥'

अत्र 'अयं न साधारणः पुरुषः, किं तु नारायणः' इति चक्रादिलिखनेन व्यज्यते । अन्यथा तु तस्याप्येतादृशरूपविरहेण नायं नारायणः किं तु काम इति पौष्पचापलिखनेन व्यञ्जितमित्युदाहृतम् ॥

रसगङ्गाधरकृतस्तु—उपमेयनिषेध उपमानारोपश्चेत्यपह्नुतेर्भागद्वयम्। तत्र चक्रादिलिखनेन 'पुण्डरीकाक्षोऽयम्' इत्यारोपभाग एव व्यञ्जयितुं शक्यते, न तु 'नायं साधारणः पुरुषः' इत्युपमेयनिषेधभागोऽपि । चक्रादिलिखनस्य पुण्डरीकाक्षारोपमात्रव्यञ्जकतया निषेधाभिव्यञ्जने सामर्थ्याभावात् । न च—पुरुषतादात्म्यनिषेधं विना नारायणतादात्म्यारोपानुपपत्त्या निषेधोऽपि व्यज्यते—इति वाच्यम् । 'मुखं चन्द्रः' इत्यादावपि मुखनिषेधमन्तरेण चन्द्राभेदारोपानुपपत्त्या तत्र मुखनिषेधाभ्युपगमे ह्र-

१. ध्याहुः ख.

कोच्छेदप्रसङ्गात् । न च—तत्र मुखत्वसाधारण्येन चन्द्राभेदानुभवान्न मुखनिषेधः—इति वाच्यम् । अत्रापि साधारणपुरुषत्वसामानाधिकरण्येन पुण्डरीकाक्षारोपतादात्म्यसंभवाद्रूपकध्वनित्वस्यैव स्वीकर्तुमुचितत्वात् ॥ न च पूर्वार्धे मास्त्वपह्नुतिः । तथापि चक्रादिदूरीकरणेन नायं पुण्डरीकाक्ष इति निषेधस्य पुष्पचापलिखनेनायं काम इत्यारोपस्य च व्यञ्जयितुं शक्यतयोत्तरार्ध एवापह्नुतिध्वनिरस्त्विति वाच्यम् । पुण्डरीकाक्षस्य वर्ण्यत्वाभावेन तन्निषेधस्यापह्नुत्यघटकत्वात् । प्रकृतपदस्यारोपविषयपरतायास्त्वयैव व्याख्यानात् । 'प्रसक्तयत्किंचिद्वस्तुनिषेधसामानाधिकरण्येन क्रियमाणवस्त्वन्तरारोपमेवापह्नुतित्वम्' इति लक्षणकरणे तु युक्तमेवापह्नुतित्वमित्याहुः ।

वस्तुतस्तु—मुखं चन्द्रः इत्यादौ मुखत्वं धर्मितावच्छेदकीकृत्य चन्द्रतादात्म्यारोपस्यानुभवसाक्षिकत्वादभ्युपगमेऽपि प्रकृते पुण्डरीकाक्षभेदव्याप्यचक्राद्यभावस्य साधारणपुरुषधर्मस्य च चक्रादिभिरपसारणे साधारणपुरुषनिषेधमन्तरेण पुण्डरीकाक्षतादात्म्यस्य व्यञ्जयितुमशक्यत्वात्तन्निषेध आवश्यक इति दीक्षिताशयः ॥

साहित्यदर्पणकारास्तु—

'अन्यं निषिध्य प्रकृतस्थापनं निश्चयः पुनः ।'

आरोप्यमाणं निषिध्य प्रकृतस्योपमेयस्य स्थापनं निश्चयालंकारः । यथा—

'वदनमिदं न सरोजं नेत्रे नेन्दीवरे एते ।
इह सविधे मुग्धदृशो मधुकर मुदा न परिभ्राम्य ॥'

यथा वा—

'हृदि बिसलताहारो नायं भुजंगमनायकः
कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः ।
मलयजरजो नेदं भस्म प्रियारहिते मयि
प्रहर न हरभ्रान्त्यानङ्ग क्रुधा किमु धावसि ॥'

नन्वयं निश्चयान्तःसंदेहः । तत्र संशयनिश्चययोः सामानाधिकरण्यात् । इह तु भ्रमरादेर्भ्रान्तिः नायिकादेर्निश्चय इति वैयधिकरण्यात् ॥ अथ कथंचिदेव संशयनिश्चययोः सामानाधिकरण्यं विवक्षितम् । तथा च भ्रमरनिष्ठसंशयज्ञानान्नायकेऽपि संदेहोऽस्त्येव, ज्ञानज्ञानस्य बाधकं विना तज्ज्ञानविषयविषयकत्वनियमादिति चेन्न । तथापि चात्र[1] भ्रमरादेरपि संदेहः । समकोटिकज्ञानस्यैव संशयत्वात् । अत्र च तथात्वे मुखसमीपगमनादिवर्णनानुपपत्तेः । तर्हि भ्रान्तिमानेवास्त्विति चेत्, न । भ्रमरादेर्भ्रान्तिसत्त्वेऽपि इह चमत्कारानाधायकतयानलंकारत्वात् । तादृशनायकोक्तेरेव चमत्कारकत्वात् । भ्रमरभ्रान्त्यादेरविवक्षायामपि नायिकाप्रतीत्यर्थमपि एतादृशोक्तिसंभवाच्च । न च रूपकध्वनिः, मुखस्य कमलत्वेनानिर्धारणात् । नाप्यपह्नुतिः प्रस्तुतस्य निषेधाभावात् । अतः पृथगेवायं चिरंतनोक्तालंकारेभ्य इत्याहुः ॥

जयदेवस्तु—

'भ्रान्तापह्नुतिरन्यस्य शङ्कायां भ्रान्तिवारणे ।
तापं करोति सोत्कण्ठं ज्वरः किं न सखि स्मरः ॥'

इति तत्त्वोक्त्या भ्रान्तिवारणे कृते भ्रान्तापह्नुतिरित्याह ॥

दीक्षिता अपि संभवद्भ्रान्तिपूर्विकायामपह्नुताविदमुदाहरणम् । कल्पितभ्रान्तिपूर्विकायां तु—

'जटा नेयं वेणी कृतकचकलापो न गरलं
गले कस्तूरीयं शिरसि शशिरेखा न कुसुमम् ।
इयं भूतिर्नाङ्गे प्रियविरहजन्मा धवलिमा
पुरारातिक्रोधात्कुसुमशर किं मां प्रहरसि ॥'

अत्र कल्पितभ्रान्तिर्जटा नेयमित्यादिनिषेधमात्रोन्नेया पूर्ववत्प्रश्नाभावादित्याहुः ।

इत्यलंकारकौस्तुभेऽपह्नुतिनिरूपणम् ।

---

1. 'नात्र' ख.

श्लेषमाह—

**उभयविशेष्यान्वितयोरेकेन प्रोक्तिरर्थयोः श्लेषः ।**

उभयपदमेकभिन्नपरम् ॥

तत्र द्वयोरपि विशेष्ययोः प्रकृतत्वे यथा—

'गतेषु सैन्येषु सुशर्महेतोः सुलब्धचिह्नः सुजयोत्तरश्रीः ।
हरेस्तनूजः प्रतिपन्नकालं नृपप्रियान्वेषणतत्परोऽभूत् ॥'

अत्र हनूमदर्जुनयोरुभयोरप्युभयकथायां प्रकृतत्वम् ॥

यथा वा—

'देवः पतिर्विदुषि नैव धराजगत्या
निर्णीयते न किमु न व्रियते भवत्या ।
नायं नलः खलु तवातिमहानलाभो
यद्येनमुज्झसि वरः कतरः परस्ते ॥'

अत्रेन्द्रादीनां नलस्य च प्रकृतत्वम् ॥

द्वयोरप्रकृतत्वे यथा—

'आज्ञया च पितुरङ्गभिया चं श्रीरहीयत महीप्रभवा द्विः ।
लङ्घितश्च भवता किमु न द्विर्वारिराशिरुदकाङ्कगलङ्कः ॥'

अत्र श्रीरामस्तुतौ स(रा)मवैरिणोर्द्वयोरप्यप्रकृतत्वम् ॥

यथा वा—

'हिमसुक्तचन्द्ररुचिरः सपद्मको
मदयन्द्विजाञ्जनितमीनकेतनः ।
अभवत्प्रसाधितसुरो महोत्सवः
प्रमदाजनस्य स चिराय माधवः ॥'

अत्र भगवतो वसन्तादेश्च प्रकृताप्रकृतत्वे ॥

---

1. 'त्रिविधश्चायम्—द्वयोः प्रकृतत्वे, द्वयोरप्रकृतत्वे, अन्यतरस्यैव प्रकृतत्वे चेति । पुनर्द्विविधः—शब्दश्लेषः, अर्थश्लेषश्चेति । शब्दश्लेषोऽपि द्विविधः—पदभेदे तदैक्ये च । आद्यः खण्डश्लेषः' इति गीयते । तत्र शब्दश्लेषः शब्दालंकारः, अर्थश्लेषस्त्वर्थालंकार इति काव्यप्रदीपः । द्वयमपि शब्दालंकार इति केचित् । द्वयमप्यर्थालंकार इत्यलंकारसर्व-[illegible]कारः' इत्यलंकार[illegible]मधिकम्.

अयं च श्लेषो द्विधा—सभङ्गोऽभङ्गश्च। अभिन्नानुपूर्वीकशब्दप्रतिसंधानबोध्यार्थान्तरकत्वं सभङ्गत्वम्। समानानुपूर्वीकशब्दप्रतिसंधानबोध्यार्थान्तरकत्वमभङ्गत्वम्॥ आद्यश्चाष्टधा—वर्णपदलिङ्गभाषाप्रकृतिप्रत्ययविभक्तिवचनभेदात्॥

तत्र वर्णश्लेषो यथा—

'प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि॥'

अत्र विधिविधुशब्दयोर्विधाविति रूपादिकारोकारयोः श्लेषः॥

पदश्लेषो यथा—

'संनद्धे भगदत्तशङ्खनिनदत्रस्यत्रिलोके बले
तांम्यद्दिक्करिकुम्भकर्णपृतनाप्रारब्धकोलाहले।
तीक्ष्णद्रोणपतत्रिपीतसुभटप्रत्यग्ररक्तासवं
प्रावर्तिष्ट दिवोऽतिथीकृतमहायोधं महायोधनम्॥'

अत्र रामायणपक्षे—संनद्धा ये इभगा हस्त्यारोहास्तैर्दत्तो यः शङ्खनिनदः इति। भारतपक्षे—संनद्धे इति बलविशेषणम्। भगदत्तो राजविशेषो भारतप्रसिद्धः। तच्छङ्खेत्यादि॥

लिङ्गश्लेषो यथा मम—

'उन्निद्राब्जपरिष्कृतप्रवरदोःप्रह्वीभवद्दैवत-
श्रेणीमौलितटावघट्टितमणिज्योत्स्नासमुल्लासिपात्।
उन्मीलद्धनसारसंततिसदृक्फुल्लारविन्दाभदृ-
ग्रूपं कैटभभेदिनो मदनजिद्वा चन्द्रिका सावतु॥'

अत्र दोरित्यादिरूपं क्लीबपुंस्त्रीलिङ्गेषु समानम्। लिङ्गमपि प्रातिपदिकार्थ इति पक्षेणेदमुक्तम्॥

---

१. 'प्रोत्सार्यकारी' ख.

भाषाश्लेषो यथा ममैव—

'अम्बाहरा विदूरे कामं मे सुरहि तारेइ ।
सरसावि दुरेहाली करणेसुवि दुद्धरा सहसा ॥'

अत्र संस्कृतपक्षे 'इ' इति लक्ष्मीसंबुद्धिः । अम्बेति तद्विशेषणम् । सुराणां हितविषये अरे शीघ्रे इत्यपि तथा । 'क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां भेदगामि यत्' इत्यमरात् । अरपदस्य शैघ्र्यवत्परस्य स्त्रीत्वम् । अविदूरे संनिहितमेव मम काममभिलाषमाहर संपादयेत्यर्थः । विदुराणां पण्डितानाम् ईहाली इच्छापरम्परा तत्करणे सरसा सप्रीतिः । सुष्ठु विदन्ति तत्स्वरूपं जानन्ति सुविदस्तानुद्धरति संसारादिति तथा । इदं च त्वमित्यस्य विशेषणम् । प्राकृतपक्षे तु कस्यचिद्विरहिण उक्तिः—'ताम्राधरा विदूरे कामं मे सुरभिर्वसन्तस्तारयति वर्धयति । सरसा सशब्दापि द्विरेफाली करणेष्वपि दुर्धरा सहसा ॥' उद्दीपकत्वेन तच्छब्दस्य श्रोतुमशक्यत्वात् इत्यर्थः ॥

प्रकृतिश्लेषो यथा ममैव—

'गरयति वलयादीनिन्द्रियार्थांश्च सर्वा-
न्दवयति हिमरश्मिं जीविताशां च सद्यः ।
नयनमपि मुहूर्तं वर्षयत्यञ्जसा यं
दयिततमवियोगः स्मेरपङ्केरुहाक्ष्याः ॥'

अत्र गुरून् करोति गरवत्करोतीत्यर्थद्वयेऽपि गरयतीति । दववत्करोति दूरीकरोतीत्यर्थद्वयेऽपि च दवयतीति । वृष्टिवत्करोति वर्षवत्करोतीत्यर्थद्वये च वर्षयतीति रूपं समानम् ॥

प्रत्ययश्लेषो यथा ममैव—

'मानभारमवलम्ब्य पुरा या ग्रन्थिभिर्निबिडिता किल तस्थौ ।
प्रेयसीक्षणपथं गतमात्रे सोल्लास सखिनीविरहं च ॥'

1. 'ताम्राधरा विदूरे(ऽपि दूरे) कामं मे सुरभि(र्वि)स्तारयति ।
सरसापि द्विरेफाली करणेष्वपि दुर्धरा सहसा ॥' इति छाया.

अत्र लिटि प्रथमोत्तमपुरुषैकवचने 'तस्थौ' इति, 'उल्ललास' इति च रूपं तुल्यम् ॥

विभक्तिश्लेषो यथा ममैव—

'दशना मौक्तिकविशदा अधरावपि बिम्बसंकाशौ ।
तन्वि चकासति वदने तव नासा वंशसोदर्या ॥'

अत्र चकासतीति तिङि बहुवचनान्तम् । शतृप्रत्यये सप्तम्येकवचनेऽपि तदेव रूपम् ॥

वचनश्लेषो यथा—

'अपि लोकयुगं दृशावपि श्रुतदृष्टा रमणीगुणा अपि ।
श्रुतिगामितया दमस्वसुर्व्यतिभाते सुतरां धरापते ॥'

अत्र व्यतिभाते इति वचनत्रयेऽपि तुल्यम् ॥

अत्राष्टानां मध्ये यस्य यत्रान्तर्भावः प्रतिभाति तत्र तद्भिन्नत्वं विवक्षणीयम् । अतो न दोषः इति ध्येयम् ॥ अत्रायं विवेकः—द्विविधोऽप्ययं श्लेषोऽर्थालंकार एव । अर्थान्तरस्य वाक्यार्थानन्वये नानार्थकपदसत्त्वेऽपि श्लेषव्यवहारविरहात् । तथाहि । स्वरितादिगुणभेदेन भिन्नानां शब्दानां भिन्नप्रयत्नोच्चारणयोग्यत्वेऽपि श्लेषोपपत्त्यर्थं स्वरभेदमवधूयैकप्रयत्नेनोच्चारणे शब्दश्लेषः ॥

यथा—

'पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥'

इत्यादौ समासभेदेन स्वरभेदात्तद्भेदेन च शब्दभेदावश्यकत्वात्तत्र जतुकाष्ठन्यायेन शब्दयोरेव श्लिष्टत्वात् ॥ यत्र तु स्वरभेदो नास्ति तत्रैकप्रयत्नोच्चार्यत्वेन शब्दभेदाभावादर्थश्लेषः । एकवृत्तगतफलद्वयन्यायेनार्थयोरेव श्लिष्टत्वादिति सर्वस्वकारादयः ॥

काव्यप्रकाशकारस्तु—दोषगुणालंकाराणां शब्दार्थवृत्तित्वावधारणं तावदन्वयव्यतिरेकगम्यम् । तथा हि—शब्दानां परिवृत्त्यसहत्वे शब्दवृत्तित्वम्, तत्सहत्वे त्वर्थवृत्तित्वम् । कष्टत्वादिदोषा गाढत्वादिगुणा अनुप्रासाद्यलं-

काराश्च शब्दनिष्ठास्तादृशानुपूर्विकशब्दोपादान एव तदवभासात् । व्यर्थत्वादिदोषाः प्रौढ्यादिगुणाः उपमाद्यलंकाराश्चार्थनिष्ठाः । तदर्थकशब्दान्तरोपादानेऽपि यत्रोभयानुगतार्थप्रतीतिसंभवस्तस्य तद्विषयत्वात् ।

यथा—

'स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥'

इत्यादौ । अत्र 'अल्पेनोन्नतिमायाति' इत्यादिप्रयोगेऽपि श्लेषनिर्वाहात् । किं च । शब्दश्लेषोऽर्थालंकार इति परस्परव्याहतम् । श्लेषस्य शब्दानाश्रितत्वे शब्दश्लेष इति व्यपदेशानौचित्यात् । तथात्वे वार्थालंकारतानौचित्यात् । कविसंरम्भगोचरस्यैव वैचित्र्यास्पदत्वेनालंकारत्वात् । प्रकृते च शब्द एव कवेस्तात्पर्यावगमात् ॥ यत्तु—अर्थमुखप्रेक्षितत्वं शब्दानाम् इति, तन्न । एवं सत्यनुप्रासादीनामप्यर्थालंकारत्वापत्तेः । रसादिव्यञ्जकवाच्यार्थापेक्षत्वेनैवानुप्रसादेरलंकारत्वात् । एवं सति शाब्दत्वाभिमतगुणदोषादेरप्यार्थत्वापत्तेश्च । अर्थापेक्षयैव तथात्वात् ॥ यदपि—एकप्रयत्नोच्चार्यशब्दबन्धेऽर्थश्लेषत्वम्—इति, तदपि न । विधावित्यादिवर्णश्लेषस्याप्यर्थश्लेषत्वापत्तेः—इत्याह ॥

इदं चात्र विचार्यम्—अयं श्लेषस्तावदलंकारान्तरस्य विषये निविशमानो दृश्यते ।

यथा—

'सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव ।'

इत्यत्रोपमायाः, 'सद्वंशमुक्तामणिः' इत्यत्र रूपकस्य,

'नाल्पः कविरिव स्वल्पश्लोको देव महान्भवान् ।'

इति व्यतिरेकस्य,

'अनुरागवती संध्या दिवसस्तु पुरःसरः ।
अहो दैवगतिश्चित्रा तथापि न समागमः ॥'

इति समासोक्तेः,

'आदाय चापमचलं कृत्वा हीनं गुणं विषमदृष्टिः ।

यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै ॥'

इति विरोधस्य,

'कवीनां संतापो भ्रमणमभितो दुर्गतिरिति
त्रयाणां पञ्चत्वं रचयसि न तच्चित्रमधिकम् ।
त्रयाणां वेदानां व्यरचि नवता वीर भवता
द्विषत्सेनालीनामयुतमपि लक्ष्यं यदकृथाः ॥'

इत्यनुमानस्येत्यादि । तत्र किं श्लेषस्तेषां बाधको बाध्यो वा संकीर्णो वेति॥

अत्र केचित् । श्लेषस्यालंकारान्तरनिर्मुक्तविषयाभावान्निरवकाशत्वेन सर्वालंकारापवादकत्वम् । यत्र हि द्वयोरेवाप्रकृतत्वं प्रकृतत्वं वा तत्र तुल्ययोगिताया एव संभवात् । न च—

'देव त्वमेव पातालमाशानां त्वं निबन्धनम् ।
त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥'

इति विविक्तोऽस्य विषय इति वाच्यम् । तत्रापि श्लेषोपस्थापितार्थयोरभेदारोपं विना लोकत्रयात्मकत्वस्यानुपपत्त्या रूपकसंभवात् । अत एव 'विद्वन्मानस—' इत्यादौ मनसि मानसत्वारोपेण स्वच्छत्वस्य, राज्ञि हंसत्वारोपेणोदारत्वादेश्च प्रतीते रूपकस्वीकारः, अत्र तु राज्ञि पातालत्वादिरूपणे प्रयोजनाभावात् श्लेष एव कवेस्तात्पर्यमिति निरस्तम् । अत एव च तत्र व्यङ्ग्यत्वेऽपि रूपकस्य (नं) वाच्य[तां] तदपेक्षयैव विविक्तविषयगवेषणादित्यपि न युक्तम् । न चैवं तत्र कथमुपमारूपकादीनां प्रतीतिः । त्वन्मते तत्र तेषामभावादिति वाच्यम् । तेषां प्रतिभानमात्रस्वीकारात् । श्वैत्येन शुक्तौ रजतप्रतिपत्तिवत् । वास्तवस्तत्र श्लेष एव । तस्मादीदृशस्थले श्लेष एवाशेषालंकारबाधको युक्त इति ॥

अन्ये त्वाहुः—विषयान्तराभावे हि बाध्यबाधकभावो युक्तः, न तत्र तथास्ति, श्लेषस्यालंकारान्तरनिर्मुक्तविषयसत्त्वात् ।

१. 'न' पुस्तके नास्ति.

यथा—

'येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजंगहारवलयोगङ्गां च योऽधारयत् ।
यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥'

न ह्यत्रापि तुल्ययोगिता संभवति । हरिहरयोरौपम्यस्यात्रानभिसंधानात् । एवं च विविक्तविषयसद्भावात्कथमस्यालंकारान्तरबाधकत्वमिति ॥ किं च विविक्तविषयासत्त्वादलंकारान्तरापवादकत्वमित्यप्ययुक्तम् । विषयसद्भावमात्रेणोपपत्तौ विषयापेक्षायां मानाभावात् । लोकेऽप्यरन्ध्ररत्नानां निरवकाशतया तदाश्रयसुवर्णस्यालंकारत्वबाधापत्तेः । मीमांसादावपि पदे जुहोतीत्यादिवदुत्तरार्धे जुहोतीत्यादीनामाहवनीये जुहोतीत्यादिविविक्तविषयाभावेऽपि सविषयत्वमात्रेणावस्थानात् । प्रकृतशास्त्रेऽपि सहोक्त्यादीनामतिशयोक्त्यादिविविक्तविषयाभावेऽपि तदबाधेनालंकारान्तरत्वव्यवहारात् ॥ यदप्युक्तम्—उपमाप्रतिमोत्पत्तिहेतुः श्लेषोऽयम् इति, तदपि न । उपमाया एव श्लेषप्रतिभोत्पत्तिहेतुत्वात् । नगरवर्णनप्रक्रमे इवादिशब्दप्रयोगाभावे सकलकलेतिविशेषणदानेऽपि द्वितीयार्थप्रतिपत्तेरभावात् ।

नन्वियं कथमुपमा । सामान्यधर्माभावात् । न च सकलकलत्वमेव तथेति वाच्यम् । कलासाकल्यकोलाहलसाहित्ययोर्भेदादिति चेत्, मैवम् । तयोरभेदाध्यवसायेन साधारण्यनिर्वाहात् । बिम्बप्रतिबिम्बभावादिस्थले वस्तुत उभयाननुगतानामपि धर्माणां साधारण्यस्वीकारेण मुख्यसाधारण्यस्याप्रयोजकत्वात् ।

'यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥'

इत्यादावन्वर्थसंज्ञावत्त्वस्य साधारणधर्मत्वाच्च । साधर्म्यमात्रस्योपमात्वेनार्थसाम्य इव शब्दसाम्येऽपि तत्संभवाच्च ।

'[1]स्फुटमर्थालंकारावेतावुपमासमुच्चयौ किंतु।
आश्रित्य शब्दमात्रं सामान्यमिहापि संभवतः॥'

इति (अ० ४ श्लो० ३२) रुद्रटादिभिः शाब्दसाम्यस्याप्युपमाप्रयोजकत्वाभ्युपगमाच्च प्रकृत उपमैव श्लेषस्य बाधिकेति वक्तुमर्हम्॥ पूर्णोपमा हि साधारणधर्मप्रयोग एव संभवति। न त्वन्यथा। तत्र चार्थश्लेषादेरावश्यकत्वात्तद्विनिर्मुक्तोपमाविषयाभावेन तया श्लेषबाधस्य युक्तत्वात्॥

एवं 'समरार्चितोऽप्यमरार्चितः' इत्यादावपि विरोधादिस्थले श्लेषस्य प्रतिभानमात्रम्, न तु वस्तुस्थितिः। द्वितीयार्थस्यानन्वयेनाप्ररोहात्॥

एवम्—

'अबिन्दुसुन्दरी नित्यं गलल्लावण्यबिन्दुका।'

इत्यादावपि। न ह्यत्र बिन्द्वभावेन सुन्द(द)रीति प्रतीयमानो द्वितीयोऽर्थः प्रकृतोपयोगी। ननु विरोधस्यापि पारमार्थिकस्य 'नित्योऽनित्यश्च' इत्यादेरनलंकारत्वात् यथा—'अपर्यवसन्न एव विरोधोऽलंकारः' इत्यभ्युपगम्यते, एवम् अप्रतिष्ठितोऽपि श्लेषोऽलंकारत्वेन स्वीक्रियताम् इति चेत्, न। विरोधाभासस्य विरोधत्ववत् श्लेषाभासस्य श्लेषत्वेन केनचिदप्यनभ्युपगमात्॥ एवं सद्वंशेत्यादौ रूपकं प्रधानं श्लेषस्तु रूपकाङ्गमेवेति। तत एव व्यपदेशो न्याय्यः। 'नाल्पः कविरिव—' इत्यादावपि व्यतिरेकादिरेव प्रधानम्, श्लेषस्तु तन्निर्वाहकमात्रमिति। एवं च गुणीभूतत्वेन श्लेषस्यालंकारत्वायोगाद्बाध्यप्रायत्वमेवेत्यपि केचिदिति दिक्॥

अत्र कुवलयानन्दे अप्पदीक्षिता अन्यदप्याहुः—प्रकृताप्रकृतश्लेषोदाहरणे शब्दशक्तिमूलध्वनिस्तावत्प्राचीनैर्विवक्षितः।

---

१. 'स्फुटं सत्यमर्थालंकारावेतावुपमासमुच्चयौ न कदापि स्वरूपं त्यजतः, किंतु शब्दमात्ररूपं सामान्यं साधारणं धर्ममाश्रित्य संभवतः। ताभ्यां योगो घटत इत्यर्थः। अर्थतो न सादृश्यम्, किं तु वाक्यद्वयसाधारणशब्दाश्रयं विघत इति तात्पर्यम्॥' इति नमिसाधुटिप्पणी. 'न स्फुटालंकारा' इति त्वादर्शे पाठ आसीत्. आर्याप्रारम्भेऽपि 'यदपि' इत्यपि चाधिकमासीत्. २. 'इत्यत' क.

यथा—

'भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसंग्रहस्य ।
यस्यानुपप्लवगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत् ॥'

'असावुदयमारूढः कान्तिमान्रक्तमण्डलः ।
राजा हरति लोकस्य हृदयं मृदुभिः करैः ॥'

इत्यादौ । अत्र गजचन्द्रादिरूपोऽप्रकृतार्थो व्यञ्जनागम्य इति न तेषामभिप्रायः, किं तु प्रकृताप्रकृतार्थाभिधानमूलक उपमाद्यलंकारो व्यङ्ग इत्येव । अप्रकृतार्थस्यापि शक्त्या प्रतिपाद्यत्वेन व्यक्त्यनपेक्ष्यत्वात् । यद्यपि प्रकरणबलेन प्रकृतार्थस्यैव झटितिप्रतीतिविषयत्वे सति पश्चान्नृपतितद्गाधनादिवाचकानां राजकरादिशब्दानां परस्परसमभिव्याहारबलात्तद्विषयकशक्त्यन्तरोन्मेषपूर्वकमप्रकृतार्थः स्फुरति, नैतावता व्यङ्ग्यत्वसंभवः । शक्त्या प्रतिपाद्यमाने सर्वथैव तदनपेक्षणात् ॥ पर्यवसिते प्रकृतार्थे पश्चात्स्फुरतीति चेत्, तर्हि गूढश्लेषोऽस्तु । अस्ति चान्यत्रापि गूढश्लेषः ।

'अयमतिजरठाः प्रकामगुर्वीरलघुविलम्बिपयोधरोपरुद्धाः ।
सततमसुमतामगम्यरूपाः परिणतदिक्करिकास्तटीर्बिभर्ति ॥'

'मन्दमग्निमधुरर्यमोपला दर्शितश्वयथु चाभवत्तमः ।
दृष्टयस्तिमिरजं सिषेविरे दोषमौषधपतेरसंनिधौ ॥'

अत्र हि समासोक्त्युदाहरणयोः प्राकरणिकार्थबोधानन्तरं विशेषणसाम्यादप्रकृतोऽपि वृद्धवेश्याव्यवहारादिः प्रतीयते । तत्र चाभङ्गश्लेष इति सर्वाभिमत एषः । एवम्—

'रम्या इति प्राप्तवतीः पताका रागं विविक्ता इति वर्धयन्तीः ।
यस्यामसेवन्त नमद्वलीकाः समं वधूभिर्वलभीर्युवानः ॥'

इत्यादावपि गूढश्लेष एव । अत्र द्वितीयान्तादिविशेषणोपस्थापितानामर्थान्तराणां विभक्तिभेदेन वधूभिरन्वयात्[1] । नापि—

1. 'रनन्वयात्' ख.

'एतस्मिन्नधिकपयःश्रियं वहन्त्यः संक्षोभं पवनभुवा जवेन नीताः।
वाल्मीकेररहितरामलक्ष्मणानां साधर्म्यं दधति गिरां महासरस्यः॥'

इत्यादिवद्विभक्तिभेदेऽपि उभयत्र तदन्वयाक्षेपकं साधर्म्यमिह संनिबद्धमस्ति, येनाक्षिप्तश्लेषोऽपि स्यात्। सममिति तु क्रियाविशेषणं सहार्थत्वेनापि उपपन्नम्। वधूषु श्लिष्टविशेषणान्वयात् प्रागप्रतीतं साधर्म्यं नावलम्बते। तस्मादर्थसौन्दर्यबलादेव तदन्वयानुसंधानमिति गूढश्लेषः। तदनु तद्बलादेव समशब्दस्य साधर्म्यार्थकल्पनमित्युपमाङ्गमयं श्लेषः— इति॥

अत्र रसगङ्गाधरकृतः—यत्तावदुक्तम् 'अप्रकृतार्थस्य व्यङ्ग्यत्वं न प्राचामभिमतं किं तु उपमादेरेव' इति, तदयुक्तम्।

'अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्॥'

इति तद्ग्रन्थविरोधात्। अप्रकृतार्थव्यञ्जकत्वं व्यञ्जनाया एवेत्येतदर्थात्॥ न ह्यनेकार्थस्यापि शब्दस्योपमावाचकत्वं प्रसक्तम्, येन तन्नियन्त्रणार्थं संयोगाद्यनुसारः स्यात्। अर्थद्वयस्य वाच्यताया अप्युपमादेर्व्यङ्ग्यत्वानपायाच्च॥ यदप्युक्तम्—'द्वितीयार्थस्यापि शक्त्यैव प्रतीतिः' इत्यादि, तदप्यसत्। द्वितीयार्थविषयकशक्तेरेव नियन्त्रणस्य तैरुक्तत्वेन शक्त्या तद्बोधासंभवात्॥ न च नियन्त्रणं प्रथमिकबोधाजननमात्रम्, तथा च प्रथमं द्वितीयार्थबोधाभावेऽपि प्रकृतार्थबोधानन्तरं शक्त्या द्वितीयार्थबोधे बाधकाभाव इति वाच्यम्। एवं हि प्रथममपि न कुतो द्वितीयार्थबोधः। प्रकरणज्ञानस्य तत्प्रतिबन्धकत्वादिति चेत्, तर्हि चरममपि कथं तद्बोधः प्रतिबन्धकस्य सत्त्वात्॥ न च ज्ञानस्य क्षणद्वयावस्थायितया प्रकरणज्ञाने नष्टे तदुत्तरं प्रतिबन्धकाभावाच्छक्त्यैव द्वितीयार्थबोध इति वाच्यम्। तथापि द्वितीयप्रतिबन्धकज्ञानसत्त्वात्। न हि प्रकृतार्थबोधपूर्वकालीनप्रकरणज्ञानस्यापि तद्व्यक्तित्वेन प्रतिबन्धकत्वम्, प्रतिबध्यप्रतिबन्धकभावबाहुल्यप्रसङ्गात्। किं तु प्रकरणज्ञानत्वेनैव। एवं च प्रकृतार्थबोधोत्तरकालीनप्रकरणादिज्ञानस्यापि प्रकरणादिज्ञानत्वरूपप्रतिबन्धकतावच्छेदकधर्मावच्छि-

तया दुर्वारमेव प्रतिबन्धकत्वमिति । एवं च द्वितीयार्थबोधार्थमन्यत्र क्लृप्ता व्यञ्जनैव स्वीकर्तुमुचिता ।

'जैमिनीयमलं धत्ते रसनायां महामतिः ।'

इत्यादौ बाधितार्थबोधस्य शक्त्या दुरुपपादत्वाच्च । कथंचिदुपपत्तावपि देवदत्तेन पुत्रं प्रति तादृशप्रयोगे असभ्यार्थानुपस्थितिः । शालकादिना प्रयोगे तूपस्थितिरित्यपि नियमो न स्यात् । बोद्धव्यादिवैशिष्ट्यस्य व्यङ्ग्यप्रतिभामात्रहेतुत्वादिति । अत एव 'अयमतिजरठाः—' इत्यादिवदत्रापि गूढश्लेष एवेत्यपि परास्तम् । समासोक्तावपि व्यञ्जनयैवाप्रकृतार्थप्रतीत्यभ्युपगमात् । अत एव ध्वनिकारेण समासोक्तेर्गुणीभूतव्यङ्ग्यान्तर्भावः स्वीकृतः 'पूर्वप्रकरणे समासोक्त्या श्लेषो बाध्यते' इत्युद्भटचार्यादिभिरप्युक्तम् । तत्र श्लेषत्वे च तद्बाध्यत्वोक्त्यनुपपत्तेरिति । किं च । अनेकार्थस्थले कथंचिदप्रकृतार्थस्य शक्त्या बोधोऽस्तु । योगरूढिस्थले तु न तदुक्तिसंभवः ॥

यथा—

'चाञ्चल्ययोगि नयनं तव जलजानां श्रियं हरतु ।
विपिनेऽतिचञ्चलानामपि च मृगीणां कथं नु तां हरति ॥'

अत्र चाञ्चल्यरहितानां पद्मानां श्रीहरणसंभवेऽपि तद्वतां हरिणानां तदाश्चर्यमिति वाच्यार्थपर्यवसन्नेऽपि केवलयोगमर्यादया मूर्खपुत्राणां धनहरणं नेतृभिश्चौरैः सुशकं न तु गवेषकाणामिति जलजमृगशब्देभ्यः प्रतीयमानस्यार्थस्य विना व्यञ्जनामुपपादयितुमशक्यत्वात् । योगस्य रूढ्या नियमेनार्थान्तरबोधासामर्थ्यात् । अत एव पङ्कजादिपदेभ्यः पङ्कजनिकर्तृत्वप्रकारककुमुदादिविशेष्यकबोधो लक्षणयैवेति नैयायिकाः । न चात्रापि लक्षणैवास्त्विति वाच्यम् । मुख्यार्थबाधाभावात् । न च तात्पर्यबाधादेव सास्त्विति वाच्यम् । चोरव्यवहारे कवेस्तात्पर्यमिति ज्ञानस्योपायाभावेन तात्पर्यस्यैवाग्रहात् व्यञ्जनाया एव तदर्थग्राहकत्वादित्याहुः ॥

इत्यलंकारकौस्तुभे ...

समासोक्तिं लक्षयति—

**यत्र प्रकारवाचकपदमात्रं व्यङ्ग्यवाच्यसामान्यम् ।**
**तच्छक्तेरप्रकृतार्थोक्तिः सोक्ता समासोक्तिः ॥ १ ॥**

यत्र प्रस्तुतार्थतात्पर्यके वाक्ये विशेषणपदानि वाच्यव्यङ्ग्योभयानुगामीनि न त्वनेकार्थानीति नियमः । तत्रोभयानुगतविशेषणानां सामर्थ्यात् प्रकृतेनाप्रकृतार्थप्रत्यायनं समासोक्तिः । समासेन संक्षेपेणार्थद्वयस्योक्तेः प्रत्यायनादित्यर्थः । एवं च 'विशेषणार्थकपदमात्रवृत्तिश्लेषसामर्थ्यादप्रस्तुतार्थबोधः सा' इति फलितम् । धूमपदाद्व्याप्तिज्ञानादिना वह्निबोधातिव्याप्तिवारणाय सामर्थ्यादित्यन्तम् ।

'उल्लास्य कालकरवालमहाम्बुवाहं
देवेन येन जरठोर्जितगर्जितेन ।
निर्वापितः सकल एव रणे रिपूणां
धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥'

इत्यादौ विशेषणविशेष्योभयश्लेषलभ्ये उपमाध्वनावतिव्याप्तिनिषेधाय मात्रेति । तथा च । यत्र विशेषणमात्रे श्लेषस्तत्र समासोक्तिः, विशेष्यस्यापि श्लेषे तूपमाध्वनिरेवेति फलितार्थः। अत्र विशेषणसामर्थ्यमेतदेव । यदप्रकृते प्रसिद्धधर्मस्य प्रकृते समारोपात्तद्व्यवहारावच्छेदकतया तत्प्रतियोगिनोऽप्रकृतार्थस्य प्रतीतिरिति ध्येयम् । यत्राप्रकृतेन प्रकृतार्थबोधनम्, तत्राप्रस्तुतप्रशंसा, प्रकृतेन अप्रकृतार्थबोधनं तु समासोक्तिरिति विवेकः ।

यथा मम—

'उत्सारयत्यलकमञ्जरिमञ्जनाभां
वक्षोजकुम्भवसनाञ्चलमुद्धुनोति ।
बिम्बाधरं किमपि चुम्बति पङ्कजाक्ष्या
लोलः कपोलतलयोर्विषजन्समीरः ॥'

इहालकापसारणस्तनवसनापकरणादयो धर्मा मारुतनायकोभयसाधारणाः । समीरपदं तु मारुत एव शक्तम् । अतो नायकप्रसिद्धधर्मा

मारुते समारोपात्तदवच्छेदकतया अप्रस्तुतस्य नायकस्य प्रतीतिः, अतः समीरे नायकव्यवहारारोपेण चमत्कारः ॥ यद्यप्युक्तधर्माणां मारुतेऽपि सत्त्वेन नायकप्रसिद्धानां तेषां मारुते आरोप इति न युक्तम्, तथापि मारुते स्तनवसनालकादिनालम्बनं विशेषतो न प्रसिद्धम्। चालनहेतुत्वस्यैव तत्र प्रसिद्धेः। नायकस्य तु स्तनावरणापसारणादिधर्मा एव विशेषतः प्रसिद्धा इति चमत्कारहेतूनां नायकनिष्ठानां धर्माणां मारुते आरोप इत्युक्तम्। अत एवात्र न मारुते नायकत्वारोपः। शब्दानुपात्तस्य नायकत्वस्यारोपानुपपत्तेः । तद्व्यवहारस्तु शब्दोपात्ततया तत्रारोप्यत इत्युक्तम्। न चैवम्—

'यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम्।
रससंमुख्यपि सहसा पराङ्मुखीभवति रिपुसेना॥'

इत्यादौ नायिकात्वारोपो न स्यादिति वाच्यम्। तत्रान्तःपुरे रणत्वारोपसामर्थ्येन तथात्वात् अत्र त्वलकोत्सारणादीनामुभयसाधारण्येन नायकाक्षेपकत्वासंभवात्। न चात्र मारुतेन नायकस्य निगरणादतिशयोक्तिरेवेति वाच्यम्। उक्तधर्माणां नायक एव विशेषतः प्रसिद्धेरुक्तत्वेन तद्धर्माश्रयस्य नायकस्यैवोपमानत्वेन मारुतस्योपमानत्वाभावात्॥

किं च—

'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः।'

इत्यादौ चन्द्रमसो न नायकोपमानत्वसंभवः चन्द्रपक्षे चुम्बनस्य लाक्षणिकत्वान्नायकपक्षे च मुख्यत्वात्। लाक्षणिकचुम्बनस्यैव सामान्यधर्मत्वे तु नायकस्यापि कान्तानुयोगिकः स्वकीययत्किंचिदवयवप्रतियोगिक एव संयोग उक्तः स्यात्, न तु मुखप्रतियोगिक इति रसापकर्षापत्तिरिति प्राञ्चः॥

अत्र वदन्ति—प्रकृतकर्तर्यप्रकृतनायकादिव्यवहार आरोप्यत इति यदुक्तम्। तत्र किं नायकादिविशेषितो व्यवहारस्तथा, उत तदविशेषित

१. 'नामके' ख. २. 'स्तनवसनाप' ख. ३. 'तद्व्यतिहार' ख. ४. एतद्व्यतिरिक्तपदानां मूलादर्शेऽभावः.

एव। नाद्यः। चन्द्रादेर्नायकव्यवहाराश्रयत्वेन तत्साम्यस्यैव सिद्ध्यापत्तेः। न चेष्टापत्तिः। श्लेषमूलकाभेदाध्यवसायेन व्यवहाराभेदस्यैव कवेर्विवक्षितत्वात्। नायकस्य व्यवहारविशेषणत्वे तु नायकत्वस्य सिद्ध्यनापत्तेश्च। किं चैवम् 'निशामुखं चुम्बति चन्द्र एषः' इत्यादौ यथा चन्द्रे न नायकत्वारोपः एवं निशायां नायिकात्वारोपोऽपि न स्यात्। न्यायसाम्यात्। नायिकानालिङ्गितमुखचुम्बनमात्रस्य चमत्कारकत्वाभावेन मुखचुम्बनस्यासाधारणनायकव्यवहारानुपपत्तेश्चेत्यारोपस्यापि वैयर्थ्यं स्यात्। यदि तु निशायां स्त्रीप्रत्ययद्योत्यं नायिकात्वं स्वप्रकृत्यर्थवृत्तित्वेनैव प्रतीयते इति निशो नायिकात्वबोध इत्युच्यते तदा पुंस्त्वस्यापि चन्द्रवृत्तित्वेन बोधे बाधकाभावात्तत्रापि नायकत्वारोपे बाधकाभावः। न द्वितीयः। मुखचुम्बनमात्रस्याहृद्यत्वात्।

यच्च अलंकारसर्वस्वकारमतानुयायिना कुवलयानन्दकृतोक्तम्—अत्र विशेषणसाम्यादिना यदप्रस्तुतवृत्तान्तस्य प्रत्यायनं तत्प्रकृतविशेष्ये तदारोपार्थमेव। सर्वथैव प्रकृतानन्वयिनः कविसंरम्भगोचरत्वायोगात्। तथा च समासोक्तावप्रकृतव्यवहारसमारोपश्चमत्कारहेतुर्न तु रूपकवत्प्रकृतेऽप्रकृतरूपारोपोऽप्यस्ति। मुखादौ चन्द्रत्वाद्यारोपहेतुश्चन्द्रादिपदस्य समभिव्याहारवत् चन्द्रादौ नायकाद्यारोपहेतुतादृशपदप्रयोगस्यासत्त्वात्। न चात्र—

'निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः।
धारानिपातैः सह किं नु वान्तश्चन्द्रोऽयमित्यार्ततरं ररास॥'

इत्यत्र निरीक्षणानुगुणनयनपदोपादानं यथा मेघस्य द्रष्टृत्वगमकं तद्वन्नायकत्वारोपगमकं किंचिदस्ति। न वा—

'त्वय्यागते किमिति वेपत एष सिन्धु-
स्त्वं सेतुबन्धकृदतः किमसौ बिभेति।
द्वीपान्तरेऽपि नहि तेऽस्त्यवशंवदोऽद्य
त्वां राजपुंगव निषेवत एव लक्ष्मीः॥'

१. 'नायकत्व' ख.

इत्यत्र यथा विष्णुकार्यं सेतुबन्धरूपं[1] राज्ञो विष्णुत्वगमकम्, तथेहापि चन्द्रस्यापि जारत्वादिगमकं किंचिदुपात्तम् । तथा च विशेषणसामर्थ्यादवगतस्याप्रस्तुतव्यवहारस्य समारोपादेवात्र चमत्कार इत्यभ्युपगन्तव्यम् । यद्यप्यर्थयोर्द्वयोरपि प्राधान्यमविशिष्टमेवेति प्रकृतेऽप्रकृतव्यवहारारोपोऽप्रकृते प्रकृतव्यवहारारोपो वेत्यत्र विनिगमकं नास्ति, तथाप्यन्यतरव्यवहाराश्रये धर्मिण्यन्यतरव्यवहारारोपस्यावश्यमसंगतिपरिहाराय स्वीकरणीयतया प्रकृतव्यवहारधर्मिण्यप्रकृतव्यवहारारोप एव स्वीकर्तुमर्हः । न चारोपस्य वैयर्थ्यमिति वाच्यम् । स्वरूपतो ज्ञानस्यारोपे चारुत्वाभावात्कामुका[2]द्यप्रस्तुतधर्मिसंबन्धित्वेनावगम्यमान[3]परस्परसानुगुणत्वादारोपात् । कामुकादेश्च शब्दादनुपस्थितस्यापि चुम्बनादिव्यञ्जितस्य व्यवहारविशेषणत्वम् । तस्मात्—

'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः ।'

इत्यत्र 'जारसंबन्धिताद‍ृशचुम्बनात्मकव्यवहाराश्रयश्चन्द्रः' इति बोधः—इति ॥ तदयुक्तम् । 'मुखं चन्द्रः' इत्यत्र चन्द्रत्वस्यानारोपेण चन्द्रत्वारोप इत्युक्तेस्तावदसंगतत्वात् । चन्द्रविशेषणस्य चन्द्रत्वस्य मुखे आरोपासंभवात्, किं त्वभेदसंसर्गेण चन्द्रस्यैव मुखे आरोपात् । किं च जारादिपदसमभिव्याहाराभावात्तदनारोप इत्यपि न युक्तम् । शाब्दारोपे हि तत्समभिव्याहारोपेक्षितो न त्वार्थारोपे, रूपकध्वनेरुच्छेदप्रसङ्गात् । न च तत्रारोप्यमाणासाधारणधर्मोक्त्या प्रकृते तत्तादात्म्यमभिव्यज्यत इति वाच्यम् । इहापि परनायिकावदनचुम्बनस्य चन्द्रे आरोप्यमाणस्य जारासाधारणधर्मत्वेन तत्तादात्म्यव्यञ्जकत्वसंभवात् । एतेन 'विद्युन्नयनैः—' इत्यादौ चाक्षुषादेः पुरुषत्वाद्याक्षेपकस्येवात्र चन्द्रे जारत्वस्याक्षेपकत्वाभाव इति निरस्तम् ॥ न च चन्द्रादौ जारत्वाद्यारोपं विनापि जारव्यवहारारोपसंभवेनानुपपत्त्यभावान्न तस्य जारत्वाक्षेपकत्वमिति वाच्यम् । आक्षेपरूपगमकस्यानुपपत्तिसापेक्षत्वेऽपि व्यञ्जकरूपगमकस्य तदनपेक्षत्वात् । अन्यथा अर्थापत्त्यैव निर्वाहे व्यञ्जनवैयर्थ्यप्रसङ्गात् ।

1. 'मन्थरूप' ख. 2. 'कामुकीय' ख. 3. 'मानस्य [illegible]' ग.

त्वयापि जारादेर्व्यवहारविशेषणत्वेनोपस्थितिरवश्यं वाच्या। अन्यथा स्वरूपेण व्यवहारमात्रारोपे चारुत्वानुपपत्तेः। एवं चावश्योपस्थितिकस्य जारादेस्तादृशचुम्बनकर्तरि चन्द्रादावेव तादात्म्येन विशेषणत्वमुचितम्, न तु व्यवहारे भेदसंसर्गेण, चन्द्रजारयोरभेदप्रतीतिं विना परनायिकावदनचुम्बनस्याहृद्यत्वात्। अपि च 'निशामुखं चुम्बति चन्द्र एषः' इत्यत्र स्त्रीपुंलिङ्गाभ्यां मुखचुम्बनरूपार्थसहकारेण नायिकात्वं नायकत्वं व्यज्यत इति निर्विवादम्। अन्यथा—

'निशामुखं चुम्बति चन्द्रिकैषा अहर्मुखं चुम्बति भानुबिम्बम्।'

इत्यादावपि तद्व्यञ्जनापत्तेः। एवं च स्त्रीप्रत्ययादिना व्यज्यमानं नायिकात्वादिकं निशादेर्नायिकात्व एव पर्यवस्यति, व्यञ्जकस्य स्त्रीत्वादेः स्वसामानाधिकरण्येन तदाक्षेपकत्वौचित्यात्। निशाशशिनोर्नायकताख्यधर्मविशिष्टयोः प्रतीतिरिति सर्वस्वकारग्रन्थविरोधाच्च। अविनाभावादप्रकृतव्यवहाराक्षिप्तेन धर्मेणैव प्रस्तुतो धर्म्यवच्छिद्यत इति तद्विवरणग्रन्थाच्च नायकत्वारोपस्यैव प्रतीतेः। किं च—व्यवहाराक्षिप्तस्य नायकस्य तद्विशेषणत्वमेव न तु चन्द्रादिविशेषणत्वम्, तत्समानाधिकरणपदानुपस्थाप्यत्वादित्यप्ययुक्तम्। एवं सति निशायामपि नायिकात्वारोपो न स्यात्, किं तु व्यवहारविशेषणत्वेनोपस्थितिरेव, तच्च न संभवति नायिकात्वानालिङ्गितकेवलरात्रिमुखचुम्बनस्य नायिकासंबन्धित्वात्, रात्रितादात्म्यं विना नायिकाया मुखविशेषणत्वायोगाच्च। किं च—

'निर्लक्ष्मीकाभवत्प्राची प्रतीचीं याति भास्करे।
प्रिये विपक्षरमणीसक्ते का मुदमञ्चति॥'

इत्यत्र भास्करादीनां नायकत्वाप्रतीतौ उत्तरार्धे प्रियत्वादिना समर्थनमप्यनुपपन्नं स्यात्। अन्यच्च—अप्रकृतव्यवहारः प्रकृतविशेष्ये तद्व्यवहारताटस्थ्येनारोप्यते, तदभेदेन वा। नाद्यः। तथा सति 'ऐन्द्रीमुखचुम्बनकर्ता नायिकामुखचुम्बनकर्ता च चन्द्रः' इति 'एकत्र द्वयम्' इति रीत्या बोधः स्यात्। न चेष्टापत्तिः। ऐन्द्र्यां नायिकात्वस्य चन्द्रे नायकत्वस्य वा प्रतीतिप्रसङ्गात्। नान्त्यः। तदपेक्षया प्रकृतव्यवहारविशेष्यकाभेदसंसर्ग-

काप्रकृतव्यवहारप्रकारकारोपस्यैव युक्तत्वात् न तु भेदसंसर्गेण प्रकृतविशेष्ये तदारोपस्यापि, अभेदांशे व्यवहारांशे चारोपप्रसङ्गात्, मम त्वभेदांश एवारोप इति विशेषः। तस्मादप्रकृताभेदेन भासमानः प्रकृतव्यवहारः स्वविशेष्ये तद्विशेष्याभिन्नतया व्यवसिते भासते। तत्राप्रकृतार्थ उपस्कारकतया गुण इत्येव युक्तम्। अयं तु विशेषः। यथा—'त्वत्पादनखरत्नानाम्' इत्यादौ रूपकप्रकरणोदाहृते 'त्वत्पादनखरत्नानामलक्तकमार्जनं श्रीखण्डकरणकचन्द्रश्वेतीकरणभिन्नम्' इति विशिष्टमार्जने विशिष्टश्वेतीकरणारोपः। तद्वदत्रापि 'ऐन्द्रीमुखचुम्बनकर्ता चन्द्रो नायिकामुखचुम्बनकर्तृनायकाभिन्नः' इति न शाब्दबोधः। नायिकेत्यादिभागस्य शब्दानुपस्थितत्वात्। किं तु प्रकृतवाक्यार्थघटकाः पदार्थाः अप्रकृतपदार्थतादात्म्येन भासमाना वैशिष्ट्यमनुभवन्तो महावाक्यार्थरूपेण परिणमन्तः इति। तथा च 'ऐन्द्र्यभिन्ननायिकामुखचुम्बनकर्ता चन्द्रनायकः' इति बोध इति। तस्माद्व्यवहारस्यैव चन्द्रादावारोप इति मतं निर्युक्तिकमेवेति।

अत्रेदं प्रतिभाति—त्वन्मते उभयत्राभेदारोपसत्त्वेन लाघवानवकाशः। तव हि नायिकाया रात्रौ नायकस्य च चन्द्रे अभेदेनारोपः। न च त्वन्मतेऽप्रकृतव्यवहारस्याभेदसंसर्गेण प्रकृतव्यवहारे आरोपः। अप्रकृतव्यवहारस्यैव चाश्रयत्वादिभेदसंबन्धेन चन्द्रादावित्युभयत्र संसर्गभेदः। मम तूभयत्राप्यभेद एव संसर्ग इति लाघवमिति वाच्यम्। मन्मतेऽप्रकृतव्यवहाराभेदाध्यवसितस्य प्रकृतव्यवहारस्यैव चन्द्रे बोधात्तस्य चारोपाभावात्। किं तु प्रकृतव्यवहारे अप्रकृतव्यवहारस्यैवारोपेण लाघवात्। तव त्वभेदमेव संसर्गीकृत्यारोपद्वयमिति गौरवम्। अप्रकृतव्यवहाराभिन्नप्रकृतव्यवहारस्य चन्द्रे बोधे चन्द्रविशेष्यकाप्रकृतव्यवहारारोपानपेक्षणात्। अप्रकृतव्यवहारस्याभेदेन प्रकृतव्यवहारे भेदेन च चन्द्रादावारोपे प्रयोजनाभावात्। न चैवं सति प्रकृतविशेष्ये अप्रकृतव्यवहारारोप इत्यादिग्रन्थविरोधापत्तिरिति वाच्यम्। स्वाभिन्नाश्रयत्वसंबन्धेन अप्रकृतव्यवहारस्य चन्द्रादावारोप

1. 'हाराभेदेन' ख.

इति तदर्थात् । भवति ह्यप्रकृतव्यवहाराभिन्नः प्रकृतव्यवहारस्तदाश्रयश्च चन्द्रादिरिति ॥

अपि च यत्र वक्त्रा वाच्यार्थाभिप्रायेणैव वाक्यप्रयोगे श्रोत्रादिना तत्सरूपार्थोऽवगम्यते, तत्र वक्तृतात्पर्याभावात् ततो न त्वदुक्तबोधसंभवः। यथा हर्षचरिते—

'तरलयसि दृशं किमुत्सुकामकलुषमानसवासलालिते ।
अवतर कलहंसि वापिकामपि पुनरेष्यसि पङ्कजालयम् ॥'

इयं हि दुर्वाससः शापेन सरस्वत्यां भूमिं प्रति प्रस्थातुकामायां तस्मिन्नेवावसरे हंसस्य हंसीं प्रति यथाश्रुतैवोक्तिः । सरस्वत्या तु सारूप्यात्स्वस्या ब्रह्मलोकदुस्त्यजत्वाभिज्ञानाभिप्रायेणापि योजितम् । त्वन्मतस्य च ब्रह्मलोकाभिन्नमानसत्यागेच्छाविरहवती हंसीरूपा सरस्वतीति बोधस्यात्रासंभवात् । किं च अत्रैव 'विशिष्टे विशिष्टस्य नाभेदान्वयः । अभेदप्रतियोगिनोऽर्थस्य शब्दानुपस्थितत्वात्' इत्युक्त्वा ऐन्ध्यादीनामभेदेन नायिकादावन्वयबोधस्वीकारोऽनुचित एव । न हि वाक्यार्थस्यैव शब्दोपस्थितिरपेक्षिता न तु पदार्थस्य । अभेदप्रतियोगिन एव शब्दोपस्थितिस्तथा न तु तदनुयोगिन इति वा सप्रमाणकम्, येन वाक्यार्थस्य पदादनुपस्थिततदभेदबोधः । पदार्थे तु पदादनुपस्थितेऽपि पदार्थान्तराभेदो बुध्यत एवेति वावक्तुमवकाशः स्यात् । अत एव नायकादेः शब्दादनुपस्थितस्य न चन्द्रादावारोप इत्यत्र दूषणं यदुक्तम्—आर्थारोपे न समानविभक्तिकपदाकाङ्क्षा इति । तदप्यपास्तम् । अत्रापि वाक्यार्थे विशिष्टस्यारोप आर्थ एवेत्यपि वक्तुं शक्यतया त्वदुक्तविलयापत्तेः ॥

किं च जारत्वाद्यारोपमन्तरेणापि चन्द्रादौ तद्व्यवहारारोपसंभवान्न तत्र जाराद्यारोपे किंचिद्गमकमस्ति ॥

यत्तु व्यञ्जकस्यानुपपत्तिनिरपेक्षस्यैव व्यञ्जकत्वमिति । तदपि न । प्रकृतानुकूलार्थव्यञ्जकत्वनियमभङ्गापत्तेः ॥

किं चैवं ध्वनिप्रकरणे—

'अलससिरमणी धुत्ताणामग्गिमो पुत्ति धणसमिद्धिमओ ।
इय भणिएण णअङ्गी पफुल्लविलोअणा जाआ ॥'[1]

इत्यत्र परिफुल्ललोचनत्वेन वस्तुना हर्षव्यञ्जनेऽपि कथं मदुपभोग्यरूपवस्तुव्यञ्जनम् । न च हर्षेण स्वजनकतया त्वदुपभोगाक्षेप इति वाच्यम् । हर्षस्य पुत्रलाभादिनापि संभवेनानैकान्तिकत्वेन मदुपभोग्यत्वाक्षेपकत्वासंभवादित्याशङ्क्य अलसशिरोमणित्वादिश्रवणविशिष्टप्रफुल्लविलोचनत्वस्य कारणान्तरबाधसहकारेण मदुपभोग्यत्वव्यञ्जकत्वमिति स्वोक्तिव्याघातापत्तिः ॥

यदपि स्वरूपतो व्यवहारमात्रारोपस्य चारुत्वाभावाद्व्यवहारविशेषणत्वेन जाराद्युपस्थितिरवश्यमङ्गीकार्या । एवं च जारादेरभेदेन चन्द्रादावेवारोप उचित इत्यादि । तदपि न । जारादेरभेदेन चन्द्राद्यारोपंवादिना त्वयापि जारादेर्व्यवहारविशेषणत्वेनान्वयस्यावश्यंमभ्युपगम्यत्वात् । अन्यथा 'मुखचुम्बनकर्ता चन्द्रजारः' इति बोधे चन्द्रे जारत्वाक्षेपकत्वाभावात् । एवं चोभयत्र तदन्वयापेक्षया व्यवहार एव तद्बोधो युक्तो लाघवात् ॥

यत्तु जाराभिन्नत्वेन चन्द्रबोधं विना परनायिकावदनचुम्बनस्याहृद्यत्वादिति । तन्न । भेदप्रतीत्यभावमात्रेणापि तदुपपत्तावभेदप्रतीतेरनुपयुक्तत्वात्॥

यदपि मुखचुम्बनादिना स्त्रीलिङ्गादिसहकारेण व्यज्यमानं नायिकात्वादिकं निशादिवृत्तित्वेनैव व्यज्यत इति । तदपि न । व्यञ्जकं हि तत्र मुखचुम्बनादिकमेव स्त्रीत्वादिकं तु सहाकारिमात्रम् । एवं च चुम्बनादिना स्वविशेषणत्वेन तदाक्षेप्तुमर्हम् । किं च स्त्रीलिङ्गादिकं न निरपेक्षं नायिकात्वादिव्यञ्जकम् । 'निशामुखं चुम्बति चन्द्रिकैषा' इत्यादावपि तदापत्तेः । किं तु चुम्बनादिकर्तुः पुंस्त्वादिसहकारेणैव । एवं च चन्द्रगतं पुंस्त्वं निशाया नायिकात्वम्, निशागतं च स्त्रीत्वं चन्द्रस्य नायकत्वं व्यञ्जयतीति पर्यवसानात् कथमाक्षेपकसामानाधिकरण्येन नायिकात्वादिप्रतीतिः स्यात् ।

1. 'अलसशिरोमणिर्धूर्तानामग्रिमः पुत्रि धनसमृद्धिमयः ।
इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥' इति छाया।

स्त्रीत्वादेस्तदाक्षेपकत्वाभावात् । पुंस्त्वादेश्च नायिकात्वादिसामानाधिकरण्याभावात् ॥

यत्तु निशाशशिनोर्नायकत्वाख्यधर्मविशिष्टयोः प्रतीतिरित्यादिग्रन्थस्वरसदर्शनम् । तदपि न । नायकस्य व्यवहारविशेषणतया परम्परया तद्वैशिष्ट्यमित्यत्रैव तात्पर्यात् । व्यवहारारोपमङ्गीकृत्य नायकाद्यारोपनिरासतात्पर्यके ग्रन्थे तदभेदारोपाभिप्रायस्य शङ्कितुमशक्यत्वात् ॥

यदपि चन्द्रादौ नायकाद्यनारोपवत् निशायामपि नायिकात्वाद्यारोपोऽपि न स्यादिति । तदपि न । रात्रिमुखचुम्बनव्यवहारे प्रतियोगितया नायकान्वयबोधे सति रात्रिमुखचुम्बनस्य तद्धर्मत्वाभावेन रात्रौ नायिकात्वाद्यारोपस्यावश्यकत्वात् । नहि नायिकाया व्यवहारे विशेषणत्वेनान्वयबोधः संभवति मुखचुम्बनरूपव्यवहारस्य तदसंबन्धित्वात् । नायकस्य तत्र संबन्धितयान्वयेन संबन्ध्यन्तरस्यानाकाङ्क्षितत्वाच्च । तदतिरिक्तव्यवहारस्य वानुपात्तत्वात् । अत उक्तरीत्यान्वयस्यैवोचितत्वात् ॥

यदप्युक्तम्—

'निर्लक्ष्मीकाभवत्प्राची प्रतीचीं याति भास्करे ।
प्रिये विपक्षरमणीसक्ते का मुदमश्नुते ॥'

इत्यत्र भास्करादीनां प्रियत्वाद्यबोधे उत्तरार्धे प्रियत्वादिना समर्थनानुपपत्तिरिति, तदपि न । त्वन्मत एव तद्दोषात् । न हि 'भास्करप्रियेऽन्यरक्ते प्राची नायिकादूयत' इत्युक्ते प्रिय इत्यादिना समर्थनं संभवति । अभेदे समर्थ्यसमर्थकभावानुपपत्तेः । अस्माकं त्वप्रकृतव्यवहाराक्षेपकत्वेनोत्तरार्धस्य निर्लक्ष्मीकत्वसंपादनोपयोगस्य स्पष्टत्वात् । तस्मात् समासोक्तौ व्यवहारस्यैवाभेदेन प्रकृतव्यवहारे आरोप इति स्थितम् ॥

अत एव—

'गण्डं चुम्बति पाण्डिमाधरमधून्यास्वादयत्युल्बणः
श्वासोर्मिस्तनिमा तनोति च तनोराश्लेषमेणीदृशः ।
तापस्तावदपाकरोति वसनं भ्रातः किमावेद्यता-
मेते धन्यतमास्त्वमेव विधिना धाम्नेव निर्वासिताः ॥'

इत्यादौ,

'कपोले पत्राली करतलनिरोधेन मृदिता
निपीतो निःश्वासैरयममृतहृद्योऽधररसः।
मुहुः कण्ठे लग्नस्तरलयति बाष्पः स्तनतटं
प्रियो मन्युर्जातस्तव निरनुरोधेन तु वयम् ॥'

इत्यादौ च न रसाभासत्वापत्तिः। इह हि पाण्डुत्वादिषु बहुषु गण्ड-चुम्बनादिव्यवहारारोपात्। बहुष्वपि एकसंबन्धिना व्यवहारारोपसंभवान्नानौचित्यम्। त्वन्मते तु तत्र नायकत्वस्यैवारोपात्पाण्डुत्वादौ प्रत्येकं नायकत्वारोपे बहुनायकसंबन्धिरतिप्रतीत्यानौचित्याद्रसाभासत्वप्रसङ्गो दुर्वारः स्यादिति दिक् ॥

अत्र च क्वचिल्लौकिके शास्त्रीयव्यवहारारोपः।

यथा मम—

'रूपं राजति केवलान्वयि तनौ प्राणेश्वरप्रार्थिता
श्लेषादौ व्यतिरेकि केवलमिदं सूक्तं समाकर्ण्यते।
प्रोदेति व्यतिरेकि चान्वयि च ते रम्भोरु वक्षोजयो-
र्मध्ये चात्र तनुत्वमङ्ग गमने लोलत्वमक्ष्णोस्तथा ॥'

अत्र नायिकाया रूपे सर्वाङ्गव्यापकतायां नैयायिकप्रसिद्धाभावाप्रतियोगित्वरूपकेवलान्वयित्वव्यवहारारोपः ॥

क्वचिच्छास्त्रीये लौकिकव्यवहारारोपः।

यथा मम—

'मा यान(?)मव्ययसमाश्रयणाद्विभक्ति-
र्ज्ञात्वा निजामपि तथाविधतां विनिर्मात्।
स्वच्छन्दतां दधदपर्यनुयोगयोग्य-
स्तस्या हि लोपविधिमन्वशिषन्मुनीन्द्रः ॥'

अत्राव्ययोत्तरविभक्तेर्लोपो भवतीति वैयाकरणव्यवहारे अनुचितहिंसारतनृलवद्व्यवहारारोपः ॥

क्वचिच्च शास्त्रीये शास्त्रीयव्यवहारसमारोपः।

यथा मम—

'कर्मण्यणावप्यनणौ प्रयाते कर्तृत्वमाध्यानविवर्जितेऽपि।
स्पृहामहं संविदधत्परस्मै पदाय न स्यां कथमत्र हास्यः॥'

अत्र बहुन्यल्पे वा कर्मणि आध्यानानां श्रवणाद्यात्मकज्ञानानामभावेऽपि सति परस्मै मोक्षरूपाय पदाय स्पृहां कुर्वन्नित्यनेन उक्ते कर्मसत्त्वे मोक्षो भवतीति वैदिके व्यवहारे। अणौ अण्यन्तावस्थायां कर्मीभूते पदार्थे। अनणाविति नञ्समासद्वयेन ण्यन्तावस्थायां कर्तृभूते सति अनाध्याने स्मरणभिन्नार्थे आत्मनेपदविधानात्तादृशस्थले परस्मैपदं न आत्मनेपदमेव 'णेरणौ यत्कर्म णौ चेत्स कर्तानाध्याने' इति सूत्रेण भवतीति वैयाकरणव्यवहारारोपः। एवं शास्त्रान्तरेष्वप्युदाहार्यम्।

इति समासोक्तिः।

---

निदर्शनां निरूपयति—

**उपमापर्यवसन्नो यत्रार्थोऽन्योन्यमन्वयानर्हः।**
**यच्च क्रियया कारणकार्यान्वयधीर्निदर्शना सोक्ता॥ १॥**

यत्र पदार्थयोर्वाक्यार्थयोर्वा अन्योन्यमेकवाक्यतयान्वयबोधाजनकयोरुपमानोपमेयभावं कल्पयित्वैवान्वयबोधपर्यवसानं सा निदर्शना। यत्र च कार्यकारणयोः क्रियया हेतुहेतुमद्भावे प्रतिपादिते उत्तरवाक्यार्थः पूर्ववाक्यार्थप्रतिपाद्यसामान्यकार्यकारणभावे दृष्टान्ततया पर्यवस्यति सा द्वितीया निदर्शनेत्यर्थः। आद्या यथा—मुद्राराक्षसे अमात्यराक्षसं गृहीतमालोक्य चाणक्यस्योक्तौ—

'केनोत्तुङ्गशिखाकलापकपिलो बद्धः पटान्ते शिखी
पाशैः केन सदागतेरगतिता सद्यः समापादिता।
केनानेकपदानवासितसटः सिंहोऽर्पितः पञ्जरे
भीमः केन च नैकनक्रमकरो दोर्भ्यां प्रतीर्णोऽर्णवः॥'

अत्र हि राक्षसोऽयं केनात्रासीत इति पूर्ववाक्यार्थः। बहिर्विलाञ्चले

केन बद्ध इत्यादिरुत्तरवाक्यार्थः । न चैतेषां परस्परमन्वयबोधः संभवति, अतो यथा वह्नेर्वस्त्राञ्चलबन्धनं दुष्करं तथा राक्षसग्रहणमपीत्यादिक्रमेणोपमायां पर्यवसानम्। तथा च वह्निवस्त्राञ्चलबन्धन प्रतियोगिकसादृश्यवद्राक्षसग्रहणकर्ता मदीयजिज्ञासाविषय इत्यादिः पर्यवसितबोधाकारः । न च रूपकपर्यवसानमेव कुतो न भवति, राक्षसग्रहणरूपवह्निवस्त्राञ्चलबन्धनकर्ता क इति बोधसंभवादिति वाच्यम् । प्रकृतप्राधान्यभङ्गापत्तेः । एवमपि वह्निवस्त्राञ्चलबन्धनाभिन्नराक्षसग्रहणकर्ता क इति बोधः कुतो न स्यात् एवं प्रकृतप्राधान्यभङ्गाभावादिति चेत्, न । राक्षसग्रहणस्य प्रकृतत्वेन तत्रोपमेयस्यैव वाच्यत्वात् । रूपकापेक्षया उपमायाः प्रथमप्रतीतिकत्वाच्च । न चात्र व्यङ्ग्योपमैवास्तु किमलंकारान्तरकल्पनयेति वाच्यम् । उपजीव्यत्वेन तदभ्युपगमादित्याहुः ॥

पदार्थनिदर्शना यथा—

'[1]घरिणीअ महाणसकम्मलग्गमसिमइलिएण हत्थेण ।
छित्तं मुहं हसिज्जइ चन्दावत्थं गदं पइणा ॥'

अन्यावस्थान्येन कथं प्राप्यते इत्यतो मुखचन्द्रयोरुपमापर्यवसानम् । अथ वा अवस्थासदृशावस्थायां लक्षणा । सादृश्यप्रतियोगिन्यामवस्थायां चन्द्रपदान्वयः । अतो लुप्तोपमेयमस्तु इति चेत्, न । अवस्थायामवस्थानिरूपितसादृश्याभावात् चन्द्रपदस्यैकदेशान्वयप्रसङ्गात् । खण्डशक्तिकल्पने च गौरवात् । एकपदोपस्थाप्यानां गत्यन्तरसत्त्वेऽन्योन्यमनन्वयाच्च ।

न्यायपञ्चाननादयस्तु—ईदृशस्थलेऽन्वयं प्रति प्रथमोदाहृतनिदर्शनायामुपमानमप्रसिद्धम् । वह्नेर्वस्त्रबन्धनादेरप्रसिद्धेः । इह तु प्रसिद्धमिति विशेषः । वाक्यार्थनिदर्शनायोगिपदस्य स्वविशेष्यजातीयार्थलक्षणया चन्द्रपदस्य चन्द्रावस्थायां लक्षणा । तेन चन्द्रावस्थासदृशावस्थालाभेन लुप्तोपमैवेत्याहुः ।

---

1. 'गृहिण्या महानसकर्मलग्नमषीमलिनितेन हस्तेन ।
स्पृष्टं मुखं हस्यते चन्द्रावस्थां गतं पत्या ॥' [गाथा १।१३] इति च्छाया।

द्वितीया यथा—

'उन्नतं पदमवाप्य[1] यो लघुर्हेलयैव[2] स पतेदिति ध्रुवम्।
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः॥'

अत्र लाघवे सत्युन्नतपदप्राप्तित्वं कारणतावच्छेदकम्। पतनत्वं कार्यतावच्छेदकमिति कार्यकारणभावः पूर्वार्धप्रतिपाद्यः। तत्र दृष्टान्ततयोत्तरार्धोपादानम्। तेन लाघवे सत्युन्नतपदप्राप्तिः पातहेतुः यथा दृषत्कणस्येति दृष्टान्तपर्यवसानान्निदर्शनात्वम्। न चात्रानुमानमेवेति वाच्यम्। पक्षादेरनिर्देशात्। न च 'अयं निश्चितपतनकः लाघवे सत्युन्नतपदप्राप्तित्वात् शैलसानुगतदृषत्खण्डवत्' इति वाच्यम्। एकत्र लघुत्वमल्पबुद्धित्वम्, दृष्टान्ते त्वपकृष्टगुरुत्वयोगित्वम्। उन्नतत्वम्, उत्कृष्टत्वम्, ऊर्ध्वदेशस्थितत्वं चेति भेदात्। पक्षे पतनं पदभ्रंशो दृष्टान्ते त्वधः संयोगहेतुः क्रियेति भेदाच्च अथ लघुत्वोन्नतत्वपातादीनामभेदाध्यवसायेनोभयवृत्तित्वान्न दोषः। वास्तव्याप्त्यभावेऽपि कविप्रतिभाकल्पितव्याप्त्यादिबलादेवानुमानालंकारप्रवृत्तेः। अन्यथा उत्तरार्धस्य पूर्वकार्यकारणभावदृष्टान्तत्वानुपपत्त्या त्वन्मतस्यापि विलयप्रसङ्गात् इति चेत्। तथाप्यत्र लघोरुन्नतपदप्राप्तेः पातं प्रति हेतुताया एव प्रतिपाद्यत्वेन कस्यचित्पतनयोग्यताया असाध्यत्वेनानुमानानवकाशात्। न च 'पतनं लाघवे सत्युन्नतपदप्राप्तिजन्यम्, पतनत्वात्, शैलाग्रगतदृषत्खण्डपतनवत्' इति वाच्यम्। श्लोकात् दृषत्खण्डस्यैव दृष्टान्तत्वप्रतीतेः तत्समवेतपतनस्य तदभावात् पतनस्य पक्षत्वे हेतोरसाधारण्यात्। पतनविशेषस्य पक्षत्वे च सामान्यतो निपतनस्य लाघवे सत्युन्नतपदप्राप्तिजन्यत्वस्य श्लोके गम्यमानस्यासिद्धेः। उन्नतपदप्राप्तेः पातहेतुत्वस्यैव प्रतिपादनीयत्वेन पतनस्योन्नतपदप्राप्तिजन्यत्वसाधने तद्विरोधाच्चेति नानुमानावकाश इति सिद्धम्॥ अथास्त्वत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः।

'निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम्।
पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम्॥'



1. 'मवाप' इति भवेत्. 2. 'लीलयैव' ख.

इत्यादिवदिति चेत् । न । समर्थनीयवाक्यार्थप्रतिपाद्यकार्यकारणभावान्तर्गतकार्यतावच्छेदककारणतावच्छेदकधर्मयोः समर्थकवाक्यान्तर्गतकार्यकारणभावघटककार्यतावच्छेदककारणतावच्छेदकधर्माभिन्नत्वे निदर्शनाभेदे त्वर्थान्तरन्यास इति विवेकेनात्र तद्विषयाभावात् । इह हि पूर्ववाक्यार्थप्रतिपाद्यकार्यकारणभावे उन्नतप्रतिपाद्यत्वं कारणतावच्छेदकम्, द्वितीयेऽपि तदेव । 'निजदोष—' इत्यादौ तु पूर्वार्धप्रतिपाद्ये कार्यकारणभावे दोषत्वं कारणतावच्छेदकं विपरीतज्ञानत्वं कार्यतावच्छेदकम् । द्वितीयार्धे तु पित्तत्वं कारणतावच्छेदकं विपरीतचाक्षुषत्वं कार्यतावच्छेदकमिति भेदात् । एवं च पूर्वोत्तरवाक्यार्थकार्यकारणभावद्वये यत्र सामान्यविशेषरूपधर्मावच्छिन्नत्वं तत्रैवार्थान्तरन्यास इति फलितम् । अथास्त्वयं दृष्टान्त एव ।

'त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् ।
आलोके हि हिमांशोर्विकसति हृदयं कुमुद्वत्याः ॥'

इतिवत् । न चात्र कार्यकारणभावद्वये कार्यतावच्छेदकैक्याभावः निर्वाणत्वविकासत्वयोर्भेदादिति वाच्यम् । तयोर्बिम्बप्रतिबिम्बभावेनैक्यसत्त्वात् । अन्यथा उक्तोदाहरणेऽप्युक्तरीत्या पतनादेर्भेदेनासंगत्यापत्तेरिति चेत् । न । पूर्ववाक्यार्थप्रतिपाद्यकार्यकारणभावे उत्तरवाक्यार्थप्रतिपाद्यकार्यकारणभावे उत्तरवाक्यार्थप्रतिपाद्यकार्यकारणभावस्य यत्र ग्राहकत्वं तत्र निदर्शना । 'त्वयि दृष्ट—' इत्यादौ तु उत्तरार्धीयकार्यकारणभावो न पूर्वार्धीयकार्यकारणभावे आहत्यग्राहकः । तत्र हि एवकारेण नायिकामनोनिर्वाणस्य राजदर्शनान्वयव्यतिरेकानुविधायित्वदर्शनेन कार्यकारणभावो ग्राह्यः । तत्र यद्यदन्वयव्यतिरेकानुविधायि तत्तज्जन्यमिति ग्राहकव्याप्तौ आलोके हीत्यादिर्हि दृष्टान्तः । ततस्तत्परिष्कृतया यद्यदन्वयव्यतिरेकानुविधायीति व्याप्त्या मनोनिर्वाणराजदर्शनयोः कार्यकारणभावो गृह्यते । उन्नतेत्यत्र तु उत्तरार्धीयकार्यकारणभावः साक्षादेव पूर्वार्धीयकार्यकारणभावग्राहक इति भेदः । विशेषान्वयव्यतिरेकानुविधायिज्ञानस्यैव सामान्यकार्यकारणभावग्राहकत्वमिति सिद्धान्तात् । तेन च यत्र पूर्वकार्य-

कारणभावे साक्षादेवोत्तरकार्यकारणभावोऽनुकूलस्तत्र निदर्शना, यत्र तु पूर्वकार्यकारणभावग्राहक एवोत्तरकार्यकारणभावोऽनुकूलस्तत्र दृष्टान्त इति विवेकः पर्यवसन्न इत्यलमतिपल्लवितेन ॥

अत्र केचित्—ललितमप्यलंकारान्तरमेव । यत्र प्रकृतवाक्यार्थमनुपन्यस्य तत्प्रतिबिम्बभूतवाक्यार्थान्तरमात्रमुपन्यस्यते । यथा—

'प्रस्तुते वर्णवाक्यार्थे प्रतिबिम्बस्य वर्णनम् ।
ललितं निर्गते नीरे सेतुमेषा चिकीर्षति ॥'

अत्र ललितमिति लक्ष्योक्तिः । पूर्वार्धे लक्षणम् । निर्गत इत्याद्युदाहरणम् । इयं हि दाक्षिण्यादुपागते नायके प्रतिनिवृत्य नायिकान्तरासक्ते सति तदानयनाय प्रेषयितुकामां नायिकां प्रति सख्या उक्तिः । तत्र च प्रस्तुतवाक्यार्थमपहाय तत्सदृशनीरनिर्गमनोत्तरकालीनसेतुबन्धकारणद्वारा तत्प्रतिबिम्बरूपार्थ उक्तः । न हीयमप्रस्तुतप्रशंसा, प्रस्तुतधर्मिकत्वात् । नायकानयनेच्छावत्यां नायिकायामेव तादृशसेतुकरणेच्छोक्तेः । नापि समासोक्तिः । प्रस्तुतवृत्तान्तेनाप्रस्तुतवृत्तान्तप्रतीतेरेव तद्विषयत्वात् । अत्र चाप्रकृतेन प्रकृतवृत्तान्तप्रतीतेः । नापि निदर्शना । प्रस्तुताप्रस्तुतवृत्तान्तयोः शब्दोपात्तयोरैक्यसमारोप एव तदभ्युपगमात् । यदि च शब्दोपात्तयोर्विषयविषयिणोः प्रवर्तमान एवालंकारो विषयिमात्रोपादानेऽपि प्रवर्तेत, तदातिशयोक्तेरपि रूपक एवान्तर्भावप्रसङ्गः । विषयविषयिणोः शब्दोपात्तत्वे शाब्दं रूपकं विषयिमात्रोपादाने त्वार्थमित्यपि वक्तुं शक्यत्वात् । सारूप्यनिबन्धनायामप्रस्तुतप्रशंसायामप्यतिशयोक्तेरेवापत्तेः । तत्राप्यप्रस्तुतधर्मिवाचकपदस्य प्रस्तुतधर्मिलक्षकत्वसंभवात् । न च तत्र सरूपादप्रस्तुतवाक्यार्थात्प्रस्तुतवाक्यार्थोऽवगम्यते । अतिशयोक्तौ तु विषयिवाचकपदैर्विषया लक्ष्यन्त इति वाच्यम् । इहापि प्रस्तुतगतत्वेन वर्ण्यमानादप्रस्तुतवाक्यार्थात्प्रस्तुतधर्मिगतप्रस्तुतवृ[2]त्तान्तप्रतीतिरिति तत्रान्तर्भावानौचित्यात् । प्रस्तुतं स्वपदेन निर्दिश्य तत्राप्रस्तुतवर्णनारूपविच्छित्तिविशेषसद्भावाच्च ।

१. ख-पुस्तके नास्त्ययं पाठः. २. 'रूपवृत्तान्त' ख.

'पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः।'

इत्यादिषु प्रस्तुतस्य कस्यचिद्धर्मिणोऽनुपादानादतिशयोक्तिरेव। एतेन गतसेतुजलसेतुबन्धवर्णनादिष्वसंबन्धे संबन्धरूपातिशयोक्तिरस्तीत्यपि निरस्तम्। तथापि—

'कस्त्वं भोः कथयामि दैवहतकं मां विद्धि सा(शा)खोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते।
वामेनात्र वटस्त्वमध्वगजनः सर्वात्मना सेवते
न च्छायापि परोपकारकरिणी मार्गे स्थितस्यापि मे॥'

इत्यादावपि तदतिशयोक्तेरेवापत्तेः। अप्रस्तुतवाक्यार्थात्सारूप्येण प्रस्तुतवाक्यार्थप्रतीतिरूपविच्छित्तिविशेषणालंकारान्तरत्वमिति चेत्। तर्हि इहापि प्रस्तुतधर्मिगतत्वेन वर्ण्यमानादप्रस्तुतवृत्तान्तात्तद्गतत्वेन प्रकृतवाक्यार्थप्रतीतिरूपविच्छित्तिविशेषसद्भावादलंकारान्तरत्वमेव कल्पयितुमुचितमिति सर्वालंकारविलक्षणमिदं ललितमिति।

अत एव।

'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥'

इति काव्यप्रकाशकारीयं निदर्शनोदाहरणमयुक्तमेव। ईदृशमत्या सूर्यवंशवर्णनमिच्छामीति प्रस्तुतार्थानुपन्यासात्। एवम्—

'अनायि देशः कतमस्त्वयाद्य वसन्तमुक्तस्य दशां वनस्य।
त्वयाप्तसंकेततया कृतार्था श्रव्यापि नानेन जनेन संज्ञा॥'

अत्र कतमो देशस्त्वया परित्यक्त इति प्रस्तुतार्थमनुपन्यस्य वसन्तमुक्तस्य वनस्य दशामनायीति तत्प्रतिबिम्बभूतार्थमात्रोपन्यासादयमेवालंकार इति॥

तत्र वदन्ति—यद्यप्येकधर्मिकप्रस्तुताप्रस्तुतव्यवहारद्वयोपादाननिबन्धना निदर्शनेत्यत्र विवादाभावः। तथापि व्यवहारद्वयवद्धर्म्यभेदप्रतिपादनाक्षिप्तो

1. ख-पुस्तके 'सेतु'पदं नास्ति.

व्यवहारद्वयाभेद इति वाक्यार्थनिदर्शनास्वरूपम् । तत्र च प्रतिपादनं श्रौतमेवेत्यत्र नाग्रहः, किंतु प्रतिपादनमात्रम् । एवं च प्रस्तुतार्थस्य शाब्दानुपादानेऽपि आर्थे तदादायैव निदर्शनायामेवैतदन्तर्भाव उचितः । अन्यथा लुप्तोपमादेरप्युपमाबहिर्भावापत्तेः ॥ यत्त्वतिशयोक्तिरेव रूपकसंभवाद्विलीयेतेति । तन्न । यत्र ह्यलंकारशरीरमुभयत्रापि अविलक्षणं तत्रैक एवालंकारो गण्यते । अलंकारशरीरस्य वैलक्षण्ये तु पृथगेवालंकार इति वस्तुस्थितिः । प्रकृतस्थले च प्रस्तुतवृत्तान्तस्य शाब्दार्थत्वयोरुभयत्रापि शरीरवैलक्षण्याभावादेकालंकारत्वमेव युक्तम् । रूपके तु विषयतावच्छेदकरूपेणाभासमान एव विषये विषयितावच्छेदकावच्छिन्नाभेदश्चातिशयोक्तिशरीरमिति वैलक्षण्येन तदुभयोः पार्थक्यव्यवस्थापनात् । आहार्यनिश्चयविषयीभूतो विषये विषय्यभेद एव रूपकम् । तत्र विषयतावच्छेदकरूपेणैवोपस्थितेर्विषयविशेषणत्वे गौरवेण तदनिवेशात् । एवं च भेदे रूपातिशयोक्त्यपह्नुत्योरपि रूपक एवान्तर्भावः इत्यत्र क्षत्यभावादिष्टापत्तिरित्यतिशयोक्तेरपि रूपकान्तर्भावस्वीकर्तॄणां मते तु ललितस्यालंकारान्तरत्वशङ्कापि न संभवतीति रसगङ्गाधरकृतः ॥

इति निदर्शना ।

---

अप्रस्तुतप्रशंसां निरूपयति—

**अप्रस्तुतप्रशंसा प्रकृतप्रतिपत्तिरेतया यत्र ।**
**कार्ये हेतौ व्याप्यव्यापकयोरन्यगीः समेतस्य ॥ १ ॥**

यत्र अप्रस्तुतार्थप्रोक्त्या प्रस्तुतार्थप्रतीतिर्जायते सा अप्रस्तुतप्रशंसा । समासोक्तौ तु प्रस्तुतेनाप्रस्तुतप्रतीतिरिति विशेषः । एतद्भेदानाह—कार्ये इति । सप्तम्यन्तेषु प्रकृते इत्यन्वीयते । अन्यत्वं च प्रकृतनिरूपकप्रतियोगिकं ग्राह्यम् । तथा च कार्ये प्रस्तुते कारणस्य, कारणे प्रस्तुते कार्यस्य, व्याप्यव्यापकपदे सामान्यविशेषपरे । विशेषे प्रस्तुते सामान्यस्य, सामान्ये प्रस्तुते विशेषस्योक्तिरिति चत्वारो भेदाः । तुल्ये प्रकृते तुल्योक्तिरिति पञ्चमः । तत्र कार्ये प्रस्तुते कारणस्योक्तिर्यथा—

'तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया
साश्लिष्टा रभसेन तत्सुखवशात्तस्याश्च तद्विस्मृतम् ॥'

अत्र किं त्वयि तया मानो मुक्त इति कार्यमात्रं पृच्छन्तं सखायं प्रति नायकेन मानत्यागकारणमुपन्यस्तम् ।

कारणे प्रस्तुते कार्याभिधानं यथा—

'[1]तं से गुणम्मि जाअं कलम्बगन्धेण जं गआ मोहम् ।
इअरागज्जिअसद्दो जीयेण विणा ण वोलन्तो ॥'

एतेन त्वद्विरहबाधा तस्यामतिमात्रमुज्जृम्भते इति प्रस्तुते मोहरूपं तत्कार्यमुक्तम् ।

सामान्यप्रस्तावे विशेषवचनं यथा—

'[2]रण्णाउ तणं रण्णाउ पाणिअं सव्वअं सअंगाहम् ।
तह वि मआणँ मईणँ अ आमरणन्ताइँ पेम्माइं ॥'

अत्र निसर्गप्रेमा उपाधिं नापेक्षते इति सामान्ये वाक्ये विशेष उदाहृतः ।

विशेषे प्रकृते सामान्योपन्यासो यथा—

'[3]णिद्दं लहन्ति कहिअं सुणन्ति खलिअक्खरं ण जम्पन्ति ।
जाहिँ ण दिट्ठो सि तुमं ताओ च्चिअ सुहअ सुहिअओ ॥'

अत्र यद्यहं त्वां [4]नाद्रक्ष्यं तर्हि [5]सुखिताभविष्यमिति विशेषे वाच्ये सामान्यमुक्तम् । तुल्येन तुल्याभिधाने त्रयः प्रकाराः । श्लेषः, समासोक्तिः,

---

१. 'तदस्य गुणे जातं कदम्बगन्धेन यद्गता मोहम् । (?)
इतरागर्जितशब्दो जीवेन विना न व्यतिक्रामति ॥' (?) [इति च्छाया ।]

२. 'अरण्यात्तृणमरण्यात्पानीयं सर्वतः स्वयंग्राहम् ।
तथापि मृगाणां मृगीणां चामरणान्तानि प्रेमाणि ॥' [इति गाथा० ३।८७]

३. 'निद्रां लभन्ते कथितं शृण्वन्ति स्खलिताक्षरं न जल्पन्ति ।
याभिर्न दृष्टोऽसि त्वं ता एव सुभग सुखिताः ॥' [इति गाथा० ५।१८]

४. 'नाद्राक्षं' ख. ५. 'सुखी नाभवि' ख.

सादृश्यमात्रं च। यद्यपि द्वयोरेव प्रकृतत्वे द्वयोरेवाप्रकृतत्वे वा श्लेषोन्मेषः, प्रकृतेऽप्रकृतव्यवहारारोपे च समासोक्तिरुच्छ्वा(ल्ला)सः, तथापि तदाभासत्वात्तथोक्तमित्याहुः ॥

एतेन—'तादृशस्थले श्लिष्टविशेषेणाप्यप्रस्तुतप्रशंसा, न तु समासोक्तेस्तदनुग्राहकत्वम्, तस्या एतदलंकारविरुद्धत्वेनानुग्राहकत्वायोगात्॥ यत्तु काव्यप्रकाशे 'समासोक्तिरनुग्राहकत्वम्' इत्युक्तम्, तन्न। प्रतीयमानवृत्तान्तस्य प्रस्तुतत्वेऽनुग्राहिकायाः समासोक्तेरेवाभावात्। प्रस्तुतस्य वाच्यतायामेव तदभ्युपगमात्। अप्रस्तुतत्वे त्वनुग्राह्याया अप्रस्तुतप्रशंसाया एवाभावात्। अप्रस्तुतवृत्तान्तस्य वाच्यतायामेव तदभ्युपगमात् इति दूषणम्। 'श्लिष्टविशेषणाक्षिप्तद्वितीयार्थमात्रं समासोक्तिः' इत्यभिप्रायेण कथंचित्समाधेयमिति योजनं च रसगङ्गाधरीयमपास्तम्। तत्र श्लेषो द्वेधा—धर्ममात्रे धर्मधर्मिणोर्द्वयोश्चेति भेदात्।

तत्र धर्ममात्रश्लेषे यथा मम—

'मित्रस्यावह पक्षपातघटनां सेवस्व दुर्गं जलं
पत्राणां च सहस्रमाश्रय कुरु त्वं कण्टकानां वृतिम्।
विष्वग्वायुचरानुदीरय विधे ह्येवंविधेयानली-
न्यक्कारस्तु सरोज दुष्प्रतिकरः कान्ताकटाक्षाहितः॥'

अत्र विशेष्यवाचि सरोजपदं न श्लिष्टम्।

विशेषणविशेष्योभयश्लेषे यथा—

'रसिअ विअड्ढ विलासिअ समअण्णअ सच्चअं असोओ सि।
वरजुअइचलणकमलाहओ वि जं विअससि सतण्हम्॥'

अत्र हि तत्सदृशः कामशास्त्राभिज्ञो युवा प्रतीयते। न चात्र श्लेष एवोभयार्थबोधक इति वाच्यम्। अशोकपदस्य वृक्षे रूढत्वेन प्रथममेव तत्प्रतीतेः। तदुक्तम्—'अवयवशक्तेः समुदायशक्तिर्बलीयसी' इति। न

१. 'दितः' ख.

२. 'रसिक विदग्ध विलासिन्समयज्ञ सत्यमशोकोऽसि।
वरयुवतिचरणकमलहतोऽपि यद्विकससि सतृष्णम्॥' [इति गाथा० ५।५]

न प्रकरणादिसत्त्वे योगार्थ एव बलवान् । यथा—'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्ष्या वाजिभ्यो वाजिनम्' इत्यत्र वाजिपदस्याश्वे रूढावपि 'वाजमन्नमस्त्येषाम्' इति व्युत्पत्त्या आमिक्षारूपान्नयोगिनां विश्वेषां देवानामेवोपस्थितिरिति वाच्यम् । प्रकरणादिकालीनयोगशक्तिजन्यबोधस्य समुदायशक्तिजन्यबोधप्रतिबन्धकतया अशोकपदाच्छोकाभाववत्पुरुषबोधकाले वृक्षत्वप्रकारकबोधविरहेण श्लेषविरहः । इयांस्तु विशेषः । यत्पुरुषपरत्वज्ञानाभावकाले वृक्षत्वप्रकारकबोधस्यैवोत्पत्त्या तत्राप्रस्तुतप्रशंसात्वं निर्बाधम् । तत्सत्त्वेऽपि पुरुषस्यैव प्रकृतत्वेन ज्ञानविरहे ततो वृक्षत्वप्रकारकज्ञानोत्पत्त्या तदेव निराबाधम् । अत्रैव पुरुषस्य प्रकृतत्वज्ञाने तु समासोक्तिरेवेति ॥

समासोक्त्या यथा—

'येनानन्दमये वसन्तसमये सौरभ्यहेलावल-
भृङ्गालीमुखरे रसालशिखरे नीताः पुरा वासराः ।
आः कालस्य वशेन कोकिलयुवा सोऽप्यद्य सर्वा दिशः
खेलद्वायसचञ्चुघातविदलन्मूर्धा मुहुर्धावति ॥'

अत्र कस्यचित्स्वामिनः प्रसादेन सुखातिवाहितदिनस्य पश्चाद्दुर्जनैः पीड्यमानस्य सत्पुरुषस्य प्रतीतिः ॥

यथा वा—

'नाभ्यासो नभसि क्रमे कररुहैर्न क्रौर्यमालम्बितं
जङ्घालत्वमभून्न भूधरगुहापर्यन्तभूलङ्घने ।
पातुः स्तन्यमनादराद्दलितया दृष्ट्वैव सिंहीशिशो-
र्द्राग्दानद्रवनिम्नगाः करटिनां गण्डेषु गण्डूषिताः ॥'

यथा वा मम—

'तत्तद्दोहदबद्धसौहृदभरास्ते ते महानोकहा
बंहीयांस इहासते कुरबक त्वामेकमेव त्वहम् ।
तारुण्यान्धपुरन्ध्रिपीवरकुचाप्रत्यूहनिष्पीडना-
साकाङ्क्षं कलयाम्यशेषरसिकश्रेणीशिरःशेखरम् ॥'

अत्र कस्यचिदतिरसिकस्य प्रकृतस्य कामिनीकुचपरिरम्भलोलुपत्वरूपधर्मस्याप्रकृते कुरबके आरोप्यमाणस्यावच्छेदकतया प्रकृतपुरुषप्रतीतेः समासोक्तिच्छाया, न तु समासोक्तिरेव । प्रकृतेऽप्रकृतव्यवहारारोपस्य तत्त्वात् । अत्र चाप्रकृते प्रकृतव्यवहारारोपात् ॥

सादृश्यमात्रेण यथा मम—

'इन्द्रोपेन्द्रौ मिथस्तौ न विदयमहतां सोदरस्नेहबद्धौ
वादस्थानं तु ताक्ष्योपरिगमनसुखं यातवान्पारिजातः ।
किं तु स्फूर्जद्गरुत्मन्नखकुलिशशिखाभिन्नमातङ्गपाता-
घातापातालखाते बत फलति मृषा पारिजाते क्रमोऽयम् ॥'

अत्र कयोश्चिद्वादिप्रतिवादिनोर्विरोधे तटस्थस्य कस्यचित्पीडायां प्रकृतायां पारिजातहरणप्राप्तिप्रसिद्धपारिजातपात्रपर्वतवृत्तान्तोक्त्या तत्सादृश्येन प्रकृतप्रतीतेः । सादृश्येन प्रतीतावपि त्रयः प्रकाराः । क्वचिद्वाच्यार्थे व्यङ्ग्याभेदानारोपेण तस्य च प्रोक्तधर्मस्य वाच्यव्यङ्ग्योभयसाधारण्येन वाच्येऽप्युपपद्यमानत्वात् ।

यथा—

'धूलिमइलो[1] वि पङ्कङ्किओ वि तणरइअदेहभरणो वि ।
तह वि गओ च्चिअ गरुअत्तणेण ढक्कं समुव्वहइ ॥'

परिच्छदहीनं जननिन्दितं च नायकं कामयमानाया इयमुक्तिः । धूलीमालिन्यादीनां गजे सत्त्वेन व्यङ्ग्यनायकनिष्ठधर्माध्यारोपानपेक्षा ॥

क्वचिद्वाच्ये व्यङ्ग्यधर्माध्यारोपेण ।

यथा मम—

'देवस्यास्य त्रिभुवननमस्कार्यपादाम्बुजस्य
स्थित्वा मूर्धोपरि विधुकले मा मदस्ते प्रसाङ्क्षीत् ।
जूटाबन्धावसरगुणितक्रूरकुम्भीनसेन्द्र-
स्फूर्जद्भोगावलिकवलिता लप्स्यसे तद्विपाकम् ॥'

---

1. 'धूलिमलिनोऽपि पङ्काङ्कितोऽपि तृणरचितदेहभरणोऽपि ।
तथापि गज एव गुरुकत्वेन ढक्कां समुद्वहति ॥' [इति गाथा० ६।२६]

अत्राचेतनायां विधुकलायां संबोध्यत्वं मदप्रसक्तिश्चेति द्वयमनुपपन्नम्। व्यञ्जनीयोत्तमपुरुषाहृतकुटिलनायिकाधर्मत्वादारोपितम्॥

क्वचिदंशावच्छेदेनाध्यारोपानध्यारोपाभ्यां यथा—

'शैत्यं नाम गुणस्तवैव सहजः स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां भवन्ति शुचयः स्पर्शेन यस्यापरे।
किं चान्यत्कथयामि ते स्तुतिपदं त्वं जीवनं जीविनां
त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः॥'

अत्र कंचित्सत्पुरुषं प्रति गुणप्रख्यापनपूर्वकमुपालम्भो द्योत्यः। तत्र शैत्यं स्पर्शविशेषो जलीयविशेषगुणत्वेन ख्यातः। परदोषेऽपि क्रोधपारतन्त्र्याभावरूपा क्षमा च। स्वच्छता द्रव्यान्तरावयवासंकीर्णत्वं जन्मविद्याकर्मजन्यशुद्धिमत्त्वं च। शुचित्वमुपधा(पा)तकसंसर्गराहित्यमुभयत्रापि। जीवनत्वं च तत्कारणत्वम्। नीचपथो निम्नमार्गः, निषिद्धाचारश्च। एवं च स्पर्शविशेषादिसंबन्धेन श्लाघ्यत्वाभावात् तेषु क्षान्त्यादित्वारोपः। तथा निम्नमार्गगामित्वेन निन्दानुपपत्त्या तत्र निषिद्धाचारत्वारोपः। शुचित्वजीवनत्वयोस्तु स्तुतिहेतुत्वादेव नान्यारोपापेक्षेति। एवं च क्षान्त्याद्यभेदाध्यवसितेन शैत्यादिना शुचित्वादिना च शुद्धेनैव स्तुतेः निषिद्धाचाराभेदाध्यवसितेन च निम्नमार्गगामित्वेन निन्दाया अनुपपत्तिरिति वाक्यार्थसिद्धिः। एवं प्राचां मतमनुसृत्य पञ्च भेदा व्याख्याताः।

दीक्षितास्तु—संबन्धान्तरेण प्रस्तुतगमनेऽप्येषा दृश्यते। यथा—

'तापत्रयौषधवरस्य तव स्मितस्य
निश्वासमन्दमरुता निबुषीकृतस्य।
एते कडंगरचया इव विप्रकीर्णा
जैवातृकस्य किरणा जगति भ्रमन्ति॥'

अत्राप्रस्तुतानां चन्द्रकिरणानां भगवन्मदस्मितरूपदिव्यौषधविशेषधान्यविशेषकडंगरतादात्म्योत्प्रेक्षया स्मितस्य तत्सारतारूपोत्कर्षप्रतीतिः। न

चात्र स्मितकडंगरयोः कार्यत्वादिः कश्चिदुक्तः संबन्धोऽस्ति । अतोऽत्र सहोत्पत्त्यादिकमेव संबन्धतयाश्रयणीयम् ।

एवं कार्यकारणयोः प्रत्येकमेव प्रस्तुतार्थप्रत्यायकत्वमभिसंधाय द्वे अप्रस्तुतप्रशंसे दर्शिते । ततोऽन्यत्रापि दृश्यते ।

यथा—

'कालिन्दि ब्रूहि, कुम्भोद्भव, जलधिरहं नाम गृह्णासि कस्मा-
च्छत्रोर्मे, नर्मदाहं त्वमपि वदसि मे नाम कस्मात्सपत्न्याः ।
मालिन्यं तर्हि कस्मादनुभवसि, मिलत्कज्जलैर्मालवीनां
नेत्राम्भोभिः, किमासां समजनि, कुपितः कुन्तलक्षोणिपालः ॥'

अत्र किमासां समजनीति मालवीनां रोदननिमित्ते पृष्टे तत्प्रियमरणरूपनिमित्तमनाख्याय कुपितः क्षोणिपालः इति तत्कारणमभिहितमिति कारणनिबन्धना । अत्रैव मालवान्प्रति प्रस्थितेन कुन्तलेश्वरेण 'किं ते निर्जिताः' इति प्रश्ने तद्वधान्तर्भाविनर्मदाप्रश्नोत्तररूपं कार्यमभिहितमित्यत्रैव कार्यनिबन्धनापि। पूर्वस्यां प्रश्नः शाब्दः, उत्तरस्यां त्वार्थ इति विशेष इत्याहुः।

अत्रेदं चिन्त्यम् । स्मितकडंगरचययोः कार्यत्वादिसंबन्धाभावेऽप्यभेदाध्यवसायविषयीभूतदिव्यधान्येन सह कडंकरचयस्यावयवावयविभावस्य सत्त्वेन कार्यत्वसंबन्धोऽस्त्येव । न च यद्रूपावच्छिन्ने प्रस्तुते अप्रस्तुतव्यङ्ग्योऽर्थः प्रतीयते तद्रूपावच्छिन्ने प्रकृते अप्रकृतस्य कार्यत्वादिसंबन्धोऽपेक्षितः । अत्र च स्मितत्वावच्छिन्ने एव स्थिते सारत्वरूपोत्कर्षः प्रतीयते, न तु दिव्यधान्यतादात्म्यावच्छिन्ने । अतो दिव्यधान्यकडंकरयोरुक्तसंबन्धसत्त्वेऽपि स्मितकडंकरयोस्तदभावात् संबन्धान्तरानुसरणमावश्यकमेवेति वाच्यम् । अप्रस्तुतव्यङ्ग्यार्थप्रकारकज्ञानविशेष्यभूते प्रकृते अप्रकृतमात्रसंबन्धस्यैव लाघवेन विवक्षितत्वात् । व्यङ्ग्यार्थबोधधर्मितावच्छेदकीभूतधर्मावच्छिन्नत्वनिवेशे गौरवात् । विशेष्यत्वं च तत्त्वेन विवक्षितत्वमात्रम् । अतः स्मितस्यैव तादृशज्ञानविशेष्यतया तत्राप्रकृतसंबन्धो नास्तीत्याकारकबोधाभावः । तद्विशेष्यत्वेन विवक्षितस्य स्मितस्य

दिव्यधान्यतादात्म्याध्यवसायदशायामप्रकृतसंबन्धसत्त्वात् । एवं द्वितीयदोषस्याप्यनवकाशः । तथा हि । तत्र किमुभयोरेकत्रदर्शनेन प्रत्येकं तत्प्रयोजकत्वानुपपत्तिरिति विवक्षितम्, उत कारणकारणस्य कार्यकार्यस्य च निर्देशात् कार्यत्वकारणत्वाभाव इति । नाद्यः । क्वचित्प्रत्येकपुरस्कारेण तद्दर्शनादुभयोः प्रत्येकप्रयोजकत्वे स्थिते क्वचिदुभयसमावेशस्यादोषत्वात् न्यूनत्वानापादकत्वाच्च । तत्राप्येकस्यामेवाप्रस्तुतप्रशंसायां द्वयोः संबन्धयोरप्रयोजकत्वाच्च संबन्धनिबन्धनयोर्द्वयोरप्रस्तुतप्रशंसयोरेकत्र निबन्धमात्रेण तदातिरेक्याभावाच्च । न द्वितीयः । कार्यकारणपदयोः प्रयोज्यप्रयोजकसाधारणताया विवक्षितत्वात् । एवं च मालवीरोदनकारणीभूततत्प्रियमरणकारणकुन्तलेशकारणमात्रोक्तौ तत्प्रस्थानकार्यविजयकार्यप्रश्नादिमात्रोक्तौ च तस्यानपायादिति कृतं बहुना ॥

यदप्युक्तम्—

'प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः ।
किं भृङ्ग सत्यां मालत्यां केतकीकण्टकेच्छया ॥'

अत्र वाच्यव्यङ्ग्यवृत्तान्तयोर्द्वयोरपि प्रकृतत्वेन समासोक्त्यप्रस्तुतप्रशंसाभ्यामतिरिक्तत्वस्य स्फुटत्वात् । प्रस्तुतनिष्ठव्यञ्जकतानिरूपितव्यङ्ग्यताशाल्यप्रस्तुतकत्वेऽप्रस्तुतनिष्ठव्यञ्जकतानिरूपितव्यङ्ग्यताशालिप्रस्तुतकत्वे च तदुभयोपगमात् । अत्र हि प्रियेण सह विहरन्त्या उक्तौ भृङ्गोऽपि प्रकृत एव । न च भृङ्गसंबोधनानुपपत्त्या प्रियमात्राभिप्रायेणैवेयमुक्तिरिति वाच्यम् । अचेतनेऽप्यामन्त्रणदर्शनेन तदविरोधात् । एवं च प्रस्तुतेन वाच्येन भृङ्गोपालम्भेन पत्न्याः कुलवध्वाः सौन्दर्यादिगुणशालिन्याः सत्त्वे[1] क्रूरजनपरिवृतायां सर्वस्वापहरणसंकल्पदुरासदायां कण्टकाकुलकेतकीकल्पायां वेश्यायां समागमेन किमित्युपालम्भो द्योत्यते ।

यथा वा—

'अन्यासु तावदुपमर्दसहासु भृङ्ग
लोलं विनोदय मनः सुमनोलतासु ।

1. 'सत्त्वे' इति पदं पुस्तके त्रुटितम्.

मुग्धामजातरजसं कलिकामकाले
व्यर्थं कदर्थयसि किं नवमालिकायाः[1] ॥'

प्रौढाङ्गनासत्त्वेऽपि बालां क्लेशयति कामिनीप्रकृतभृङ्गोपालम्भेन तत्प्रतीतिः ॥

यथा वा—

'कोशद्वन्द्वमियं दधाति नलिनी कादम्बचञ्चुक्षतं
धत्ते चूतलता नवं किसलयं पुंस्कोकिलास्वादितम्।
इत्याकर्ण्य मिथः सखीजनवचः सा दीर्घिकायास्तटे
चेलान्तेन तिरोदधे स्तनतटं बिम्बाधरं पाणिना ॥'

अत्रेयमिति दीर्घिकेत्यादि चोक्त्या वाच्यार्थस्य प्रस्तुतत्वनिर्णयः। नायकदन्तव्रणाङ्किताधरविशिष्टनायिकारूपप्रकृतव्यङ्ग्यार्थप्रकाशनं च चतुर्थचरण एव स्पष्टम्। आद्योदाहरणद्वयेऽन्यायदेशध्वनित्वं प्राचीनैरुक्तम्। अप्रस्तुतप्रशंसायामप्रस्तुतत्वेन वाच्यार्थस्यावर्णनीयतया तत्राभिधायां विरहितायां वाच्यार्थेनाक्षेपात् प्रस्तुतार्थव्यक्तिरलंकारः सः। इह तु वाच्यार्थस्यापि प्रस्तुतत्वेन तत्रैव पर्यवसानसंभवेऽपि वस्तुसौन्दर्यबलेनाभिमतार्थव्यक्तिर्ध्वनिरेवेति। वस्तुतोऽत्राप्यत्रालंकारध्वनित्वमेव। तृतीयस्यानलंकारत्वे तु न कस्यचिद्वादः। व्यङ्ग्यार्थस्य चतुर्थचरणेन वाच्यत्वमापादितस्य ध्वनित्वायोगात्।

'शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः।
यत्राविःक्रियते स्वोक्त्या सैवान्यालंकृतिर्ध्वनेः ॥'

इति ध्वनिकारोक्तेरिति ॥

तत्र रसगङ्गाधरकृतः—अत्राप्यप्रस्तुतप्रशंसैव भवतीति नालंकारान्तरकल्पनम्। किंचिदुक्तिवैचित्र्येण तत्कल्पनेऽलंकारानन्त्यप्रसङ्गात्। न च तल्लक्षणानाक्रान्तत्वात्कथमेतदिति वाच्यम्। न ह्यप्रस्तुतत्वं सर्वथा प्रस्तावराहित्यं विवक्षितम्, किं तु मुख्यतात्पर्यविषयीभूतार्थातिरिक्तत्वम्। इदं

---

[1] 'भ्रमरः सदैव' ख.

च सर्वथैवाप्रस्तुते प्रस्तुतेऽपि मुख्यतात्पर्याविषयीभूते च समानमेव। अतो भृङ्गादेस्तत्र सत्तामात्रेण प्रकृतत्वेऽपि मुख्यतात्पर्यस्य नायिकाद्युपालम्भ एव सत्त्वादप्रस्तुतेन प्रस्तुतप्रतीतिरिति तल्लक्षणाक्रान्तत्वं स्पष्टमेवेत्याहुः ॥

इत्यप्रस्तुतप्रशंसा ।

---

अतिशयोक्तिं निरूपयति—

अप्रकृतेन निगीर्णे साध्यवसानाश्रयात्प्रकृते ।
प्रकृतस्यान्यत्वोक्तौ यद्येवं स्यात्तथापत्तौ ॥ १ ॥
स्याज्जन्यजनकपौर्वापर्यत्यागश्च सा त्वतिशयोक्तिः ।

यत्र साध्यवसानलक्षणया उपमेयस्योपमानरूपत्वेन विवक्षया उपमानपदमेव प्रयुज्यते सा प्रथमा ।

यथा 'चन्द्रोऽयम्' इत्यादौ अध्यवसानमारोपविषयस्य आरोप्यमाणेन तादात्म्यविवक्षा । निगीर्णे विशिष्य तद्वाचकपदेनानुपात्ते इत्यर्थः । तत्र मुखादिपदाप्रयोगान्मुखत्वादिवैधर्म्यानुपस्थित्या अनाहार्यभेदबुद्धिः। रूपके तु मुखादिपदस्यापि प्रयोगात् आहार्यैवाभेदप्रतीतिरित्युक्तम् । एवं च मुखादीनां चन्द्राभिन्नत्वेनोपस्थितौ रूपकम्, चन्द्रत्वेनोपस्थितौ त्वतिशयोक्तिरिति निष्कर्षः । उपमेयतावच्छेदकधर्मावच्छिन्नविशेष्यतानिरूपिताभेदसंसर्गकोपमानतावच्छेदकधर्मावच्छिन्नप्रकारताशालिवोधत्वं सारोपलक्षणायाः, उपमेयतावच्छेदकधर्मावच्छिन्नोपमेयनिष्ठविशेष्यताकोपमानतावच्छेदकधर्मावच्छिन्नप्रकारताशालिवोधत्वं च साध्यवसानलक्षणायाः कार्यतावच्छेदकमिति रहस्यम् ।

यथा—

'लतामूले लीनो हरिणपरिहीनो हिमकरः
स्फुरत्ताराकारा पतति जलधारा कुवलयात् ।
धुनीते वन्धूकं तिलकुसुमजन्मा हि पवनो
वहिर्द्वारे पुण्यं परिणमति कस्यापि कृतिनः ॥' .

अत्र मुखनयनाधरनासिकारूपाणामुपमेयानां चन्द्रकुवलयवन्धूकतिलकुसुमरूपैरुपमानवाचकपदैस्तिरस्कारः ॥

यथा—

'विपुलं नितम्बबिम्बे मध्ये क्षामं समुन्नतं कुचयोः ।
अत्यायतं नयनयोर्मम जीवितमेतदायाति ॥'

अत्राग्निमित्रोक्तौ मालविकायां जीवितत्वारोपः । अतिप्रियत्वरूपसादृश्यसंबन्धात् ।

इमामेव रूपकातिशयोक्तिरिति व्यपदिदेश चन्द्रालोकः—

'रूपकातिशयोक्तिश्चेद्रूप्यं रूपकमध्यगम् ।
पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः ॥'

रूप्यमारोपाधिकरणं मुखादि । रूपकमध्यगं स्ववाचकपदमपहाय आरोप्यमाणार्थकपदेनैवोपस्थापितमित्यर्थः ।

यत्र धर्म्यन्तरवृत्तिधर्मसजातीयोऽपि धर्मस्तद्वृत्तिधर्मानवच्छिन्नतयोच्यते सा द्वितीया ।

यथा—

'[1]अण्णं लडहत्तणअं अण्णं च्चिअ कावि वत्तणच्छाआ ।
सामा सामण्णपआवइणो रेह च्चिअ ण होइ ॥'

अत्र प्रकृतनायिकावृत्तिलावण्यादिकं नायिकान्तरवृत्तिलावण्यादिकजातीयमपि तद्विजातीये तयोक्तमिति तदुत्कर्षप्रतीतिः । क्वचित्तस्यैवावस्थाविशेषेण तस्मात् भेदः ।

यथा—

'[2]तो चिरविओअतणुओ सइ वाहोमट्ठमउअजीआघाओ ।
जाओ अण्णो च्चिअ से विलइअधणुमेत्तवावडो वामभुओ ॥'

अत्र समुद्रभेदनार्थं धनुषि गृहीते श्रीरामभुजस्य तत्पूर्वावस्था तस्मादेवान्यत्वोक्त्यातिचण्डत्वप्रतीतिः ॥

---

१. 'अन्यत्सौकुमार्यं अन्यैव च कापि वर्तनच्छाया ।
श्यामा सामान्यप्रजापतेः रेखैव न भवति ॥' [इति च्छाया ।]

२. 'ततश्चिरवियोगतनुकः सदा बाष्पावमृष्टमृदुकजीवाघातः ।
जातोऽन्य एवास्य विगलितधनुर्मात्रव्यापृतो वामभुजः ॥' [इति सेतु० ५।२१]

यत्र च केनचिदापादकेन किंचिदापाद्यते सा तृतीया ।

यथा—

'उन्मीलद्गुडपाकतन्तुलतया रज्ज्वा भ्रमीरर्जय-
न्दंत्तान्तःश्रुतशर्कराचलमधः स्वेनामृतान्धाः स्मरः ।
नव्यामिक्षुरसोदधेर्यदि सुधामुत्थापयेत्सा भव-
जिह्वायाः कृतिमाह्वयेत परमां मत्कर्णयोः पारणाम् ॥'

यथा वा—

'खण्डक्षोदमृदि स्थले मधु पयः कादम्बिनीवर्षणा-
त्कृष्टे रोहति दोहदेन पयसां पिण्डेन चेत्पुण्ड्रकः ।
स द्राक्षाफलसेचनैर्यदि फलं धत्ते तदा त्वद्गिरा-
मुद्देशाय ततोऽप्युदेति मधुराधारस्तमप्प्रत्ययः ॥'

अत्र तर्के आपादकस्य स्वतोऽसिद्धत्वनियमादुपमेयत्वाभिमतस्य निरुपमत्वप्रतीतिः ।

यत्र कारणकार्ययोः पूर्वापरभावो वस्तुतः शीघ्रकारित्वविवक्षया विपरीतत्वेनोच्यते सा चतुर्थी । सापि द्वेधा । पूर्वं कार्यस्य पश्चात्कारणस्योक्तौ द्वयोस्तुल्यकालत्वोक्तौ च ।

आद्या यथा श्रीरुद्र(चन्द्र)देवानाम्—

'निःश्वासाः प्रथमं वेवुः पुनरमी धाराकदम्बानिला
बाष्पाम्भः प्रथमं पपात चरमं धाराधराणां पयः ।
प्राक्प्राणाश्चपलत्वमीयुरसमं कामं ततो विद्युत-
स्तस्यास्तद्विरहेण निर्दय मया दृष्टः क्रमश्चैष सः ॥'

यथा वा—

'माद्यद्वेतण्डगण्डच्युतमदलहरी संचरच्चञ्चरीकी-
झङ्कारानन्दगीताः कविभुवनभुवस्ताः पुरस्ताद्भवन्ति ।
पश्चादञ्चन्ति तेषामुपरि करुणया रामभूपालमौले-
रुद्वेलदुग्धवीचीबहलधवलिमाबद्धकक्ष्याः कटाक्षाः ॥'

१. 'दान' ख. २. 'सदा' ख.

अत्र राजदर्शनात्प्रागेव कवीनां संपत्तिरुक्ता ।

द्वितीया यथा मम—

'यस्मिन्क्षणे चकितबालमृगेक्षणायाः
कर्णान्तभूमिमभिजृम्भितवान्कटाक्षः ।
तत्रैव मन्मथशिलीमुखसंचयेन
मन्मानसं समभवन्निचितं समन्तात् ॥'

अत्र कटाक्षबाणवेधयोरेकक्षणोत्पत्तिप्रतिपादनात्सहभावः । अत्र प्रथमातिशयोक्तौ प्रकृताप्रकृतेति सामान्यत एवोपादानात् । शुद्धसाध्यवसानलक्षणया अभेदोपचारेऽपि अतिशयोक्तिरेव । तत्र धर्मभेदे धर्म्यभेदाध्यवसायो यथा—

'कर्णलम्बितकदम्बमञ्जरीकेसरारुणकपोलमण्डलम् ।
निर्मलं निगमवागगोचरं नीलिमानमवलोकयामहे ॥'

अत्र नीलत्वाश्रये भगवति नीलत्वारोपः । चन्द्रोऽयमित्यादौ सादृश्यस्याध्यवसाननिमित्तत्वाद्गौणत्वम् । आश्रयत्वादिसंबन्धस्य तन्निमित्तत्वे तु शुद्धत्वमिति विवेकः ।

'भेदाविमौ च सादृश्यात्संबन्धान्तरतस्तथा ।
गौणौ शुद्धौ च विज्ञेयौ—

इति काव्यप्रकाशोक्तेः । तस्मात्सादृश्यातिरिक्तेन संबन्धेन यत्रान्यस्मिन्नन्यत्तादात्म्यारोपः सा शुद्धसाध्यवसानेति विज्ञेयम् ।

कार्ये कारणाभेदाध्यवसानं यथा—

'[1]तो हरिवइजसपन्थो राहवजीअस्स पढमहत्थालम्बो ।
सीआवाहविमोक्खो दहमुहवज्झदिअहो उवगओ सरओ ॥'

अत्र बाष्पविमोक्षहेतुत्वेन तदारोपः ॥

---

१. 'ततो हरिपतियशःपथो राघवजीवस्य प्रथमहस्तालम्बः ।
सीताबाष्पविमोक्षो दशमुखवध्यदिवस उपगतो शरत् ॥' [इति सेतु० १।१६]

यथा वा मम—

'आकृष्टिर्हृदयस्य विस्मयततेः सृष्टिर्दृशोर्बन्धनं
प्रोल्लासो मकरध्वजस्य जगतीवामभ्रुवां न्यक्कृतिः ।
उद्रेकः प्रमदस्य विभ्रमततेर्निर्दम्भमुज्जृम्भणं
प्रत्यासत्तिरसौ रसस्य जयति त्रस्यत्कुरङ्गेक्षणा ॥'

एवं च—

'अभेदेनाभिधाहेतुर्हेतोर्हेतुमता सह ।'

इति साहित्यदर्पणोक्तहेत्वलंकारस्यात्रैवान्तर्भाव इति नातिरिक्तत्वशङ्कापि । तस्माद्भेदसत्त्वेऽप्यभेदाध्यवसायस्य सर्वस्याप्यन्यत्र निवेशो बोध्यः । द्वितीयभेदेऽप्यन्यत्वं यथाकथंचित्तत्प्रतीतिमात्रेण ।

यथा—

'सा रामणीयकनिधेरधिदेवता वा
सौन्दर्यसारसमुदायनिकेतनं वा ।
तस्याः सखे नियतमिन्दुसुधामृणाल-
ज्योत्स्नादिकारणमभून्मदनश्च वेधाः ॥'

अत्र मालतीसमवायिकारणे वेधसि च मृणालत्वाद्यारोपादन्यत्वावगमः ।

यथा वा—

'अस्याः स चारुर्मधुरेव कारुः श्वासं वितेने मलयानिलेन ।
अमूनि पुष्पैर्विदधेऽङ्गकानि चकार वाचं पिकपञ्चमेन ॥'

यथा वा मम रुक्मिणीपरिणये—

'आरब्धं प्रथमं न किंचिदपि यैर्द्रव्यं न वारप्स्यते
तैः कैश्चित्परमाणुभिः कमलभूस्तद्विग्रहं निर्ममे ।
अन्यारम्भकनिष्ठजातिसमवच्छिन्नैर्यदारभ्यते
सादृश्यं किल तन्निरूपितमहो तस्मिन्नुदेति ध्रुवम् ॥'

अत्र सहेतुकोऽन्यत्वप्रत्यय इति विशेषः । एवम् एकत्वे वार्थस्य स्थानभेदेन नानारूपतया प्रतीत्यापि भेदप्रतीतिः ।

1. 'प्रतीप' ख.

यथा—

'प्रत्यम्भो नवपुण्डरीकमुकुलश्रेणी, प्रतिक्ष्माधरं
पूर्णेन्दो रुचयः, प्रतिक्षितिरुहं वल्लीप्रसूनोत्करः।
किं चान्यत्कथयामि वीर जगतीमालिङ्गति त्वद्यशो-
विस्तारे प्रतिदेशमेव दिविषत्स्रोतस्वतीनिर्झरः॥'

अत्रैकस्या एव कीर्तेः स्थलविशेषेषु तत्तद्योग्यरूपेणाध्यवसानम्। एकमेकस्य बहुभिर्ज्ञातृभिरनेकप्रकारैर्ज्ञानेऽपि।

यथा—

'मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमा-
न्गोपीनां[1] स्वजनोऽसतां क्षितिभुजां शास्ताथ पित्रोः शिशुः।
मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनां
वृष्णीनां परदेवतेति विदितो रङ्गं गतः साग्रजः॥'

न चेदं रूपकमेवेति वाच्यम्। मल्लसंबन्ध्यशन्यादेरप्रसिद्धतया तद्रूपेण रूपणासंभवात्। प्रकृतमल्लादिनिष्ठाशनित्वप्रकारकज्ञानस्वरूपाभिन्नावेदनविषय इत्यर्थात्।

एवं च—

'निमित्तभेदादेकस्य वस्तुनो यदनेकधा।
उल्लेखनमनेकेन तदुल्लेखं प्रचक्षते॥'

यथा—

'गजत्रातेति वृद्धाभिः श्रीकान्त इति यौवतैः।
यथास्थितश्च वृद्धाभिर्दृष्टः शौरिः सकौतुकम्॥'

इत्यत्रोल्लेखालंकारपार्थक्यं दीक्षितोक्तं चिन्त्यमिति न्यायपञ्चाननादयः।

एवम्—

'अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।

1. 'गोपानां' ख.

वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥'

इत्यादौ संबन्धेऽसंबन्धरूपमतिशयोक्तिभेदान्तरं यद्ग्रन्थान्तरेषूक्तम्, तदपि न। 'सा मासामण्णे' इत्यादाविव 'प्रस्तुतस्य यदन्यत्वम्–' इत्यत्रैव तत्संग्रहादित्याहुः। तस्माद्यथाकथंचिद्भेदेऽपि भेदोक्तिरत्रैवान्तर्भाव्येति सिद्धम्।

एवम्—

'एकस्य बहुधोल्लेखेऽप्यसौ विषयभेदतः।
गुरुर्वचस्यर्जुनोऽयं कीर्तौ भीष्मः शरासने ॥'

इत्यत्र 'ग्रहीतृभेदाभावेऽप्येकेनैव ज्ञात्रा एकस्य बहुधात्मनाप्युल्लेखः' इति यद्दीक्षितमतम्, तदपि भेदेऽप्यभेदरूपप्रथमातिशयोक्तावेव तदन्तर्भावादुपेक्ष्यम् ॥

तृतीयभेदेऽपि कथंचिदसंभावितार्थकल्पनप्रतिपत्तिरेव विवक्षिता ॥

यथा—

'अस्य क्षोणिपतेः परार्धपरया लक्षीकृताः संख्यया
प्रज्ञाचक्षुरवेक्ष्यमाणबधिरश्रव्याः किलाकीर्तयः।
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरा-
न्मूकानां प्रकरेण कूर्मरमणीदुग्धोदधे रोधसि ॥'

अत्र यद्येवं स्यात्तदास्याकीर्तिः स्यादिति तात्पर्यपर्यवसानम् ॥

एतेन—

'संभावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये।
यदि शेषो भवेद्वक्ता कथिताः स्युर्गुणास्तव ॥
किंचिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनम्।
मिथ्याध्यवसितिर्वेश्यां वशयेत्खस्रजं वहन् ॥'

इति संभावनमिथ्याध्यवसित्योः पृथगलंकारत्वमपास्तम् ॥

रसगङ्गाधरकृतस्तु—वेश्यामित्यादेर्निदर्शनायामेवान्तर्भावः। न चात्र

निदर्शनामिथ्याध्यवसित्योः संकर इति वाच्यम्। मिथ्याध्यवसितौ मानाभावात्। अन्यथा—

'हरिश्चन्द्रेण संतप्ताः प्रगीता धर्मसूनुना।
खेलन्ति निगमोत्सङ्गे मातर्गङ्गे नमोऽस्तु ते॥'

इति सत्याध्यवसितेरप्यलंकारान्तरत्वापत्तेरित्याहुः॥

यत्तु—असंबन्धे संबन्धरूपातिशयोक्तितः किंचिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनाविच्छित्तिविशेषेण मिथ्याध्यवसितेर्भिन्नत्वमिति, तदसत्। यद्यर्थोक्तिरूपातिशयोक्तेर्विशेषस्य दुर्वचत्वात्। 'राकायामकलङ्कं चेत्' इत्यादावपि तन्मुखस्यान्यसदृशताया मिथ्याभूतायाः सिद्ध्यर्थं मिथ्याभूताया राकाचन्द्रिकायाः कलङ्कतायाः कल्पनाविशेषादिति दिक्॥

यच्च—

'प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पने।
कचाः कलिन्दजातीरतमालस्तोममेचकाः॥'

अत्र यमुनाप्ररूढत्वस्य तमालानां श्यामताहेतुत्वं नास्ति। निमित्तकारणगुणानां कार्यगुणाजनकत्वात्। तथापि श्यामलतातिशयकथनात्प्रौढोक्तिरलंकारकारान्तरमिति, तदपि न। तत्रापि यदि यमुनातीरप्ररोहणेन तमालानां नीलत्वातिशयः स्यात्, तदा केशानां श्यामतोपमा स्यादित्यत्रैव तात्पर्यात्॥

यदपि यत्र धर्मिविशेषसंसर्गाद्धर्म्यन्तरगतधर्मातिशयो व्यञ्जनाव्यापारगम्यस्तत्र प्रौढोक्तिः। यदपि वाच्यवृत्त्यैव तत्प्रयुक्तत्वावगमस्तत्रैव समालंकार एव। यथा—

'त्वत्तो जन्म सुधांशुशेखर तनुज्योत्स्नानिमग्नात्मनो
दुग्धाम्भोनिधिमुग्धवीचिवलयैः सार्धं परिक्रीडनम्।
संवासः सुरलोकसिन्धुपुलिने वादः सुधांशोः करैः
कस्मान्नोज्ज्वलिमानमञ्चतितमां देव त्वदीयं यशः॥'

अत्र यशसो धवलिमातिशयस्तत्तद्धर्मिसंबन्धप्रयुक्तत्वेन कथितः। अंशुकृतश्चन्द्रे तत्कृतो भगवति तत्कृतो राजनीत्येवमुत्तरोत्तरम्। उपचीयमानो

राजगतस्तु शब्दानुपात्तत्वात्प्रौढोक्तेरेव विषय इति रसगङ्गाधरकारैरुक्तम् । तदपि व्यङ्गयसमालंकारेणैवोपपत्तेरुपेक्ष्यम् ।

अत्र नवीनाः—उपमानोपमेयस्य निगीर्याध्यवसानमेवातिशयोक्तिः । प्रकारान्तरे त्वतिरिक्तालंकारान्तरकल्पनमेवोचितम् । न ह्येतच्चतुष्टयसाधारणातिशयोक्तिलक्षणं संभवति । येनैकधर्मावच्छिन्नत्वेनैकालंकारत्वं स्यात् । न चैतदन्यतमत्वमेव सर्वानुगतमस्तीति वाच्यम् । विच्छित्तिवैलक्षण्यसत्त्वेऽन्यतमत्वस्याप्रयोजकत्वात् । अन्यथा उपमानरूपकादिकतिपयान्यतमत्वं सकलान्यतमत्वं वातिशयोक्तिलक्षणं विधाय उपमादीनामप्येतद्भेदत्वापत्तेः । न चातिरिक्तालंकारकल्पने गौरवमिति वाच्यम् । प्रधानोत्कर्षकत्वरूपस्यालंकारत्वस्य त्वयाप्यङ्गीकारात् । पदार्थान्तरस्य च मयाप्यकल्पनात् । अलंकारविभाजकोपाधिपरिगणनस्य च पौरुषेयत्वादित्याहुः ॥

इत्यतिशयोक्तिः ।

प्रतिवस्तूपमां निरूपयति—

**सादृश्यपर्यवसिते यस्मिन्वाक्यद्वये धर्मः ।**
**एकोऽपि द्विरुपात्तस्तां प्रतिवस्तूपमामाहुः ॥ १ ॥**

अन्योन्यमेकवाक्यतालाभार्थमुपमानोपमेयभावपर्यवसन्नयोर्यत्र गुणक्रियादिरूप एक एव धर्मः प्रतिवाक्यं शब्दान्तरेण निर्दिश्यते सा प्रतिवस्तूपमा । प्रतिवस्तु उपमानोपमेयोभयदिशि उपमा तत्प्रयोजकसाधारणधर्मोऽस्यामिति व्युत्पत्तेरित्यर्थः । अर्थान्तरन्यासवारणाय सादृश्येति । तत्र तु समर्थ्यसमर्थकभावमात्रं विवक्षितम्, न तु सादृश्यम् । बिम्बप्रतिबिम्बभावेन दृष्टान्तेऽपि धर्मोपादानात् तत्रातिव्याप्तिवारणाय एक इति । तत्र भिन्नस्यैवोपादानान्न दोषः ।

यथा—

'त्वयि वीर परं विराजते दमयन्ती किलकिञ्चितं किल ।
तरुणीस्तन एव शोभते मणिहारावलिरामणीयकम् ॥'

अत्र मणिहारो यथा तरुणीकुच एव भाति तथा भैमीविलासस्त्वय्येवेति पर्यवसानम् । इयमेव वैधर्म्येण यथा रसगङ्गाधरे—

'गीर्भिर्गुरूणां परुषाक्षराभिस्तिरस्कृता यान्ति[1] नरा महत्त्वम् ।
अलब्धशाणोत्कषणा नृपाणां न जातु मौलौ मणयो वसन्ति ॥'

अत्र शाब्देन दृष्टान्तेन तद्गतः सामान्यधर्मावच्छिन्नव्यतिरेकसहचार आक्षिप्यते । तेन च सामान्यधर्मावच्छिन्नान्वयसिद्धिद्वारा विशेषावच्छिन्नान्वयनियमसिद्धिः । तथा हि—शाणोत्कषणाभावनृपमौलिवासाभावयोः शब्दात्प्रतीतावपि तेन पूर्वार्धसमर्थनं संभवतीत्यतः संस्काराभावोत्कर्षाभावयोः सहचाराक्षेपः । तेन च स्वविपर्ययतया संस्कारोत्कर्षयोरन्वयसहचारेण नियमसिद्धौ गुरुविनीतत्वरूपसंस्कारविशेष[2]भाजां महत्त्वप्राप्तिनियमः सिध्यति । एवमन्वयगर्भायामपि प्रतिवस्तूपमायां नियमविशेषस्य प्रकृतवाक्यार्थत्वेऽन्वयदृष्टान्तेन सामान्यान्वयनियमसिद्धिद्वारा प्रकृतनियमविशेषसिद्धिः । यत्र तु नियमविशेषरहितः केवलार्थः प्रकृतः तत्र त्वप्रकृतवाक्यार्थनिरूपितसादृश्यमात्रस्य प्रतीतिः, न तु नियमस्यापि अप्रयोजकत्वात् ।

यथा—

'भैरभ्रे[3] भासते चन्द्रो भुवि भाति भवान्बुधैः ।'

इत्यादावावृत्तिदीपके इति ततो भेदः—इत्युक्तम् । सादृश्यपर्यवसानं चात्र यद्यपि विधिनिषेधयोर्न संभवति, तथापि निषेधविपर्ययस्य सादृश्यं बोध्यम् । न च विपर्ययस्य वाक्यार्थत्वाभावात्कथं वाक्यार्थयोरौपम्यमिति वाच्यम् । वाक्यवेद्यतामात्रस्यैव तदर्थताया विवक्षितत्वादित्युक्तम् । अर्थावृत्तिः प्रस्तुतानामप्रस्तुतानां वा । इयं प्रस्तुताप्रस्तुतानामिति विशेषः । किंच । आवृत्तिदीपकं वैधर्म्येण न भवति । इयं तु वैधर्म्येणापि दृश्यते ।

यथा—

'यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् ।
न हि कस्तूरिकामोदः शपथेन विभाव्यते ॥'

इत्यादाविति दीक्षिताः ।

---

१. 'यां नितरां महत्त्वम्' इत्यादर्शे पाठः. २. 'विशेष'पदं ख-पुस्तके नास्ति. ३. भैर्नक्षत्रैरभ्र आकाशे इत्यर्थः.

रसगङ्गाधरकृतस्तु—नेदं वैधर्म्योदाहरणं युक्तम्[1]। प्रस्तुतधर्मिविशेषगतत्वेनोक्तस्यार्थस्य दार्ढ्याय स्वाक्षिप्तस्वव्यतिरेकसमानजातीयधर्म्यन्तरनिष्ठाप्रकृतार्थकथनस्यैव वैधर्म्योदाहरणरूपत्वात्। यथा 'गीर्भिर्गुरूणाम्–' इत्यत्र नरगतत्वेनोक्तार्थदार्ढ्याय तदाक्षिप्तस्य गुरुविनीतत्वव्यतिरेकप्रयुक्तमहत्त्वव्यतिरेकस्य सजातीयो मणिनिष्ठशाणोत्कषणव्यतिरेकप्रयुक्तनृपमौलिवासव्यतिरेक उक्तः। साजात्यं च व्यतिरेकान्तरप्रयुक्तत्वादिधर्मेण यथासंभवं बोध्यम्। प्रकृतोदाहरणे तु 'यदि गुणाः सन्ति तदा स्वयमेव प्रकाशन्ते' इति प्रस्तुतोऽर्थः। तस्य च व्यतिरेकः—'असन्तस्तूपायान्तरेणापि न प्रकाशन्ते' इति। उत्तरार्धे चैतत्सजातीयोऽर्थो न निबद्धः, किं तु स्वयमेव प्रकाशन्ते न परेणेति प्रस्तुतार्थसजातीय एव। शपथेन न विभाव्यते किं तु स्वयमेवेति प्रकृतार्थानुकूलतयैव पर्यवसानात्। वैधर्म्यस्य प्रकृतानुरूपत्वस्य व्याघातादनुपपत्तेः। तस्मात्साधर्म्येणैवेदमुदाहरणं युक्तम्। न चोपायान्तरेण न प्रकाशन्ते इत्यस्याक्षेपलभ्यत्वेन तद्घटितस्य प्रस्तुतवाक्यार्थस्योपायान्तरव्यावृत्तिघटितोत्तरवाक्यार्थेन कथं साधर्म्योपपत्तिरिति वाच्यम्। एवकारस्य स्वयमित्येतदुत्तरं घटनेनोपायान्तरव्यावृत्तेरपि पूर्ववाक्यार्थघटकत्वात्। विकसन्त्येवेति क्रियासंगत्यङ्गीकारे विकासात्यन्तायोगव्यवच्छेदप्रतीतेरेवापत्त्या तस्याश्चोत्तरवाक्यार्थाननुगृहीतत्वेन तत्परित्यागस्यावश्यकत्वात्। उत्तरार्धे उपायान्तरव्यावृत्तेरेवोक्त्या पूर्वार्धेऽप्यन्ययोगव्यवच्छेदस्याश्रयितुमुचितत्वादित्याहुः॥

इयं चालंकारान्तरविषयेऽपि[2] दृश्यते।

अप्रस्तुतप्रशंसाविषये यथा—

'इन्दुर्लिप्त इवाञ्जनेन जडिमा दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमदलं श्यामेव हेमप्रभा।.

---

१. अस्यापि वैधर्म्योदाहरणपरता यथा युक्ता तथा रसगङ्गाधरमर्मप्रकाशे नागेशभट्टैर्व्याख्यातम्. तत्सारस्त्वयम्—'आक्षेपलभ्येनापि' व्यतिरेकेण 'तत्त्वं किमपि काव्यानां जानाति विरलो भुवि। मार्मिकः को मरन्दानामन्तरेण मधुव्रतम्॥' इत्यत्र वैधर्म्योदाहरणत्वाङ्गीकारेणैतत्खण्डनं प्रत्याख्यातम्. २. 'अलंकारविषये' ख.

कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तृतं
सीतायाः पुरतश्च हन्त मिथिलाबर्हाः सगर्हा इव ॥'

अत्र इन्द्वादीनामपकृष्टत्वरूप एको धर्मः प्रतिवाक्यभिन्नेनाञ्जनलिप्तत्वादिनोक्तः ।

एवम्—'उत्क्षिप्तं सहकौशिकस्य पुलकैः' इत्यत्र एकस्यैव साहित्यस्य सहसार्धादिशब्दैरुपादानमिति वदन्ति, तत्रोभयत्रापि येषु वाक्येषु धर्मस्य शब्दान्तरेण निर्देशस्तेषां कथं मिथः सादृश्यमिति विचारणीयम् ॥

इयं च मालारूपेणापि दृश्यते ।

यथा—

'किं शेषस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष य-
त्किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः ।
किं त्वङ्गीकृतमुत्सृजन्कृपणवच्छ्लाघ्यो जनो लज्जते
निर्व्यूढप्रतिपन्नवस्तुषु सतामेकं हि गोत्रव्रतम् ॥'

अत्र हि चतुर्थपाद उपमेयार्थः । अभ्युपेतभारदुःसहत्वं तदपरित्यागश्च पूर्वार्धे उभयत्राप्युपात्तम् । एवं च यथा शेषादयो दुर्वहमपि कार्यमशक्त्या न त्यजन्ति तथा महाजना अपीति फलितार्थः ॥

इति प्रतिवस्तूपमा ।

---

दृष्टान्तं निरूपयति—

साधारणस्य साम्यप्रतियोग्यनुयोगिनोर्यत्र ।
निर्देशः स्याद्बिम्बप्रतिबिम्बतया स दृष्टान्तः ॥ २ ॥

बिम्बप्रतिबिम्बभावेनैव यत्र साधारणधर्मस्योपमानोपमेयदिश्युपादानम्, न त्वेकत्वं स दृष्टान्तः । प्रतिवस्तूपमायां त्वेकस्यैव वारद्वयं प्रयोगान्नातिव्याप्तिः । दृष्टो ज्ञातप्रामाण्यकः अन्तो दार्ष्टान्तिकवाक्यार्थनिश्चयो यत्रेति व्युत्पत्त्या प्रकृतवाक्यार्थप्रतिपाद्यकार्यकारणभावे ग्राह्ये तद्ग्राहकीभूतान्वयव्यतिरेकयोर्यो यदन्वयव्यतिरेकानुविधायी स तज्जन्य इत्यादिव्याप्तौ य-

न्नोत्तरवाक्यार्थो दृष्टान्तत्वेन पर्यवस्यति स इत्यर्थः । तेन न निदर्शनासंकर इत्युक्तं प्राक् ।

यथा—

'सरोषापि सरोजाक्षि त्वमुदेषि मुदे मम ।
तप्तापि शतपत्रस्य सौरभायैव सौरभा ॥'

अत्र रोषतापयोरानन्दसौरभयोश्च बिम्बप्रतिबिम्बभावः । तत्र नलानन्दं प्रति भैम्या अन्वयव्यतिरेकाभ्यां कारणत्वे ग्राह्ये यद्यन्वयव्यतिरेकानुविधायि तत्तज्जन्यम् । यथा सूर्यप्रभान्वयाद्यनुविधायि पद्मसौरभमिति द्वितीयार्थस्य दृष्टान्तत्वपर्यवसानम् । एतच्च साधर्म्येण ।

वैधर्म्येण यथा—

'वेलातिगस्त्रैणगुणाब्धिवेणिर्न योगयोग्यासि नलेतरेण ।
संदभ्यते दर्भगुणेन मल्लीमाला न मृद्वी भृशकर्कशेन ॥'

अत्र पूर्वार्धे यद्यपि नलान्ययोगानर्हत्वमेवोक्तम्, तथापि तावता नलयोग्यत्व एव तात्पर्यम् । 'पार्थ एव धनुर्धरः' इत्यादावन्ययोगव्यवच्छेदस्थलेऽपि पार्थस्य धनुर्धरत्वावगमात् । अन्यथा तदानीं 'पार्थो धनुर्धरो न वा' इति संशयप्रसङ्गात् । तथा चान्वयव्यतिरेकाभ्यां वस्तुनः स्वसमानगुणवत्संयोगयोग्यत्वे ग्राह्ये 'यद्यद्विजातीयगुणवत्तन्न तत्संगमार्हम्' इति व्यतिरेकदृष्टान्त उत्तरार्धे उक्तः । तद्विपर्ययेण 'यद्यद्गुणसजातीयगुणवत्तत्संगमार्हम्' इत्यनेन प्रागुक्तार्थसिद्धिः । यथा वा मालारूपेणाप्ययं दृश्यते ।

यथा—

'व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥'

अत्र केचित्—प्रतिवस्तूपमायामप्रकृतवाक्यार्थोपादानं तेन सह प्रकृतस्य साहश्यप्रतिपत्त्यर्थम्, दृष्टान्ते तु तदुपादानम्, एतादृशोऽर्थोऽस्त्यत्रापि

स्थित इति प्रकृतप्रतीतिविशदीकरणमात्रार्थं न तु सादृश्यप्रतिपत्त्यर्थमित्य-नयोर्भेदः—इति वदन्ति ॥

अत्र रसगङ्गाधरकृतः—प्रतिवस्तूपमायां प्रकृताप्रकृतयोः सादृश्यप्रतीतिः न तु दृष्टान्ते इत्याज्ञामात्रम् अविशेषात् वैपरीत्यस्यापि सुवचत्वाच्च। एतादृशोऽर्थोऽन्यत्रापि स्थित इत्यस्यापि सादृश्य एव पर्यवसानाच्च । किं चैवम्—

'देवीं वाचमुपासते हि वहवः सारं तु सारस्वतं
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः ।
अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरता-
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः ॥'

इत्यत्र यद्यपि ज्ञानरूप एको धर्मो निर्दिष्टः, तथापि न तत्प्रयुक्तमौपम्यं विवक्षितम् । यत्प्रयुक्तं विवक्षितं तच्च[1] लङ्घनादावस्त्येव दिव्यवागुपासनादिना प्रतिबिम्बनमिति सर्वस्वकारग्रन्थविरोधो दुष्परिहरः स्यात् । तस्माद्वस्तुप्रतिवस्तुभावबिम्बप्रतिबिम्बभावाभ्यां धर्मोपादानादेव भेदः । परमार्थतस्तु उभयोरेकालंकारत्वमेव यत्किंचिद्वैधर्म्यं च भेदत्वस्यैव प्रयोजकं न त्वलंकारान्तरताया इत्याहुः, तन्न । सादृश्यप्रत्ययस्योभयत्राङ्गीकारेऽपि एकत्र प्रकृतकार्यकारणभावग्राहकव्याप्तिनिश्चयप्रयोजकसहचारग्राहकत्वमप्रकृतार्थस्य, अपरत्र च न तथेति भेदस्य स्फुटतरत्वात् । सादृश्यप्रतीतिमात्रेणैक्याभ्युपगमे सर्वविप्लवापत्तेरिति दिक् ॥

इति दृष्टान्तः ।

---

दीपकं निरूपयति—

**प्रकृताप्रकृतानां यद्येकान्वयितास्ति दीपकं तत्स्यात् ।**

यत्रोपमानोपमेयभूतानां प्राकरणिकाप्राकरणिकानामेकपदोपात्तेन गुणक्रियादिना धर्मेणान्वयस्तद्दीपकम् । दीप इव दीपकम् । 'संज्ञायां कन्'। दीपस्यैकस्यैव सकलप्रकाशकत्ववदेकत्वस्यैव सर्वैः समन्वयबोधजनकत्वेन तत्साधर्म्यादित्यर्थः । दीपयतीति दीपकमित्यन्ये ॥



1. 'तत्र' ख.

यथा—

'फलसंपत्तीअ समोणआइं तुङ्गाइं फलविअत्तीए।
हिअआइं सज्जणाणं[2] महातरूणं व सिहराइं॥'[1]

अत्र सज्जनाः प्रकृतत्वादुपमेयाः, तरुशिखराण्युपमानानि, तेषां समानतत्वतुङ्गत्वाभ्यां गुणाभ्यामेकपदोपात्ताभ्यां सहान्वयः।

यथा च—

'मुक्कसलिला[3] जलहरा अहिणवदिण्णफला अ पाअवणिवहा।
लहुआ वि होन्ति गरुआ समरमुहोहरिअमण्डलग्गा अ भुआ॥'

अत्र राक्षसवधार्थं वानरानुत्तेजयतः सुग्रीवस्योक्तौ भुजाः प्रकृतत्वादुपमेयाः। जलधराद्य उपमानभूताः सर्वेषां गुरुत्वेनान्वयः।

क्रियादीपकं यथा—

'छज्जइ[4] पहुस्स ललिअं पिआइ माणो खमा समत्थस्स।
जाणन्तस्स अ भणिअं मोणं अ अआणमाणस्स॥'

अत्र मानस्य प्रकृतत्वादुपमेयत्वम्। सर्वेषां 'छज्जइ'पदवाच्यायां शोभते इति क्रियायामन्वयः।

**यत्रैकमेव कारकमन्वयमेति क्रियासु बह्वीषु॥ १॥**

यत्रैकमेव कारकमनेकक्रियास्वन्वितं तदपि दीपकमित्यर्थः। तत्र कर्तृकारकस्य यथा—

'णिन्दइ[5] मिअङ्ककिरणे खिज्जइ कुसुमाउहे जुउच्छइ रअणिम्।
झीणो वि णवरि झिज्जइ जीवेज्ज पिएत्ति मारुइं पुच्छन्तो॥'

---

१. 'फलसंपत्त्या समवनतानि तुङ्गानि फलविपत्त्या।
हृदयानि सज्जनानां महातरूणामिव शिखराणि॥' [गाथा० ३।८२]

२. गाथासप्तशत्यां तु 'सुपुरिसाणं' इति पाठः.

३. 'मुक्तसलिला जलधरा अभिनवदत्तफलाश्च पादपनिवहाः।
लघवोऽपि भवन्ति गुरवः समरमुखावहृतमण्डलाग्राश्च भुजाः॥' [सेतु०३।३७]

४. 'शोभते प्रभोर्ललितं प्रियाया मानः क्षमा समर्थस्य।
जानतश्च भणितं मौनं चाजानतः॥' [गाथा० ३।४३]

५. 'निन्दति मृगाङ्ककिरणान्खिद्यते कुसुमायुधे जुगुप्सते रजनीम्।
क्षीणोऽपि केवलं क्षीयते जीवेत्प्रियेति मारुतिं पृच्छन्॥' [सेतु० ५।५]

अत्र निन्दतीत्यादिक्रियासु रामः कर्ता ।

यथा वा—

'स्खलयति वचनं ते संश्रयत्यङ्गमङ्गं
जनयति मुखचन्द्रोद्भासिनः स्वेदबिन्दून् ।
मुकुलयति च नेत्रे सर्वथा सुभ्रु खेद-
स्त्वयि विलसति तुभ्यं वल्लभालोकनेन ॥'

इह खेदस्य सर्वकर्तृत्वम् ।

यथा वा—

'नागच्छन्नुपहूयते न वचनोत्थानासनैः पूज्यते
नो पृच्छन्ननुभाव्यते न च दृशा सान्द्रादरं वीक्ष्यते ।
ईर्ष्यालेशकषायिते हृदि घृणालेशोऽपि न स्पृश्यते
किं त्वेकं प्रवदन्समञ्जसमिति प्राज्ञः शठैर्हस्यते ॥'

इह सर्वत्र शठानां कर्तृत्वेनान्वयः ।

कर्मणो यथा—

'[1]अग्घाइ छिवइ चुम्बइ ठेवइ हिअअम्मि जणिअरोमञ्चो ।
जाआकवोलसरिसं पेच्छह पहिओ महुअउप्फम् ॥'

अत्र मधूकपुष्पाणामाघ्राणादिक्रियासु कर्मत्वम् ।

करणस्य यथा—

'पटालग्ने पत्यौ नमयति मुखं जातविनया
हठाच्छ्लेषं वाञ्छत्यपहरति गात्राणि निभृतम् ।
न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना
ह्रिया ताम्यत्यन्तः प्रथमपरिहासे नववधूः ॥'

अत्र सर्वत्र लज्जायाः करणत्वम् ।

संप्रदानस्य यथा मम—

१. 'आजिघ्रति स्पृशति चुम्बति स्थापयति हृदये जनितरोमाञ्चः ।
जायाकपोलसदृशं पश्यत पथिको मधूकपुष्पम् ॥' [गाथा० ५।३९]

'कामो विमुञ्चति शरानतिमात्रतीक्ष्णा-
न्निर्भर्त्सनामभिदधाति पिकः कलेन ।
चन्द्रो ददाति किरणैर्ज्वलदुल्मुकानि
मह्यं न सह्यदयिताविरहव्यथाय ॥'

इह सर्वत्र मह्यमित्यस्य संप्रदानत्वम् । 'शिष्याय चपेटां ददाति' इत्यादिदर्शनेन भाष्यकारमते संप्रदानताया अन्वर्थत्वानङ्गीकारेण सर्वत्र मुख्यत्वाभ्युपगमात् ।

अपादानस्य यथा ममैव—

'निर्यान्ति तीक्ष्णमकरध्वजबाणधारा
अभ्युत्पतन्ति घनसाररजःप्रवाहाः ।
उद्यन्ति संतमससंततयः समन्ता-
त्कान्ते निरन्तरमनन्तरिताद्दृगन्तात् ॥'

अत्र सर्वत्र दृगन्तस्यापादानत्वम् ।

संबन्धिनो यथा—

'स्वाम्यं यस्य निजं जगत्सु जनितेष्वादौ ततः पालनं
व्युत्पत्तेः करणं हिताहितविधिव्याधेः ससंभावनम् ।
भूतोक्तिः सहसा कृपा निरुपधिर्यत्नस्तदर्थात्मक-
स्तस्मै पूर्वगुरूत्तमाय जगतामीशाय पित्रे नमः ॥'

यद्यपि कारकपदस्य विभक्त्यर्थद्वारा क्रियान्वयिनि शक्ततया षष्ठ्यर्थस्य च नामार्थ एवान्वयेन क्रियान्वयविरहाद्यस्येति पदस्य न कारकत्वम् । तथापि पालनादिसमभिव्याहारे 'कर्तृकर्मणोः कृति' इति षष्ठीविधानात् तत्र कर्मत्वलक्षणावश्यकत्वेन तस्य क्रियान्वयादस्योदाहरणत्वमविरुद्धम् ।

अधिकरणस्य यथा—

'शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः
संरक्ताभिस्त्रिपुरविजयो गीयते किंनरीभिः ।
निर्ह्रादी ते मुरज इव चेत्कन्दरेषु ध्वनिः स्या-
त्संगीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥'

इह सर्वत्र क्रियासु तत्रेतिपदनिर्देश्यस्य हिमाचलस्याधिकरणत्वम् । यथा—

'काश्मर्याः कृतमालमुद्गतदलं कोयष्टिकष्टीकते
तीराश्मन्तकशिम्बिचुम्बितमुखा धावन्त्यपःपूर्णिकाः ।
दात्यूहैस्तिनिशस्य कोटरवति स्कन्धे निलीय स्थितं
वीरुन्नीडकपोतकूजितमनुक्रन्दन्त्यधः कुक्कुटाः ॥'

अत्र कथं मध्याह्नः । तथा ह्यत्र संप्रतीतिप्रक्रमान्मध्याह्नरूपकालस्य सर्वत्राधिकरणत्वम् ।

मालादीपकमाह—

माला तु पूर्वपूर्वे विध्यन्तरेणोत्तरान्वयिनि ।

तस्यां क्रियायां रूपान्तरेणान्वितस्य पुनस्तस्यामेव रूपान्तरेणान्वये मालादीपकमित्यर्थः ।

यथा—

'जलणणिवहम्मि सलिलं साणलणिवहुच्छलन्तसलिलम्मि णहम् ।
सलिलणिवहोत्थअम्मि अ अत्थाअइ णहअले दसदिसाअक्कम् ॥'[1]

अत्र रामशराहतसमुद्रवर्णने ज्वलननिवहे सलिलमस्तायत सलिलस्य अस्तप्राप्तिक्रियायां कर्तृत्वेनान्वितस्य पुनः सलिले नभोऽस्तायत इति नभःकर्तृकायामेवास्तक्रियायामाधारत्वेनान्वयः ।

यथा वा मम—

'लावण्येन भवत्कलेवरमिदं तेनोत्कटं यौवनं
तेनासौ सुतनु प्रसूनविशिखस्तेन द्रुतं कार्मुकम् ।
तेन प्रापि पुनः शिलीमुखगणस्तेनापि मन्मानसं
तेनोत्तापभयप्रमाथदलनभ्रान्तिप्रमोहोदयः ॥'

अत्र प्रापीति क्रियायां पूर्वं कर्मीभूतस्य पश्चात्तत्रैव कर्तृत्वमित्यादिरीत्या मालात्वम् ।

इति दीपकम् ।

१. 'ज्वलननिवहे सलिलं सानलनिवहोच्छलत्सलिले नभः ।
सलिलनिवहावस्तृते चास्तायते नभस्तले दशदिक्चक्रम् ॥' [सेतु० ५।७४]

तुल्ययोगितां निरूपयति—

**प्रकृतानां तादृक्त्वे भिन्नानां वापि तुल्ययोगित्वे।**

वाशब्दो व्यवस्थितविकल्पार्थः। तथा च प्रकृतानामेव अप्रकृतानामेव वा यत्रैकधर्मान्वयित्वं सा तुल्ययोगिता। तुल्यानां प्राकरणिकाप्राकरणिकान्यतरमात्रनिबन्धनसादृश्यवतां योगिता एकधर्मान्वयित्वं यत्रेति व्युत्पत्तेरित्यर्थः। बहुत्वं च द्वयोरप्युपलक्षणम्।

आद्यं यथा—

'शृङ्गाणि द्रुतकनकोज्ज्वलानि गन्धाः कौसुम्भं पृथु कुचकुम्भसङ्गिवासः।
वासश्च प्रतनु विविक्तमस्त्वितीयानाकल्पो यदि कुसुमेषुणा न शून्यः॥'

अत्र जलक्रीडासाधकत्वेन प्रकृतानामाकल्पेति धर्मान्वयः[1]।

यथा वा—

'[2]पंउरजुआणो गामो महुमासो योवणं पई ठेरो।
जिण्णसुरा साहीणा असई मा होउ किं मरउ॥'

अत्र सतीत्वत्यागहेतुत्वेन प्रकृतानां प्रचुरतरुणग्रामादीनामस्तीति क्रियान्वयः। 'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति' इति वार्तिकात्। अस्तिक्रियाप्रयोगाभावेऽपि तदाक्षेपिता शीघ्रोपस्थितिकत्वात्। न च प्रतिवाक्यमस्त्यध्याहार इति वाच्यम्। लाघवादेकस्यैवाध्याहारं कृत्वान्यत्र तदनुषङ्गस्य न्याय्यत्वात्।

यथा—

'[3]रूअं अच्छीसु ठिअं फरिसो अङ्गेसु जम्पिअं कण्णे।
हिअअं हिअए णिहिअं विओइअं किं त्थ देव्वेण॥'

---

१. 'धर्मेणान्वयः' ख.

२. 'प्रचुरयुवा ग्रामो मधुमासो यौवनं पतिः स्थविरः।
जीर्णसुरा स्वाधीना असती मा भवतु किं म्रियताम्॥' [गाथा० २।९७]

३. 'रूपमक्ष्णोः स्थितं स्पर्शोऽङ्गेषु जल्पितं कर्णे।
हृदयं हृदये निहितं वियोजितं किमत्र दैवेन॥' [गाथा० २।३२]

अत्र विरहोद्दीपकत्वेन प्रस्तुतानां रूपादीनां स्थितिरूपैकक्रियान्वयः। द्वितीयं यथा—

'भङ्गाकीर्तिमषीमलीमसतमप्रत्यर्थिसेनाभट-
श्रेणीतिन्दुककाननेषु विकसत्यस्य प्रतापानलः ।
तस्मादुत्पतिताः स्फुरन्ति जगदुत्सङ्गे स्फुलिङ्गाः स्फुटं
भालोद्भूतभवाक्षिभानुहुतभुग्जम्भारिदम्भोलयः ॥'

अत्र प्रतापवर्णनेऽप्रकृतानां भालनयनादीनां स्फुरन्तीति क्रियान्वयः। अत्र सर्वत्र सादृश्यं व्यङ्ग्यमिति सिद्धान्तः । एवं च सादृश्यं पदार्थान्तरमेवालंकारिकाभिमतम् । अन्यथा धर्मस्योपादाने तदात्मकत्वे च सादृश्यस्य व्यङ्ग्यत्वानुपपत्तिरिति केचित्। सादृश्यत्वमेवातिरिक्तमिव पदादीनां शक्यतावच्छेदकम् । तथा च धर्ममात्रोपस्थितावपि सादृश्यत्वप्रकारेण बोधो व्यञ्जनयैव । अतः सादृश्यस्यानतिरिक्तत्वेऽपि न क्षतिरित्यन्ये। 'अयमेतत्सदृशः' इत्याकारकशाब्दबोधाविषयत्वमेव व्यङ्ग्यत्वम् । किंचित्प्रतियोगिकत्वानुयोगिकत्वेनाभासमानत्वमिति यावत् । धर्ममात्रोपादानेऽपि तादृशशाब्दप्रतीत्यभावाद्व्यङ्ग्यत्वानपाय इति तत्त्वम् ।

अत्र वदन्ति—दीपकमपि तुल्ययोगितायामेवान्तर्भवति । धर्मस्य सकृद्वृत्तेरुभयत्राविशेषात् । प्रकृताप्रकृतत्वादिविशेषस्य चावान्तरभेदसाधकत्वेऽपि अलंकारान्तरतायामसाधकत्वात् । अन्यथा श्लेषस्य तद्भेदयोरपि भिन्नालंकारत्वापत्तेः । तस्मात्प्रकृतानामेव प्रकृताप्रकृतानां चैकधर्मान्वय इति तुल्ययोगिताया एव त्रयो भेदा वक्तुमुचिताः । तस्माद्दीपकस्य तुल्ययोगिताया भेदं वदतां प्राचीनानां दुराग्रह इति, तच्चिन्त्यम् ।

'नानाधिकरणस्थानां शब्दानां संप्रदीपकः ।
एकवाक्येन संयोगो यस्तु दीपकमुच्यते ॥'

यथा—

'सरांसि हंसैः कुसुमैश्च वृक्षा मत्तैर्द्विरेफैश्च सरोरुहाणि ।
गोष्ठीमिरुद्यानवनानि चैव यस्मिन्नशून्यानि सदा क्रियन्ते ॥'

इति भगवता भरतमुनिना दीपकस्याङ्गीकारात् तत्रैव तुल्ययोगितान्तर्भावस्यौचित्यादिति दिक् ॥

इति तुल्ययोगिता ।

व्यतिरेकं निरूपयति—

**उद्योः साम्यप्रोक्तौ विशेष उपमेयगे व्यतीरेकः ।**

यत्र केनचिद्धर्मेणोपमानापेक्षया उपमेयस्य वैलक्षण्यं वर्ण्यते स व्यतिरेकः। व्यतिरिच्यते उपमानाद्व्यावर्त्यते अनेन उपमेयमिति व्युत्पत्तेरित्यर्थः।

ननु—

'क्षीणः क्षीणोऽपि शशी भूयो भूयोऽभिवर्धते सत्यम् ।
विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु ॥'

इत्यत्रोपमानभूते चन्द्रे पुनर्वैधर्म्यमुक्तम् । तथा च क्वचिदुपमेयापेक्षया उपमानस्य विशेषोक्तावप्यस्य संभवः। तत्कथमुक्तम् 'विशेष उपमेयगे' इति—इति चेत्, मैवम् । प्रकृतार्थानुकूलत्वरूपस्य विशेषस्य तत्रापि तत्रावृत्तित्वात् । तथा हि। न चन्द्रयौवनयोरुपमानोपमेयभावो विवक्षितः। किं तु चन्द्रक्षययौवनक्षययोरेव । तत्र चन्द्रक्षयस्य वृद्धिप्रागभावसमानकालीनत्वेन न्यूनत्वम्, यौवनक्षयस्य चाग्रे तच्छरीरावच्छेदेन यौवनाभावात्समानाधिकरणयौवनप्रागभावसमानकालीनत्वं नास्तीत्याधिक्यम् । एवं च विवक्षितस्य मानत्यागस्यावश्यकत्वसिद्धिरिति ।

ननु तथापि क्वचिदुपमानादुपमेयापकर्षेऽप्ययं दृश्यते ।

यथा—

'हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दौत्यपथः सितीकृतः ।'

अत्र हि नलेन हनूमदादिदू(दौ)त्यापेक्षया स्वकृतदू(दौ)त्ये हीनत्वं प्रदर्श्यत इति चेत्, न । उत्कर्षापकर्षौ ह्यत्र न वास्तवाभिमतौ, किं तु प्रकृतार्थातिशायकत्वानतिशायकत्वस्वरूपौ । प्रकृतश्चात्र नलनिर्वेदः, तदुत्कर्षकत्वं च दौत्यनिष्ठोक्तापकर्षस्याप्यस्तीति न दोषः ।

एवम्—

'जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।

1. 'कुलतया' ख.

कृतालङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥'

इत्यत्राप्युपमेये वक्तरि कुशलवसुताप्राप्त्यभावस्य न्यूनतारूपस्यापि दैन्यादिसमुत्कर्षत्वादाधिक्यमेव ।

एवम्—

'रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्तास्तथा मामपि ।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥'

इत्यत्रोपमेयस्योत्कर्ष इत्यपास्तम् । सशोकत्वस्य स्वापमानोत्कर्षकत्वेनाधिक्यरूपत्वात् ।

'अण्णाणँ वि होन्ति मुहे पह्मलधवलाइं दीहकसणाइं ।
णअणाइं सुन्दरीणं तह उण(वि हु)दट्ठुं ण आणन्ति ॥'[1]

अत्र हि प्रकृतनायिकाया उपमानत्वं नायिकान्तराणामुपमेयत्वम् । तथा पुनर्द्रष्टुं न जानन्तीति व्यतिरेक उपमेयानाम् । तथा च 'वर्णनीयनायिकानिष्ठविजातीयदर्शनप्रतियोगिकसादृश्यवद्दर्शनानभिज्ञत्वमितरनायिकानाम्' इति वाक्यार्थः । एवं च यद्यपि तासामुपमानापकर्षः प्रतिभाति, तथापि तादृशज्ञानाभावस्य तदवज्ञारूपप्रकृतार्थातिशायकत्वमस्त्येवेति न दोषः ।

यद्य(द)प्युपमेयापकर्षोदाहरणं रसगङ्गाधरे कृतम्—

'जगत्रयत्राणधृतव्रतस्य क्षमातलं केवलमेव रक्षन् ।
कथं समारोहति हन्त राजन्सहस्रनेत्रस्य तुलां द्विनेत्रः ॥'

अत्र 'धर्मद्वयेनैव न्यूनोऽसि धर्मान्तरेण तु समानः' इति प्रतीतेरलंकारतेति, तदपि चिन्त्यम् । धर्मान्तरप्रयुक्तसादृश्यविवक्षागर्भधर्मविशेषप्रयुक्तसादृश्यनिषेधस्यैव व्यतिरेकशरीरत्वेन सर्वाभ्युपगतत्वात् । सादृश्य-

1. 'अन्यासामपि भवन्ति मुखे पक्ष्मलधवलानि दीर्घकृष्णानि ।
नयनानि सुन्दरीणां तथापि खलु द्रष्टुं न जानन्ति ॥' [गाथा० ५।७०]

प्रयोजको यो धर्मस्तत्प्रयुक्तसादृश्यनिषेधप्रयुक्तोत्कर्षस्यैवालंकारत्वात्। उक्तस्थले च सहस्रनेत्रत्वप्रयुक्तसादृश्यनिषेधस्य वास्तवत्वेनालंकारत्वात्। आपाततो निन्दाप्रतीत्युत्तरसादृश्यप्रतीतेश्च व्याजस्तुतावेवान्तर्भावादिति दिक्।

तं विभजते—

हानिप्रकर्षहेत्वोरुक्तौ त्रेधा च तदनुक्तौ।
शब्दार्थाक्षेपोत्थे साम्ये श्लेषे च दिग्युगमितः सः॥ १॥

अयमर्थः—स व्यतिरेको दिग्युगमितः चतुर्विंशतिसंख्यः। कथमित्यत आह—हानीत्यादि। उपमानस्यापकर्षनिमित्तम्, उपमेयस्योत्कर्षनिमित्तं चेत्युभयमपि यत्रोक्तं तत्रैकः। अपकर्षहेतुमात्रस्य उत्कर्षहेतुमात्रो(त्रस्यो)क्तौ द्वयोरप्यनुक्तौ च त्रयो भेदाः, इति चत्वारः। ते च प्रत्येकं शाब्दे आर्थे आक्षिप्ते च सादृश्ये इति द्वादश भेदाः। सर्वेषां श्लेषाश्लेषाभ्यां द्वैविध्याच्चतुर्विंशतित्वमिति।

अथ द्वादशश्लिष्टभेदेषु द्वयोरुक्तौ श्रौते साम्ये यथा—

'ध्वान्तं विनाशयन्त्या अत्युज्ज्वलदेहलतिकायाः।
न हि ते चपलाया इव भा क्षणिका कामिनि स्थेम्ना॥'

अत्र स्थैर्यचपलत्वरूपमुत्कर्षापकर्षहेतुद्वयमुक्तम्। इवपदोपादानात् श्रौतं साम्यम्।

उत्कर्षहेतुमात्रोक्तौ यथा—

'वैशद्यं भावयतो निखिलजनोल्लासनाहेतोः।
अपचयरहितस्य तवाननस्य नेन्दोरिव द्युतेर्हानिः॥'

इह मुखोत्कर्षजनकमपचयरहितत्वमुक्तम्। इन्द्वपकर्षहेतुसाहित्यं चानुक्तम्।

अपकर्षहेतुमात्रोक्तौ यथा—

'सकललोचनमानसहारिणोऽतिशयितां दधतः सुकुमारताम्।
तव मुखस्य रुचिर्न परिच्छिदां भजति भास्वदधीनसरोजवत्॥'

अत्र पद्मकान्तेः परिच्छिन्नत्वे भास्वदधीनत्वे हेतुरुक्तः । मुखरुचेरपरिच्छिन्नतायामन्यानधीनत्वं हेतुरनुक्तः । इवार्थे वतिप्रत्यययोगात् श्रौतं साम्यम् ।

उभयहेत्वनुक्तौ यथा—

'अतिनिबिडस्य हृताखिलदर्शनशक्तेस्तमोव्रजस्येव ।
धम्मिल्लस्य न तेऽक्षिश्यामलता तेजसा नाश्या ॥'

अत्र केशपाशनिष्ठश्यामलतायास्तेजोजन्यनाशाप्रतियोगित्वे ।

आर्थे साम्ये यथा—

'विजितारविन्दकान्तेः शुद्धस्य भवन्मुखस्य रम्भोरु ।
सकलङ्कचन्द्रवन्न हि निभालयामीह लावण्यम् ॥'

अत्र 'तेन तुल्यम्' इति विहितस्य वतेः प्रयोगादार्थं साम्यम् । शुद्धकलङ्कित्वरूपमुत्कर्षापकर्षहेतुद्वयमुक्तम् ।

यथा च माघे—

'मुदितजनमनस्कास्तुल्यमेव प्रदोषे
रुचिमदधुरुभय्यः कल्पिता भूषिताश्च ।
परिमलरुचिराभिर्व्यक्तृतास्तु प्रभाते
युवतिभिरुपभोगान्नीरुचः पुष्पमालाः ॥'

अत्र युवतीनां स्रजानां चोपभोगसहत्वतदभावरूपमुत्कर्षापकर्षहेतुद्वयमुक्तम् ।

तत्रैवोत्कर्षहेतुमात्रोक्तौ यथा—

'लोकविलक्षणगुणगणशालिन्यपि चन्द्रवदनेयम् ।
विनयभरप्रचुरतया न मदेनान्याङ्गनासदृशी ॥'

अत्रोत्कर्षहेतुर्विनयवत्त्वमुक्तम् । अपकर्षहेतुरौद्धत्यं चानुक्तम् ।

अपकर्षहेतुमात्रोक्तौ यथा—

'श्यामात्मकं प्रकामं कन्दलितानन्दसंदोहम् ।
इन्दीवरेण नयनं न समं तव पङ्कजातेन ॥'

अत्रापकर्षहेतुः पङ्कजत्वमुक्तम् । प्रशस्तकारणजन्यत्वं नयनोत्कर्षहेतुर्नोक्तः ।

उभयानुक्तौ यथा—

'अतितरले रमणीये श्रुतिपरिसरखेलनासक्ते ।
चन्द्रमुखि लोचने ते न मृगाक्षिभ्यां क्वचित्तुल्ये ॥'

अत्रोत्कर्षहेतुर्विज्ञसंबन्धित्वमपकर्षहेतुश्च पशुसंबन्धित्वमिति द्वयोरप्यनुक्तिः ।

अथाक्षिप्तसाम्यभेदेषु द्वयोरुक्तौ यथा—

'अधरदला स्तनगुच्छा सितकुसुमा त्वं सरोजाक्षि ।
विज्ञतमा ध्रुवमज्ञां काञ्चनवल्लीं तिरस्कुरुषे ॥'

अत्र इवतुल्यादिपदाभावादाक्षिप्तं सादृश्यम् । आक्षेपश्च व्यञ्जनेत्येके । नेतृत्वादिहेतुकानुमानमित्यन्ये । विज्ञत्वमुत्कर्षहेतुः । अज्ञत्वं चापकर्षहेतुरुक्तः ।

यथा वा मुद्राराक्षसे—

'यो नन्दमौर्यनृपयोः परिभूय लोक-
मस्तोदयावविशदप्रतिभिन्नकालम् ।
पर्यायपाति हि हिमोष्णमसर्वगामि
धाम्नातिशाययति धाम सहस्रधाम्नः ॥'

अत्र चाणक्यतेजस उत्कर्षहेतुर्युगपत्प्रभविष्णुत्वम् । सूर्यतेजोपकर्षहेतुश्च क्रमसामर्थ्यमुभयमुक्तम् । असर्वगामीत्यपकर्षहेतुः । सर्वगत्वमुत्कर्षहेतुश्चेत्युभयमुक्तमिति उभयत्र हेतुद्वयोक्त्या विशेषः । अतिशाययतीत्याक्षिप्तमौपम्यम् ।

उत्कर्षहेतुमात्रोक्तौ यथा—

'स्वविरोधिरसान्तरवद्द्रव्यसमानाधिकरणताहीनः ।
बिम्बाधरः सुमुखि ते तिरस्करोतीह पीयूषम् ॥'

इहाधरस्य उत्कर्षहेतुः पूर्वार्धोक्तः । सुधापकर्षहेतुश्च तादृशकालकूटसमानाधिकरणत्वमनुक्तम् ।

अपकर्षहेतुमात्रोक्तौ यथा—

'उद्दीपितकुसुमशरा श्रुतिसुभगा सुभ्रु ते वाणी ।
मधुमासमात्ररम्यां परभृततरुणीगिरं जयति ॥'

अत्र कोकिलरुतापकर्षहेतुर्वसन्तमात्ररम्यत्वमुक्तम् । नायिकावचनोत्कर्षहेतुश्च सर्वदारम्यत्वमनुक्तम् ।

द्वयोरनुक्तौ यथा—

'गुणयुक्तेन श्रुतिपथविजृम्भमाणेन नेत्रभङ्गेन ।
वरतनु मन्मथविशिख[स्] त्वयास्ति नीतोऽधरीभावम् ॥'

अत्र कटाक्षोत्कर्षहेतुरन्यस्य कामाधीनत्वकरणरूपः, बाणापकर्षहेतुश्च कटाक्षान्वयव्यतिरेकानुविधानमिति द्वयोरप्यनुक्तिः ॥

एवमश्लिष्टभेदा द्वादश व्याख्याताः । इदानीं श्लिष्टभेदा उच्यन्ते । तत्र शाब्दे साम्ये द्वयोरुक्तौ । यथा—

'अपि तापोत्कर्षकृता कुसुमशरेण तज्जन्योऽयम् ।
स्नेहो न हीयते सखि तदधीनेनानलेनेव ॥'

अत्र तैलादिनिष्ठस्नेहाख्यगुणविशेषस्य वह्निना(?) स्नेहशब्दः श्लिष्टः ॥

उत्कर्षहेतुमात्रोक्तौ यथा—

'विशदीकृताखिलभुवः सकलमनोनयनरम्यायाः ।
स्वाभाविकस्तवायं ज्योत्स्नावन्न क्षयी रागः ॥'

इह नायिकारागस्य स्वाभाविकत्वमुत्कर्षहेतुरुक्तः । ज्योत्स्नारुणस्य संध्याधीनत्वमपकर्षहेतुर्नोक्तः । रागपदं श्लिष्टम् । इवार्थे वतिरिति शाब्दं सादृश्यम् ।

अपकर्षहेतुमात्रोक्तौ यथा—

'सितकुसुमसुरुचिरा नवपरिमलसंभृतदिगन्ता त्वम् ।
तन्मात्रसाध्यजन्मा नलिनीव न जातपङ्कसङ्गासि ॥'

अत्र पद्मिन्याः कर्दमयोगावश्यकत्वहेतुः तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वं तन्मात्रेऽप्युक्तम् । नायिकाया निषिद्धकर्मयोगाभावहेतुः शुद्धत्वं नोक्तम् । पङ्कपदं श्लिष्टम् ।

उभयानुक्तौ यथा—

'सौरभ्यवासितदिशो विहितपिकीरुतविशेषायाः ।
सहकारमञ्जरीवत्तव नास्ते भृङ्गसंसर्गः ॥'

अत्र रसालमञ्जर्याः भ्रमरसंबन्धे मधुरसो हेतुः नायिकायाः परपुरुषसंसर्गाभावे च शुद्धान्तःकरणत्वं हेतुः उभयमपि नोक्तम् । हेतुपदस्य प्रयोजकसाधारण्येन भृङ्गसंसर्गतदभावयोरुत्कर्षापकर्षहेत्वोरुक्तावपि भृङ्गसंसर्गतदभावहेतुभूतयोर्मधुरसशुद्धान्तःकरणत्वयोरनुक्त्या उभयानुक्तिरित्यदोषः । भृङ्गपदं श्लिष्टम् ।

आर्थे साम्ये द्वयोरुक्तौ यथा—

'न्यक्कृतसरोजशोभं मुखमस्याश्चन्द्रमाश्च सममेव ।
नित्यैकरूप्यविरहात्स कलङ्की तन्न गुणदोषात् ॥'

अत्र चन्द्रमसः कलङ्कित्वे सर्वदा ऐकरूप्याभावः मुखस्याकलङ्कत्वे तु गुणोत्कर्षो हेतुरिति द्वावुक्तौ कलङ्कपदस्य चिह्नदोषोभयार्थकश्लेषः ।

उत्कर्षहेतुमात्रोक्तौ यथा—

'अयमुल्लङ्घितकर्णस्त्वदपाङ्गः पार्थवत्तन्वि ।
अविहीनशक्तिकतया न प्राप्तपराजयः क्वापि ॥'

अत्र कटाक्षोत्कर्षहेतुरनपकृष्टसामर्थ्यवत्त्वमुक्तम् । अर्जुनापकर्षहेतुश्च भगवद्गृहीतसारत्वमनुक्तम् । परेषामन्येषाम् । अजयो वशीकाराभावः स येन प्राप्तः तथा नास्ति परवशीकरणयोगव्यवच्छेदवानिति नेत्रपक्षे । प्राप्तः पराजयः परिभवो येनेत्यन्यत्र । पराजयपदश्लेषः । तुल्यार्थवतिरिति आर्थं पदसादृश्यम् ।

यथा च नैषधे—

'भूभृद्भवाङ्कभुविराजशिखामणेस्त्वं
त्वं चास्य भोगसुभगस्य समः क्रमोऽयम् ।

1. 'सा सर्वभोग' ख.

यन्नाकपालकलनाविदितस्य पत्यु-
रत्रापि जन्मनि सती भवती स भेदः ॥'

अत्र भैम्युत्कर्षहेतुरेतज्जन्मन्यपि पातिव्रत्यमुक्तम् । भवान्यपकर्षहेतुश्च सतीपदवाच्यत्वाभावोऽनुक्तः ।

अपकर्षहेतुमात्रोक्तौ यथा—

'तापिच्छनीलचिकुरां रसपरिपूर्णां सुगम्भीराम् ।
प्रावृट्कालनदीमिव न कुतश्चिद्भङ्ग एति त्वाम् ॥'

इह नद्यास्तरङ्गयोगे हेतुः प्रावृडुक्ता, नायिकाया अन्यतोऽपकर्षानवाप्तौ च सर्वाधिक्यं हेतुरनुक्तः । भङ्गपदं श्लिष्टम् ।

द्वयोरनुक्तौ यथा—

'अरविन्दतुन्दिलाङ्गी मर(रा)लिकागमनशालिनी सुभ्रु ।
सरसीवन्न कदाचिद्यासि रसस्याविलीभावम् ॥'

अत्र सरोजस्य कालुष्ये च धर्मादिकं हेतुः । शृङ्गाराख्यरसस्य निर्दोषत्वे तत्सामग्री उपनायकविषयत्वाद्यभावश्च हेतुरनुक्तः । रसपदं श्लिष्टम् ।

यथा वा भिक्षाटने—

'भृङ्गाङ्गने सखि ममापि तवापि तुल्या
श्रीकण्ठकण्ठरुचिरप्यथ कोऽपि भेदः ।
पुष्पेषु चेष्टितमतीव तवानुकूलं
सत्यं तदैव तु मम प्रतिकूलमासीत् ॥'

अत्र पुष्पाधिकरणकक्रीडाया भृङ्गीं प्रत्यनुकूलत्वे मधुप्राप्तिहेतुत्वम् । नायिकां प्रति कामव्यापारस्य प्रातिकूल्ये च इच्छाविषयशिवालाभो हेतुः । तदुभयमप्यनुक्तम् । पुष्पेषु चेष्टितमिति खण्डश्लेष इति पूर्वस्माद्विशेषः ।

आक्षिप्ते साम्ये यथा—

'अन्येनानभिभूतं ताराकान्तं त्वदीयास्यम् ।
स्वर्भानुना कवलितं ताराकान्तं पराजयते ॥'

---

१. सप्तविंशपद्धतौ षष्ठमिदं पद्यम्.

इहान्यानभिभूतत्वं राहुग्रस्तत्वं चोत्कर्षापकर्षहेतू उक्तौ । ताराकान्त-शब्दः श्लिष्टः ।

यथा वा वासवदत्तायाम्—

'सुराणां पातासौ स पुनरतिपुण्यैकहृदयो
ग्रहस्तस्यास्थाने गुरुरुचितमार्गे स निरतः ।
करस्तस्यात्यर्थं वहति शतकोटिप्रणयितां
स सर्वस्वं दाता तृणमिव सुरेशं विजयते ॥'

अत्र शृङ्गारशेखरसंज्ञस्य राज्ञ उत्कर्षहेतव इन्द्रापकर्षहेतवश्चोक्ताः । सुराणामित्यादौ च श्लेषः । प्रथमे एक उत्कर्षे एकश्चापकर्षे हेतुरुक्तः । इह त्वनेक इति विशेषः ।

उत्कर्षहेतुमात्रोक्तौ यथा—

'रसजनकेन तिरस्कृतचन्द्ररुचा सततशोभेन ।
तावकमुखेन सुन्दरि नियतं परिभूयते पद्मम् ॥'

अत्र रसादौ श्लेषः । मुखोत्कर्षहेतुभूताश्च शृङ्गारजनकत्वम्, चन्द्राधिक्यम्, कालानवच्छिन्नशोभत्वं चोक्ताः । जलजन्यत्वं चन्द्रतिरस्कार्यत्वं दिनमात्रशोभित्वं पद्मापकर्षहेतवो नोक्ताः । अत्रैव शोभापदेऽर्थश्लेष इति विशेषः ।

अपकर्षहेतुमात्रोक्तौ यथा—

'उद्बृंहितमकरध्वजमतिविशदं तारकारम्यम् ।
तव मुखमिन्दुं निन्दति तस्य तमस्कन्दनीयत्वात् ॥'

अत्र मुखोत्कर्षे तमोऽनभिभाव्यत्वं हेतुरनुक्तः । चन्द्रापकर्षे च राहुपरिभाव्यत्वं हेतुरुक्तः । मकरध्वजादिशब्दाः श्लिष्टाः ।

द्वयोरनुक्तौ यथा—

'अत्युन्नतेन कठिनस्पर्शन रसाहरणकर्त्रा ।
वक्षोरुहेण ते सखि कुम्भः प्रतिगर्जितः प्रोच्चैः ॥'

अत्र स्तनोत्कर्षहेतुरन्तःपूर्णत्वम्, घटापकर्षहेतुरन्तःशून्यत्वं द्वयमप्यनु-

क्तम् । अत्युन्नतेत्यर्थश्लेषः । रसेति शाब्दश्लेषः । 'स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति' इति दण्ड्युक्तेः । प्रतिगर्जितेत्यौपम्याक्षेपः । एवं चतुर्विंशतिभेदा व्याख्याताः ।

एवम्—

'राहुग्रासपराभवं न लभते न म्लान(नि)माविन्दते
चण्डांशोः किरणैर्न वा मृगदृशामास्यैः पराजीयते ।
नैवाभ्रेण पिधीयते न च कुहूकालेन संक्षीयते
भूमीभूषण रुद्रचन्द्र भवतः प्रौढो यशश्चन्द्रमाः ॥'

इत्यादावाक्षिप्ते साम्ये व्यतिरेको ज्ञेयः । अभेदस्यैवात्र शाब्दत्वेन सादृश्याक्षेपत्वात् ।

क्वचिज्जयत्यादिपदाभावेऽप्येकधर्मावच्छिन्नतयैव साम्याक्षेपः ।

यथा—

'प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे धर्माभिषेकक्रिया ।
ध्यानं रत्नशिलातलेषु विबुधस्त्रीसंनिधौ संयमौ
यद्वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥'

अत्र कश्यपाश्रमवासिनां मुनीनां मुन्यन्तरापेक्षया व्यतिरेक उक्तः । तेषां च सादृश्यबोधकाभावात् मुनित्वमेव तदाक्षेपकम् ॥

क्वचित्तु विशेषणश्लेषादेव तदाक्षेपः ।

यथा नैषधे—

'अस्यारिप्रकरः शरश्च नृपतेः संख्ये पतन्तावुभौ
सीत्कारं च न संमुखं रचयतः कम्पं च न प्राप्नुतः ।
तद्युक्तं न पुनर्निवृत्तिरुभयोर्जागर्ति यन्मुक्तयो-
रेकस्तत्र भिनत्ति मित्रमपरश्चामित्रमप्यद्भुतम् ॥'

अत्र संख्यपातावर्थश्लेषेण अरिशरयोः साम्याक्षेपः । मित्रेत्यादिर्व्यतिरेकः ।

शब्दश्लेषेण यथा—

'उत्कलिकाकुलितास्ता उपकण्ठनिरस्तमारकतमालाः।
प्रावृषि सरितः सेतून्भिन्दन्ति न पान्थवरवध्वः॥'

उत्कलिकेत्यादिशब्दश्लेषेण नदीनां पान्थस्त्रीणां च साम्यप्रतीतिः। मर्यादारूपसेतुभेदाभावः स्त्रीणां विशेषः।

व्यतिरेकध्वनिर्यथा ममैव—

'पूर्वं हिरण्यकशिपुं विबुधार्तिमाति(?)
मातर्हितुं समभवन्मधुभिर्नृ(न्नृ)सिंहः।
दारिद्र्यमन्तयितुमीदृशमेव लोके
जातः स एव किल संप्रति राजसिंहः॥'

अत्र भगवदवतारत्वेन नृसिंहराजसिंहयोः सादृश्यप्रतीतेः नृसिंहेत्यनेन नृप्रतियोगिकोत्कर्षस्य राजसिंहपदेन राजप्रतियोगिकोत्कर्षस्य प्रतीत्या तदपेक्षया राज्ञ उत्कर्षो व्यज्यते। राजापेक्षया उत्कृष्टस्य मनुष्यप्रतियोगिकोत्कर्षवदपेक्षयाधिक्यस्य सर्वसिद्धत्वात्। राजत्वस्योत्कर्षप्रतियोगितावच्छेदकत्वोक्त्या प्रथममेव मनुष्यत्वावच्छिन्नप्रतियोगिताकोत्कर्षवदपेक्षया तदुत्कर्षप्रतीतेः। राजापेक्षयोत्कर्षसिद्धावन्यत उत्कर्षस्याप्यर्थतः सिद्धेरिति दिक्॥

इति व्यतिरेकः।

---

आक्षेपं निरूपयति—

**इष्टस्याप्यपिधातुं योऽर्थस्य विशेषबोधाय।**
**स्वयमेव प्रतिषेधः स वक्ष्यमाणोक्तविषय आक्षेपः॥ १॥**

वक्तुं प्रारब्धस्यापि विशेषद्योतनार्थं यो निषेधः स आक्षेपः। प्रागुक्तप्रतिषेधो भावव्युत्पत्तेः। विभागमाह—वक्ष्यमाणेति। यत्र वक्तुमुपक्रान्तः पूर्वार्थो निषिध्यते स वक्ष्यमाणविषयः। यत्र तु उक्त्वा तद्वचनवैयर्थ्यमुच्यते स उक्तविषय इति द्विविध इत्यर्थः।

तत्राद्यो यथा—

'सच्चं[1] जाणइ दट्ठुं सरिसम्मि जणम्मि जुज्जए राओ ।
मरउ ण तुमं भणिस्सं मरणं वि सलाहणिज्जं से ॥'

अत्र त्वय्यत्यन्तानुरागवशेन नायिकाया विरहावस्थावशेन मरणमपि संभावितम् । तस्मात्त्वया तत्संगमे यत्नः क्रियतामिति विवक्षितम् । तच्च विरहदुःखस्य प्रत्येकं वक्तुमशक्यत्वात्समागमप्रार्थनायाश्च याच्ञाभङ्गभीत्या दुष्करत्वात् न त्वां भणिष्यामीति प्रतिषिद्धम् ।

द्वितीयो यथा—

'त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमेव ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमिहोत्तरेण ॥'

यथा वा मम—

'त्वत्साक्षात्करणक्षणप्रभृतिदृङ् न प्रेक्षतेऽर्थान्तरं
म्लानिं शारदिकातपप्रतिहता सा केतकीवाश्नुते ।
निःश्वासाहतिसाध्वसादिव भृशं बिम्बाधरो वेपते
तत्सङ्गव्यवसायहायिनि कृतं प्रोक्तेन नाचक्ष्महे ॥'

अत्र प्रोक्तापि विरहावस्था तत्प्रतीकारानुद्यते तद्वचनवैयर्थ्यमित्यभिप्रायेण तदुक्तिप्रतिषेधः ।

केचित्तु—उपमेयेनोपमानकार्यसंपत्त्या तद्वैयर्थ्योक्तिराक्षेपः—इत्याहुः । यथा—

'किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते
दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ॥'

1. 'सत्यं जानाति द्रष्टुं सदृशे जने युज्यते रागः ।
म्रियतां न त्वां भणिष्यामि मरणमपि श्लाघनीयं तस्याः ॥' [गाथा० १।१२]

प्रतीपभेदोऽयमिति काव्यप्रकाशकारादयः ।

सर्वस्वकारादयस्तु—यो निषेधो बाधितः सन्नर्थान्तरपर्यवसितः कंचिद्विशेषमाक्षिपति स आक्षेपः । यथा—

'न्यस्ता न भ्रुकुटिर्न बाष्पसलिले नाच्छादिते लोचने
नीतं नाननमन्यतः सशपथं नाहं स्पृशन्वारितः ।
नन्वाममपयोधरं रसवशाद्विस्रब्धमालिङ्गितो
भङ्गास्या नियमस्य भीषणमरुन्नायं वयस्यो नु मे ॥'

अत्र भीषणमरुति तन्निषेधो बाधितत्वादपकाराजनकत्वपर्यवसितो दुर्योधनो भानुमतीप्रतियोगिकालिङ्गनप्रयोजकत्वरूपं विशेषमाक्षिपति । 'भानुमत्यालिङ्गितम्' इत्यस्य शाब्दत्वेऽपि मरुततत्प्रयोजकत्वस्याक्षेपमात्रगम्यत्वात् । न च सति विशेषणे हीति न्यायेन मरुति भीषणत्वस्यैवायं निषेध इति वाच्यम् । विशेषणे निषेधस्य बाधाभावे हि तन्न्यायावतारः । अत्र च भीषणत्वस्यापि मरुति सत्त्वेन तन्निषेधस्यापि बाधाविशेषात् । तावतापि प्रकृतसंगतेश्चेति ।

यथा—

'युष्मच्छासनलङ्घनाम्भसि मया मग्नेन नाम स्थितं
प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि ।
हेलोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवानद्येमं दिवसं ममापि न गुरुर्नाहं विधेयस्तव ॥'

अत्र युधिष्ठिरं प्रति भीमोक्तौ न गुरुरिति निषेधो बाधितः सन् 'त्वदुक्त्या कौरवैः संधिर्मया न कार्यः' इत्यत्र पर्यवसितः तदुच्छेदकावश्यकत्वं व्यञ्जयति । वस्तुतस्तु न निषेधः ।

यथा—

'मा याहीत्यपमङ्गलं व्रज पुनः स्नेहेन हीनं वच-
स्तिष्ठेति प्रभुता यथारुचि कुरुष्वेवाप्युदासीनता ।
नो जीवामि विना त्वयेति वचनं संभाव्यते वा न वा
तत्किं शिक्षय नाथ यत्समुचितं वक्तुं त्वयि प्रस्थिते ॥'

अत्र प्रवत्स्यत्पतिकायाः प्रियगमनप्रतिबन्धकोक्तिनिषेधो बाधितत्वात्तादृशोक्तितात्पर्यफलकः प्रियप्रवासस्यावश्यपरिहार्यतां व्यनक्ति ।

सोऽयं[1] द्विविधः । उक्तविषयः । वक्ष्यमाणविषयस्तु वस्तुकथननिषेधात्मक एव । स च द्विविधः । प्रकृतवृत्तान्तकथनत्वावच्छिन्नप्रतियोगिताकत्वेन तन्निषेधोक्तौ कथनत्वावच्छिन्नस्य कस्यचित्सत्त्वासत्त्वभेदात् । आद्यो यथा—'त्वत्साक्षात्करण–' इत्यादौ प्रागुदाहृते । तत्र विरहिणीवृत्तान्तकथनत्वावच्छिन्ननिषेधो म्लान्यादेर्वृत्तान्तस्य कथने तदतिरिक्तवृत्तान्तस्य कथने तदतिरिक्तवृत्तान्तपरः म्लान्यादिवृत्तान्तस्यापि तद्वृत्तान्तकथनत्वावच्छिन्नतया तत्सत्त्वम् । द्वितीयस्तु—'सच्चं जाणइ–' इत्यादौ । अत्र विरहवृत्तान्तकथनत्वावच्छिन्ननिषेधे कस्यापि तद्वृत्तान्तकथनस्याभावात् ।

क्वचित्तु विधिनानिषेधाक्षेपः ।

यथा—

'गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥'

यथा वा—

'लोलैर्लोचनवारिभिः सशपथैः पादप्रणामैः प्रियै-
रन्यास्ता विनिवारयन्ति कृपणाः प्राणेश्वरं प्रस्थितम् ।
पुण्याहं व्रज मङ्गलं सुदिवसः प्रातः प्रयातस्य ते
यत्कृत्योचितमीहितं प्रिय मया तन्निर्गतः श्रोष्यसि ॥'

अत्रोभयत्र विधिनिषेधगर्भः ।

यत्तु रसगङ्गाधरे—

'तपोनिधे कौशिक रामचन्द्रं निनीषसे चेन्नय किं विकल्पैः ।
निरन्तरालोकनपुण्यधन्या भवन्तु वन्या अपि जीवभाजः ॥'

१. 'स च द्विविधः—वक्ष्यमाणविषयः, उक्तविषयश्च' इत्यस्यैवालंकारमुक्तावल्यां पाठः.

तत्र दशरथस्य विश्वामित्रं प्रत्युक्तौ मानैषीरिति निषेधो व्यङ्ग्य इति संक्षेपः[1] ।

इत्याक्षेपः ।

---

विभावनां निरूपयति—

**हेतुं विनापि कार्यं यत्रोक्तं स्याद्विभावना सा तु ।**

यत्र प्रसिद्धकारणनिषेधेऽपि तत्कार्याविर्भावो वर्ण्यते सा विभावना । विशिष्टा कारणनिरपेक्षा भावना कार्योत्पत्तिर्यत्रेति व्युत्पत्तेरित्यर्थः । न च कारणाभावे कार्योत्पत्त्यनुपपत्तिः । तदतिरिक्तहेत्वाक्षेपेण तदभावात् न चैवमपि कारणात्प्रागेव कार्योत्पत्तिरूपायामतिशयोक्तौ तदन्तर्भावेष्विति[2] वाच्यम् । तत्र कार्यकारणयोः पौर्वापर्यनिबन्धनश्चमत्कारोऽत्र तु कारणाभावेऽपि कार्योत्पत्तिनिबन्धन इति भेदात् ।

किं च । तत्र पश्चाद्भाविन एव कारणस्य कार्यजनकत्वं कार्याव्यभिचारित्वसूचनार्थं विवक्षितम् । अत्र तु निषेधप्रतियोगित्वेऽन्यहेतुसापेक्षैव कार्योत्पत्तिरिति विशेषः ।

तत्र हेत्वभावः क्वचित्स्वरूपेण ।

यथा—

'शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे
भवेत्सास्रं चक्षुः क्षणमपि न सा दृश्यत इति ।
तया सारङ्गाक्ष्या त्वमसि न कदाचिद्विरहितं
प्रसक्ते निर्वाणे हृदयपरितापं व्रजसि किम् ॥'

अत्र विरहरूपहेत्वभावेऽपि तत्कार्यपरितापोत्पत्तिः । तद्विषयकज्ञानवत्त्वेऽपि आत्मनस्तच्छरीरावच्छिन्नमालविकासंयोगाद्यभावस्य तद्धेतोः सत्त्वादविरोधः ।

क्वचिदवच्छेदकाभावात् ।

---

१. अत्र कियान्पाठस्त्रुटितः प्रतिभाति, 'यत्तु' पदस्वारस्यात्. २. 'भावोऽस्त्विति' इति पाठो भवेत्.

यथा—

'न कठोरं न वा तीक्ष्णमस्त्रं पर(कुसु)मधन्वनः ।
तथापि जितमेवासीदमुना भुवनत्रयम् ॥'

अत्र तीक्ष्णत्वादिविशिष्टास्त्राभावः ।

क्वचिद्व्यापाराभावात् ।

यथा—

'उद्यानमारुतोद्धूतचूतचम्पकरेणवः ।
उदस्तयन्ति पान्थानामस्पृशन्तो विलोचने ॥'

अत्र रजसां चक्षुर्गोलकसंयोगरूपव्यापाराभावात्तद्विशिष्टहेत्वभावः ।

क्वचित्सहकार्यभावात् ।

यथा—

'चित्रं तपति राजेन्द्र प्रतापतपनस्तव ।
अनातपत्रमुत्सज्य सातपत्रं द्विषद्गणम् ॥'

अत्रातपत्ररूपप्रतिबन्धकाभावरूपसहकार्यभावात् ।

यत्तु—

'अकारणात्कार्यजन्म चतुर्थी स्याद्विभावना ।
शङ्खाद्वीणानिनादोऽयमुदेति महदद्भुतम् ॥'
'विरुद्धा कार्यसंपत्तिर्दृष्टा काचिद्विभावना ।
शीतांशुकिरणास्तन्वि हन्त संतापयन्ति माम् ॥'
'कार्यात्कारणजन्मापि दृष्टा काचिद्विभावना ।
यशःपयोधिरभवत्करकल्पतरोस्तव ॥'

इति, तच्चिन्त्यम् । कारणं विना कार्योत्पत्तिरिति भेद एवान्तर्भावात् ।

यत्तु—

'हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता ।
अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः ॥'

इति भेदो दीक्षितोक्तो न युक्तः । कारणाभावेऽपि कार्योत्पत्तिः इत्यत्र

कारणतावच्छेदकसंबन्धेन कारणतावच्छेदकावच्छिन्नप्रतियोगिताकाभावस्य विवक्षणीयत्वादिति **रसगङ्गाधरकृतः**, तच्चिन्त्यम् । तीक्ष्णत्वादेः कारणतावच्छेदकत्वस्वीकारे उक्तिसंभवेऽपि कारणत्वाभिप्रायेणैव दीक्षितैर्भेदान्तरवर्णनात् ।

अ(इ)यं चोक्तानुक्तनिमित्तकत्वेन द्वेधा ।

आद्या यथा—

[1]अकुङ्कुममचन्दणं दहदिहावहूमण्डणं
असेहरमकुण्डलं भुअणमण्डलीभूसणम् ।
असोसणममोहणं मअरलञ्छणस्साउहं
मिअङ्ककिरणावली णहअलम्मि पुञ्जिज्जइ ॥'

अत्र कुङ्कुमाद्यभावेऽपि लेपनाद्यभिधानाद्विभावना । तत्र मृगाङ्ककिरणावल्या उक्तत्वादुक्तनिमित्तम् ।

यत्तु—

'असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे ॥'

अत्र द्वितीयचरणे आसवाभावेऽपि मदोक्त्या चोक्तनिमित्ता विभावनेति सर्वस्वकारादिमतं दूषयद्भिः रसगङ्गाधरकृद्भिरुक्तम्—विरोधमूलत्वादेतद्यलंकाराणां प्रकृते च यौवनस्य मदकारणतायाः कविनैव निबद्धत्वादासवयौवनयोर्मदं प्रति व्रीहियवयोर्यागं प्रतीव निरपेक्षकारणत्वावगमाद्विरोधास्फुरणाद्विभावनैवेयं न भवितुमर्हति कुतस्तद्विशेषः इति, तच्चिन्त्यम् । लोकप्रसिद्धकारणताकस्य मदस्य व्यतिरेकेऽपि यौवनान्मदोत्पत्त्यभिधाने विरोधस्य प्रतिभाने बाधकाभावात् । अन्यथा द्वयोर्निरपेक्ष्यकारणत्वप्रतीतौ

1. 'अकुङ्कुमम‍चन्दनं दशदिशावधूमण्डन-
मशेखरमकुण्डलं भुवनमण्डलीभूषणम् ।
अशोषणममोहनं मकरलाञ्छनस्यायुधं
मृगाङ्ककिरणावली नभस्तले पुञ्जीभवति ॥' [कर्पूरमञ्जरी ३।२६]

यौवनोन्मदोत्पत्तौ चमत्कारानुपपत्तेः । आलोकपरामर्षव्यतिरेकेण धूमपरामर्षादनुमित्यनुत्पत्त्यादिवदनुपपत्त्यभावात् । किं चैवम्—

'यदवधिविलासभवनं यौवनमुदियाय चन्द्रवदनायाः ।
दहनं विनैव तदवधि यूनां हृदयानि दह्यन्ते ॥'

इति भवदुक्तोदाहरणमपि दुर्घटम् । यौवनावधि हृदयदाहोक्तौ दाहे यौवनहेतुत्वस्यापि श्लोकात्प्रतीत्यविशेषात् । कारणशब्देनाभिधानस्याकिंचित्करत्वात् ॥

तदुक्तं कुसुमाञ्जलावाचार्यैः—

'नियमस्यैवापेक्षार्थत्वात्तस्यैव च कारणार्थत्वात् ।'

इति । तस्मात्त्याज्या चोक्तनिमित्ता विभावना, आश्रयणीया वा यथोक्तैवेति दिक् ॥

अनुक्तनिमित्ता यथा—

'श्रमाम्बुशिशिरीभवत्प्रसृतमन्दमन्दाकिनी-
मरुत्तरलतारकं स्फुटललाटचन्द्रद्युति ।
अकुङ्कुमकलङ्कितोज्ज्वलकपोलमुत्प्रेक्ष्यते
निराभरणसुन्दरश्रवणपाशसौम्यं मुखम् ॥'

यदपि—

'लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ।'

इत्यत्र विभावनाप्रसक्तिं तदनभ्युपगमादिष्टापत्तिं चोद्भिभाव्य 'कारणतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वमभावे विशेषणं देयम् । अत्र च प्रसिद्धकारणतावच्छेदकप्रतियोगिताकोऽभावो न तु कारणतावच्छेदकीभूतापराधत्वावच्छिन्नप्रतियोगिताकत्वेनापि कारणाभावोक्तेः । न च कार्यांशोऽतिशयोक्त्यभेदान्यतरालीढत्वेन विशेष्य इति वाच्यम् ।

'खला विनैवापराधं दहन्ति खलु सज्जनान् ।'

इत्यादौ तथाप्यतिप्रसङ्गात् । तत्र पीडाया दाहाभेदाध्यवसानसत्त्वात्—' इति पूर्वपक्षयित्वा समाहितम्—'कार्यांशे यद्विषयितावच्छेदकं तदवच्छिन्नकार्यतानिरूपितकारणतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वमभावे वि-

श्लेषणं देयम् । प्रकृते च पीडाया दाहाभेदाध्यवसानाद्दाहत्वं विषयितावच्छेदकम् । अपराधत्वं च विषयतावच्छेदकीभूतपीडात्वावच्छिन्नकार्यतानिरूपितकारणतायामवच्छेदकम् । न तु विषयितावच्छेदकीभूतदाहत्वावच्छिन्नकार्यताप्रतियोगिककारणतायामिति तादृशापराधत्वावच्छिन्नप्रतियोगिताकाभावोक्त्यामपि नात्र विभावनाप्रसङ्गः ।

'खला विनैवापराधं दहन्ति जगतीतलम् ।'

इत्युक्तौ तु स्यादेव विभावना—इति ॥

तत्रापि चिन्त्यते । कारणतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वेनाभावोक्तावेव विभावनेत्यत्र न ग्रन्थकृतामाग्रहः ।

'निरुपादानसंभारमभित्तावे(वि)व तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥'

इत्यादौ तदभावात् । न हि चित्रत्वावच्छिन्नकार्यता उपादानसंभारत्वावच्छिन्नकारणतानिरूपिता, अपि तु मसीत्वहरितालत्वाद्यवच्छिन्नकारणतानिरूपितैव । न चात्र मसीत्वाद्यवच्छिन्नप्रतियोगिताकत्वेनाभाव उक्तः । स्वीकृता चेयं विभावनैवालंकारिकधुर्यैरिति ।

वेदेऽपीयं यथा—

'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति विश्वं न हितस्य वेत्ता तमाहुराद्यं पुरुषं पुराणम् ॥'

इति विभावना ।

---

विशेषोक्तिं निरूपयति—

**हेतौ सत्यपि कार्यानुत्पत्तिः स्याद्विशेषोक्तिः ।**

सत्यां सामग्र्यां कार्यानुत्पादो विशेषोक्तिः । न चासामग्र्याः फलोपधानव्याप्यतया तदनुपपत्तिः । प्रतिबन्धकान्तरस्य सत्त्वेन तदविरोधात् । तदभावातिरिक्तसकलकारणसमवधानस्यैवात्र सामग्रीपदार्थत्वात् ॥

सा च त्रेधा—अनुक्तनिमित्ता, उक्तनिमित्ता, अचिन्त्यनिमित्ता च ।

तत्राद्या यथा—

'[१]गमिआ कडम्बवाआ दिट्ठं मेहन्धआरिअं गअणअलम् ।
सहिओ गज्जिअसद्दो तहवि खु से णत्थि जीविआसंवो ॥'

अत्र कदम्बवाताभावादीनामाश्वासहेतूनां सत्त्वेऽपि श्रीरामस्य आश्वासाभाव उक्तः । आश्वासोत्पत्तिप्रतिबन्धकाश्च सप्तच्छदवातादय इति तेषामनुक्तिः ।

द्वितीया यथा—

'स्मर स मद्दुरितैर्विफलीकृतो भगवतोऽपि भवद्दहनश्रमः ।
सुरहिताय हितात्मतनुः पुनर्ननु जनुर्दिवि तत्क्षणमापिथ ॥'

अत्र कामदाहसामग्रीसत्त्वेऽपि तद्दाहाभाव उक्तः प्रथमार्धे । तन्निमित्तं च भैम्याः स्वदुरितमेवोपन्यस्तम् ।

वस्तुतस्तु—भैम्या न कामदाहमात्रमिष्टम् । अपि तु ध्वंसप्रतियोगिमात्रवृत्तिजात्यवच्छिन्नप्रागभावासमानकालीनः कामध्वंसः । सुरकार्योद्देशेन तस्य स्वगात्रहोमे च तस्यैव पुनरुत्पत्त्या ध्वंसविशेषणं गलितमिति विशेषणाभावप्रयुक्तविशिष्टाभावादेव कार्योद्देश्यस्वगात्रहोमनिमित्तक इति उत्तरार्धमप्युदाहरणं संभवत्येवेत्यवधेयम् । अन्त्या यथा—

'[२]सो को वि गुणाइसओ ण आणिमो मामि कुन्दकलि(लइ)आए ।
अच्छीहिं च्चिअ पाउं अहिलिज्ज(लस्स)इ जेण भसलेण(मरेहिं) ॥'

अत्र कुन्दकलिकादर्शनसत्त्वेऽपि तदिच्छाविच्छेदाभाव उक्तः । तत्र च किंचिन्निमित्तं लक्षणरूपमस्त्येव । न तु विशेष्यं वक्तुं शक्यमित्यचिन्त्यशक्तिरूपत्वम् ॥

अत्र वदन्ति—विभावनाविशेषोक्त्योर्न पार्थक्यं भवितुमर्हति । परस्परलक्षणव्याप्तविषयत्वात् । तथा हि—यत्र कारणाभावेऽपि कार्योत्पत्तिरु-

---

१. 'गमिता कदम्बवाता दृष्टं मेघान्धकारितं गगनतलम् ।
सोढो गर्जितशब्दस्तथापि खल्वस्या नास्ति जीवितेऽध्यवसायः ॥' [इति च्छाया ।]

२. 'स कोऽपि गुणातिशयो न जानीमो मातुलानि कुन्दलतिकायाः ।
अक्षिभ्यामेव पातुमभिलष्यते येन भ्रमरैः ॥' [गाथा० ६।९१]

च्यते, तत्र कारणाभावरूपकारणसत्त्वेऽपि कार्याभावरूपकार्यानुक्तेः संभवत्येवेति विशेषोक्तिः । कार्याभावस्य कारणाभावप्रयोज्यतायाः सर्वसिद्धत्वात् । कारणादिपदानां चोभयसाधारणत्वात् । एवं यत्र सत्यपि कारणे कार्यानुत्पत्तिर्वर्ण्यते तत्रापि कारणाभावेऽपि कार्याभावरूपकार्योक्त्या विभावनाया अपि संभवः । अतो नैतद्भेदाङ्गीकारः प्रामाणिक इति । उच्यते—यद्धर्मावच्छिन्नाकार्यता विवक्षिता तत्प्रतियोगिकारणताश्रयाभावेऽपि तद्धर्मावच्छिन्नोत्पत्तौ विभावना । एवं च विभावनास्थले कारणाभावनिष्ठकारणताप्रतियोगिककार्याभावत्वावच्छिन्नकार्यता न विवक्षिता, किं त्वभावप्रतियोगित्वेनोक्तम् यत्कारणं तत्प्रतियोगिककार्यत्वावच्छिन्नैव । एवं कारणाभावोऽप्यभावत्वेनाभिधेयः । अतः कारणस्य तदभावाभावरूपत्वेऽपि कारणस्यैवोक्तिर्न तु तदभावाभावत्वेनेत्यदोषः । तथा च—यत्र कारणानधिकरणक्षणोत्तरक्षणस्य कार्याधिकरणत्वमुच्यते सा विभावना । कारणाधिकरणक्षणोत्तरक्षणस्य च यत्र कार्यानधिकरणत्वमुच्यते सा विशेषोक्तिः । एवं चैकत्र व्यतिरेकव्यभिचारस्फुरणनिबन्धनः, परत्र चान्वयव्यभिचारस्फुरणनिबन्धनश्चमत्कार इति दिक् ॥

इति विशेषोक्तिः ।

---

यथासंख्यं निरूपयति—

**निर्देशक्रमतो यदि समन्वयस्तद्यथासंख्यम् ।**

येन क्रमेण पदार्था निर्दिष्टास्तेषां यदि क्रमनिर्दिष्टपदार्थान्तरैः सह क्रमेणैव संबन्धस्तद्यथासंख्यम् । 'तेजः क्षितिर्घटो वह्निः' इत्यादिवारणाय क्रमत इति ।

'मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा ।
वज्रमिन्द्रकरविप्रसृतं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ॥'

इत्यत्राधाक्षीदित्याद्यध्याहृतक्रियास्थले तद्वारणाय अन्वीयमानपदार्थानां निर्दिष्टत्वोपादानम् ।

यथा—

'श्रीमत्सेरनृपप्रतापदहनैः प्लुष्टे सुरस्यालयः(?)
प्रालेयैः परितो वृतं हिमगिरिं प्राप्ता नगेन्द्रात्मजा।
तातालोकनतः प्रियाविरहतः संसारसंहारतो
गौरी नृत्यति रोदिति स्मरहरो मुञ्चन्ति नाकं सुराः॥'

अत्र तातालोकनत इत्यादीनां गौरी नृत्यति इत्यादौ क्रमेण हेतुतयान्वयः। ननु क्रमेणान्वयबोधे किं नियामकमिति चेत्। अन्वयिसमसंख्यपदार्थज्ञानस्य यथासंख्यान्वयबोधत्वं कार्यतावच्छेदकमिति कल्पनात्तथेति केचित्।

वस्तुतोऽयोग्यताज्ञानमेव तन्नियामकमिति मतमेव साधीयः॥

यत्तु तथा सति—

'कीर्तिप्रतापौ भातस्ते सूर्याचन्द्रामसाविव।'

इति क्रमभङ्गदोषो न स्याद्योग्यतया निर्णयसत्त्वादिति, तन्न। तदुक्तरीत्या देवदत्तयज्ञदत्तयोरजावयो धनं भवानीभवयोर्गणेशस्कन्दौ तनयावित्यादावपि यथासंख्यान्वयबोधत्वावच्छिन्नापत्तेः कारणसत्त्वात्। न चेष्टापत्तिः, अपसिद्धान्तात्। तथा च यथासंख्यान्वयबोधत्वावच्छिन्नं प्रति एकमात्रवृत्तियोग्यताज्ञानाभावः उभयसाधारणयोग्यताबोधो वा प्रतिबन्धक इति त्वया कल्पनीयम्। तथा चोभयकल्पने गौरवम्। तदपेक्षया शाब्दबोधसामान्यकारणीभूतयोग्यतया ज्ञाननियामकतयैवोपपत्ताविति लाघवम्। न च क्रमभङ्गदोषत्वानुपपत्तिः, आसत्त्यज्ञानरूपत्वेन दोषोपपत्तेः अन्वयप्रतियोगिनामव्यवधानेनोपस्थितिर्ह्यासत्तिः। तद्वैपरीत्यं क्रमभङ्गे स्पष्टम्॥

इति यथासंख्यम्।

---

अर्थान्तरन्यासं निरूपयति—

यदि सामान्यविशेषौ समर्थयेते विशेषसामान्ये।
साधर्म्याद्वैधर्म्यादपि वा सोऽर्थान्तरन्यासः॥ १॥

यत्र विशेषेण सामान्यम्, सामान्येन वा विशेषः समर्थ्यते सोऽर्थान्तरन्यासः । साधर्म्यवैधर्म्याभ्यां प्रत्येकं द्वैविध्यमिति भेदचतुष्टयमित्यर्थः ।

आद्यं साधर्म्येण यथा—

'स्थाने सुशिष्यनिवहे विनियुज्यमाना
विद्या गुरुं हि गुणवत्तरमातनोति ।
आदाय शुक्तिषु बलाहकविप्रकीर्णै
रत्नाकरो भवति वारिभिरम्बुराशिः ॥'

तदेव वैधर्म्येण यथा—

'अर्थं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव ।
दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥'

अत्रालोकाभावे विषयचाक्षुषं न भवतीत्येतद्विपर्यय आलोकसंयोगे सति चाक्षुषं भवतीति । तेन पूर्वार्धार्थसमाधानम् ।

द्वितीयं साधर्म्येण यथा—

'अभेदेनोपास्ते कुमुदमुदरे वा निवसतो
विपक्षादम्भोजादुपगतवतो वा मधुलिहः ।
अपर्याप्तः कोऽपि स्वपरपरिचर्यापरिचयः
प्रबन्धः साधूनामयमनभिसंधानमधुरः ॥'

यथा—

'रक्तभावमपहाय चन्द्रमा जात एष परिशुद्धमण्डलः ।
विक्रिया न खलु देशकालजा निर्मलप्रकृतिषु स्थिरोदया ॥'

तदेव वैधर्म्येण यथा मम—

'शरच्चन्द्रस्फीता नियतमगणेया गुणगणा
मृगाक्षि त्वां प्राप्य प्रकृतिमधुरा भान्ति नितराम् ।
किमस्ति श्रुत्योर्वा त्रिजगति दृशोर्वापि विषयो
विशुद्धाशुद्धानां क्व च न सहचारो निरुपधिः ॥'

अत्र सादृश्यप्रत्ययाभावात्सामान्यविशेषभावाच्च दृष्टान्तभेदः । निदर्शनातिरेकस्तु तत्रैव निरूपितः । काव्यलिङ्गात्तु समर्थ्यसमर्थकयोः सामान्य-

विशेषभावेऽर्थान्तरन्यासः। तदितरसंबन्धे तु काव्यलिङ्गम् इत्येव भेदः। इति दीक्षिताः।

यत्तु वदन्ति—

'यस्मिन्विशेष्यसामान्यविशेषः स विकस्वरः।

स न जज्ञे(जिग्ये) महान्तो हि दुर्जयाः सागरा इव॥'

अत्र विशेषसमर्थनाय सामान्योपन्यासेऽपि पुनः सामान्यसमर्थनाय विशेषोपन्यास इति विकस्वरोऽलंकारान्तरम्।

यथा वा—

'अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम्।

एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः॥'

इदमुपमारीत्या विशेषन्यसने।

अर्थान्तरन्यासे विषये यथा—

'कर्णारुंतुदमन्तरेण रणितं गाहस्व काक स्वयं

माकन्दं मकरन्दशालिनमिह त्वां मन्महे कोकिलम्।

धन्यानि स्थलवैभवेन कतिचिद्वस्तूनि कस्तूरिकां

नेपालक्षितिपालभालपतिते पङ्के न शङ्केत कः॥'

न चात्र विशेषसमर्थनार्थप्रवृत्तसामान्यस्य लोकप्रसिद्धतया समर्थनानपेक्षत्वात्कथं तत्समर्थनाय विशेषान्तरोपन्यसनमिति वाच्यम्। सामान्यस्य सर्वत्र लोकप्रसिद्धनियमाभावात्। न हि यो यो धूमवान् सोऽग्निमानिति व्याप्तिरूपसामान्योपन्यासे तद्विशेषरूपं दृष्टान्तोपन्यासनिरपेक्षरूपत्वं संभवति। अतो यत्र सामान्यस्य लोकेन संप्रतिपत्तिस्तत्र तत्समर्थनार्थं विशेषान्तरोपन्यासस्याप्यावश्यकत्वादिदमलंकारान्तरम्, तच्चिन्त्यम्। एवमप्यर्थान्तरन्यासद्वयरूपतयातिरिक्तत्वानौचित्यात्। प्रकृतविशेषस्य सामान्येन समर्थनादेकोऽर्थान्तरन्यासः। सामान्यस्य च विशेषेण समर्थनादपर इति भेदद्वयसमावेशात्मकतायाः स्फुटत्वात्। किं च। प्रसिद्धसामान्यस्य समर्थनानपेक्षत्वेऽपि अप्रसिद्धस्य तस्य तदपेक्षत्वमस्तीति तत्समर्थने भिन्नालंकारोऽनुचित एव। तथा हि—'इन्दोः किरणेष्विवाङ्कः' इत्यंशपरि-

त्यागेऽर्थान्तरन्यासत्वं न स्यात् । 'एको हि दोषो गुणसंनिपाते निमज्जति' इति सामान्यस्य त्वन्मतेऽप्रसिद्धत्वेन विशेषोपन्यासं विना सम्यग्बुद्धौ प्रतिष्ठितत्वासंभवेन समर्थकत्वानुपपत्तेः ।

एवम्—

'हनूमानब्धिमतरद्दुष्करं किं महात्मनाम् ।'

इत्यत्र । 'अगस्त्यो हि पपौ सिन्धुम्' इति कृते । 'दुःकरं किं महात्मनाम्' इति सामान्यस्याप्रसिद्धेस्त्वया स्वीकार्यतया तत्परित्यक्तसामान्यमात्रोपन्यासेनापि हनूमानित्यस्य समर्थनं न स्यादिति महत्यनुपपत्तिः । तस्माद्विशेषं विना सामान्यस्य ग्रहीतुमशक्यतया सर्वत्र समर्थनीयविशेषातिरिक्तविशेषस्थले गृहीतसामान्येनैव समर्थनं सामान्यग्राहकीभूतो विशेषसहचारश्च क्वचिदर्थगम्यः क्वचिच्च स्पष्टार्थं कविनैवोपात्त इत्येतावानेव विशेषो न तु क्वचित्समर्थनानपेक्षत्वं क्वचिच्च तदपेक्षत्वमिति दिक् ॥

इत्यर्थान्तरन्यासः ।

---

विरोधं निरूपयति—

**अविरोधेऽपि विरोधो यत्रोक्तः स्याद्विरोधः सः ।**
**स्याज्जातेर्गुणकर्मद्रव्याणां स्वस्वपरयोगात् ॥ १ ॥**

परमार्थतो विरोधाभावेऽपि यत्रापाततो विरोधो भासते स विरोधालंकार इत्यर्थः । अयमेव विरोधाभास इति गीयते । 'वह्निना सिञ्चति' इत्यादिवारणाय आपातत इत्यन्तम् । तल्लाभाय भावेऽपीत्यन्तम् । तद्भेदानाह— जातेरित्यादि । जातिगुणक्रियाद्रव्याणां स्वेन स्वोत्तरेण च सहेत्यर्थः । एवं [च] जातेर्जातिगुणक्रियाद्रव्यैः, गुणस्य गुणक्रियाद्रव्यैः, क्रियायाः क्रियाद्रव्याभ्याम्, द्रव्यस्य द्रव्येणैवेति दश भेदाः पर्यवसन्नाः । गुणेन सह जातिविरोधस्तु पृथक् नोक्तः । जातेर्गुणविरोध एव तदन्तर्भावात् । एवमुत्तरत्रापि बोध्यम् ।

तत्र जातेर्जात्या यथा श्रीरुद्रचन्द्रदेवतानाम्—

'यस्याकर्णनमात्रतोऽपि भवतोऽवस्थेयमीदृग्विधा
येनाङ्गे मलयानिलोऽपि भवति प्रायः करीषानलः ।

हंहो मानस बालिश प्रतिपथं प्रत्याशमुद्गीविकां
कुर्वन्तं नयनातिथिं पुनरहो कर्तुं किमाकाङ्क्षसि ॥'

अत्र द्वितीयपादे वायुत्ववह्नित्वजात्योर्विरोधः ।

यथा वा—

'रभसादपि(भि)सर्तुमुद्यतानां दयितानां सखि वारिदो विवस्वान् ।
रजनी दिवसोऽन्धकारमर्चिर्विपिनं वेश्म विमार्ग एव मार्गः ॥'

अत्र घनत्वादिजातीनां सूर्यत्वादिजात्या विरोधः । द्वादशसूर्यव्यक्तिवृत्तितया तस्य जातित्वात् । जातिपदं च सामान्यमात्रपरम् । तेनान्धकारत्वादीनामजातित्वेऽप्यदोषः । जातीनामेकार्थासमवायित्वमेव विरोधबीजं रागोत्कर्षेण तेषां प्रतिबन्धकत्वाभावादविरोधः ।

जातेर्गुणेन यथा—

'[१]परं जोण्हा उण्हा गरलसरिसो चन्दणरसो
खदक्खारो हारो रअणिपवणा देहतवणा ।
मुणाली बाणाली जलदि अ जलद्दा तणुलदा
वरिट्ठा जं दिट्ठा कमलवअणा दीहणअणा(सा सुणअणा) ॥'

अत्र ज्योत्स्नात्वजातेरौष्ण्येन स्पर्शविशेषे रूपगुणेन सह तन्निष्ठकार्यतानिरूपितसमवायिकारणतानवच्छेदकत्वरूपो विरोधः । विरोध(रह)वर्णनात्परिहारः ।

जातेः क्रियया यथा—

'[२]किसलअकरचरणा वि हु कुवलअणअणा मिअङ्कवअणा वि ।
अहह णवचम्पअङ्गी तह वि तावेइ अच्चरिअम् ॥'

---

१. 'परं ज्योत्स्ना उष्णा गरलसदृशश्चन्दनरसः
क्षतक्षारो हारो रजनिपवना देहतपनाः ।
मृणाली बाणाली ज्वलति च जलार्द्रा तनुलता
वरिष्ठा यद्दृष्टा कमलवदना सा सुनयना ॥' [कर्पूरमञ्जरी २।११]

२. 'किसलयकरचरणापि खलु कुवलयनयना मृगाङ्कवदनापि ।
अहह नवचम्पकाङ्गी तथापि तापयत्याश्चर्यम् ॥' [कर्पूरमञ्जरी २।४२]

अत्र किसलयत्वादिजातीनां तप(तापय)तीति क्रियया सह तज्जनकतानवच्छेदकत्वरूपो विरोधः । प्राग्वत्परिहारः ।

जातेर्द्रव्येण यथा मम—

'प्राणेश्वरो गुरुजनेन कृतान्नियोगाद्देशान्परानगमदित्युदयत्यसूया ।
दुर्दैववैभवबलात्सखि सांप्रतं यच्चन्द्रोऽपि वह्निरभवत्क इहापराध्येत् ॥'

इह चन्द्रत्वमेकव्यक्तिवृत्तित्वान्न जातिरिति द्रव्यशब्दोऽयं तेन वह्नित्वजातेस्तत्समवेतत्वाभावरूपविरोधः । प्राग्वदेव परिहारः । यद्यपि परिमाणभेदेन द्रव्यभेदावश्यकत्वात्तैजसतया संतानान्तरोत्पत्त्यावश्यकत्वाच्च चन्द्रस्यानेकत्वमेवास्ति । तथा च समानकालीनानेकवृत्तिधर्म एवात्र जातित्वेन विवक्षितः । चन्द्रस्य च क्षणादेव भेदेन बहुत्वेऽप्येकक्षणे तदभावात् । चन्द्रपदस्य वाचकत्वमुक्तम् । एवमन्यत्रापि बोध्यम् ।

गुणस्य गुणेन यथा—

'[1]सरसा वि सूसइ च्चिअ जाणइ दुक्खाइं मुद्ध(हि)अआ वि ।
रत्ता वि पण्डुर च्चिअ जाआ वरई तुह विओए ॥'

इह रक्तत्वपाण्डुरत्वगुणयो रक्तत्वसमानकालीनतदवच्छेदकानवच्छेद्यत्वरूपो विरोधः । रक्तपदस्यानुरागार्थत्वात्परिहारः ।

गुणस्य क्रियया यथा—

'यदिन्दावानन्दं प्रणयिनि जने वा न भजते
व्यनक्त्यन्तस्तापं यदयमतिधीरोऽपि विषमम् ।
प्रियङ्गुश्यामाङ्गप्रकृतिरपि चापाण्डुमधुरं
वपुः क्षामं क्षामं वहति रमणीयश्च भवति ॥'

अत्र धैर्यगुणस्य तापव्यक्तिक्रियया तत्प्रतिबन्धकत्वरूपो विरोधः । विरहावस्थाप्राबल्यात्तन्निरासः ।

---

१. 'सरसापि शुष्यत्येव जानाति दुःखानि मुग्धहृदयापि ।
रक्तापि पाण्डुरैव जाता वराकी तव वियोगे ॥' [गाथा० ६।३३]

गुणस्य द्रव्यभेदेन यथा मम—

'देवः स वाङ्मनसगोचरताविहीन-
भूरिप्रभावविभवः प्रमदं क्रियाद्वः ।
वैरोचनिं सुरकृते निजिघृक्षमाण-
स्याकाशमप्यणु कृतं चरणेन यस्य ॥'

अत्राकाशत्वमेकव्यक्तिकत्वान्न जातिः इति द्रव्येण तेन अणुपरिमाणरूपगुणस्य तदनधिकरणत्वरूपो विरोधः । भगवत्प्रभावातिशयात्तदभावः ।

क्रियायाः क्रियया यथा—

'निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा
कलाशेषा मूर्तिः शशिन इव नेत्रोत्सवकरी ।
अवस्थामापन्ना मदनदहनोद्दाहविधुरा-
मियं नः कल्याणी रमयति मनः कम्पयति च ॥'

अत्र रमणकम्पक्रिययोर्युगपदेककारणजन्यत्वरूपो विरोधः । अवच्छेदकद्वयसत्त्वात्तदभावः ।

क्रियाया द्रव्येण यथा—

'[1]कम्पइ महिन्दसेलो हरिसंखोहेण दलइ मेइणिवेढम् ।
सइ दुद्दिणतणाओ णवर ण उद्धाइ मलअवणकुसुमरओ ॥'

अत्र महेन्द्रशैलत्वमेतद्धटत्ववन्न जातिः इति तेन द्रव्येण कम्पक्रियायास्तत्समवायिकत्वाभावरूपो विरोधः । वानरातिशयवर्णनात्परिहारः । अत्र विरोधितावच्छेदकतापर्याप्त्यधिकरणत्वेन विवक्षितो यो धर्मस्तद्वत्त्वमेव विरोधित्वम् । प्रकृते च महेन्द्रशैलत्वस्यैव तथात्वेन शैलत्वस्य जातित्वेऽप्यदोषः ।

द्रव्यस्य द्रव्येण यथा मम—

'प्रतिलवविवर्धमानत्वत्कीर्तिकदम्बसंबाधम् ।
आकाशमपि महीश्वर हिमवानिति कौतुकं भाति ॥'

1. 'कम्पते महेन्द्रशैलो हरिसंक्षोभेण दलति मेदिनीपृष्ठम् ।
सदा दुर्दिनार्द्रं केवलं नोद्धावति मलयवनकुसुमरजः ॥' [सेतु० ६।२२]

अत्राकाशत्वं हिमवत्त्वं च न जातिरिति द्रव्ययोस्तादात्म्याभावरूपो विरोधः । कीर्तिबाहुल्यवर्णनात्परिहारः ।

अत्र वदन्ति—विरोधार्थकस्यापिशब्दादेः सत्त्वे विरोधः शाब्दः, अन्यथा त्वार्थः, इति तावत्सिद्धान्तस्थितिः । तत्र यद्यपि विरोधस्य शाब्दत्वं न शब्दजन्यज्ञानविषयत्वं विशेष्यविशेषणसंसर्गातिरिक्तस्य शाब्देऽभानात् । न च 'त्रयोऽप्यत्रयः' इत्यादौ नञुत्तरपदार्थयोरन्वये प्रतियोगित्वस्य संसर्गत्वात्तस्यैव च विरोधपदार्थत्वात्संसर्गतयैव तद्भानमिति वाच्यम् । 'सुप्तोऽपि प्रबुद्धः' इत्यादौ तथाप्यगतेः । न च तत्रापि लक्षणया 'सुप्तत्वविरुद्धप्रबुद्धत्ववदभिन्नः सुप्तः' इति बोध इति वाच्यम् । तथाननुभवादिति उक्तव्यवस्थानुपपत्तिः । तथापि 'सुप्तोऽपि प्रबुद्धः' इत्यादौ स्वापप्रबोधरूपोभयधर्मोपस्थितौ सत्यां तयोर्विरोधोऽपि स्मर्यते । ततश्च प्रतिबन्धकज्ञानसामग्र्या बलवत्त्वात् 'विरुद्धाविमौ धर्मौ' इति मानसे व्यञ्जनामूलके वा बोधे सति नैव प्रतिबन्धः । सुप्तप्रबुद्धादिपदार्थानामभेदान्वयबोधस्यानुदयात् । शक्त्यन्तरोल्लसितद्वितीयार्थमादायैवान्वयबोधः । न चैवं विरोधस्यालंकारत्वानुपपत्तिः शिथिलमूलत्वेन तस्य निवृत्तेरिति वाच्यम् । कविसंरम्भगोचरत्वेन तस्यैव चमत्कारहेतुत्वादिति ।

अन्ये तु—विरोधप्रतियोगिपदार्थयोर्विरोधज्ञानरूपप्रतिबन्धकसत्त्वादभेदान्वयबोधविरहे श्लेषभित्तिकाभेदाध्यवसायन्यायेन विरोधोल्लासकपदार्थोऽन्वयप्रतियोगिपदार्थाभिन्नत्वेन भासते । तथा चाभिन्नरुद्धार्थान्वयेऽपि[1] तदभेदप्रतियोगिविरुद्धार्थस्यापि निःशेषतया निवृत्त्यभावान्मानसज्ञानविषयत्वेन विरुद्ध एव चमत्कारीत्याहुः ।

वयं तु—अन्वयप्रतियोगिपदार्थायोगाध्यवसितविरोधप्रतियोगिपदार्थेन[2] सहैवान्यपदार्थाभेदान्वयबोधः । विरोधज्ञानसत्त्वेऽप्याहार्यव्यञ्जनाधीने वा बोधे तस्य प्रतिबन्धकत्वाभावेनाभेदज्ञानोपपत्तेः । यद्वान्वयप्रतियोगिपदार्थाभिन्नत्वेनाज्ञायमानविरोधप्रतियोगिपदार्थभेदान्वयज्ञानस्यैव विरोध-

१. 'चाविरुद्धा' ख. २. 'पदार्थभेदा' ख.

ज्ञानप्रतिबध्यतावच्छेदकत्वकल्पनात् । यद्वा । आहार्ययोग्यताज्ञानेन विरोधज्ञानसत्त्वेऽप्यभेदान्वयबोधसंभवात् । अथ वा । ईदृशस्थले विरुद्धप्रतियोगिकाभेद एव संसर्गतया भासते । अपिशब्दश्च तात्पर्यग्राहकः। न च विरोधाभेदयोः परस्परविरुद्धत्वेनैककालावच्छिन्नैकसंसर्गत्वानुपपत्तेः। अभेदस्यैव नामार्थान्वयसंसर्गतया विरोधस्य तत्त्वे मानाभावाच्चेति वाच्यम्। अनुभवानुरोधेन तत्कल्पनात् । अभेदसंसर्गताया एवमप्यनपायाच्च । विरोधज्ञानस्य चाभेदसंसर्गकज्ञानत्वमेव प्रतिबध्यतावच्छेदकं न तु विरोधिविशेषितमपि । यद्वा । अपिशब्दोपस्थापितो विरोध एकपदार्थनिष्ठप्रकारतानिरूपितप्रतियोगित्वनिष्ठसांसर्गिकविषयतानिरूपितविशेष्यताशाली सन् आश्रयत्वसंबन्धेनापरपदार्थेऽन्वेति । पुनश्चैकपदार्थोऽभेदसंबन्धेनापरपदार्थेऽन्वेति । तथा च 'सुप्तोऽपि प्रबुद्धः' इत्यत्र 'सुप्तत्ववदभिन्नश्च प्रबुद्धत्ववान्' इति बोधः, व्युत्पत्तिवैचित्र्याच्च सुप्तत्वादेः प्रतियोगितया विरोधे आश्रयत्वादिना च पदार्थान्तरेऽन्वयो न विरुद्ध इति युक्तमाकलयामः ॥

'कुसुमानि शराश्चन्द्रो वाडवो दुःखितो हृदि ।'

इत्यादौ कथं विरोधस्यालंकारत्वम् आरोपसत्त्वेन रूपकस्यैव संभवात्, अन्यथा रूपकस्थलेऽपि विरोधस्यैवालंकारत्वप्रसङ्गात् ।

अत्राहुः—रूपकस्थले उपमाननिष्ठासाधारणगुणानामुपमेयगतत्वेन तत्प्रतिपत्त्यर्थं तन्निर्वाहकरारोपस्यैव चमत्कारकत्वम्, न तु विरोधस्य, तेन विवक्षितार्थानुपादानात् । 'कुसुमानि—' इत्यादौ च कुसुमानामपि दुःखजनकत्वप्रयुक्त एव चमत्कारो विवक्षितो विरहिण्यवस्थादीनामत्यद्भुतत्वस्यैव विवक्षितत्वात्तस्य च विरोधेनैवोपपादनात् । अतः सत्तामात्रेण नारोपस्यालंकारतेति ॥

इति विरोधाभासः ।

---

स्वभावोक्तिं निरूपयति—

**यो वस्तुनः स्वभावस्तस्य निरुक्तिः स्वभावोक्तिः ।**

तज्जातीयनियतधर्मवर्णनं स्वभावोक्तिः । स्वभावो हि द्विविधः—साधारणः,

प्रातिस्विकश्च । तत्र जातिविशेषावच्छिन्नस्य तस्य चमत्कारित्वेऽपि दशाविशेषावच्छिन्नस्वभावस्य लौकिकत्वेऽपि प्रतिभामात्रगम्यतया चमत्कारजनकत्वादलंकारत्वादिति न्यायपञ्चाननादयः ।

यथा—

'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविततमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥'

यथा वा—

'कुर्वन्नाभुग्नकण्ठो मुखनिकटकटिः कंधरामातिरश्चीं
लोलेनाहन्यमानं तुहिनकणमुचा चञ्चता केसरेण ।
निद्राकण्डूकषायः कषति निबिडितश्रोत्रशुक्तिस्तरङ्ग-
स्त्वङ्गत्पक्ष्माग्रलग्नप्रतनुबुसकणाक्रान्तमङ्गं खुरेण ॥'

इति स्वभावोक्तिः ।

---

व्याजस्तुतिं निरूपयति—

**व्याजस्तुतिर्विपर्ययपर्यवसानेऽस्तुतिस्तुत्योः ।**

अस्तुतेर्निन्दायाः स्तुतौ पर्यवसाने स्तुतेर्वा निन्दायां तात्पर्ये व्याजस्तुतिः । व्याजेन स्तुतिर्व्याजरूपा वा स्तुतिरिति व्युत्पत्तेरित्यर्थः ।

आद्या यथा मम—

'मित्रं वीर तिरस्करोषि महसा पूज्यं परं मन्यसे
दूरादस्यसि मार्गणान्गुणयुतान्धत्सेऽतिवक्रं धनुः ।
नित्यं चासि सुवर्णदाननिरतो दण्डैकसक्तान्तर-
स्त्वां कैर्नाम गुणैस्त्रिलोकतिलक स्तुत्यास्पदं कुर्महे ॥'

द्वितीया यथा—

'किं केतकीकुसुम कौशलमुच्यतां ते
यद्वायसैरपि सदा सहभावमाप्य ।

१. 'सस्यै' ख.

जूटाञ्चलं विनरकीकसदामसङ्ग-
भीत्या शिरः स्मररिपोरपि निर्जहासि ॥'

अलंकारान्तरसंकीर्णा यथा—

'उग्रग्राहमुदन्वतो जलमतिक्रामत्यनालम्बने
व्योम्नि भ्राम्यति दुर्गमं क्षितिभृतां मूर्धानमारोहति ।
व्याप्तं याति विषाकुलैरहिकुलैः पातालमेकाकिनी
कीर्तिस्ते मदनाभिराम कृतकं मन्ये भयं योषिताम् ॥'

अत्र कीर्तौ स्वैरिणीव्यवहाराश्रयप्रतीत्युल्लासितनिन्दायाः स्तुतिपर्यवसायितया समासोक्तिसंकीर्णा ।

अन्यनिन्दास्तुतिभ्यामन्यस्तुतिनिन्दावगतावपि अयं दृश्यते । यथा—

'कस्त्वं वानर रामराजभवने लेखार्थसंवाहको
यातः कुत्र पुरागतः स हनुमान्निर्दग्धलङ्कापुरः ।
बद्धो राक्षससूनुनेति बहुशः संताडितस्तर्जितः
स व्रीडात्तपराभवो वनमृगः कुत्रेति न ज्ञायते ॥'

अत्र हनूमन्निन्दया वानरान्तरस्तुत्यभिव्यक्तिः ।

'यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्मृषा
नैषां गर्ववचः शृणोति न च तान्प्रत्याशया धावसि ।
काले बालतृणानि खादसि परं निद्रासि निद्रागमे
तन्मे ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तं तपः ॥'

अत्र हरिणस्तुत्या राजसेवानिर्विण्णस्यात्मनो निन्दा व्यज्यते इति दीक्षिताः ॥

प्राञ्चस्तु स्तुतिनिन्दयोः सामानाधिकरण्येन प्रतीतावेवोक्तालंकारमभ्युपगच्छन्ति । तेषामयमाशयः—निन्द्यत्ववद्विषयकत्वं स्तुत्यवद्विषयकत्वं च तावत्स्तुतिनिन्दयोर्व्याजत्वमिति स्पष्टमेव । तदेव चोक्तालंकारप्रवृत्तिनिमित्तम् । तच्च यस्यैव स्तुतिनिन्दे तस्यैव निन्दास्तुत्योः प्रतीतौ संभवति

न त्वन्यथा। न च स्वविपर्ययतात्पर्यवत्स्तुतिनिन्दान्यतरकत्वमेव प्रवृत्तिनिमित्तं तच्च सामानाधिकरण्यवैयधिकरण्योभयसाधारणमिति वाच्यम्। एकालंकारकोपाध्यवच्छिन्नविषयसाधारणस्यालंकारान्तरविभाजकोपाधेः कल्पयितुमनुचितत्वात्। वैयधिकरण्यस्थले चाप्रस्तुतप्रशंसयैवोपपत्तेस्तत्साधारणप्रवृत्तिनिमित्तकल्पने प्रमाणाभावात्॥ तदुक्तमाचार्यदण्डिना—

'अप्रस्तुतप्रशंसा स्यादप्रकाण्डे तु या स्तुतिः।
अर्थैरयत्नसुलभैर्जलदर्भाङ्कुरादिभिः॥

सुखं जीवन्तु हरिणा न येष्व(ये स्व)परसेविनः।
सेयमप्रस्तुतेवात्र मृगवृत्तिः प्रशस्यते।
राजानुवर्तनक्लेशनिर्विण्णेन मनस्विना॥'

इति॥ यत्तु—अप्रस्तुतप्रशंसायामप्रस्तुतेन प्रस्तुतार्थप्रतिपत्तिमात्रं न तु प्रकृताप्रकृतयोर्निन्दास्तुतिस्वरूपनियमः। अत्र स्तुत्या निन्दाभिव्यक्तिनियमात्। किं चैवं संमतस्थलेऽप्यप्रस्तुताभ्यां स्तुतिनिन्दाभ्यां प्रस्तुतनिन्दास्तुतिप्रतीतिरित्यप्रस्तुतप्रशंसैव स्यात् इति व्याजस्तुतेरुच्छेदापत्तिः। स्तुतिनिन्दाप्रतीतिनियमरूपविशेषादतिरेकस्तूभयत्रापि समानः। अतः—'अर्थैरयत्नसुलभैः—' इत्यादौ व्याजस्तुतिरेव युक्तेति॥ तच्चिन्त्यम्। अप्रस्तुतेन प्रस्तुतप्रतिपत्तिमात्रमप्रस्तुतप्रशंसास्वरूपम्। तच्चोक्तस्थलेऽप्यबाधितमेवेति न निन्दास्तुतिप्रतीतिनियमवैलक्षण्येनातिरिक्तत्वसंभवः। उक्तधर्मावच्छिन्नत्वेन तदैक्यसिद्ध्यावान्तरविशेषेण तद्भेदानुपपत्तेः। अन्यथानयैव रीत्या सामान्यधर्मावच्छिन्नावान्तरतत्तद्विशेषस्थलेऽप्यलंकारान्तरकल्पनेऽप्रस्तुतप्रशंसाविलयापत्तेः॥ यदपि किं चैवमित्यादि, तदप्यसत्। संमतस्थले स्तुतिनिन्दयोरेकधर्मत्वादप्रस्तुतप्रशंसायास्तत्रासंभवेन व्याजस्तुतेः पार्थक्यस्य साम्राज्यात्। प्रस्तुतधर्मिकेऽप्यप्रस्तुतप्रशंसाभ्युपगमे तु ललितालंकारपार्थक्यस्वीकारस्तत्रैव व्याहतः स्यादिति दिक्॥

इति व्याजस्तुतिः।

---

सहोक्तिं निरूपयति—

सह समभिव्याहारात्सहोक्तिरुभयान्विते धर्मे ।

सहादिपदसंनिधानाद्यत्र धर्मवाचकपदस्य विशेष्यविशेषणोभयान्वितार्थबोधकत्वं सा सहोक्तिः । उभयनिष्ठधर्मस्य सहैवोक्तिर्यत्रेति व्युत्पत्तेरित्यर्थः । 'चैत्रमैत्रौ सहागच्छतः' इत्यत्र तु सहशब्दसमभिव्याहारप्रयुक्तो नोभयत्रान्वयः । न वा गुणप्रधानभावेनेति नातिव्याप्तिः । तस्माद्यत्रैकत्र मुख्यतयान्यत्र च गौणतया धर्मान्वयस्तत्रायमलंकारः । यथा—

'दि[1]अहे दिअहे सूसइ संकेअअभङ्गवड्ढिआसङ्का ।
आवण्डुरोणअमुही कलमेण समं कलमगोवी ॥'

अत्र कलमेन समं कलमगोपी शुष्यतीति वाक्यम् । तत्राख्यातार्थप्रकारकशाब्दबोधं प्रति प्रथमान्तपदजन्योपस्थितेः कारणतया गोपीत्यत्रैव शुष्यतीत्यस्यान्वयः संभवति न तु कलमपदे । तस्य प्रथमान्तत्वाभावात् । तथापि सहशब्दसमभिव्याहारात्तदन्वयः । सहार्थो हि साहित्यम् । तच्चैकधर्मान्वयित्वरूपम् । न च कलमपदे शुष्यतीत्यस्यानन्वये तयोः साहित्यं संभवतीति । तथा च कलमनिष्ठसमानकालीनशोषाश्रया गोपीत्यर्थः ।

मालारूपा यथा—

'धी[2]रेण णिसाआमा हिअएण समं अणिट्ठिआ उवएसा ।
उच्छाहेण सह भुआ बाहेण समं गलन्ति से उल्लावा ॥'

यथा वा—

'उत्क्षिप्तं सह कौशिकस्य पुलकैः सार्धं मुखैर्नामितं
भूपानां जनकस्य संशयधिया साकं समास्फालितम् ।
वैदेहीमनसा समं च सहसाकृष्टं ततो भार्गवप्रौढाहंकृतिदुर्मदेन सहितं तद्भग्नमैशं धनुः ॥'

---

१. 'दिवसे दिवसे शुष्यति संकेतकभङ्गवर्धिताशङ्का ।
आपाण्डुरावनतमुखी कलमेन समं कलमगोपी ॥' [गाथा० ७।९१]

२. 'धैर्येण निशायामा हृदयेन सममनिष्ठिता उपदेशाः ।
उत्साहेन सह भुजौ बाष्पेण समं गलन्त्यस्योल्लापाः ॥' [सेतु० ५।७]

अत्राद्ये कार्यकारणयोः साहित्यरूपातिशयोक्तिमूलेयम्। गोपीशोकस्य कलमशोषजन्यत्वेऽपि द्वयोः समानकालत्वाभिधानात् समास्फालिताकृष्टादिधर्मयोरभेदाध्यवसायरूपातिशयोक्तिमूला। धनुषः समास्फालनं क्रियाविशेषः संशयज्ञानस्यानाकर्षणकोटिप्रतिबन्धः। आकर्षणं स्वाभिमुखजनकं कर्म। मनसस्तु स्वानुरक्तत्वमिति विशेषसत्त्वात्।

अत्र वदन्ति—धर्मयोरभेदाध्यवसानमूलत्वस्थल एव सहोक्तिर्भवितुमर्हति। कार्यकारणयोः पौर्वापर्यविपर्ययात्मकातिशयोक्तिमूलभेदस्तु प्राचीनोक्तो न युक्तः। तत्रातिशयोक्तेरेवालंकारत्वसंभवात्।

'तव कोपोऽरिनाशश्च जायेते युगपन्नृप।'

इत्यतिशयोक्त्यपेक्षया

'तव कोपोऽरिनाशश्च सहैव नृप जायते।'

इति सहोक्तौ विच्छित्तिविशेषाननुभवात्। तस्यैव चालंकारपार्थक्यव्यवस्थापकत्वात्। न चैवं धर्मयोरभेदाध्यवसानस्थलेऽप्यतिशयोक्तिसत्त्वात्कथं पार्थक्यमिति सहोक्त्युच्छेद इति वाच्यम्। तत्राभेदाध्यवसायस्य सहोक्त्युपस्कारकत्वेन गुणतया सहोक्तितिरस्काराभावात्। पौर्वापर्यविपर्ययस्थले च सहोक्तेरेवातिशयोक्त्युपस्थापकत्वेन वैषम्यात्। किं च। उपमानेनोपमेयनिगरणमेवातिशयोक्तिरलंकारः। निगरणमात्रं तु न तथा। अतोऽत्रातिशयोक्तिविषयाभावात्सहोक्तिरेवेति।

वस्तुतः—दीपके तुल्ययोगितायां वै तदन्तर्भावः। तत्रैकरूपेण सर्वत्र धर्मान्वयोऽत्र तु गुणप्रधानभावेनेति विशेषस्तु तदवान्तरभेदत्वमेव साधयति न त्वतिरिक्तत्वम्, विच्छित्तिविशेषानाधायकत्वात्। तस्मात्प्राचीनानुभवमात्रप्रमाणकमेवास्याः पार्थक्यमिति॥

इति सहोक्तिः।

---

विनोक्तिं निरूपयति—

**यत्रान्येन विनान्योऽसाधुः सन्वा विनोक्तिः सा।**

---

१. 'त्प्रकारा' ख. २. 'साधुः' इत्यलंकारमुक्तावल्यां पाठः.

यत्र केनचिद्विना कस्यचिदप्राशस्त्यं प्राशस्त्यं वोच्यते सा विनोक्तिरित्यर्थः ।

आद्या यथा—

'तव रूपमिदं तया विना विफलं पुष्पमिवावकेशिनः ।
इयमृद्धधना यथा वनी स्ववनीसंप्रवदत्पिकापि का ॥'

अत्र भैमीव्यतिरेकेण नलीयरूपादीनामप्राशस्त्यम् ।

यथा वा—

'अनेन रहिता नैषा नानया रहितोऽप्यसौ ।
का ह्यब्जिनी विना हंसं कश्च हंसोऽब्जिनीं विना ॥'

अत्र मन्दारवतीसुन्दरसेनयोरन्योन्यव्यतिरेकप्रयुक्तमन्योन्यनिष्ठमप्राशस्त्यम् ।

द्वितीया यथा मम—

'निशयेव विना सरोजिनी सरसी प्रावृषमन्तरा यथा ।
विषदत्वमुपैति भारती जडभावेन विना विपश्चिताम् ॥'

अत्र जाड्यादिव्यतिरेकप्रयुक्तभारत्यादिनिष्ठप्राशस्त्याभिधानम् । विनापदं चार्थपरम् । तेनान्तरेत्यादीनामुपसंग्रहः ।

केचित्तु—नित्यसंबन्धानामसंबन्धवचनं **विनोक्तिः** ।

यथा—

'मृणालमन्दानिलचन्दनानामुशीरशैवालकुशेशयानाम् ।
वियोगदूरीकृतचेतनाया विनैव शैत्यं भवति प्रतीतिः ॥'

अत्र चन्दनादीनां शैत्यस्य विनाभावेऽपि विनाभावो निबद्ध इत्याहुः, तच्चिन्त्यम् । अत्र शैत्यसाक्षात्काराभावस्यैवोक्त्या शैत्यविनाभावस्यानुक्तेः । न च चन्दनादिस्पार्शनस्य शैत्यविषयकत्वनियमादत्र च चन्दनादिस्पार्शने शैत्यविषयकनियमस्यासिद्धेरिति तस्मादविनाभावोऽत्र प्रायिकसाहचर्यमेव ग्राह्यमित्येव संगतिः ।

यत्तु—अलंकारान्तरलिङ्गेनैवात्र चमत्कारो न स्वतः, अतो नातिरिक्ते-

यमिति, तन्न । उक्तोदाहरणेषु किंचिद्व्यतिरेकप्रयुक्ताप्राशस्त्यादिज्ञानादेव चमत्कारोदयात् ॥

इति विनोक्तिः ।

---

परिवृत्तिं निरूपयति—

**सदृशासदृशैरर्थैरर्थानां विनिमयस्तु परिवृत्तिः ।**

समेन समस्य, न्यूनेनोत्तमस्य, [1]न्यूनेन न्यूनस्य च विनिमय इति त्रेधा परिवृत्तिः ।

आद्या यथा—

'आदाय चरणकिसलयमस्मादियमत्र चरणमर्पयति ।
उभयोः सदृशविनिमयादात्मानमवञ्चितं मन्ये ॥'

अत्र मालविकाया अशोकवृक्षात्कर्णावतंसार्थं किसलयं गृहीत्वा तत्र दोहदार्थं चरणप्रहारः कृतः इत्यग्निमित्रोक्तौ उत्तमेनोत्तमस्य विनिमयः ।

न्यूनेन न्यूनस्य यथा—

'अस्थिमालामयीं दत्त्वा मुण्डमालामयीं तनुम् ।
गृह्णतां त्वत्पुरस्थानां को लाभः स्मरशासन ॥'

इति रसगङ्गाधरकृतः ।

द्वितीया यथा—

'आदत्त दीप्तं मणिमम्बरस्य दत्त्वा यदस्मै खलु सायधूर्तः ।
[2]रंज्यत्तुषारद्युति कूटहेम तत्पाण्डुलाभं रजतं क्षणेन ॥'

अत्र सायंकालेन चन्द्ररूपं कृत्रिमसुवर्णं दत्त्वा सूर्यरूपो मणिविशेषो गृहीत इति न्यूनेनोत्तमस्य ।

तृतीया यथा—

'अस्ताचलेऽस्मिन्निकषोपलाभे संध्याकषोल्लेखपरीक्षितो यः ।
विक्रीय तं हेलिहिरण्यपिण्डं तारावराटानियमादित द्यौः ॥'

---

१. 'उत्तमेन' इत्यलंकारमुक्तावलीसदृश एवात्रापि पाठो योग्यः, 'उत्तमेन न्यूनस्य' इति तृतीयोदाहरणोपसंहारग्रन्थात्. २. 'रज्यन्तियारद्युति' ख.

अत्र स्वर्णपिण्डेन वराटकोपादानादुत्तमेन न्यूनस्य ॥

एषा च क्वचिदर्थगम्यापि ।

यथा—

'[1]सुहउच्छअं जणं दुल्लहं वि दूराहि अम्ह आणेन्त ।
उअआरअ जर जीअं वि णेन्त ण कआवराहो सि ॥'

अत्र प्रियदर्शनजीवनयोर्विनिमयो गम्यते ।

यथा वा—

'[2]वाएरिएण भरिअं अच्छि कण्णऊरउप्पलरएण ।
फुक्कन्तो अविइह्णं चुम्बन्तो को सि देवाणम् ॥'

अत्राक्षिरजोविभागं दत्त्वा तच्चुम्बनोपादानम् ।

यथा वा—

'[3]जम्मन्तरे वि चलणं जीएण खु मअण तुज्झ अच्चिस्सम् ।
जइ तं पि तेण बाणेण विज्झसे जेण हं विज्झा ॥'

अत्र नायकबाणवेधं स्मरद्वारा कृत्वा तस्मै जीवदानम् ।

यत्र चमत्कारस्तत्रैवेयम् । अतः—

'[4]विक्किणइ माहमासम्मि पामरो पावलिं वइल्लेण ।
णिद्धूमसुम्मुर बिअ सामलीअ थणे पडिच्छन्तो ॥'

इत्यादौ नातिप्रसङ्गः । अत्र स्वकीयं परित्यज्यान्यस्योपादानमेतदलंकारशरीरम् ॥

---

१. 'सुखपृच्छकं जनं दुर्लभमपि दूरादस्माकमानयन् ।
उपकारक ज्वर जीवमपि नयन्न कृतापराधोऽसि ॥' [गाथा० १।५०]

२. 'वातेरितेन भृतमक्षि कर्णपूरोत्पलरजसा ।
फूत्कुर्वन्नवितृष्णां चुम्बन्कोऽसि देवानाम् ॥' [गाथा० २।७६]

३. 'जन्मान्तरेऽपि चरणौ जीवेन खलु मदन तवार्चयिष्यामि ।
यदि तमपि तेन बाणेन विध्यसि येनाहं विद्धा ॥' [गाथा० ५।४१]

४. 'विक्रीणीते माघमासे पामरः प्रावरणं बलीवर्देन ।
निर्धूममुर्मुरनिभौ श्यामल्याः स्तनौ पश्यन् ॥' [गाथा० ३।३८]

'किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम् ।' इत्यादिवदिति केचित् ।

स्वकीयस्यान्याधीनत्वकरणमपि लक्षणान्तर्गतमित्यपरे ॥

इति परिवृत्तिः ।

---

भाविकं निरूपयति—

**भाविकमध्यक्षं स्यात्सध्वंसप्रागभावानाम् ।**

सध्वंसा अतीताः सप्रागभावा भाविनः प्रतियोगित्वस्य साहित्यार्थतया विवक्षितत्वात् । तथा च भूतानां भाविनां चार्थानां यल्लौकिकप्रत्यक्षविषयत्वमुच्यते तद्भाविकम् । न चातीतानागतानां संनिकर्षविरहेण लौकिकप्रत्यक्षानुपपत्तिः, स्वरूपातिशयमाहात्म्येन तत्कृतोत्कर्षवत्ताया विवक्षितत्वात् ॥ भावः कवेरभिप्रायोऽस्त्यस्येति विषयत्वाख्यसंबन्धपरषष्ठीसमर्थात् मत्वर्थे ठन् । यत्तु—अस्मिन्निति विग्रहप्रदर्शनम्, तन्न । 'सप्तम्यां च न तौ स्मृतौ' इति भाष्यकारोक्तेः ।

भूतस्य लौकिकाध्यक्षविषयतासाम्येनोक्तिर्यथा—

'तं तस्य स्वरसंक्रमं मृदुगिरः श्लिष्टं च तन्त्रीस्वनं
वर्णानामपि मूर्छनान्तरगतं तारं विरामे मृदुम् ।
हेलासंयमितं पुनश्च चलितं रागाद्विरुच्चारितं
यत्सत्यं विरतेऽपि गीतसमये गच्छामि शृण्वन्निव ॥'

अत्र गीतविरामेऽपि तस्य श्रवणरूपसाक्षात्कारश्चारुदत्तेनोक्तः । स्मरणविच्छेदरूपकार्येण दृढसंस्काराधायकतया तस्यातिरमणीयत्वे तात्पर्यम् ॥

भाविनो यथा—

'[1]खुहिअजलसिट्ठसारो मुहणिद्धाविअपसारिओक्काणिवहो ।
आअड्ढिज्जन्तो च्चिअ णज्जइ पडिओ त्ति साअरे रामसरो ॥'

अत्र बाणस्य समुद्रमध्यपाते भाविन्यपि तस्मात्प्रागेव शरपातस्य लौकिकप्रत्यक्षमुक्तम् श्रीरामप्रभावातिशयवर्णने तात्पर्यम् ॥

---

1. 'क्षुभितजलशिष्टसारो मुखनिर्धावितप्रसारितोल्कानिवहः ।
आकृष्यमाण एव ज्ञायते पतितः इति सागरे रामशरः ॥' [सेतु० ५।३८]

ननु कारणाभावेऽपि कार्योत्पत्तिरूपाया विभावनायाः कोऽस्य भेदः। लौकिकप्रत्यक्षं प्रति विषयस्य हेतुतयानागतातीतविषयरूपहेतुव्यतिरेकेऽपि तत्प्रत्यक्षरूपकार्योत्पत्तिः ॥

एवं द्वितीयभेदस्यातिशयोक्तावेवान्तर्भावः । कारणात्प्रागेव कार्योत्पत्तेरभिधानात् । न चात्र—

'यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥'

इत्यादिवत् हेत्वभावत्वेनोक्तिर्नास्तीति वाच्यम् ।

'आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसंस्कारां साक्षात्कुर्वे त्वदाकृतिम् ॥'

'विरतेऽपि गीतसमये' इत्यादौ तत्तद्भूतभाव्यर्थकप्रत्ययैर्हेतूनां ध्वंसप्रागभावबोधनेन हेत्वभावोक्तिसत्त्वात् ॥ 'अनातपत्रोऽप्ययमत्र लक्ष्यते' इत्यादौ नञैव तदभावबोधनात्, इति चेत् ।

उच्यते—कारणतावच्छेदकरूपावच्छिन्नप्रतियोगिताकसंसर्गाभावत्वेन हेत्वभावोक्तौ विभावना । इह तु उक्तरूपावच्छिन्नप्रतियोगिताकत्वं ध्वंसप्रागभावयोर्न संभवत्येव तयोः सामान्यावच्छिन्नप्रतियोगिकत्वाभावात् । 'अनातपत्रोऽपि—' इत्यादौ तु विभावनासत्त्वेऽपि न क्षतिः । एवं द्वितीयभेदस्यातिशयोक्तावपि नान्तर्भावसंभवः । विषयतातिरिक्तसंबन्धावच्छिन्नकार्यतावच्छेदकधर्मावच्छिन्नतादात्म्यातिरिक्तसंबन्धावच्छिन्नकारणतावच्छेदकधर्मावच्छिन्नात्प्रागुत्पत्तावेवातिशयोक्तेरभ्युपगम्यत्वात् । कारणात्प्राक्कार्योत्पत्तिरित्यनेन प्रकारेणोक्तावेवातिशयोक्तिः । भाविविषयप्रत्यक्षत्वेनोक्तौ भाविकमित्यङ्गीकारात् । तन्मुखाभिधानानभिधानयोरेव नियामकत्वाच्च । किं च । तत्रत्यं कार्यतावच्छेदकं कार्याधिकरणवृत्तिप्रागभावप्रति-

1. 'तव' ख.

योगित्वेनोक्तं यत्कारणं तत्प्रतियोगिककार्यतावच्छेदकम् । अत्र तु प्रागभावप्रतियोगित्वेन यत्कारणमुक्तम्, तदतिरिक्तकारणताप्रतियोगिककार्यतावच्छेदकमिति भेद इति दिक् ॥

इति भाविकम् ।

---

काव्यलिङ्गं निरूपयति—

**वाक्यपदार्थत्वाभ्यां हेतूक्तिः काव्यलिङ्गं स्यात् ।**

हेतुवचनं काव्यलिङ्गमिति लक्षणम् । वाक्यपदार्थत्वाभ्यां तस्योक्तिरिति द्वौ भेदौ । आद्यो यथा । [1]............................................ तत्रैव तस्य हेतुत्वं संभवति । अतश्च अपराधद्वयेऽपराधवृत्तौ द्वित्वे अनमनगोचरा या अपेक्षाबुद्धिस्तद्द्वारा अनमनयोः प्रयोजकत्वमेवेति ॥ न च तथाप्युभयसाधारणस्य हेत्वर्थत्वे प्रयोजकस्यापि नववधूसंगमौत्सुक्यस्य हेत्वर्थकसमभिव्याहाराद्दोषतादवस्थ्यमेवेति वाच्यम् । हेतूक्तिस्थल एवोक्तनियमस्य विवक्षितत्वात् ॥ न चैवमपि तत्र परिकरसांकर्यं दुर्वारमेवेति वाच्यम् । हेतुत्वाभिमतस्य शब्दोपात्तत्व एवोक्तनियमस्योक्ततया तदाक्षेपके संगमौत्सुक्ये तदभावेऽपि नियमव्यभिचाराभावेन हेत्वाक्षेपकतयैव काव्यलिङ्गत्वानपायात् । वाक्यार्थहेतुककाव्यलिङ्गस्थलानुरोधात्कार्यबोधकेत्यादि । तथा च कार्यकारणवाचकपदानां यत्र न पदैकवाक्यतयान्वयबोधजनकत्वम्, अपि तु कार्यबोधकानां परस्परं कारणवाचकानां च परस्परमिति भिन्नवाक्यतया जनितान्वयबोधानां पश्चाद्वाक्यैक्यवाक्यतया कार्यकारणभावावगम इति फलितार्थः । 'सुधांशुकलितोत्तंसः', 'महौजसो मानधनाः' इत्यादौ च न हेत्वर्थसमभिव्याहारः ।

'व्यास्थं नैकतया स्थितं श्रुतिगणं जन्मी न वल्मीकतो
नाभौ नाभवमच्युतस्य सुमहद्भाष्यं च नाभाषिषि ।

---

१. 'अत्रत्यमेकं पत्रमुच्छिन्नम्' इत्येवादर्शद्वयेऽप्युपलभ्यते, परंतु 'वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा पुरारे न क्वापि क्वचिदपि भवन्तं प्रणतवान् । नमन्मुक्तः संप्रत्यहमतनुरग्रेऽप्यनतिभाग्महेश क्षन्तव्यं तदिदमपराधद्वयमपि ॥' इति तूदाहरणं भवेत्.

चित्रार्थी न बृहत्कथामचकथं सुत्राम्णि नासं गुरु-
र्देव त्वद्गुणवर्णनं कथमहं कर्तुं जडः शक्नुयाम् ॥'

इत्यादौ च कार्यबोधकपदजन्यान्वयबोधजनकपदजन्यान्वयबोधविषयत्वमेव हेतोरिति नातिव्याप्तिः । तत्र हि मम त्वद्गुणवर्णनशक्तत्वाभावो मम व्यासत्वाद्यभावप्रयुक्त इति फलितार्थः । तत्राहं त्वद्गुणवर्णनशक्त्यभाववानिति कार्यबोधकपदमहंपदमपि । तदेव च 'व्यास्थं नैकतया—' इत्यादिकारणबोधकपदजन्यान्वयबोधजनकमप्यस्ति । तत्राप्यहंपदस्य विशेष्यत्वादिति दिक् ॥

यत्तु रसगङ्गाधरे—'अनुमितिकरणत्वेन सामान्यविशेषभावाभ्यां चानालिङ्गितः प्रकृतार्थोपपादकत्वेन विवक्षितोऽर्थः काव्यलिङ्गम्' इति लक्षणं कृत्वा उपपादकत्वेनेत्यस्य न तु शब्दात्तेन रूपेण बोधित इत्यर्थकतया शब्दप्रतिपादितहेतुत्वकस्य हेतोरेव वारणं प्रयोजनम् । तेन—

'भयानकत्वादसि वर्जनीयो दयाश्रयत्वादसि देव सेव्यः ।'

इत्यत्र न व्यभिचारः—इत्युक्त्वा

'विनिन्द्यान्युन्मत्तैरपि च परिहार्याणि पतितै-
रवाच्यानि व्रात्यैः सपुलकमपास्यानि पिशुनैः ।
हरन्ती लोकानामनवरतमेनांसि कियतां
कदाप्यश्रान्ता त्वं जगति पुनरेका विजयसे ॥'

'त्रपन्ते तीर्थानि त्वरितमिह यस्योद्धृतिविधौ
करं कर्णे कुर्वन्त्यपि किल कपालिप्रभृतयः ।
इमं तं मामम्ब त्वमथ करुणाक्रान्तहृदये
पुनाना सर्वेषामघमथनदर्पं दलयसि ॥'

इत्युदाहृतम् । तत्परस्परविरुद्धमिति स्पष्टमेव । हेत्वर्थकशतृप्रत्ययेन हेतुत्वस्य बोधितत्वात् । अन्यथा पञ्चम्यापि तद्बोधानुपपत्तेः । 'हरिं पश्यन्मुच्यते' इत्यादौ भगवद्दर्शनमुक्त्योः कार्यकारणभावप्रत्ययस्य सर्वानुभवसिद्धत्वात् । तत्र 'हेतुभूतहरिदर्शनाश्रयो मुच्यते' इति बोधस्यावश्यक-

त्वात् । हेतुत्वं च समभिव्याहृतकार्यापेक्षमेवेति । तत्रार्थान्मुक्तिनिष्ठकार्यत्वनिरूपितत्वलाभात् ॥

नन्वनुमानान्नेदमतिरिच्यते । न च यत्र व्याप्यत्वपक्षत्वाभ्यां ज्ञायमानमुपपादकमुपयुज्यते तत्रानुमानम्, यत्र तु स्वरूपेणैव तत्र काव्यलिङ्गमिति वाच्यम् । उपपादकस्याप्युपपाद्यार्थव्यभिचाराभावात्तद्धर्मवृत्तित्वज्ञानं विनोपपादनसामर्थ्यादिति चेत् ।

अत्र रसगङ्गाधरकृतः—सत्यमत्रानुमितिरूपेवोपपत्तिः, तथापि नेदमनुमानालंकारः । श्रोतरि यल्लिङ्गकानुमितिं बोधयितुं कविः काव्यं निर्मोति तल्लिङ्गकानुमितेरेव तदलंकारत्वात् । इह तु श्रोतर्यनुमितित्वमुपपादयितुमेव काव्यनिर्माणं न तु बोधयितुम् । अपि च कविनिबन्धनप्रमात्रन्तरनिष्ठानुमितिरनुमानालंकारं प्रयोजयति, श्रोतृनिष्ठा महावाक्यार्थनिश्चयानुकूला तु काव्यलिङ्गमिति विशेष इति ।

वस्तुतस्तु—मानान्तरेण निर्ज्ञाते साध्ये तत्राप्रामाण्यशङ्कानिरासाय यत्र तदुपपादकमुच्यते तत्र काव्यलिङ्गम् । तत्र चोपपादकस्य व्याप्यत्वपक्षधर्मत्वाभ्यां गृह्यमाणत्वेऽपि नानुमानत्वम्, सिद्ध्यानुमित्युदयात् । न चैतावताप्यनुमितिकरणत्वमव्याहतमेवेति वाच्यम् । साध्यसाधकत्वायोगव्यवच्छिन्नस्यैवात्र तथात्वेनाभिमतत्वात् । वस्तुतस्तु—उपपादकस्य निरुक्तरीत्योपयोगे व्याप्यत्वादिनानवबोध एव व्यभिचारज्ञाने सत्यपि मानान्तरसिद्धपदार्थप्रतिकूलशङ्कानिरसनसमर्थत्वात् ॥ यद्वा । व्यभिचारस्यास्फुरणे साध्यबुद्ध्या च प्रामाण्यशङ्कानिरासकत्वसंभवेऽपि व्याप्यत्वादिनाप्यज्ञायमानतयानुमितेरापादयितुमशक्यत्वात् । अत एव—

'यन्नेत्रस्य समानकान्तिसलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥'

इति काव्यलिङ्गोदाहरणमलंकारसर्वस्वकृतोक्तम् ।

यत्तु—तत्रानुमानेन चरणत्रयोक्तसादृश्याश्रयविघटकत्वहेतुकदैवपक्षकसादृश्यदर्शनजन्यसुखासहिष्णुकसाध्यकानुमितिसंभवादिति, तदसत्। उत्पलादिमज्जनोपपत्त्यर्थमेवात्र चतुर्थचरणोपन्यासात् तदुक्तरीत्या च विपरीतोपपाद्यैरुपपादकभावलाभप्रसङ्गात्। तस्य चात्रानभिमतत्वात्। सादृश्याश्रयविघटकत्वहेत्वसिद्धेश्च तद्दर्शनस्यैव विघटनात्। न च तदेव हेतुः कर्तव्य इति वाच्यम्। प्रतिबन्धकादौ व्यभिचारात्। व्यभिचारस्फुरणदशायामनुमितिः संभवत्येवेत्यभिधाने तूपपादकत्वस्यापि संभवात्। त्वदुक्तोदाहरणेऽपि 'गङ्गा, सर्वोत्कृष्टा, महापापनाशहेतुत्वात्' इत्यनुमानसंभवाच्च॥

यदपि [रसगङ्गाधरे]—समर्थना दृढतरप्रत्ययो नानुमितिः—इति पक्षमनूद्य—स हि न प्रात्यक्षिकः इन्द्रियसंनिकर्षाभावात्, न शाब्दो मानसो वा, अनुमितिसामग्र्याबलवत्त्वात्—इति, तदप्यसत्। सत्यां व्यभिचारस्फूर्तावनुमितिसामग्र्या एवाभावात्। न च न तदा व्यभिचारस्फूर्तिरिति वाच्यम्। सत्यामपि तस्यां तदुपपत्तेरनुभवसिद्धत्वात्। तस्याश्चानुमित्योपपादयितुमशक्यत्वात्॥ वस्तुतः—अनुमितिरेवालंकारो न तु परामर्श इत्यस्य वक्ष्यमाणतया मानान्तरेण साध्यसिद्धिसत्त्वे चानुमितेरनुदयात् नास्यानुमानान्तर्भावशङ्कापीति सर्वमनवद्यम्॥

यत्तु [रसगङ्गाधरे]—काव्यलिङ्गं नालंकारः कविप्रतिभानिर्मितत्वप्रयुक्तचमत्कारविशेषात्मकविच्छित्तिविरहात्। हेतुहेतुमद्भावस्य लोकसिद्धत्वात्। श्लेषादिसंमिश्रणजन्यस्तु चमत्कारः श्लेषप्रयुक्तत्वात्तदंशस्यैवालंकारतां कल्पयति, न तु काव्यलिङ्गस्य तत्प्रयोज्यचमत्कारान्तराभावादिति, तत्तुच्छम्। लौकिकत्वेऽपि कविप्रतिभामात्रगम्यतया चमत्कारजनकत्वात् एतदीयहेतुहेतुमद्भावमात्रस्य लोकसिद्धत्वाभावाच्च। नह्युक्तसुखालोकोच्छेदादीनां महामोहतादात्म्यादिहेतुत्वं क्वचित्सिद्धम्। किं चैवमप्युपमादेरप्यलं-

१. 'दैवं नायिकाङ्गसादृश्यदर्शनजन्यसुखादिसहिष्णु, तत्तन्नायिकाङ्गसादृश्याधारविघटकत्वात्, मदीयशत्रुभूतयज्ञदत्तादिवत्' इति चानुमानप्रयोगो रसगङ्गाधरे दर्शितः.
२. 'तत्प्रयोजक' ख.

कारत्वं न स्यात् सादृश्यस्य वास्तवत्वेन कविप्रतिभाकल्पितत्वविरहात्। न च तत्राप्युपमाप्रयोजकसाधारणधर्माभेदांशे तत्कल्पितत्वमेवेति वाच्यम्। रमणीयत्वादिनिमित्तधर्मस्यापि लोकप्रसिद्धात्। 'गोसदृशो गवयः' इत्यादेरपि वस्तुतो भिन्नसाधारणधर्माभेदाध्यवसायमूलकत्वात्। द्रव्यत्वादिनिमित्तकसादृश्यस्य शक्तिपरिच्छेदकत्वायोगात्। अभेदांशस्यैव शक्तिकल्पिततया तदंशस्यैवालंकारत्वं न तु सादृश्यस्येत्युक्तदोषापरिहाराच्च। कल्पितत्वावच्छेदकधर्मावच्छिन्नचमत्काराजनकतायास्तद्धर्मावच्छिन्नमात्रालंकारत्वप्रयोजकतायास्त्वयैवोक्तत्वात्। चमत्कारजनकस्य लौकिकस्याप्यलंकारत्वे बाधकाभावात्सर्वालंकारोच्छेदापत्तेश्चेति कृतं पल्लवितेन॥

इति काव्यलिङ्गम्।

---

पर्यायोक्तं निरूपयति—

**पर्यायोक्तं कथितं वाच्यस्यैवान्यभङ्ग्योक्तिः।**

वाच्य एवार्थो[1] यत्र व्यङ्ग्यतयोच्यते तत्पर्यायोक्तम्। अत एव न ध्वनित्वम्। तत्र वाच्यव्यङ्ग्ययोर्भेदात्। एवं च 'व्यङ्ग्यप्रकारसमानाधिकरणप्रकारान्तरेणाभिधानं तत्' इति पर्यवस्यति॥

यथा—

'निवेद्यतां हन्त समापयन्तौ शिरीषकोषं म्रदिमाभिमानम्।
पादौ कियद्दूरमिमौ प्रयासे निधित्सिते तुच्छदयं मनस्ते॥'

अत्र कियद्दूरं गन्तुमिच्छसीति व्यङ्ग्यम्, तदेव भङ्ग्यन्तरेणोक्तम्। दूरगमनेच्छात्वेन प्रकारेण व्यङ्ग्यत्वं पादनिधानेच्छात्वेन इच्छाया वाच्यत्वम्। न चैकस्यैवार्थस्य व्यापारद्वयेनावगमवैयर्थ्यात्पौनरुक्त्यमिति वाच्यम्। प्रकारभेदसत्त्वेन तदभावात्। तदुक्तम्—'यदेवोच्यते तदेव व्यङ्ग्यं न तु यथोच्यते तथा' इति यथा हि। निर्विकल्पकज्ञाने घटो घटत्वं च विषयः। घट इति सविकल्पकेऽपि तदेव। तत्र च निर्विकल्पकत्वे

---

1. 'र्थो व्यञ्जनयो' ख.

घटघटत्वयोर्विशकलितत्वेन सविकल्पकत्वेन[1] तयोर्वैशिष्ट्येन प्रतीतिरिति तयोर्भेद उपपद्यते तद्वदत्रापीति न दोषः ॥

सर्वस्वकारस्तु—व्यङ्ग्यस्यैवाभिधेयत्वायोगात् गम्यस्यैव भङ्ग्यन्तरेणाभिधानं पर्यायोक्तमिति लक्षणानुपपत्तिमाशङ्क्य भङ्ग्यन्तरेण कार्यादिद्वारेणाभिधानमित्यस्यार्थः ।

यथा—

'चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य ।
आलिङ्गनोद्दामविलासवन्ध्यं रतोत्सवं चुम्बनमात्रशेषम् ॥'

अत्र राहुशिरश्छेदकारीति व्यङ्ग्यम् । राहुवधूसंबन्धिरतोत्सवनिष्ठचुम्बनमात्रावशिष्टनिर्मातृत्वेन रूपेणाभिहितम् । भगवतस्तु पूर्वप्रक्रान्तत्वाद्यच्छब्देनाभिधेयत्वाच्च न व्यङ्ग्यत्वम् ।

एवम्—

'यं प्रेक्ष्य चिररूढापि निवासप्रीतिरुज्झिता ।
मदेनैरावणमुखे मानेन हृदये हरेः ॥'

इत्यत्रापि शक्रैरावणौ मदमानमुक्तौ जाताविति व्यङ्ग्ये शक्रैरावणयोरभिधाजन्यबोधविषयत्वान्मदमानमोक्षस्यैव व्यङ्ग्यत्वं पर्यवस्यति । एवं च व्यङ्ग्यांशस्य कदापि रूपान्तरेणाभिधानाद्धर्म्यंशस्य चाभिधेयत्वेन व्यङ्ग्यत्वानर्हतया व्यङ्ग्यस्य प्रकारान्तरेणाभिधानमसंगतमेवेति कार्यादिद्वारेणाभिधानमित्येव लक्षणार्थ उचित इति ॥

अभिनवगुप्तपादाचार्यास्तु—पर्यायेण वाच्यादतिरिक्तप्रकारेण व्यङ्ग्येनोपलक्षितमुक्तमभिहितं पर्यायोक्तमिति लक्षणार्थ इत्याहुः ।

अत्र दीक्षिताः—उभयोरप्ययं क्लेशो व्यर्थ एव । सन्ति हि व्यङ्ग्यस्यैव रूपान्तरेणाभिधाने बहून्युदाहरणानि ।

यथा—

'नमस्तस्मै कृतौ येन मुधा राहुवधूकुचौ ।'

---

१. 'सविकल्पके च तयो' ख.

अत्र भगवान् वासुदेवः स्वासाधारणरूपेण व्यङ्ग्यः। राहुवधूकुचवैयर्थ्यकारित्वरूपान्तरेण स एवाभिहितः।

यथा वा—

'लोकं पश्यति यस्याङ्घ्रिः स यस्याङ्घ्रिं न पश्यति।
ताभ्यामप्यपरिच्छेद्या विद्या विश्वगुरोस्तव॥'

अत्र गौतमः पतञ्जलिश्च स्वासाधारणरूपाभ्यां व्यङ्ग्यौ प्रकारान्तरेणाभिहितौ।

यथा वा—

'देवं वन्दे जलधिशरधिर्दैवतासार्वभौमं
व्यासप्रष्ठा भुवनविदिता यस्य वाहाब्धिवाहाः।
भूषापेटी भुवनमधरं पुष्करं पुष्पवाटी
शाटीपालाः शतमुखमुखाश्चन्दनं दुर्मनोभूः॥'

अत्र वेदत्वाद्याकारेण व्यङ्ग्या एव वेदादयो व्यासादिविनेयत्वाद्याकारेणाभिहिताः। एवं 'चक्राभिघात—' इत्यादावपि स्वरूपेण व्यङ्ग्यस्यापि भगवतो रूपान्तरेणाभिधानमस्तीति यथाश्रुतलक्षणसंभवात्॥ यच्च राहुच्छेदावगमनं तदंशे प्रस्तुताङ्कुर एव। प्रस्तुतेन राहोः शिरोमात्रावशेषेण आलिङ्गनवन्ध्यत्वाद्यापादरूपे भगवतो वाच्ये रूपान्तरे उपपादिते सति भगवद्रूपेणावगतिरेव पर्यायोक्तविषय इति।

अत्र रसगङ्गाधरकृतः—सर्वस्वकारस्य तावद्यथाश्रुतत्यागबीजमुक्तमेव द्वितीयपक्षेऽपि तद्बीजं तु पर्यायशब्देन प्रकारान्तराभिधाने विवक्षितार्थतावच्छेदकतातिरिक्तधर्मपुरस्कारेणाभिहितमिति योगार्थः। तथा च—

'दशवदननिधनकारी दाशरथिः पुण्डरीकाक्षः।'

इत्यादौ रामत्वातिरिक्तधर्मपुरस्कारेण रामस्यैवाभिधानात्पर्यायोक्तप्रसङ्गः। न च व्यङ्ग्यं यत्र तेन प्रकारेणोक्तं तत्पर्यायोक्तमिति वाच्यम्। व्यङ्ग्यस्य योगार्थानन्तर्गतत्वात्। न च लक्षणान्तर्गतत्वं तस्यास्त्येवेति वाच्यम्। एवं तर्हि व्यङ्ग्यस्य लक्षणे प्रवेशावश्यकत्वे पर्यायशब्देन ग्रहीतुमुचितत्वान्न तु प्रकारान्तरस्य, व्यङ्ग्योपलक्षितस्य प्रकारान्तरेणै-

वोक्तिनियमात् । अन्यथा व्यङ्ग्यत्वानुपपत्तेरिति । एवं 'नमस्तस्मै कृतौ येन—' इत्युक्तं यत्, तदसत् । अत्र हि वाच्येन राहुवधूकुचवैयर्थ्यकारित्वेन राहुशिरश्छेदकारित्वं व्यज्यत इति सर्वसंमतम् । भगवद्वासुदेवत्वं तु विशेषणमर्यादालभ्यत्वेन न व्यङ्ग्यकक्षामारोढुमर्हति । अन्यथा—

'नमो राहुशिरश्छेदकारिणे दुःखहारिणे ।'

इत्यत्रापि पर्यायोक्तप्रसङ्गात् ।

किं च—

'राहुस्त्रीकुचनैष्फल्यकारिणे हरये नमः ।'

इत्यत्र स्वासाधारणधर्मस्याभिधानेन व्यङ्ग्यत्वायोगाद्राहुशिरश्छेदकारित्वेन व्यङ्ग्यत्वमित्यपि परास्तम् । राहुशिरश्छेदकारित्वस्य प्रस्तुताङ्कुरविषयत्वे भगवद्रूपस्य च व्यङ्ग्यत्वानुपपत्तौ पर्यायोक्तस्यैव वैयर्थ्यप्रसङ्गात् । प्रस्तुताङ्कुरस्य प्राचीनैरस्वीकाराच्च । प्रस्तुतेन स्वसदृशो वाक्यार्थः प्रस्तुत एव यत्र प्रतीयते तस्यैव तद्विषयत्वाच्च । प्रस्तुतेन कार्येण कारणावगमनस्यापि तद्विषयत्वेऽप्रस्तुतेन कार्येण कारणावगमनेऽप्रस्तुतप्रशंसा । प्रस्तुतेन कार्येण कारणावगमने पर्यायोक्तमिति सर्वस्वकारादिकृतविभागोच्छेदापत्तेश्चेति ॥

अत्रेदं वक्तव्यम्—यत्तावदुक्तं सर्वस्वकारादिमताकूतम्, तदसत् । व्यङ्ग्यघटकयत्किंचिदर्थस्य वाच्यकोटिप्रवेशमात्रेण व्यङ्ग्यत्वव्याहतिस्वीकारे मदमानमोकस्यापि कथं व्यङ्ग्यत्वम्, तत्प्रविष्टानां त्रयाणामर्थानां मदमानोज्झितशब्दोपात्तत्वेन वाच्यकोटिनिविष्टत्वात् वाच्येऽन्याकारबोधविषयत्वं व्यङ्ग्ये तु तदन्याकारकबोधविषयत्वमिति चेत् । तर्हि ऐरावणशक्रयोरपि कथं व्यङ्ग्यकोटिवहिर्भावोऽभिहितः । मदादेरैरावणादेश्च वाच्यताभेदस्य ब्रह्मणापि दुरुपपादत्वात् । एवं राहोरपि वाच्यतया राहुशिरश्छेदकारीत्यस्यापि व्यङ्ग्यत्वं न स्यात् ॥ यदपि द्वितीयपक्षे प्रकारान्तराभिधानमित्यर्थत्यागबीजमुक्तम्, तदप्यसत् । विवक्षितार्थावच्छेदकधर्मप्रकारकबोधजनकपदासमभिव्याहृते त्वसति तदतिरिक्तधर्मपुरस्कारेणाभिधा-

नस्य योगार्थत्वे दोषाभावात् ॥ एवं च वासुदेवत्वप्रकारेण व्यङ्ग्यत्वेऽपि प्रकारान्तरेण वाच्यत्वमुपगूह्यत एव । एवम्—

'नमो राहुशिरश्छेदकारिणे दुःखहारिणे ।'

इत्यत्र प्रकारान्तरेणाभिधानेऽपि सहसैव भगवत्त्वप्रकारकबोधोदयान्नातिप्रसङ्गः । एवम्—

'राहुस्त्रीकुचनैष्फल्यकारिणे हरये नमः ।'

इत्यत्र राहुशिरश्छेदकारित्वस्य व्यङ्ग्यत्वेऽपि न पर्यायोक्तम् । हरिशब्दसमभिव्याहारसत्त्वात् । किं च—'लोकं पश्यति यस्याङ्घ्रिः—' इत्यादौ गूढपात्त्वादिकं वाच्यप्रायमेवेति पतञ्जलित्वाद्यसाधारणरूपेण व्यङ्ग्यत्वं त्वयाप्यनुमन्तव्यमेवेति सर्वत्रापि तदीयामेव व्यङ्ग्यतामादाय पर्यायोक्तमित्यपि किं न स्यात् । एवं 'वन्दे देवं—' इत्यादौ भगवद्वाहानां व्यासादिविनेयत्वाभिधानेन वेदत्वादिरूपेणैव व्यङ्ग्यत्वमावश्यकमिति दिक् ।

यत्तु—

'आनुकूल्यप्रातिकूल्यमानुकूल्यानुबन्धि चेत् ।'

इति दर्पणादौ आनुकूल्यमलंकारान्तरमुक्तम्, तदत्रैवान्तर्भावादुपेक्ष्यम् । एवम्—

'यः प्रेर्यमाणोऽपि हृदा मघोनस्त्वदर्थनायां ह्रियमापदागः ।
स्वयंवरस्थानजयस्त्वमस्य बधान कण्ठं वरणस्रजाशु ॥'

इत्यादावपि इदमेव ज्ञेयम् ॥

इति पर्यायोक्तम् ।

---

उदात्तं निरूपयति—

**वस्तुप्रचय उदात्तं महतामङ्गत्ववचनं वा ।**

संपदादिवस्त्वतिशयवर्णनमुदात्तम् । उत्कृष्टानां वर्णनीयनिष्ठाङ्गित्वप्रतियोगित्वमङ्गत्वं च यत्रोच्यते तदपीत्यर्थः ।

यथा—

'नीवीबन्धोच्छ्वसनशिथिलं यत्र पक्ष्माङ्गनानां
वासः कायादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ।

अर्चिस्तुङ्गानभिमुखमपि प्राप्य रत्नप्रदीपा-
न्ह्रीमूढानां भवति विफलप्रेरणश्चूर्णमुष्टिः ॥'

यथा च—

'म्लायन्मौलिरुचः कदन्नकणिकाकुक्षिंभरा भिक्षवो
ये केऽपि क्षितिरामकामनृपते युष्मद्यशोगोचराः।
तत्तत्कान्तकुटुम्बिनीश्रुतिनटत्ताटङ्करत्नाङ्कुर-
ज्योतिर्भिर्जटिलीभवन्ति भवने का वा न दिग्भित्तयः ॥'

द्वितीयं यथा—

'वलमाणम्मि महुमहे जत्थ अ पाउच्छलन्तरअणुज्जोअम्।
विअडं फणपब्भारं गाढभरुत्ताणिअं णिमेइ अणन्तो ॥'

अत्र सुवेलपर्वतस्य अनन्तफणप्राग्भाराश्रयत्वोक्त्या वर्णनीये सुवेले महतोऽनन्तस्याङ्गत्वात् सुवेलोत्कर्षप्रतीतिः। न चानन्तविषयकभावी चमत्कारः। तस्याङ्गत्वेन तदभावात्। अत्र च वस्तुप्रणय इति सामान्यत उक्त्या शौर्यादिसमुत्कर्षवर्णनोदय्ययमेवालंकारः।

यथा—

'अत्युक्तौ यदि न प्रकुप्यसि मृषावादं न चेन्मन्यसे
तद्ब्रूमोऽद्भुतवस्तुवर्णनविधौ व्यग्राः कवीनां गिरः।
देव त्वत्प्रकटप्रतापदहनज्वालावलीशोषिताः
सर्वे वारिधयस्त्वदरिवनिताबाष्पाम्बुभिः पूरिताः ॥'

यथा वा मम—

'ब्रह्माण्डं यातयामं बहुभिरपि चिरादीश्वरैर्भुक्तमुक्तं
विज्ञाय स्वोपभोगास्पदपथपथिकव्यूहतो बाह्यभूतम्।
प्रोद्यत्प्रौढप्रतापज्वलनसमुदितज्वालमालाकलापै-
र्ग्रस्तं कृत्वा समस्तं समजनि भवता नूतनं पाकतस्तत् ॥'

---

१. 'वलमाने मधुमथने यत्र च पादोच्छलद्रत्नोद्द्योतम्।
विकटं फणप्राग्भारं गाढभरोत्तानितं नियोजयत्यनन्तः ॥' [सेतु० ९।८९]

एतेनात्युक्तेः पृथगलंकारत्वम्, संपदुत्कर्षे उपात्तम् । शौर्योत्कर्षेत्युक्तिरिति भेदकथनं च परास्तम् । तत्तदनन्तोत्कर्षकथनेनानन्तालंकारसिद्धत्वात् ॥

इत्युदात्तम् ।

समुच्चयं निरूपयति—

**एकस्मिन्सति हेतौ हेत्वन्तरगीः समुच्चयः कथितः ।**

प्रकृतकार्यनिर्वाहके सत्यपि यत्र खलेकपोतन्यायेन कारणान्तराणामपि तत्कार्यसाधकतयोपादानं समुच्चय इत्यर्थः । अत एव नेतरहेतूपादानवैयर्थ्यम् । युगपदेव तत्रावतारेण केन कस्य वैयर्थ्यमित्यनवधारणात् ।

ननु हेतूक्तिरूपात्काव्यलिङ्गात्कुतोऽस्य भेद इति चेत्, न । तत्र हेतुतामात्रं विवक्षितं न तु गुणत्वप्राधान्यम् । एकत्वानेकत्वं वा, इह त्वेकस्य हेतोर्मुख्यत्वम्, अन्येषां गुणत्वं हेत्वनेकत्वं च विवक्षितमिति ।

यथा—

'आयाता मधुयामिनी स्मरशरक्रीडाभरो दुर्भरः
प्राणेशोऽप्यतिदूरलङ्घितपथः साध्वीप्रमा(वा)दो महान् ।
एषोऽपि स्मरकालकूटकवलक्लिष्टो मदर्थे युवा
नो जाने मम दुर्विपाकविटपी कीदृक्फलं धास्यति ॥'

इह वसन्तनिशाया अनुपपत्तिहेत्वसंभवेऽप्यन्येषामुपादानम् ।

यथा वा मम शृङ्गारमञ्जरीनाटके—

'[1]मुद्धत्तणं पढमसाहसउज्झमोज्ज
दुक्खं विओअजणिदं परमं तदा अ ।
रत्तीवणंअइ घरं तिमिरं अ रन्धं
ठाविज्जए सहि कहं णु पजं धराहे ॥'

---

१. 'मुग्धत्वं प्रथमसाहसोद्यमोद्य-
दुःखं वियोगजनितं परमं तदा च ।
रात्री······ति गृहं तिमिरं च रन्ध्रं
स्थाप्यते सखि कथं नु·········॥' [इति च्छाया ।]

अयमेव त्रिधा पर्यवस्यतीत्याह—

सदसत्सदसद्योगे

[इति ।] सद्योगे असद्योगे सदसद्योगे चेत्यर्थः ।

क्रमेणोदाहरणानि—

'राज्यं निर्जितशत्रु योग्यसचिवे न्यस्तः समस्तो भरः
सम्यक्पालनलालिताः प्रशमिताशेषोपसर्गप्रजाः ।
प्रद्योतस्य सुता वसन्तसमयश्चेत्येव नाम्ना धृतिं
कामः काममुपैत्वयं मम पुनर्मन्ये महानुत्सवः ॥'

अत्रोत्सवं प्रति राज्यादीनां सतां योगः ।

'[1]चत्तरघरिणी पिअदंसणा अ तरुणी पउत्थपइआ अ ।
असईसअज्जिआ दुग्गआ अ ण हु खण्डिअं सीलम् ॥'

अत्रैषां व्रतभङ्गहेतुत्वादसतां योगः ।

समुच्चयान्तरमाह—

गुणक्रियायौगपद्येऽन्यः ॥ १ ॥

गुणौ च क्रिये च गुणक्रियाः, गुणश्च क्रिया च गुणक्रिये, गुणक्रियाश्च गुणक्रिये चेत्येकशेषः । गुणयोः क्रिययोर्गुणक्रिययोश्च यौगपद्येऽन्यः समुच्चय इत्यर्थः ।

क्रमेणोदाहरणानि—

'यौवनविजृम्भणेन स्तनद्वयं महदभूच्चास्याः ।
मदनोद्रेकाद्यूनां मनांसि रक्तानि चाभूवन् ॥'

अत्र महत्त्वरक्तत्वगुणयोर्यौगपद्यम् । चकारेण तदभिधानात् । द्वितीयो यथा—

---

1. 'चत्वरगृहिणी प्रियदर्शना च तरुणी प्रोषितपतिका च ।
असतीप्रतिवेशिनी दुर्गता च न खलु खण्डितं शीलम् ॥' [गाथा० १।३६]

'[1]अज्जं व्वेअ पउत्थो अज्ज व्विअ सुण्णआइँ जाआइं ।
रत्थामुहदेउलचत्तराइँ अम्हं च हिअआइं ॥'

अत्र प्रस्थानजननक्रिययोः । तृतीयो यथा मम—

'सज्जितकज्जलरेखो बिम्बाधर ईक्षितश्च दयितस्य ।
तामरसच्छदशोणं नयनं चाभून्मनस्विन्याः ॥'

अत्र दर्शनशोणत्वरूपयोर्गुणक्रिययोः । इह यौगपद्यमात्रं विवक्षितं न तु सामानाधिकरण्यं वैयधिकरण्यं वा । तच्चोदाहृतेषु स्पष्टम् ।

इति समुच्चयः ।

---

पर्यायं निरूपयति—

**एकमनेकमनेकैकस्मिन्क्रमतोऽस्ति स पर्यायः ।**

एकं वस्तु अनेकस्मिन् अनेकं वा क्रमेणैकस्मिन् यदुच्यते स द्विविधः पर्याय इत्यर्थः । तत्रापि प्रयोजकाभिधानानभिधानाभ्यां द्वैविध्यमध्यवसेयम् । आद्यं यथा—

'[2]तीअ मुहाहिं तुअ मुअं तुज्झ मुहाओ अ मज्झ चलणम्मि ।
हत्थाहत्थीअ गओ अइदुक्करआरओ तिलओ ॥'

अत्रैकस्यैव तिलकस्य प्रतिपक्षनायिकामुखनायकमुखस्वचरणरूपेष्वनेकाश्रयेषु क्रमेण स्थितिरुक्ता ।

यथा वा—

'[3]जो तीएँ अहरराओ रत्तिं उव्वासिओ पिअअमेणं ।
सो व्विअ दीसइ गोसे सवत्तिणअणेसु संकन्तो ॥'

अत्राधरस्थितस्य लौहित्यस्य सपत्नीनेत्रसंक्रमोक्त्या आश्रयभेदः । एकत्वं वाध्यवसानमात्रेण न तु पारमार्थिकत्वेनवेत्यर्थः ।

---

१. 'अद्यैव प्रोषितोऽद्यैव शून्यकानि जातानि ।
रथ्यामुखदेवकुलचत्वराण्यस्माकं च हृदयानि ॥' [गाथा० २।९०]

२. 'तस्या मुखात्तव मुखं तव मुखाच्च मम चरणे ।
हस्ताहस्तिकया गतोऽतिदुष्करकारकस्तिलकः ॥' [गाथा० २।७९]

३. 'यस्तस्या अधररागो रात्रावुद्वासितः प्रियतमेन ।
स एव दृश्यते प्रातः सपत्नीनयनेषु संक्रान्तः ॥' [गाथा० २।६]

४. 'नेति भावः' ख

क्वचिदर्थगम्यं यथा—

'मौनं मयूरीषु नदीषु कार्श्यं विपाण्डुरत्वं च बलाहकेषु ।
शरद्यभीष्टागमनिर्वृताभिर्न्यासीकृतानीव वियोगिनीभिः ॥'

अत्र मौनादयः प्रथमं विरहिणीषु स्थिताः ततो मयूर्यादिष्विति एकस्यानैकत्रावस्थानबुद्धिः ।

प्रथममेकधर्मनिष्ठानां बहूनां पश्चादनेकधर्मनिष्ठत्वमप्यत्र विशेषो बोध्यः।

यथा श्रीरुद्रदेवानाम्—

'प्रागेकत्र निषेवितः सुकृतिना लावण्यपुञ्जश्चिरं
य: कालेन स एव हा विशकलीभूतः समालोक्यते ।
क्वापि क्वापि घनालिखञ्जनशरच्चन्द्रप्रवालस्फुर-
न्मुक्ताकम्बुमृणालहेमकलशीरम्भास्थलाजादिषु ॥'

अत्र कालस्य विशकलत्वमात्रे प्रयोजकत्वम् । अत्र प्रयोजकानभिधानं स्पष्टम् ।

तदभिधाने स्पष्टं यथा—

'प्राचीं वासकसज्जिकामुपगते भानौ दिशां वल्लभे
पश्यैता रुचयः पतङ्गदृषदामाग्नेयनाडींधमाः ।
लोकस्य क्षणदा निरङ्कुशरसौ संभोगनिद्रागमौ
कोकस्तोमकुमुद्वतीविपिनयोर्निक्षेपमातन्वते ॥'

अत्र रात्रावन्यत्रस्थयोः संभोगनिद्रयोस्तत्परित्यागेन च कुमुद्वतीवृत्तित्वमुक्तम्, सूर्यकिरणरूपप्रयोजकाभिधानं च ।

पूर्वापरित्यागेन यथा—

'[1]कहँ सा सोहग्गगुणं मए समं वहइ णिग्घिण तुमम्मि ।
जीअ हरिज्जइ गोत्तं हरिऊण अ दिज्जए मज्झ ॥'

अत्र गोत्रस्खलनकुपिताया मानिन्या नायकं प्रत्युक्तौ अन्यत्र स्थितस्य नाम्नोऽन्यत्र वृत्तौ नायकरूपप्रयोजकाभिधानम् ।

---

१. 'कथं सा सौभाग्यगुणं मया समं वहति निर्घृण त्वयि ।
यस्य ह्रियते नाम हृत्वा च दीयते मह्यम् ॥' [गाथा० ५५२]

द्वितीयपर्यायस्य आद्यो भेदो यथा—

'[1]अवहत्थिऊण सहिजम्पिआइँ जाणं कए ण रमिओ सि ।
एआइँ ताइँ सोक्खाइँ संसओ जेहिँ जीअस्स ॥'

अत्र नायकसङ्गजन्यसौख्यानां प्रथममिच्छाविषयत्वे पश्चाच्च जीवितसंशयहेतुत्वे प्रयोजकानभिधानम् ।

द्वितीयो यथा—

'[2]विरहे विसं व विसमा अमअमआ होइ संगमे अहिअम् ।
किं विहिणा समअं विअ दोहिं वि पिआ विणिम्मिअआ ॥'

यथा वा—

'[3]वडजक्खो जो मह सीसअम्मि दिण्णो सहि जुआणेहिं ।
तं च्चिअ एह्णिं पणमामि हअजरे होहि संतुट्ठा ॥'

अत्राद्ये एकस्या एव नायिकाया वैषम्यशैत्यरूपे कार्ये क्रमेण विषामृतनिर्मितत्वरूपं प्रयोजकद्वयम् । द्वितीये च वटस्थितयक्षप्रतिमाया असत्यास्तारुण्यकालेनादृतापि पश्चात्तस्या एव नमस्कार्यत्वे जरारूपं च प्रयोजकं निर्दिष्टम् ।

यथा वा—

'[4]पढमाणिआहि सुइरं जे जीविअसंसअम्मि वि परिच्छूडा ।
ते च्चिअ अहिमुहणिअहा सुरबन्दीहि अहिसारिआ रअणिअरा ॥'

अत्र प्रथममनादृतानामपि राक्षसानां सुरबन्दीभिः स्वाकारे रणहतत्वं हेतुरुक्तम् ।

---

1. 'अपहस्तयित्वा सखीजल्पितानि येषां कृते न रमितोऽसि ।
एतानि तानि सौख्यानि संशयो यैर्जीवस्य ॥' [गाथा० २।५८]
2. 'विरहे विषमिव विषमामृतमया भवति संगमेऽधिकम् ।
किं विधिना सममेव द्वाभ्यामपि प्रिया विनिर्मिता ॥' [गाथा० ३।३५]
3. 'वटयक्षो यो मम शीर्षे दत्तो सखि युवभिः ।
तमेवेदानीं प्रणमामि हतजरे भव संतुष्टा ॥' [गाथा० ४।७२]
4. 'प्रथमानीताभिः सुचिरं ये जीवितसंशयेऽपि परिक्षिप्ताः ।
त एवाभिमुखनिहिता सुरबन्दीभिरभिसारिता रजनीचराः ॥' [सेतु० १३।१७]

यत्तु—

'प्रथमं चुम्बितचरणा जङ्घानूरुनाभिहृदयानि ।
आश्लिष्य भावना मे खेलतु विष्णोर्मुखाब्जशोभायाम् ॥'

इत्यत्र भावनायाः पूर्वपूर्वविषयत्वत्यागस्य अविवक्षितत्वात् क्रमालंकारोऽप्यतिरिक्त इति । तच्चिन्त्यम् ॥

इति पर्यायः ।

---

अनुमानं निरूपयति—

**अनुमानं व्याप्यबलाद्व्यापकधीर्धर्मिनिष्ठा स्यात् ।**

अव्यभिचरितसामानाधिकरण्यरूपव्याप्तिविशिष्टस्य साधनस्य दर्शनात् । धर्मिणि पक्षे तन्निष्ठात्यन्ताभावाप्रतियोगित्वरूपव्यापकत्वविशिष्टस्य साध्यस्य यत् ज्ञानं तदनुमानमित्यर्थः । अत्रानुमितिरेवानुमानपदेनोच्यते । तस्या एव चमत्कारजनकत्वेनालंकारत्वात्तां विना परामर्षमात्रेण प्रकृतानुकूलार्थसिद्धिविरहात् । व्याप्तिश्चात्र पारमार्थिकी कविकल्पिता च ।

सा यथा—

'[1]जं धोअञ्जणसोणलोअणजुअं लग्गालअग्गं मुहं
हत्थालम्बिदकेसपल्लवचए दोल्लन्ति जं बिन्दुणो ।
जं एक्कं सिचअञ्चलं णिवसिअं तं ण्हाणकेलिट्ठिआ
आणीदा इअमब्भुदेक्कजणणी जोईसरेणामुणा ॥'

इयं भैरवानन्देनाकर्षणविद्यया समानीतां कर्पूरमञ्जरीमालोक्य राज्ञ उक्तिः । अत्र धौताञ्जनत्वशोणनयनत्वादिहेतुना तस्या आकर्षणात्पूर्वं जलकेलिस्थितत्वं साध्यम् । तथा च प्रयोगः । इयं नायिका, एतदव्यवहितपूर्वकाले कृतस्नाना, तदसाधारणचिह्नत्वात्, इति । तथाहि नेत्रारुण्यं

---

१. 'यद्धौताञ्जनशोणलोचनयुगं लग्नालकाग्रं मुखं
हस्तालम्बितकेशपल्लवचये दोलायन्ते यद्बिन्दवः ।
यदेकं सिचयाञ्चलं निवसितं तत्स्नानकेलिस्थिता
आनीतेयमद्भुतैकजननी योगीश्वरेणामुना ॥' [कर्पूर० १।२६]

तावत्स्नानकार्यं प्रसिद्धमेव। तस्य च स्वाभाविकत्वेनाप्युपपत्त्या न तत्साधकत्वं संभवतीति धौताञ्जनेति उक्तम्। कालबाहुल्यादञ्जननिर्गमवारणाय धौतेति जलजन्यनाशप्रतियोगित्वार्थम्। तस्यापि नेत्रमात्रक्षालनेनापि संभवादुक्तं लम्बालकाग्रमिति। तत्राप्यसंस्कारादिना केशमोक्षसंभवात्तद्वारणाय अलकेति। वाय्वादिनालम्बवत्त्ववारणाय अग्रेति। तथा चाधोवच्छिन्नभागस्य जलसंयोगेन श्लिष्टतया अग्रमात्रस्य निर्जलतयालम्बवत्त्वमिति भावः। स्नेहादिजन्यसंयोगेनापि श्लिष्टत्वसंभवादाह—हस्ताकर्षिते इत्यादि। तथा च संहतेषु केशेषु अन्तर्गतस्य भूयसो जलस्य सहसाशोषाभावाद्बिन्दूत्पत्तिः। अलकाग्राणां विरलतया तत्संबन्धिजलस्य प्रागेव निपतनाल्लम्बत्वम् इतरबाधसहकारेण स्नानजन्यमेवेत्याशयः। हेत्वन्तरमप्याह—यदेकमित्यादि। तथा च परस्परसहकारेणोक्तचिह्नानां स्नानानुमापकत्वसिद्धिरिति।

द्वितीयव्याप्तिमूलानुमानं यथा—

'यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं
यत्तत्रैव पतन्ति संततममी मर्मस्पृशो मार्गणाः।
तच्चक्रीकृतचापसंचितशरप्रेङ्खत्करः क्रोधतो
धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः।

अत्र कविकल्पितैव व्याप्तिः। अनुमानं चेदं केवलव्यतिरेकिस्वरूपमेवेति विशेषो बोध्यः।

अत्रेदमवधेयम्। वक्ष्यमाणमिलितरीत्या भेदाग्रहप्रसङ्गे हेत्वन्तरेण बोधे हेत्वन्तरालंकारः। तथा सामान्यरीत्या विशेषधर्मास्फुरणे विशेषालंकारः।

यथा—

'हिमाद्रिं त्वद्यशोमृष्टं सुराः शीतेन जानते।
लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च।'

इति दीक्षितमतम्।

तत्र रसगङ्गाधरकृतः—अनुमानालंकारेणैव गतार्थत्वादनयोरतिरिक्तत्वानुपपत्तिः । न चात्र हिमवत्त्वव्याप्यशैत्यवानिति ज्ञाने सत्यपि समानविषये प्रत्यक्षसामग्र्या बलवत्त्वात् 'अयं हिमवान्' इति प्रत्यक्षमेवोत्पद्यते न त्वनुमितिः, अतस्तयोः कथमनुमानेऽन्तर्भाव इति वाच्यम् । व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञानमात्रस्यैवात्रानुमानालंकारत्वेन परिभाषणात् । प्रत्यक्षस्यापि तादृशज्ञानजन्यसत्त्वात् । वस्तुतः—प्रतिबन्धकवशादनुमित्यनुत्पादेऽपि तत्करणत्वस्यानपायात् । फलायोगव्यवच्छेदस्य करणताया-मप्रयोजकत्वात् । एतेन विशेषदर्शनस्येतरकोटिभानमात्रनिवर्तकतया हिमाद्रिप्रत्यक्षस्य चक्षुःसंयोगादिरूपस्वसामग्रीवशादेवोत्पत्तेस्तत्र विशेषदर्शनस्यानुपयुक्ततया पारिभाषिकापि नात्रानुमितिरिति परास्तम् ।

तत्रोच्यते—अनुमितिरेवात्रालंकारो नत्वनुमानात्मकः परामर्ष इति ह्युक्तमेव । तथा च व्याप्यवत्ताज्ञाने सत्यपि अनुमित्युद्भावे कथमित्यनुमानालंकारसंभवः । परामर्षस्यानलंकारत्वात् । अन्यथा निश्चयान्तसंदेहालंकारोच्छेदापत्तिः तत्रापि विशेषदर्शनजन्यत्वसत्त्वात् । अत एव परामर्षस्यैवालंकारत्वे लिङ्गकरणतापक्षे तस्य शब्दोपात्ततया अनुमानालंकारस्य लक्ष्यत्वव्यङ्ग्यत्वानुपपत्तिः । ज्ञानकरणतापक्षेऽपि ज्ञानस्य वाच्यत्वाद्यनुपपत्तिरेव । अतोऽनुमितिरेवात्रालंकारः । सा च क्वचिद्वाच्या क्वचिच्च व्यङ्ग्येत्युपपद्यत इति स्वयमेवोक्तम् । इदानीं तु परामर्षसत्त्वमात्रेणानुमानालंकार इत्यभ्युपगम्यत इति पूर्वापरविरोधो युक्तिविरोधश्च । शिष्टं सामान्यप्रकरणे वक्ष्याम इति दिक् ॥

इत्यनुमानम् ।

---

परिकरं निरूपयति—

**साभिप्रायविशेषेण विन्यासः परिकरः प्रोक्तः ।**

यथा—

'[1]अमअमअ गअणसेहर रअणीमुहतिलअ चन्द दे छिवसु ।
छित्तो जेहिं पिअअमो ममं वि तेहिं चिअ करेहिं ॥'

---

१. 'अमृतमय गगनशेखर रजनीमुखतिलक चन्द्र हे स्पृश ।
स्पृष्टो यैः प्रियतमो मामपि तैरेव करैः ॥' [गाथा० १।१६]

अत्र प्रियस्पर्शाश्रयाभिन्नकरैः स्वस्पर्शो विरहिण्या चन्द्रं प्रति प्रार्थ्यतोऽमृतमयेत्यादिविशेषणैः प्रत्याय्यते । तथा हि—आद्येनामृतमयतया स्वभावशुद्धत्वेन परोपकारप्रवृत्तियोग्यत्वम्। चन्द्रस्य विप्रकृष्टनायकस्पर्शानुपपत्तिमाशङ्क्य गगनशेखरेति । तथा चातितुङ्गतया तत्स्पर्शोपपत्तिरिति भावः। रजनीमुखतिलकत्वेन स्त्रीषु पक्षपातसूचनम्। स्यादेतत्। व्यर्थविशेषणत्वं तावद्दोष इति निर्विवादम्। ततश्च तदभावः। पुष्टार्थत्वं दोषाभावमात्रं न त्वलंकार इति ।

अत्र प्राञ्चः—एकधर्मनिष्ठतया बहूनां साभिप्रायविशेषणानामुपादाने विच्छित्तिविशेषोऽनुभवसिद्धतया दुरुपह्नव इत्यलंकारमध्ये पठित इति ।

अत्र दीक्षिताः—श्लेषयमकादावपुष्टार्थत्वस्य दोषत्वाभावात् तत्रैकविशेषणस्य साभिप्रायत्वेऽप्यलंकारत्वं दुर्वारम्। एवं च 'सुधांशुकलितोत्तंसः—' इत्यादावपि तत्संयुक्तमित्याहुः ।

अन्ये तु—श्लेषाद्यतिरिक्तस्थले साभिप्रायविशेषणोपादानेन विच्छित्तिविशेषस्वीकारे तस्यालंकारत्वं दुर्वारम्, अन्यथा च श्लेषादिस्थलेऽपि विच्छित्तिविशेषो नास्तीत्यपि वक्तुं शक्यम्। यदि च तत्रानुभवः प्रमाणमित्युच्यते। तदान्यत्रापि तुल्यमिति नपृथगलंकारतेति दीक्षितमतं दूषयित्वा 'सुन्दरत्वे सत्युपस्कारकत्वम्, अलंकारत्वम्, चमत्कारापकर्षकाभावत्वं च दोषाभावत्वम्, तयोश्च क्वचिदेकत्र समावेशेऽपि नैकेनान्यस्यान्यथासिद्धिः। उपाधेरसंकरात्। यथा ब्राह्मणस्य मूर्खत्वं दोषः, विद्या तु दोषाभावो गुणश्च, तद्वदिहापि। अन्यथा काव्यलिङ्गमप्यलंकारो न स्यात्, निर्हेतुरूपदोषाभावात्मकत्वात्। न च दोषत्वाभावेनैव संग्रहोऽस्तु, अलंकारत्वेन गणनं किमर्थमिति वाच्यम्। दोषाभावान्तरवैलक्षण्यज्ञापनाय तदुपपत्तेः अन्यथा गुणीभूतव्यङ्ग्यत्वेन संगृहीतायाः समासोक्तेरप्यलंकारमध्ये गणना न स्यादिति प्राहुः ॥

यत्तु—विशेष्यस्य साभिप्रायत्वे परिकराङ्कुरः ।

यथा—

'नरसिंह महीपाल कीर्तिस्त्रिपथगा तव ।
न कस्य भवति श्लाघ्या पुनाना भुवनत्रयम् ॥'

अत्र भुवनत्रयपावनोपपत्त्यर्थं त्रिपथगापदं साभिप्रायमिति । तन्न । परिकर एवान्तर्भावसंभवात् । त्रिपथगापदस्य हि गङ्गाविशेष्यकमार्गत्रयगामित्वप्रकारकबोधत्वं कार्यतावच्छेदकम् । तत्र विशेषणीभूतमार्गत्रयगामित्वांशस्यैव प्रकृतोपकारकत्वात् ।

एवम् ।

'चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ।'

इत्यत्रापि विशेषणीभूतं भुजचतुष्टयवत्त्वमेव तथेति ।

'फणीन्द्रस्ते गुणान्वक्तुं लिखितुं हैहयाधिपः ।
द्रष्टुमाखण्डलः साक्षात्क्वाहमेते क्व ते गुणाः ॥'

इत्यत्र प्रकृतोपपादकयौगिकार्थविरहात्कथं परिकरान्तर्भाव इति चेत् । तर्हि सहस्रमुखादिपदानामत्राभावात् कथं परिकराङ्कुरोऽपीत्यवधार्यताम् । सहस्रमुखत्वादौ फणीन्द्रादिपदानां तात्पर्यमिति चेत् । नूनमिदं विशेषणस्य साभिप्रायत्व एव संभवति फणीन्द्ररूपविशेषणांशेनैव तदाक्षेपात् । अतो रूढपदस्थलेऽवयवार्थस्य प्रकृतोपकारकतायां क्वचित्तेनैव प्रकृतोपकारकस्य विशेष्यस्य प्रतीतिः सिद्धा ।

यथा—

'मध्ये निजस्खलनदोषमवर्जनीय-
मन्यस्य मूर्ध्नि विनिवेश्य बहिर्बुभूषुः ।
आविश्य देव रसनानि महाकवीनां
देवी गिरामपि तव स्तवमातनोति ॥'

अत्र देवी गिरामित्यनेन विद्याविषयाभ्यर्हितत्वस्य सरस्वतीत्वेन च बोधस्य सिद्धिः ॥

यत्र रूढार्थवाचकपदान्तरमपि युज्यते तत्रावयवार्थमात्रपरत्वमेव तस्य। यथा—

'उद्यन्मृगाङ्करुचिकन्दलकोमलाना-
मन्त्रिदशोणनलिनोदरसोदराणाम् ।

प्राप्तुं तवाधररुचामवलोकनेन
नालं सहस्रनयनः स वृषापि तृप्तिम् ॥'

अत्र सहस्रनयनेति दर्शनसामर्थ्यव्यञ्जनेऽपि तस्य नरेन्द्रपरत्वं वृषपदपौनरुक्त्यापत्तेः । अतश्च ।

'तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥'

इत्यत्र पिनाकपाणिपदेनायुधदृढत्वमात्रप्रतीत्या पुनर्हरपदप्रयोगवत् कुसुमायुधपदेन तदसारत्वप्रतीत्या स्मरवाचकपदप्रयोगाभावादनुपपत्तिमाशङ्क्य तत्राप्युत्तमपुरुषाक्षिप्ताहंपदस्य स्मरवाचकत्वमस्त्येवेति साहित्यचिन्तामणिकारोक्तं न नियमाभिप्रायकमिति स्वयमेव दीक्षितैर्वृत्तिवार्तिके प्रतिपादितम् । तस्मात् 'फणीन्द्र—'इत्यादौ फणीन्द्रत्वाक्षिप्तसहस्रमुखत्वमेव प्रकृतोपकारकमतो न विशेषणसाभिप्रायत्वक्षतिरिति सिद्धम् । अयं तु विशेषः—क्वचिद्विशेषणं साक्षादेव प्रकृतोपकारकं क्वचित्तु प्रकृतोपकारकमर्थान्तरमाक्षिप्येति विशेषणपदमत्र संसर्गातिरिक्तविषयपरम्, तेन विशेष्यविशेषणोभयसाभिप्रायत्वेऽपि परिकर एवेति त्वस्माकं यविष्ठभ्रातुरुमापतेः पक्ष इत्यलं भूयसा ॥

इति परिकरः ।

---

व्याजोक्तिं निरूपयति—

**व्याजोक्तिर्विशदीभवदर्थस्यापह्नुतिर्मिषतः ।**

अप्रकाश्यस्यार्थस्य कथंचिद्विभावनप्रसङ्गे सति केनचित्कैतवेन तदपह्नवो व्याजोक्तिरित्यर्थः ।

यथा—

'श्वश्रूः क्रुध्यतु विद्विषन्तु सुहृदो निन्दन्तु वा यातर-
स्तस्मिन्किं तु न मन्दिरे सखि पुनः स्वापो विधेयो मया ।
आखोराक्रमणाय कोणकुहरादुत्फालमातन्वती
मार्जारी नखरैः खरैः कृतवती कां कां न मे दुर्दशाम् ॥'

यथा वा—

'मा गच्छेः कुसुमानि चेतुमथ चेदञ्चेर्न तां मालतीं
निःशङ्कं यदधः कपोततरुणी घुत्कारमभ्यस्यति ।
व्यक्तं तत्र निरन्तरं मधुलिहो माध्वीकपानोत्सुका
दुर्वाराः कति नैव दष्टुमधरं धावन्ति वामाशयाः ॥'

उभयत्रापि नखदन्तक्षतादिदर्शनेन स्वव्यभिचारप्रवादप्राकट्यमाशङ्क्य तदनुमितिलिङ्गभूता नखक्षतादय उक्तप्रकारेण निगूहिताः ।

यत्तु—

'दम्पत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वच-
स्तत्प्रातर्गुरुसंनिधौ निगदतस्तस्यैव तारं वधूः ।
कर्णालम्बितपद्मरागशकलं विन्यस्य चञ्च्वोः पुटे
व्रीडार्ता विदधाति दाडिमफलव्याजेन वाग्बन्धनम् ॥'

इत्यत्र युक्तिरलंकारः । व्याजोक्तौ वचसा गोपनम्, इह तु क्रियया, इति द्वयोर्भेद इति । तन्न । व्याजोक्तिलक्षणस्योभयसाधारण्यात् । तत्रोक्तिनिवेशस्य गौरवपराहतत्वात् । अन्यथा प्रकारान्तरेण गोपनस्थलेऽलंकारान्तरप्रसङ्गात् । तत्राप्युक्तक्रियान्यत्वनिवेशस्य सुवचत्वादिति दिक् ॥

इति व्याजोक्तिः ।

---

परिसंख्यां निरूपयति—

पृष्टमपृष्टं चोक्तं यद्व्यङ्ग्यं वापि वाच्यं वा ।
फलतीतरव्यपोहं परिसंख्या सा तु संख्याता ॥ १ ॥

यद्वस्त्वभिहितमन्यव्यवच्छेदं फलति सा परिसंख्योक्तिलक्षणेति । अभिधानं च द्वेधा । प्रश्नपूर्वकं तद्भिन्नं च । व्यवच्छेदोऽपि द्विविधः । व्यङ्ग्यो वाच्यश्चेति चत्वारो भेदा इत्यर्थः ॥ यद्यपि पाक्षिकप्राप्तार्थनिवर्तको नियमः नित्यप्राप्तविषयकान्यव्यावृत्तिफलकस्तु परिसंख्येति मीमांसकमर्यादा, तथाप्यसौ पाक्षिक[त्व]नित्यत्वविशेषणमत्र प्रयोजनाभावादविवक्षितम्

---

१. 'लम्बिनि' ख. २. 'प्रकरोति' ख. ३. अस्य लक्षणं तु—'युक्तिः परातिसंधानं क्रियया मर्मगुप्तये' इति स्वयमलंकारमुक्तावल्यां दर्शितम्. ४. 'अविवक्षितत्वात्' ख.

वक्षित्वा नियमोऽपि परिसंख्यापदेनोच्यते। अत एव—'पञ्च पञ्च नखा भक्ष्याः' इति परिसंख्याया नियमपदेनोक्तिर्महाभाष्येऽपि दृश्यते।

तत्र प्रश्नपूर्वकाभिधाने व्यङ्ग्ये व्यवच्छेदे यथा मम—

'कुर्यात्कुत्र निजेष्टसाधनमतिः साधीयसां संगमे
किं भूयः परिभावनीयमसकृच्छास्त्रं प्रबोधावहम्।
चित्तं कुत्र निवेश्यमन्यविषयादाकृष्य चण्डीश्वरे
यत्नः कुत्र विधेय उत्कटतरः[1] संसारतो मोक्षणे॥'

अत्र स्त्रीसंगमादिव्यवच्छेदो व्यङ्ग्यः।

तत्रैव वाच्ये व्यवच्छेदे यथा ममैव—

'दोषोद्भावनतः क्व याति गुरुतां वादेषु नो लौकिके
चाञ्चल्यं क्व गुणाय सारसदृशां नेत्रेषु नो चेतसि।
कुत्र श्लाघ्यतरं शिरःप्रणमनं देवेषु नैवाहिते
वाग्भङ्गः क्व सुखायते प्रियजनाश्लेषेषु नो संसदि॥'

अत्र लौकिकव्यवहारादिव्यवच्छेदा वाच्याः।

अप्रश्नपूर्वकाभिधाने आद्यो भेदो यथा—

'सो[2] अत्थो जो हत्थे तं मित्तं जं णिरन्तरं वसणे।
तं रूअं जत्थ गुणा तं विण्णाणं जहिं धम्मो॥'

अत्र हस्तस्थित एवार्थो न त्वन्याधीन इत्यादिव्यवच्छेदो व्यङ्ग्यः।

तत्रैव द्वितीयो यथा—

'दीर्घा चन्दनमालिका विरचिता दृष्ट्यैव नेन्दीवरैः
पुष्पाणां प्रकरः स्मितेन रचितो नो कुन्दजात्यादिभिः।
दत्तः स्वेदमुचा पयोधरयुगेनार्घो न कुम्भाम्भसा
स्वैरेवावयवैः प्रियस्य विशतस्तन्व्या कृतं मङ्गलम्॥'

अत्र एवकारव्यवच्छेद्या इन्दीवराद्याः शब्दाः।

---

१. 'तया' ख.

२. 'सोऽर्थो यो हस्ते तन्मित्रं यन्निरन्तरं व्यसने।
तद्रूपं यत्र गुणास्तद्विज्ञानं यस्मिन्धर्मः॥' [गाथा० ३५०]

यथा [वा]—

'दानेन पाणिर्न तु कङ्कणेन श्रोत्रं श्रुतेनैव न कुण्डलेन ।
विभाति कायः करुणापराणां परोपकारेण न चन्दनेन ॥'

अत्र पाण्यादिशोभासाधनत्वाभावाश्रयाः कङ्कणादयो वाच्याः । पूर्वमुपमागर्भम्, इदं तु शुद्धमिति विशेषः ॥

केचित्तु—व्यावृत्तेरर्थगम्यत्व एवायमलंकारः अन्यथा तु शुद्धपरिसंख्यामात्रम् । अतो व्यङ्ग्ये व्यवच्छेदे भेदद्वयमेवेति वदन्ति । 'पञ्च पञ्च नखा भक्ष्याः' इत्यादीनां त्वचमत्कारत्वान्नालंकारतेति ध्येयम् ।

इति परिसंख्या ।

---

कारणमालां निरूपयति—

**कारणमाला पूर्वे पूर्वे कार्ये यथोत्तरं हेतौ ।**[1]

प्रथमं कार्यत्वापन्नस्य पश्चादन्यं प्रति हेतुत्वमित्येवंरीत्या यत्र कार्यकारणभावा वर्ण्यन्ते सा कारणमाला ।

यथा—

'दारिद्र्याद्ध्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोकविहतो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥'

अत्र दारिद्र्यस्य लज्जानाशे तस्य तेजोनाशे तस्य परिभवे हेतुत्वमिति रीत्या मालात्वमेव यथोत्तरोत्तरस्य पूर्वं पूर्वं प्रति हेतुत्वमुच्यते तत्रापीयम् ।

इति कारणमाला ।

---

अन्योन्यं निरूपयति—

**अन्योन्यं वस्तूनां परस्परोत्कर्षहेतुत्वे ।**

स्पष्टोऽर्थः ।

---

१. 'कारणमाला प्रोक्ता पूर्वे पूर्वे यथोत्तरं हेतौ' इत्यलंकारमुक्तावल्यां पाठः.

यथा—

'नलेन भायाः शशिना निशैव त्वया स भायान्निशया शशीव ।
पुनः[1] पुनस्तद्युगयुग्विधाता योग्यामुपास्ते नु युवां युयुक्षुः ॥'

यथा वा—

'कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य ।
अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ॥'

क्वचिदुत्प्रेक्षासंकीर्णमपि यथा—

'चेन्दु[2]ज्जाए ण मए ण चन्दाअवो णु धट्टिअप्पसनो ।
दोहिं वि ते हिअअणो मअणेण णु दोवि तेणिआ अइभूमिम् ॥'

क्वचिदुपमासंकीर्णो यथा—

'इतरेतरशोभायै संयोगो युवयोः किल ।
नवचन्द्रकलाशर्वजटामुकुटयोरिव ॥'

क्वचित्सोपकारं संकीर्णपरस्परोपकारस्वरूपमपि यथा—

'उ[3]द्धच्छो पिअइ जलं जह जह विरलङ्गुली विरं पहिओ ।
पावालिआ वि तह तह धारं तणुअं वि तणुएइ ।।'

अत्र पान्थमुखावलोकनोत्सुकायाः प्रपापालिकायाः स्वाङ्गुलीविरलीकरणेन पथिकेनोपकारः कृतः तेनैव च प्रपापालिकामुखावलोकनस्यापि सिद्धया पथिकोपकारस्यापि सिद्धिः । एवं प्रपापालिकाकर्तृकधारातनूकरणेन पथिकोपकारस्येव प्रपापालिकोपकारस्यापि, पथिकेन प्रपापालिकामुखावलोकनवत् तया पथिकमुखावलोकनस्यापि सिद्धेरिति दीक्षिताः ॥

रसगङ्गाधरकृतस्तु—स्वव्यधिकरणव्यापारसाध्यस्यैव परोपकारस्य चमत्काराधायकत्वं न तु स्वसमानाधिकरणव्यापारसाध्यस्यापि तुषारशीतली-

---

१. 'परस्परं त' ख.

२. '.......................................... ।
.......................................... ॥' [इति छाया ।]

३. 'ऊर्ध्वाक्षः पिबति जलं यथा यथा विरलाङ्गुलिश्चिरं पथिकः ।
प्रपापालिकापि तथा तथा धारां तनुकामपि तनूकरोति ॥' [गाथा० २।६१]

करणवत् स्वव्यापारसाध्यस्योपकारस्याचमत्कारकत्वादतो नेदमन्योन्यान्तरमित्याहुः ॥

इत्यन्योन्यम्।

---

उत्तरं निरूपयति—

**उत्तरमात्रात्प्रश्नोन्नयने स्यादुत्तरं नाम।**

यत्र प्रतिवाक्यश्रवणादेव प्रश्नवाक्यं कल्प्यते तदुत्तरं नामालंकारः। यथा—

[1]'अण्णेसु पहिअ पुच्छसु वाहकुडुम्बेसु पुसिअचम्माइं।
अम्हं वाहजुवाणो हरिणेसु धणुं ण णामेति ॥'

अत्रान्येषु व्याधकुटुम्बेषु पृषन्मृगचर्माणि पृच्छेति उत्तरवाक्येन 'पृषच्चर्माणि ममापेक्ष्यन्ते तानि सन्ति नगे[2]' इति पथिकप्रश्नवाक्यं कल्प्यते। न चेदं काव्यलिङ्गमेव उत्तरस्य प्रश्नं प्रति हेतुत्वादिति वाच्यम्। उत्तरस्य प्रश्नजनकत्वाभावात्। प्रमाणान्तरनिर्ज्ञातार्थोपपादकस्यैतद्विषयत्वव्यवस्थापनाच्च ॥ न चैवमप्यनुमानेऽन्तर्भावोऽस्तु यद्यदुत्तरं तत्तत्प्रश्नपूर्वकमिति व्याप्तिबलेनोत्तरस्य प्रश्नज्ञापकत्वादिति वाच्यम्। साध्यसाधनयोः सामानाधिकरण्य एवानुमानप्रवृत्तेः। महानसे धूमदर्शनेन पर्वतीयवह्न्यनुमितेरभावात्। इह च प्रश्नोत्तरयोर्व्यधिकरणत्वादित्यतिरिक्तत्वमेवोचितम् ॥ ननु एतदुत्तराव्यवहितपूर्वकालः प्रश्नवाक्याधिकरणमुत्तराव्यवहितपूर्वकालत्वान्मदुत्तराव्यवहितपूर्वकालवदित्यनुमित्यास्यान्यथा सिद्धिः स्यादिति चेत्, न। यत्किंचित्प्रश्नवाक्याधिकरणत्वसिद्ध्या प्रश्नान्तरेणार्थान्तरत्वात्। प्रश्नोत्तरं किंचित्कालविलम्बेनोत्तरोक्तिस्थले व्यभिचाराच्च। न च तत्प्रश्नविषयजिज्ञासानिवर्तकभङ्ग्यन्तराव्यवहितपूर्वकत्वं विवक्षितम् इति वाच्यम्। तथापि प्रश्नस्य धर्मिविशेषनिष्ठत्वप्रतीत्यनुपपत्तेः। अथैवं 'तदुत्तरवाक्यजन्यबोधवत्त्वप्रकारकेच्छाविशेष्योऽयम् एतत्पूर्वकालावच्छिन्नप्रश्नकर्ता उत्त-

---

१. 'अन्येषु पथिक पृच्छ व्याधकपुत्रेषु(कुटुम्बेषु) पृषतचर्माणि।
अस्माकं व्याधयुवा हरिणेषु धनुर्न नामयति ॥' [गाथा० ७।२९]

२. 'न वा' इति मूचितम्.

स्वाक्यबोधजन्यनिवृत्तिप्रतियोगीच्छावत्त्वात्' इत्यनुमितिरस्तु। न च हेत्वसिद्धिः। 'एतदुत्तरवाक्यं परकीयजिज्ञासानिवृत्त्यर्थकत्वेन प्रयुक्तम्, उत्तरवाक्यत्वात्, मदुत्तरवाक्यवत्' इति तत्सिद्धेः। न चैवमपि प्रश्नवाक्यविशेषस्वरूपसिद्ध्यसंभवः तादृशार्थस्यैवार्थबोधादिति वाच्यम्। वाक्यकल्पनापक्षेऽपि अर्थविशेषस्यैव विवक्षिततया वाक्यविशेषकल्पने नियमाभावात्। आचाराद्यनुमीयमानस्मृत्यादौ आनुपूर्वीविशेषानवच्छेदेऽपि तादृशार्थबोधकं यस्य यद्वाक्यमुपस्थितं तस्यैव कल्पनवदत्रापि तथैवेति तूभयत्रापि समानम्। श्रूयमाणोत्तरेण यादृशेच्छानिवृत्तिसंभवस्तदनुकूलस्यैव प्रश्नस्यानुमित्या सिद्धेः। न चैतादृशव्याप्तिज्ञानविधुराणामपि प्रश्नकल्पनोदयान्नैवमिति वाच्यम्। प्रश्नं विना नोत्तरानुपपत्तिरिति ज्ञानाभाववतां प्रश्नोन्नयनाभावात्। अनुपपत्तिज्ञाने सति च तस्यैव व्याप्तिज्ञानस्वरूपत्वात्।

यथोक्तं कुसुमाञ्जलावाचार्यैः—

'अनियमस्य नायुक्तिर्नानियन्तोपपादकः।'

इति। तत्कथमस्यानुमानाद्भेद इति चेत्, उच्यते। साध्यसाधनयोर्व्याप्त्यादीनां शाब्दत्व एवानुमानालंकाराभ्युपगमात्।

'अनुमानं तदुक्तं यत्साध्यसाधनयोर्वचः।'

इत्यतस्तादृशार्थलाभात्।

ये तु—कविनिबद्धप्रमाकत्रन्तरनिष्ठमेवमनुमितिरनुमानालंकारमिच्छन्ति, तन्मते त्वत्र तत्प्रसङ्ग एव नास्ति। व्याधपथिकयोः प्रश्नज्ञानसत्त्वेनानुमित्यनुदयादिति दिक्।

उत्तरान्तरमाह—

**प्रश्ने लोकाविदितोत्तरस्य तच्चासकृत्प्रोक्तौ।**

प्रश्ने सति तदुत्तरत्वेन लोकेऽप्रसिद्धं यदुत्तरं असकृत्कथ्यते तदप्युत्तरमित्यर्थः। असकृदुक्तिव्यवच्छेदः। बहुत्वं प्रश्नोत्तरेणाविवक्षितम्, न त्वेकस्मिन्नेव प्रश्ने उत्तराणामिति। यथा—

'किं क्रूरं स्त्रीहृदयं किं गृहिणः प्रियसुखाय दारगुणाः।
कः कामः संकल्पः किं दुष्करसाधनं प्रज्ञा॥'

अत्र स्त्रीहृदयानां क्रूरत्वादिकं लोकेऽप्रसिद्धमेवोत्तरत्वेनोक्तम्।

यथा वा—

'स ग्राम्यः स विदग्धसंसदि सदा गच्छत्यपाङ्क्तेयत
तं च स्प्रष्टुमपि स्मरस्य विशिखा मुग्धे विगानोत्सुकाः।
यः किं मध्विति नाधरं तव कथं हेमेति न त्वद्वपुः
कीदृङ्नाम सुधेति पृच्छति गिरं दत्तं न तेनोत्तरम् ॥'

अत्र किं मध्वित्यादि प्रश्नस्याधरादि उत्तरमप्रसिद्धमेवेति निबद्धम्।

ननु प्रश्नपरिसंख्यातोऽस्य किं भेदकमिति चेत्, अत्राहुः—तत्रोत्तरस्य लोकप्रसिद्धविषयतया प्रयोजनान्तरविरहेणान्यव्यावृत्तावेव तात्पर्यम्, इह त्वप्रसिद्धविषयत्वादुत्तरस्य स्वार्थ एवेति ॥

इत्युत्तरम्।

---

सूक्ष्मं निरूपयति—

**प्रतिभातिशयाज्ज्ञातो यद्वाकारेङ्गितादर्थः।**
**विशदीक्रियतेऽन्यस्मै तथैव तत्सूक्ष्ममित्युक्तम् ॥ १ ॥**

आकारः संस्थानविशेषः, इङ्गितं नेत्रहस्तव्यङ्ग्यादिः। ततो यथाश्रुतग्राहिभिर्दुर्बोधमर्थवासनाद्विशेषपरिपाकाद्विज्ञाय दुर्लक्षप्रकारेणैव यदन्यस्मै तत्प्रकाशः क्रियते तत्सूक्ष्ममित्यर्थः।

आद्यं यथा—

'संवाहणसुहरसतोसिएण देन्तेण तुह करे लक्खम्।
चरणेन विक्कमाइत्तचरिअं अणुसिक्खिअं तिस्सा ॥'[1]

अत्र नायकहस्तद्वये लाक्षारससंयोगं दृष्ट्वा द्वितलाख्यसुरतमभिज्ञाय तच्छ्लेषेण चरणस्य विक्रमादित्यसाम्यमभिधाय नायिकया नायकाय तत्प्रकाशनं कृतम्।

---

१. 'संवाहनसुखरसतोषितेन ददता तव करे लाक्षाम्।
चरणेन विक्रमादित्यचरितमनुशिक्षितं तस्याः ॥' [गाथा० ५।६४]

'क्रियत्पचन्नोदनमानयत्क्रियत्करस्य पप्रच्छ गतागतेन याम् ।
अहं किमेष्यामि किमेष्यसीति वा व्यधत्त नम्रं किल लज्जयाननम् ॥'

अत्र स्वाभिमुखं नायिकामुखं च करव्यापारेण 'किं त्वं मत्समीपमायास्यसि, किं वाहं त्वत्समीपमेष्यामि' इति नायकाभिप्रायमाकलय्य नायिकया मुखव्यापारेण 'त्वयैवागन्तव्यम्' इति सूचितम् । एवम्—

'अहर्निशा वेति रताय पृच्छति क्रमेण शीतोष्णकरार्पणाद्विटे ।
ह्रिया विदग्धा किल तन्निषेधिनी न्यधत्त संध्यामधुरेऽधरेऽङ्गुलिम् ॥'

इत्यादावपि बोध्यम् ॥

इति सूक्ष्मम्।[1]

---

सारं निरूपयति—

**सारस्तु पूर्वपूर्वादुत्कर्षिण्युत्तरे प्रोक्ते ।**

यत्रोत्तरोत्तरस्य पूर्वपूर्वप्रतियोग्युत्कर्षवत्त्वं कथ्यते स सारालंकारः ।

यथा—

'लोकस्रजि द्यौर्दिवि चादितेया अप्यादितेयेषु महामहेन्द्रः ।
किं कर्तुमर्थी यदि सोऽपि रागाज्जागर्ति कक्षा किमतः परापि ॥'

केचित्तु—अवस्थाभेदेनैकस्यैवोत्तरोत्तरोत्कर्षवर्णनेऽपि सारः ।

यथा—

'जम्बीरश्रियमतिलङ्घ्य लीलयैव व्यानम्रीकृतकमनीयहेमकुम्भौ ।
नीलाम्भोरुहनयनेऽधुना कुचौ ते स्पर्धेते खलु कनकाचलेन सार्धम् ॥'

अत्र पूर्वपूर्वावस्थाविशिष्टाभ्यां कुचाभ्यामुत्तरोत्तरावस्थाविशिष्टयोस्तयोरेवोत्कर्षः । एकाश्रये क्रमेणानेकाधेयस्थितिरूपपर्यायस्तु यद्यप्यत्र प्रतीयते तथाप्युत्कर्षरूपसारस्याप्यनन्यथासिद्धत्वादङ्गीकार इति वदन्ति ॥

तत्र—

'प्रथमश्रितकञ्जकोरकाभावथ लक्ष्मीमनुभूय कन्दुकानाम् ।
अधुना श्रयितुं कुचौ यतेते दयिते ते करिशावकुम्भलीलाम् ॥'

---

1. 'शोभा' ख.

इति तात्पर्योदाहरणेऽप्युत्तरोत्तरोत्कर्षानुभवाद्विशेषश्चिन्त्यः । अयं चालंकारो वेदेऽपि दृश्यते । तथा च कठवल्लीषु पठ्यते—

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिरात्मा बुद्धेर्महान्परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥'

इति सारः ।

---

असंगतिं निरूपयति—

**हेतुव्यधिकरणं स्यात्कार्यं चेत्सा त्वसंगतिः प्रोक्ता ।**

इह खलु कार्यकारणभावोऽसमानाधिकरणयोरेव धर्मिणोः प्रसिद्धः । कार्यतावच्छेदकसंबन्धेन कार्याधिकरणयोर्वर्तमानस्य कारणतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोगितानवच्छेदको यो धर्मस्तद्वत्त्वस्य कारणपदार्थत्वात् । पदार्थान्तरत्वमतेऽपि तत्रैव तत्कल्पनात् । न च कारणं विना कार्यानुपपत्तिः । समानाधिकरणकारणान्तराक्षेपेण विरोधसमाधानात् ॥

यथा—

'जातस्ते निशि जागरो मम पुनर्नेत्राम्बुजे शोणिमा
निःपीतं भवता मधु प्रविततं व्याघूर्णितं मे मनः ।
भ्राम्यद्भृङ्गघने निकुञ्जभवने लब्धं त्वया श्रीफलं
पञ्चेषुः पुनरेष मामपदयं क्रूरैः शरैः कृन्तति ॥'

यथा श्रीरुद्रचन्द्रदेवानाम्—

'दोलाखेलनमातनोति भवती दृष्ट्वा स दोलायते
वासस्त्वत्कुचयोर्निविन्दति पदं क्षोभं स वा विन्दति ।
क्रीडावेगपरिश्रमो भवति ते दृष्ट्वा स खेदं गत-
स्त्वं भूयो विरतासि मैव स पुनः किं वा विधेयं वद ॥'

---

१. 'चेत्कार्यं स्यात्' इत्यलंकारमुक्तावल्यां पाठः.

परिश्रमशब्देनात्र व्यापारमात्रं विवक्षितम् । प्रथमे क्रोधजन्यशोणिम्नो जागरजन्यरक्तत्वाभेदाध्यवसायेन जागरजन्यतावच्छेदकवैजात्यवतो रागस्य जागररूपहेतुव्यधिकरणोक्तिः । अत्र तु दोलायाः कामरूपदोलाभेदाध्यवसिताया दोलाखेलनवैयधिकरण्यभाने दोलासंयोगरूपकारणतावच्छेदकसंबन्धाभावोऽपि दृष्टेत्यनेनोक्तो विशेषः ।

यथा वा—

'संन्यासमकृत काञ्ची जहौ दुकूलं कलत्रमबलायाः ।
तत्याज रागमधरो मुक्तिमुरीचक्रिरे चिकुराः ॥'

अत्र मुक्तिरूपकार्येण त्रयाणां वैयधिकरण्यम् । तेषामपि परस्परकार्यप्रतियोगिककारणवैयधिकरण्यमिति शेषः ।

क्वचिन्मालारूपा यथा—

'वर्षासु जाता नवयौवनश्रीराशावधूः प्रौढपयोधराभूत् ।
पुष्पोद्गमोऽजायत केतकीनां बभूवुरस्पृश्यतमास्तटिन्यः ॥'

क्वचिदसंगतिसमाधानगर्भापि । यथा—

'अजस्रमारोहति दूरदीर्घां संकल्पसोपानततिं तदीयाम् ।
श्वासात्स वर्षत्यधिकं पुनर्यद्ध्यानात्तव त्वन्मयतामवाप्य ॥'

अत्र सोपानारोहणं भैम्यां श्वासास्तु नले इति वैयधिकरण्यम् । तत्र नलस्य भैमीतादात्म्यमुपपादकतयोपन्यस्तम् । किं चात्र हेतुपदं प्रयोजकत्वाभिमतम् । तथा च सोपानारोहणं श्रमेऽश्रमस्य च श्वासे हेतुत्वमिति । आरोहणश्वासयोरप्यसंगतिरुक्ता ॥ ननु कारणाभावेऽपि कार्योत्पत्तिरूपायां विभावनायामेवास्यान्तर्भाव इति चेत्, न । तत्र कारणाधिकरणवृत्त्यभावप्रतियोगित्वं कारणस्योच्यते, इह तु कार्याभाववद्वृत्तित्वं कारणस्येति दोषात् । किंच तत्र कारणतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताककारणतावच्छेदकावच्छिन्नाभावसत्त्वम्, इह तु कारणतावच्छेदकसंबन्धाभावमात्रं विरोधस्फोरकमिति विशेषात् ॥ नन्वेवं विरोधालंकारात्कुतो भेद इति चेत् ।

अत्र प्राञ्चः—तत्र ह्येकाधिकरणे द्वयोः संबन्धाद्विरोधभानम्, इह त्वधिकरणद्वयादित्युक्तम् ॥

यत्तु—कैश्चिदुक्तम् इहापि तत्तत्कार्यतावच्छेदकधर्मतत्कारणवैयधिकरण्यरूपयोर्धर्मयोरेकस्मिन्कार्यरूपेऽधिकरणे संबन्धादेव विरोधप्रतिभानोत्पत्तेर्नेदं युक्तम् । किं तु विरोधे उत्पत्तिविषयं विनैव विरोधप्रतिभानम्, इह तु उत्पत्तिविमर्षपूर्वकमेवेति विशेष इति, तच्चिन्त्यम् । कारणवैयधिकरण्यस्य कार्यतावच्छेदकसमानाधिकरणत्वप्रतीतेर्विरोधज्ञानहेतुत्वात् । कारणाभावस्य कार्यसामानाधिकरण्यसंभवेऽपि कार्यनिष्ठविरोधप्रतीति(ते)स्तेनानुपपादनात् कारणाभाववद्वृत्तित्वरूपस्य तस्य विरोधात्मकत्वात् ॥ न च कार्याधिकरणावृत्तित्वं घटानां विरोधस्फोटकं कार्यनिष्ठं तूक्तस्वरूपं विरोध इति वाच्यम् । द्वयोरपि समानवित्तिवेद्यत्वाद्विनिगमकाभावाच्च ॥ कारणाभावकार्योभयाधिकरणत्वं कार्याधिकरणनिष्ठं विरोधभासकमिति त्वनाशङ्क्यमेव । कारणाभावकार्ययोर्विरोधज्ञानं तस्यैवासिद्धेः । किं त्वित्यादिकमपि न युक्तम् । 'किसलयकरचरण—' इत्यादौ तापोत्पत्तिविमर्षं विना विरोधानवभासात् । तस्मात् यत्र किंचिद्यतिरेकप्रयुक्ता विरोधस्फूर्तिस्तत्रासंग्रहः[1] । यत्र तु स्वरूपेणैव सा, तत्र विरोध इत्येव विभाग इत्यवधेयम् ॥

यत्तु—

'अन्यत्र करणीयस्य[2] ततोऽन्यत्र कृतिश्च या ।
अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा ॥
अपारिजातां[3] वसुधां चिकीर्षन्द्यां तथा[4] कृथाः ।
गोत्रोद्धारप्रवृत्तोऽपि[5] गोत्रोद्भेदं[6] पुराकरोत् ॥'

इति भेदद्वयमन्यदपि, तन्न । यत्र विशेष्यतावच्छेदकसंबन्धेन अपारिजातत्वप्रकारिका इच्छा तत्र विशेष्यतावच्छेदकतासंबन्धेन अपारि-

१. 'स्तस्य संग्रहः' क. परंतु 'स्तत्रासंगतिः' इति युक्तम. २. 'कारणाख्यश्च' ख. ३. शत्रुजातरहिताम्. ४. पारिजाततरुरहिताम्. ५. गोसमूहरक्षाप्रवृत्तः. ६. गोवर्धनगिरिधारणम्.

ञातत्वप्रकारिका कृतिरिति प्रकृते चोक्तसंबन्धेन इच्छा पृथिवीत्वे, अपा-तिजातत्वप्रकारककृतिः स्वर्गे इति वैयधिकरण्यस्य सत्त्वात् ॥ एवम्—

'त्वत्खड्गखण्डितसपत्नविलासिनीनां
भूषा भवन्त्यभिनवा भुवनैकवीर ।
नेत्रेषु कङ्कणमथोरुषु पत्रवल्ली
चोलेन्द्रसिंह तिलकं करपल्लवेऽभूत् ॥'

इत्यत्रापि भूषणतासंबन्धेन कङ्कणसंयोगं प्रति भूष्यतासंबन्धेन हस्ता-देरकरणतया हस्तत्वकङ्कणयोर्वैयधिकरण्यमवसेयम् । तथा 'गोत्रोद्धारप्रवृ-त्तोऽपि—'इत्यत्र

'मोहं जगत्त्रयभुवामपनेतुमेत-
दादाय रूपमखिलेश्वरदेहभाजाम् ।
निःसीमकान्तिरसनीरधिनामुनैव
मोहं प्रवर्धयसि मुग्धविलासिनीनाम् ॥'

इत्यत्रापि गोत्रोद्भेदे मोहप्रवृद्धौ चोद्देश्यत्वसंबन्धेन तत्तद्विषयकप्रवृत्त्यो-र्हेतुतया तदभावेऽपि कार्योक्त्या विभावनायामेवान्तर्भावसंभवान्नाधिक्यम् । व्यधिकरणत्वपदेन सामानाधिकरण्याभावमात्रस्याभिमतत्वाद्वेति दिक् ॥

इत्यसंगतिः ।

---

समाधिमाह—

**भवति समाधिः सुकरे हेत्वन्तरसमवधानतः कार्ये ।**

चिकीर्षितस्य कार्यस्य सिद्ध्यर्थमभिमतो यो हेतुस्तदतिरिक्तहेतुना कार्यस्य सौकर्यं समाधिः । समाधीयते कार्यमनेन इति व्युत्पत्तेः ॥

तत्र प्रकृतकारणसंभवे यथा—

'[1]पाअपडिअस्स पइणो पुट्ठिं पुत्ते समारुहत्तम्मि ।
दढमण्णुदुण्णिआएँ वि हासो घरिणीए णेक्कन्तो ॥'

---

1. 'पादपतितस्य पत्युः पृष्ठं पुत्रे समारुहति ।
दृढमन्युदूनाया अपि हासो गृहिण्या निष्क्रान्तः ॥' [गाथा० १।११]

अत्र मानापनोदार्थं प्रणते पत्यौ तदभावेऽपि तत्पृष्ठे पुत्रसमारोहणरूपविलक्षणचेष्टाहासगम्यो मानत्यागः ॥

क्वचिदनारब्ध एव यथा—

'मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्यैतदुदीर्णं घनगर्जितम् ॥'

सौकर्यमत्र तद्धर्मावच्छिन्नोद्देश्यकप्रवृत्तिविषयहेत्वतिरिक्तहेतुना कार्योपकाराधानम्, उपकारश्च तदुपयुक्तकिंचित्सहकारिसकलसहकारिसमवधानसजातीयान्तरसंवलितत्वादिसाधारणः । कारणबाहुल्यस्य वाविवक्षितत्वादत्र समुच्चयभे(याद्भे)दः कार्यस्य प्रवृत्तिविषयत्वस्य फलतो लाभात् काव्यलिङ्गात् ।

तृतीयोपकारो यथा—

'चातकस्त्रिचतुर[1]ः पयःकणान्याचते जलधरं पिपासया ।
सोऽपि पूरयति विश्वमम्भसा हन्त हन्त महतामुदारता ॥'

अत्राल्पजलप्रार्थनायामपि जलनिष्ठौदार्येण प्रभूतजलसिद्धिः ॥

एतेन प्रहर्षणमलंकारान्तरमपास्तम् । एवं हि तत् । साक्षात्तदुद्देश्यकयत्नमन्तरेणाप्यभीष्टार्थलाभः प्रहर्षणम् । तत्त्रिविधम् । अकस्मादभीप्सितार्थस्य लाभे, तत्सिद्ध्यर्थं यत्ने क्रियमाणे ततोऽप्यधिकवस्तुनो लाभे, उपायार्थप्रवृत्त्या फललाभे च ।

क्रमेणोदाहरणानि—

'तिरस्कृतो रोषवशात्परिष्वजन्प्रियो मृगाक्ष्या शयितः पराङ्मुखः ।
किं मूर्छितोऽसाविति कांदिशीकया कयाचिदाचुम्ब्य चिराय सस्वजे ॥'

'केलीमन्दिरमागतस्य शनकैरालीरपास्येङ्गितैः
सुप्तायाः पु[2]रतः सरोरुहदृशः संवीजनं कुर्वतः ।
जानत्याप्यनभिज्ञयेव कपटव्यामीलिताक्ष्या सखि
श्रान्तासीत्यवधार्य वक्षसि तया पाणिर्ममाधीयत ॥'

१. 'चतुरान्पयः' इति भवेत्. २. 'सरुषः' ख.

'तद्दर्शनोपायविमर्शनार्थं मया यथालीसदनं गतेन।
तत्रैव सालक्ष्यत पक्ष्मलाक्षी दाक्षायणीमर्चयितुं प्रयाता॥'

इति॥

अत्रेदं चिन्त्यते—उद्देश्यतासंबन्धेन प्रवृत्तिविषयस्य यदर्थप्रयोजकत्वमिच्छाविषयत्वप्रयोजकं तदर्थावच्छिन्नकार्यस्य हेत्वन्तरात्सिद्धिरिति तावदस्मदुक्तरीत्या समाधिलक्षणं पर्यवसितम्, तच्च भवदभिमतप्रहर्षणालंकारविषयसाधारणमेव। तथा हि। मानत्यागरूपकार्यस्य प्रतिबन्धकाभावविषयस्यालिङ्गनादिप्रयोजकत्वमेव नायकनिष्ठेच्छाविषयतायां प्रयोजकम्। आलिङ्गनाद्यवच्छिन्नमानत्यागस्य च भयात्सिद्धेः। एवं द्वितीयादिभेदेऽपि योज्यम्॥

यत्तु—तत्र व्यजनवीजनसमये कामुकस्य माननिवारणस्यैव मुख्योद्देश्येन तदानीं तत्साध्यकुचादिस्पर्शानुपस्थितेरिति, तन्न। तदापि तदुपस्थितेरावश्यकत्वात्। अन्यथा तदुद्देशस्यैवानुपपत्तेः॥ एवं तृतीयेऽपि उपायविमर्षरूपकार्यस्य नायिकादर्शनप्रयोजकत्वमिच्छाविषयप्रयोजकम्, तदवच्छिन्ननायिकादर्शनस्य हेत्वन्तरात्सिद्धिसत्वात्। तत्प्रयोज्यतावच्छेदकप्रयोज्यैतदुभयं विवक्षितम्, अतो नासंगतिः॥

एवम्—

'लोभाद्वराटकानां विक्रेतुं तक्रमनिशमटन्त्या।
लब्धो गोपकिशोर्या मध्येरथ्यं महेन्द्रनीलमणिः॥'

इत्यत्र वराटकानामिच्छाविषयत्वे वस्त्वन्तरप्राप्तिप्रयोजकत्वं प्रयोज्यम्। प्राप्त्यवच्छिन्नं च प्रयोजकतासंबन्धेन नीलमणिरूपकार्यमिति साध्यवसानम् कार्यमिति विशेषः॥ एवम्—

'उच्चित्य प्रथममधः स्थितं मृगाक्षी पुष्पौघं श्रितविटपं गृहीतुकामा।
आरोढुं पदमधादशोकयष्टावामूलं पुनरपि तेन पुष्पिता(तो)ऽभूत्॥'

इत्यादावपि योज्यम्।

इति समाधिः।

---

1. 'तदाली' ख.

सममाह—

अन्योन्यसंगमार्हौ संबध्येते यदा समं तत्स्यात्।

यत्र परस्परप्रतियोगिकसंबन्धानुरूपयोः संबन्ध उच्यते तत्समम्। संबन्धानुरूप्यं द्विविधम्। सतोरसतोश्च।

यथा—

'स्त्रीपुंसव्यतिषञ्जनं जनयतः पत्युः प्रजानामभू-
दभ्यासः परिचायकः किमनयोर्दाम्पत्यसंपत्तये।
आसंसारपुरंध्रिपूरुषमिथःप्रेमार्पणक्रीडया-
प्येतद्दम्पतिगाढरागरचनात्प्राकर्षि चेतोभुवः॥'

अत्रान्यस्त्रीपुरुषसंबन्धजननाभ्यासस्य भैमीनलसंबन्धफलकोक्त्या तत्संबन्धस्यानुरूप्यं लभ्यते।

यथा—

'शरज्ज्योत्स्नाकान्तं कुमुदमिव तं नन्दयतु सा
सुजातं कल्याणी भवतु कृतकृत्यः स च युवा।
वरीयानन्योन्यप्रगुणगणनिर्माणनिपुणो
विधातुर्व्यापारः प्रफलतु मनोज्ञश्च भवतु॥'

अत्र मालतीमाधवसंबन्धानुरूप्यं सुजातकल्याणीशब्दोपमालंकारद्वितीयार्धव्यङ्ग्यम्।

यथा—

'स धर्मराजः खलु धर्मशीलया त्वयास्ति चिन्तातिथितामवापितः।
ममापि साधुः प्रतिभात्ययं क्रमश्चकास्ति योग्येन हि योग्यसंगमः॥'

द्वितीयं यथा—

'सवितुस्त्विषापि ददृशेऽह्नि न यः स तमीं तमोभिरधिगम्य तताम्।
द्युतिमग्रहीद्ग्रहगणो लघवः प्रकटीभवन्ति मलिनाश्रयतः॥'

अत्र लघूनां मलिनाश्रयेण प्राकट्यं स्वभावः इत्युक्तार्थस्यौचित्यद्योत्यम्॥

संबन्धोऽपि कारणकार्यरूपः । यथा—

'गुणौ पयोधेर्निजकारणस्य न हानिवृद्धी कथमेतु चन्द्रः ।'

यथा च । 'यदराज्ञि राजवदिहार्धम्–' इत्यादि ॥

इति समम् ।

---

विषमं निरूपयति—

संबन्धानुपपत्तौ इष्टार्थानाप्त्यनिष्टसंप्राप्तौ ।
जन्यजनकोभयगुणक्रियाविरोधे च विषमः स्यात् ॥ १ ॥

यत्रात्यन्तविलक्षणभूतयोः परस्परसंबन्ध एवानुपपद्यमानः प्रतीयते स एको विषमः ।

यथा—

'क्व रुजा हृदयप्रमाथिनी क्व च ते विश्वसनीयमायुधम् ।
मृदु तीक्ष्णतरं यदुच्यते तदिदं मन्मथ दृश्यते त्वयि ॥'

अत्र कोमलायुधोत्कटव्यथयोः कार्यकारणभावसंबन्धोऽनुपपन्नवद्भासते । अत्र संबन्धसमाधानमुत्तरार्धगम्यमिति तत्संकीर्णोऽयम् ।

शुद्धो यथा—

'न खलु न खलु बाणः संनिपात्योऽयमस्मि-
न्मृदुनि मृगशरीरे तूलराशाविवाग्निः ।
क्व बत हरिणकानां जीवितं चातिलोलं
क्व च निशितनिपाता वज्रसाराः शरास्ते ॥'

गम्यो यथा—

'राज्ञः प्रियाय सुहृदे सचिवाय कार्या-
द्दत्त्वात्मजां भवतु निर्वृतिमानमात्यः ।
दुर्दर्शनेन घटतामियमप्यनेन
धूमग्रहेण विमला शशिनः कलेव ॥'

अत्र दुर्दर्शनेनेति नन्दनविशेषणेन मालतीसंबन्धानर्हत्वलाभः ।

यथा वा—

'दोःसंदोहवशंवदत्रिभुवनश्रीगर्वसर्वंकषः
कैलासोद्धरणः प्रचण्डचरितो देवः कुबेरानुजः ।
यत्रायं स्वयमस्ति सेयममरावत्यापि वन्द्या पुरी
नीला मर्कटकेन कामपि दशां धिग्दैवमावश्यकम् ॥'

प्रथमे तु स्वरूपेणैव संबन्धानुपपत्तिः, अत्र तु लङ्काया मर्कटजन्यदुर्दशासंबन्धानुपपत्तिरपि रावणस्य सत्त्वोत्थापिता । तदधिष्ठानेनैव तदनुपपत्तेर्भानादिति शेषः ॥

'कथं सर्वगुणैर्हीना गुणवन्तं महौजसम् ।
सुमुखं दुर्मुखी रामं कामयामास राक्षसी ॥'

एतेन—

'असंभवोऽर्थनिष्पत्तेरसंभाव्य[त्व]वर्णनम् ।
को वेद गोपशिशुकः शैलमुत्पाटयेदिति ॥'

इत्यसंभवस्यालंकारान्तरत्वमपास्तम् ॥

एतेनैव—इष्टसिद्ध्यर्थमिष्टैषिणा क्रियमाणमिष्टप्रतिकूलार्थाचरणं विचित्रालंकारः ।

यथा—

'बन्धोन्मुक्त्यै खलु मखमुखान्कुर्वते कर्मपाशा-
नन्तः शान्त्यै मुनिशतमतानल्पचिन्तां भजन्ति ।
तीर्थे मज्जन्त्यशुभजलधेः पारमारोढुकामाः
सर्वं प्रामादिकमिह भवभ्रान्तिभाजां नराणाम् ॥'

इत्यपि परास्तम् । उन्मुक्तिपाशयोः कार्यकारणभावानुपपत्तिसत्त्वात् ॥

यत्तु [रसगङ्गाधरे]—

'क्व शुक्तयः क्व मुक्ता वा क्व पङ्कः क्व च पङ्कजम् ।
क्व मृगः क्व च कस्तूरी धिग्विधातुर्विदग्धताम् ॥'

इत्यादौ नायमलंकारः । वस्तुवृत्तस्य लोकसिद्धत्वेनालंकारायोगात् । कविप्रतिभामात्रकल्पितानामर्थानामलंकारत्वात् ॥ एवम्—

'वनान्तः खेलन्ती शशकशिशुमालोक्य चकिता
भुजप्रान्तं भर्तुर्भजति भयहर्तुः सपदि या ।
अहो सेयं सीता शिव शिव परीताश्रुतिवल-
त्करोटीकोटीभिर्वसति खलु रक्षोयुवतिभिः ॥'

इत्यत्रापि तथैव ॥

एतेन—

'अरण्यानी क्वेयं धृतकनकसूत्रः क्व स मृगः
क्व मुक्ताहारोऽयं क्व च स पतगः क्वेयमबला ।
क्व तत्कन्यारत्नं ललितमहिभर्तुः क्व च वयं
स्वमाकूतं धाता किमपि निभृतं पल्लवयति ॥'

इत्यलंकारसर्वस्वकारोदाहरणमपि प्रत्युक्तमिति, तदसत् । तत्राप्यनुपपत्तेः कविप्रतिमाधीनत्वात् । शुक्तिमुक्तयोः संबन्धानुपपत्तेर्लोकप्रसिद्धिविरहात् । प्रत्युत तत्संबन्धस्यैव प्रसिद्धत्वात् । एवमुत्तरत्राप्यवधेयम् ॥

यत्रेष्टार्थानवाप्तिसहितानिष्टलाभः स द्वितीयः ।

यथा—

'कन्या तस्य वधाय या विषमयी गूढप्रयुक्ता मया
दैवात्पर्वतकस्तया विनिहतो यस्तस्य राज्यार्धभाक् ।
ये शस्त्रेषु विषेषु च प्रणिहितास्तैरेव ते घातिता
मौर्यस्यैव फलन्ति पश्य विविधश्रेयांसि मे नीतयः ॥'

अत्र चन्द्रगुप्तवधार्थं राक्षसेन कृतैरुपायैर्न केवलं तद्वधाभावमात्रं किंतु पर्वतकादिवधरूपानिष्टमपि ॥

यथा वा—

'अयं दुग्धाम्भोधेः पतिरिति गवां पालक इति
श्रितोऽस्माभिर्दुग्धोपनयनधिया गोपतनयः ।

१. 'दशवदननीता कररदैः परीता रक्षोभिः श्रयति कृपणां कामपि दशाम् ।' ख.
२. 'कल्पितत्वात्' ख.

अनेन प्रत्यूहो व्यरचि स तथा येन जननी-
स्तनादप्यस्माकं निजमपि पयो दुर्लभमभूत् ॥'

'सानन्दमेष मकरन्दमिवारविन्दे विन्देत षट्पदयुवेति शनैरशङ्कि।
दैवादकाण्डपरिमुद्रितपुण्डरीककोषादभूदहह निःसरणं पुमर्थः ॥'

'सूचीभिर्व्रणितं वपुः कवलितं धूलीभिरायुर्दृशो
नीरन्ध्रैः क्रकचोपमैर्दलपुटैः पक्षद्वयं कीलितम्।
पूर्णा एव मनोरथाः किमपरं कल्याणि कल्पायुतं
जीयाः केतकि देहि निर्गमपथं जीवत्वसौ षट्पदः ॥'

इदं सर्वमर्थरूपेष्टानवाप्त्युदाहरणम् ॥

अनर्थपरिहाररूपेष्टानवाप्तौ यथा मम—

'त्वं व्यापारितवान्प्रियान्तरदिशा प्रेमान्तरे लोचने
इत्युक्ते वरवर्णिनीं प्रति तथा निह्नोतुमाकाङ्क्षते।
त्वन्नामैव पदव्यधायि वचसाङ्गुष्ठेषु कान्तेन य-
त्क्लृप्तोपक्रमकस्य वृश्चिकभिया पातो भुजङ्गानने ॥'

अत्र नायिकान्तरदर्शनरूपानर्थपरिहारार्थवचनप्रपञ्चेन न केवलतदभावमात्रं किं तु गोत्रस्खलनमपि। इदं च सर्वं स्वनिष्ठेष्टानवाप्तौ उदाहरणम्।

परनिष्ठे तु यथा—

'यः कल्पितः कुचतटे विरहातुरायाः
शैत्याय सान्द्रतरचन्दनपङ्कलेपः।
अन्तः स तापमधिकं जनयंस्तदासी-
दापाकबाह्यघनकर्दमलेपकक्षाम् ॥'

अत्र नायिकाशैत्याय कल्पितेन चन्दनलेपेन तापशान्त्यभावस्तापोत्कर्षश्च।

'पङ्कोद्भवत्वपरिवादभयान्मृगाक्ष्या
जातं सरोजयुगलं कुचवेषधारि।
शक्यं न धातृविहितं परिहर्तुमस्य
भूयोऽपि येन घनचन्दनपङ्कयोगः ॥'

तत्र केवलानिष्टप्राप्तौ यथा—

'दिट्ठीअ जं ण दिट्ठो सरलसहावाइजं च णालविओ ।
उअआरोजं ण कओ तं चिअ कलिअं छइल्लेहिं ॥'

अत्र नायकविषयकानुरागव्यञ्जकाभावत्वेन इष्टानां तददर्शनादीनामनिष्ठतद्विषयकज्ञानरूपानिष्टप्राप्तिः । न चेयं विशेषोक्तिरिति वाच्यम् । अदर्शनादीनां लज्जादितोऽपि संभवेनाननुरागबोधहेतुत्वाभावात् तत्प्रकारेऽक्त्यभावाच्च । अदर्शनादौ सत्यपि आप्तवाक्यादिना तन्निर्णयोदयाच्चेति । यथा—

'निजांशुनिर्दग्धमदङ्गभस्मभिर्मृषा विधुर्वाञ्छति लाञ्छनोन्मृजाम् ।
त्वदास्यतां यास्यति तावतापि किं वधूवधेनैव पुनः कलङ्कितः ॥'

अत्र श्यामत्वरूपकलङ्कस्योक्तभस्मसंयोगेन नाशसंभवेऽप्यपरिहार्यपातरूपकलङ्कप्रतिलम्भः ॥

यत्तु—अभीष्टार्थविरुद्धलाभो **विषादालंकारः** ।

यथा—

'तत्तद्व्याप्रुतिमग्नमानसतया मत्ते निवृत्ते सदा
चञ्चूकोटिविपाटितार्गल इतो यास्याम्यहं पञ्जरात् ।
इत्थं कीरवरे मनोरथमयं पीयूषमास्वादय-
त्यन्तः संप्रविवेश वारणकराकारः फणिग्रामणीः ॥'

न ह्यत्र विषमसंभवः । इष्टार्थकारणप्रयोगाभावात् । इष्टार्थप्रयुक्तकार्येन सहोत्पाद्योत्पादकभावलक्षणसंसर्गाननुरूपत्वस्य तच्छरीरत्वादिति, चिन्त्यम् । मोक्षरूपेष्टकारणस्येच्छाया इहापि प्रयोगात् ॥ अथेच्छायाः योगेऽपि अनिष्टं न तज्जन्यमिति चेत्, किं तत् । इष्टसाधनत्वेन निश्चितात्कारणादनिष्टकार्योत्पत्तिरिति विषमस्वभावाभाव इति चेत् ॥ कुतः तस्यास्यभावविशिष्टानिष्टप्राप्तेरेव तत्स्वरूपत्वात् । अनिष्टे इष्टार्थप्रयुक्त-

१. '.................................................. ।
.................................................. ॥' [इति च्छाया ।]

२. 'दीनो लावण्यन्य' ख.

कारणजन्यत्वविशेषणे प्रयोजनाभावात्। त्वया च विषादनालंकारपार्थक्य-दुराग्रहेणैव तस्य दत्तत्वात्। तस्मादिष्टार्थमुद्यतस्य तत्प्राप्त्यभावसहितानिष्टप्राप्तिरेव विषमभेदस्य शरीरम्। अनिष्टप्राप्तिश्च तत्कारणादन्यतो वेति नाग्रहः। विषमस्यैवैतद्भेदद्वयमिति तु न निवारयामः॥ नन्वेवमननुरूपसंसर्गरूपविषमसामान्यलक्षणानुपपत्तिः इष्टसाधनत्वेन ज्ञायमानात्कारणात् अनिष्टोत्पत्तावेव तदुत्पाद्योत्पादकत्वसंसर्गस्याननुरूपत्वस्मरणादिति चेत्॥ मैवम्। इष्टोद्यमानिष्टलाभयोरननुरूपत्वस्फुरणादेव तदुत्पत्तेरित्यलं पल्लवितेन॥

यत्र च कार्यकारणभूतधर्माणां विरुद्धगुणक्रियाजनकत्वं तत्र तृतीयः। यथा—

'बुधजनकथा तथ्यैवेयं तनौ तनुजन्मनः
पितृशितिहरिच्छाकाद्याहारजः किल कालिमा।
शमनयमुनाक्रोडैः कालैरितस्तमसांपिबा-
दपि यदमलच्छायात्कायादभूयत भास्वतः॥'

यथा—

'यं प्रासूत सहस्रपादुदभवत्पादेन खञ्जः कथं
स छायातनयः सुतः किल पितुः सादृश्यमन्विच्छति।
एतस्योत्तरमद्य नः समजनि त्वत्तेजसां लङ्घने
साहस्रैरपि पङ्गुरन्घ्रिभिरभिव्यक्तीभवन्भानुमान्॥'

अत्रोभयत्र समाधानगर्भोऽयं प्रथमे प्रयोजकान्तराधीनः, द्वितीये कारणस्यापि कार्यगुणवत्त्वकल्पनाधीनश्च परिहार इति विशेषः॥

शुद्धो यथा—

'कथं विधातर्मयि पाणिपङ्कजात्तव प्रियाशैत्यमृदुत्वशिल्पिनः।
वियोक्ष्यसे वल्लभयेति निर्गता लिपिर्ललाटंतपनिष्ठुराक्षरा॥'

अत्र हंसीशैत्यमृदुत्वजननगम्यब्रह्महस्तशैत्यमृदुत्वविरुद्धं तज्जन्यलिपौ उष्णत्वनैष्ठुर्यरूपं गुणद्वयमुक्तम्।

क्रियाविरोधे यथा—

'अमअमअं विअ हिअअं हत्था तल्हाहरासअल्हाणं ।
चन्दमुहकत्थणिवसइ अमित्तउहणो तुह वआवो ॥'

अत्र हस्तस्य राजजनकत्वं तस्य प्रतापजनकत्वम् । हस्तप्रतापनिष्ठतृष्णा-णदहनक्रिययोर्विरोध इति दिक् ॥

इति विषमः ।

---

अधिकं निरूपयति—

आधारस्याधेयादाधेयस्यापि वाधारात् ।
यदि वर्ण्यते महत्त्वं तत्कथयन्त्यधिकमधिकज्ञाः ॥

यत्राधेयापेक्षया न्यूनपरिमाणस्याप्याधारस्य महत्तया वर्णनम्, यत्र धारापेक्षयाल्पस्याधेयस्य महत्तया वर्णनम्, तद्विविधमलंकारः । आधाराधे-योः परस्परापेक्षोत्कर्षोक्तेः । एवं चाश्रयत्वनिरूप्यत्वान्यतरसंबन्धेनोत्कर्ष-वाधारकत्वं तेनैव संबन्धेन द्वन्द्वाधेयकत्वम् । एवमपकर्षनिवेशेनापि ल-गचतुष्टयं पर्यवस्यति ।

प्रथमं यथा—

'अङ्के विदर्भेन्द्रपुरस्य शङ्के न संममौ नैष तथा समाजः ।
यथा पयोराशिरगस्त्यहस्ते यथा जगद्वा जठरे मुरारेः ॥'

अत्र जनसमाजापेक्षया कुण्डिनपुरस्य महत्त्ववर्णनम् ।

द्वितीयं यथा—

'आस्ते दामोदरीयामियमुदरदरीं यावलम्ब्य त्रिलोकी
संमातुं शक्तिमन्ति प्रथमभरवशादत्र नैतद्यशांसि ।
तामेनां पूरयित्वा निरगुरिव मधुध्वंसिनः पाण्डुपद्म-
च्छद्मापन्नानि तत्र द्विपदशनसनाभीनि नाभीपथेन ॥'

अत्र त्रैलोक्याधारतया महतोऽपि भगवदुदराद्यशसां महत्त्वमुक्तम् ॥

---

1. '.......................................... ।
.......................................... ॥' इति च्छाया ।

यत्तु—

'द्यौरत्र क्वचिदाश्रिता प्रविततं पातालमत्र क्वचि-
त्क्वाप्यत्रैव धराधराजलधराधारावधिर्वर्तते ।
एतत्स्फीतमहो नभः कियदिदं यस्यैभिरङ्काश्रितै-
र्दूरे पूरणमस्तु शून्यमिति यन्नामापि नास्तं गतम् ॥'

इति सर्वस्वकारोदाहरणमयुक्तम् । गगनस्य परममहत्परिमाणताया वास्तवत्त्वेन कविप्रतिभानुल्लिखितत्वादिति, तन्न । वृत्तिनियामकसंबन्धेनाकाशस्य पर्वतादीनामुक्तानामाश्रयतायाः कविनैव कल्पितत्वात् । आधिक्यांशावच्छेदेनैव तत्कल्पितत्वस्य चाप्रयोजकत्वात् ॥

यत्तु—

'अल्पं तु सूक्ष्मादाधेयाद्यदाधारस्य सूक्ष्मता ।
मणिमालोर्मिका तेऽद्य करे जपवटायते ॥'

अत्राङ्गुलीयकस्य सूक्ष्मपरिमाणत्वेऽपि तदपेक्षया करस्य सूक्ष्मत्वं वर्णितमित्यल्पाख्यमलंकारान्तरमिति, तच्चिन्त्यम् । आधारापेक्षया आधेयस्य महत्त्वकल्पनरूपाधिक्यभेद एव पर्यवसानात् ॥

इत्यधिकम् ।

---

प्रत्यनीकं निरूपयति—

आत्मापकारजनकप्रत्यपकारासमर्थेन ।
तत्संबन्ध्यपकारे प्राज्ञतमैः प्रत्यनीकमित्युक्तम् ॥ १ ॥

यत्र साक्षात्स्वविपक्षं विजेतुमशक्तेन विपक्षसंबन्धिनोऽपकारः कथ्यते तत्प्रत्यनीकम् ॥ संबन्धित्त्वं च द्वेधा । साक्षात्परम्परया च ॥

आद्यं यथा मम—

'यस्य व्यधायि जनकेन पुरास्य दाहो
भालेक्षणे निवसता पुरसूदनस्य ।
तस्य त्वदीयहृदये वसता स्मरेण
भ्रूमध्य रोमतिलकेति कुतो ग्रहः किम् ॥'

१. '[illegible]' क.

अत्र रोमावलिवर्णने कामेन स्वदाहकवह्न्यपकाराशक्त्या तज्जन्यधूमनिरोध उत्प्रेक्षितः। वह्निधूमयोर्जन्यजनकभावरूपः साक्षात्संबन्धः।

शुद्धो यथा—

'एकेनापाति लत्ता तव वपुषि परेणापि पीतः पिता ते
भ्राता वान्येन शप्तस्त्रिभुवनतलतोऽन्येन निर्वासितासि।
एकोऽयं धीरभूभृद्गणयति तृणवत्त्वां सरोजालये चे-
न्मातस्तज्जातिमात्रप्रणयिनि मयि मा कोपमेवं विदध्याः॥'

अत्र साजात्यरूपः साक्षात्संबन्धः निषेधगम्यश्चायमलंकारः।

द्वितीयं यथा ममैव—

'कामेन भालनयनोपरि वैरभाजा
प्रालेयशैलदुहितृप्रतिमानशीला।
त्वं नीयसे कुसुमगात्रि शरव्यभावं
कल्पान्तवह्निगततैक्ष्ण्यभृतामिषूणाम्॥'

अत्र स्वप्रतिपक्षशिवस्य स्त्रीत्वेन संबन्धिन्या भवान्याः सादृश्येन संबन्धिन्या नायिकाया अपकार उक्तः॥

यथा साक्षात्प्रतिपक्षेण प्रतिपक्षसंबन्धिनोऽपकारे तथा संबन्धसंबन्धिना स्वसंबन्धिप्रतिपक्षस्यापकारे एतद्बोध्यम्।

यथा—

'हृत्तस्य यन्मन्त्रयते रहस्त्वां तद्व्यक्तमामन्त्रयते मुखं यत्।
तद्वैरिपुष्पायुधमित्रचन्द्रसख्यौचिती सा खलु तन्मुखस्य॥'

अत्र मुखेन चन्द्रस्य सादृश्यरूपः चन्द्रस्य कामेनोद्दीप्योद्दीपकभावरूपः संबन्धः कामेन हृदयस्य विरोधितारूपः इति परम्परासंबन्धिना मुखेन कामवैरिणो हृदयस्य संबन्धिनो मन्त्रणस्य भेदरूपोऽपकारः॥

यथा वा ममैव रुक्मिणीपरिणये—

'दंष्ट्रान्तरालविषयत्वमुपेयिवासं
स्वर्भानुरिन्दुममुचद्बहुशः पुरा यत्।

तत्कण्ठकाण्डपरिवर्तनकारणस्य
मन्येऽस्य तेन वितनोति रुजं स उग्राम् ॥'

अत्र संरक्षणराहुसंबन्धवता चन्द्रेण स्वसंबन्धिराहुप्रतिपक्षकृष्णापकारः। अत्र प्रतिपक्षसाक्षात्संबन्धिन इति विशेषः।

अत्र वदन्ति—हेतूत्प्रेक्षात इदमलंकारान्तरमयुक्तम्। सर्वत्र हेतुहेतुमद्भावप्रतीतेः। न चात्र हेतुनिश्चयः, उत्प्रेक्षायां तु संदेहमात्रमिति भेद इति वाच्यम्। व्यङ्ग्यहेतूत्प्रेक्षायामिवाद्यभावेन संभावनाविरहेण निश्चयसंभवेन तदुच्छेदापत्तेः। न चात्र प्रतिपक्षगतबलवत्त्वस्वगतदुर्बलत्वप्रतीत्या भेद इति वाच्यम्। तथापि हेतूत्प्रेक्षाविशेषत्वस्यैव संभवेन तदतिरिक्तत्वानौचित्यात्। पृथिवीभूतैव वैलक्षण्येन पटस्य पृथिव्यतिरिक्तत्वाभावात् इति॥ तच्चिन्त्यम्। उत्प्रेक्षाविनिर्मुक्तविषयस्य दर्शितत्वादत्र तादृशहेतुनिर्णयोदयाच्च। न चोत्प्रेक्षाविलयप्रसङ्गः। न हि इवादिशब्दाभावौ हेत्वनिर्णयप्रयोजकत्वेनाभिमतौ येनोक्तदोषापत्तिः स्यात्। किं त्वत्र किंचिन्निष्ठकार्यताप्रतियोगिकं यत्कारणमुत्प्रेक्ष्यं तन्निष्ठकार्यतानिरूपितकारणस्याप्यभिधानेन पूर्वकारणनिर्णयः उत्प्रेक्षायां च तदभावान्न तन्निर्णय इति वैषम्यं स्फुटमेव॥

नन्वेवम्—

'उन्मेषं यो मम न सहते जातिवैरी निशाया-
मिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः।
नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षा-
ल्लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः॥'

इत्यत्रापि पद्मलक्ष्म्याश्चरणसंबन्धजनकत्वाभिमतहर्षस्यापि पद्मवैरिचन्द्रदर्पोपशमनरूपं कारणमुक्तमिति हेतुनिर्णयप्रसङ्ग इति चेत्॥ मैवम्। तत्र हेतुनिर्णयसामग्र्यां सत्यामपि संभावनार्थकपदसमभिव्याहारेण तदनुदयात्। न चैवं तत्र मन्ये इति पदपरित्यागे व्यङ्ग्योत्प्रेक्षानुपपत्तिः त्वद्रीत्या तत्र हेतुनिर्णयापत्तेः। एवं—'हृतस्य—' इत्युदाहृते।

'मम रूपकीर्तिमहरद्भुवि यस्तमनुप्रविष्टहृदयेयमिति ।
त्वयि मत्सरादिव निरस्तदयः सुतरां क्षिणोति खलु तां मदनः ॥'
'त्वं विनिर्जितमनोभवरूपः सा च सुन्दरि भवत्यनुरक्ता ।
पञ्चभिर्युगपदेव शरैस्तां ताडयत्यनुशयादिव कामः ॥'

इत्यादावपि संभावनार्थकपदसत्त्वेन हेत्वनिर्णयापत्तिरिति चिन्त्यम् ॥

इति प्रत्यनीकम् ।

---

मीलितं निरूपयति—

**सहजनिमित्तजधर्मात्सदृशादन्येन वस्तुना वस्तु ।**
**अपिधीयते यदेतन्मीलितमाहुर्विशेषज्ञाः ॥ १ ॥**

अत्र धर्म्यन्तरवृत्तिधर्मसमेन धर्मेण यस्य पदार्थान्तरस्य तिरोधानं तन्मीलितमिति लक्षणम् ॥ धर्मश्च द्वेधा। स्वाभाविको नैमित्तिकश्चेति भेदः।

आद्यं यथा मम—

'गात्रेषु गन्धफलिकागुणबन्धुरेषु
कश्मीरसंभवरसेन परिष्कृतेषु ।
बिम्बाधरे पुनरलक्तकरञ्जितेऽपि
कस्यापि नोद्भवति तत्प्रतिभालवोऽपि ॥'

अत्र साहजिकाभ्यां गात्राधरनिष्ठाभ्यां गौरत्वारुणत्वाभ्यां कुङ्कुमयावकनिष्ठतिरस्कारः ।

अन्त्यं यथा—

'अपह्नुतः स्वेदभरः करे तयोस्त्वपाजुषोर्दानजलैर्मिलन्मुहुः ।
दृशोरपि प्रस्तुतमश्रु सात्विकं घनैः समाधीयत धूमलङ्घनैः ॥'

अत्र स्वेदजलस्य दानजलेनागन्तुकधर्मेण स्वेदजलस्य धूमजन्येन चाश्रुणा सात्विकजन्याश्रूणाम् । अत्राद्यस्य सजातीयापेक्षोत्कर्षवत्त्वं, द्वितीयस्य च प्रत्ययविषयस्वकार्यत्वप्रतियोगिककारणताश्रयकत्वं तिरस्कारत्वप्रयोजकम् ॥

इति मीलितम् ।

---

एकावलीं निरूपयति—

**प्रथमं विशेषणं यद्विशेष्यमग्रे भवत्यसकृत् ।**
**विरहप्रतियोगी वा तद्वानेकावली सोक्ता ॥ १ ॥**

यत्र प्रथमं विशेषणीभूतस्य पश्चाद्विशेष्यत्वं सा एका, यत्र च प्रथमतोऽभावप्रतियोगिनोऽन्यप्रतियोगिकाभावाधिकरणत्वं सा परेति द्विविधैकावली । एकवारमात्रं तदुपादाने चमत्काराभावात् । असकृदिति बहुत्वपरम् । तच्चोभयत्रापि बोध्यम् ।

आद्या यथा—

'भिण्णघडन्तावत्तो आवत्तन्तरभमन्तभिण्णमहिहरो[1] ।
महिहरसंभमविहुओ विहुअणिअत्तसलिलो णिअत्तइ उअही ॥'

'प्रचिताः कर्मारम्भा नियतविपाकानि कर्माणि ।
अतिविषमाश्च विपाका वैषम्यं दुःसहं तेषाम्[2] ॥'

विशेष्यत्वं चात्रान्यनिष्ठप्रकारतानिरूपितत्वमात्रं न त्वन्यनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वमपि । अतो नानुपपत्तिः । एवं विशेषणत्वमपि विशेषणतावच्छेदकसाधारणं ग्राह्यम् । तेन—

'पुराणि यस्यां सवराङ्गनानि वराङ्गना रूपपुरस्कृताङ्ग्यः[3] ।
रूपं समुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य ॥'

इत्यत्र रूपस्य वराङ्गनायां विशेषणत्वाभावेऽपि न दोषः । अङ्गनानिष्ठविशेष्यतानिरूपितविशेषणताशालिन्यङ्गे रूपस्य विशेषणतापन्नत्वेन विशेषणतावच्छेदकतायाः सत्वात् ।

द्वितीया यथा—

'न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ कलगुञ्जितो न यो न गुञ्जितं तन्न जहार यन्मनः ॥'

अत्र हि 'सुचारुपङ्कजाभाववज्जलमभावप्रतियोगि' इति बोधेन पूर्वम-

---

१. 'भिन्नघटमानावर्त आवर्तान्तरभ्रमद्भिन्नमहीधरः ।
महीधरसंभ्रमविधुतो विधुतनिवृत्तसलिलो निवर्तत उदधिः ॥' [सेतु॰ ८।४]
२. 'नितराम्' ख. ३. 'येन' ख.

भावप्रतियोगिनः पङ्कजस्य द्वितीयवाक्ये षट्पदाभावाधिकरणत्वम् । न चैवमपि 'अलीनषट्पदम्–' इत्यत्र अलीनाः षट्पदा यत्रेति बहुव्रीहिणा पद्मसंबन्धाभाववत्षट्पदबोधादभावे संबन्धस्यैव प्रतियोगितया षट्पदस्यात-थात्वाद्दोष एवेति वाच्यम् । प्रतियोगिपदेन तदवच्छेदककोटिसाधारण-प्रतियोगिकोटिनिविष्टत्वमात्रस्य विवक्षितत्वात् । अत एव—

'न सा सभा यत्र न सन्ति वृद्धा वृद्धा न ते ये न वदन्ति धर्मम् ।
नास्ते स धर्मो न हि यत्र सत्यं सत्यं न तद्यत्कपटेन विद्धम् ॥'

इत्यत्र वदनक्रियाया एवाभावप्रतियोगित्वेऽपि न क्षतिः । कर्मत्वेन धर्मस्यापि तत्कोटिनिविष्टत्वात् ॥ अत एव—

'नार्थः स यो न स्वहितं समीक्षते न तद्धितं यन्न परानुतोषणम् ।
न ते परे ये न हि साधुताश्रिता न साधुता सा हि न यत्र माधवः ॥'

इत्याद्युपपत्तिः ॥

यत्तु—पूर्वपूर्वस्योत्तरोत्तरं प्रति विशेष्यत्वरूपभेदे उत्तरोत्तरविशेषणस्य स्थापकत्वापोहकत्वाभ्यां द्वैविध्यम् । स्वसंबन्धेन विशेष्यतावच्छेदकनियाम-कत्वं स्थापकत्वम् । स्वव्यतिरेकेण विशेष्यतावच्छेदकव्यतिरेकबुद्धिजनक-त्वमपोहकत्वम् ।

यथा—

'स पण्डितो यः स्वहितार्थदर्शी हितं च तद्यत्र परानपक्रिया ।
परे च ते ये श्रितसाधुभावाः सा साधुता यत्र चकास्ति केशवः ॥'

द्वितीयं यथा । 'नार्थ–' इत्यादि । आद्ये हितार्थदर्शनस्य पाण्डित्य-रूपविशेष्यतावच्छेदकनियामकत्वं द्वितीये च हितावेक्षणव्यतिरेकेणार्यत्व-व्यतिरेकाभिधानमिति ॥ तन्न । 'भिण्णघडं तावत्तो' इत्यादौ, 'न तज्ज-लम्–' इत्यादौ चोदाहृतेऽव्याप्तेः । तत्र तत्रोत्तरविशेष्यतावच्छेदकनियामक-तायाः स्वव्यतिरेकेण विशेष्यतावच्छेदकव्यतिरेकप्रयोजकतायाश्चाभावात् । न हि पङ्कजव्यतिरेकेण जलत्वाभावे तात्पर्यम्, किं तु जलत्वावच्छेदेन पङ्कजायोगव्यतिरेक एव, शरत्समयपरे श्लोके तथैव तात्पर्यावगमात् ।

इत्येकावली ।

स्मरणं निरूपयति—

**सदृशज्ञानोद्बोधितसंस्कारभवा मतिः स्मरणम् ।**

अनुभवे व्यभिचारवारणाय भवान्तं ज्ञानविशेषणम् । उद्बोधकान्तरसमवधानजन्यस्मरणवारणाय सदृशज्ञानेति । ज्ञानपदं च स्मृत्यनुभवोभयसाधारणम् । अतः स्मरणस्यैवोद्बोधकत्वस्थले नाव्याप्तिः ।

वस्तुतस्तु.........(?) विधा या संस्कारव्यक्तिस्तन्निष्ठकारणतानिरूपितकार्यत्वं यदंशे तदंशमादाय लक्ष्यत्वेन समूहालम्बनस्मरणेऽपि न व्यभिचारः ।

यथा—

'यत्प्रत्युत त्वन्मृदुबाहुवल्लिस्मृतिस्रजं गुम्फति दुर्विनीता ।
ततो विधत्तेऽधिकमेव तापं तेन श्रिता शैत्यगुणा मृणाली ॥'

अत्र बाहुसदृशमृणालीदर्शनेन दमयन्तीबाह्वनुभवजन्यसंस्कारोद्बोधः । तेन तद्बाहुस्मरणम् ।

जन्मान्तरानुभूतस्मरणं यथा—

'दिव्यानामपि कृतविस्मयां पुरस्ता-
दम्भस्तः स्फुरदरविन्दचारुहस्ताम् ।
उद्वीक्ष्य श्रि(स्त्रि)यमिव कांचिदुत्तरन्ती-
मस्मार्षीज्जलनिधिमन्थनस्य शौरिः ॥'

अत्र नायिकादर्शनेन श्रीस्मरणं तेन च समुद्रमन्थनस्मरणोपपत्तेः । नचैकसंबन्धिज्ञानमात्रस्य अपरसंबन्धिस्मारकतया नायिकादर्शनजन्यश्रीस्मरणकल्पने मानाभाव इति वाच्यम् । वास्तवश्रीप्रतियोगिकसादृश्यवत्कामिनीज्ञानस्य मन्थनस्मारकत्वाभावात्सादृश्यवत्त्वेन ज्ञायमानस्य कामिनीज्ञानस्य चावश्यं श्रीस्मरणजनकत्वात् । अन्यथा उद्वीक्ष्यास्मार्षीदित्यसासंगतत्वापत्तेः । अन्यसदृशदर्शनेनान्यस्मरणानुपपत्तेः । श्रीस्मरणद्वारैव दर्शनस्य समुद्रमथनस्मरणजनकताया विवक्षितत्वादिति ॥

क्वचिदेकोपाध्यवच्छिन्नतद्दर्शनोद्बुद्धसंस्कारेणान्योपाध्यवच्छिन्नतत्स्मरणम् ।

यथा मम रुक्मिणीपरिणये—

'सह दयितया यान्तं व्योम्नारुणारज····स्थितं
जितदितिसुतं त्वामालोक्य स्मरन्ति नभश्चराः
ससुतसुहृदं हत्वा मन्दोदरीदयितं बला-
ज्जनकसुतया सार्धं रामं समाश्रितपुष्पकम् ॥'

अत्र श्रीकृष्णालोकनेन रामस्मरणम् ॥

क्वचिदेकोद्बोधकेनान्येषामनेकविषयकं स्मरणं यथा—

'[1]वज्जभअं धरणिहरा आइवराहभुअपेल्लणाइँ वसुमई ।
समअं च्चिअ पम्हट्ठं संभरिओ महणसंभमं च समुद्दो ॥'

अत्र श्रीरामबाणप्रहारेण पर्वतभूमिसमुद्राणां वज्रवराहभुजमथनाघटितानां स्मरणमुपन्यस्तम् ॥

इति स्मरणम् ।

---

भ्रान्तिमन्तं निरूपयति—

**तदभाववति मतिस्तत्प्रकारिका भ्रान्तिमान्भवति ।**

चन्द्रत्वाद्यभाववति मुखादौ चन्द्रत्वादिप्रकारकं ज्ञानं यत्र भवति स भ्रान्तिमान् । चन्द्रत्वमुखत्वोभयप्रकारकं ज्ञानमप्यंशे लक्ष्यमेवेत्यदोषः ।

यथा—

'[2]ओसहिअजणो पइणा सलाहमाणेण एच्चिरं हसिओ ।
चन्दो त्ति तुज्झ वअणो विइण्णकुसुमञ्जलिविलिक्खो ॥'

अत्र मुखे चन्द्रप्रकारकज्ञानोक्तेर्भ्रान्तिमान् । शुक्तिविशेष्यकरजतत्वादिप्रकारकज्ञानं तु वैचित्र्यविरहान्नालंकारः ।

---

१. 'वज्रभयं धरणिधरा आदिवराहभुजप्रेरणानि वसुमती ।
समकमेव प्रस्मृतं संस्मृतवान्मथनसंभ्रमं च समुद्रः ॥' (सेतु० ७।४०)

२. 'आवसथिकजनः पत्या श्लाघमानेनातिचिरं हसितः ।
चन्द्र इति तव वदने वितीर्णकुसुमाञ्जलिर्विलक्षः ॥' (गाथा० ४।४६)

यथा वा—

'[1]पुंसिआ कण्णाहरणेन्दनीलकिरणाहआ ससिमऊहा।
माणिणिवअणम्मि सकज्जलंसुसङ्काइ दइएण ॥'

अत्र कर्णाभरणे नीलकिरणमिश्रितचन्द्रमयूखेषु सकज्जलाश्रुत्वज्ञानम्। क्वचित्कल्पितविशेष्यकं यथा—

'वाणीकण्ठाभरण भवतो रुद्रचन्द्रक्षितीन्दो
कुन्दस्फीते यशसि नभसो बिम्बमालोकयन्त्यः।
त्वद्वैरिण्यो विरहविकला वक्षसि न्यस्तकामा
वारं वारं नवकमलिनीपत्रबुद्ध्या विशन्ति ॥'

अत्राकाशस्य कल्पितत्वाभावेऽपि यशःप्रतिबिम्बितत्वरूपविशेषणांशस्य कल्पितत्वेन विशिष्टे कल्पितत्वव्यपदेशः।

क्वचिदन्योन्यविशेष्यकभिन्नप्रकारको यथा—

'[2]णइसाउ त्ति भुजंगं महिसो जीहाइ लिहइ संतत्तो।
महिसस्स कसणपत्थरसरो त्ति सप्पो पिअइ लालं ॥'

अत्र महिषस्य भुजंगे नदीस्रोतस्त्वज्ञानम्। भुजंगस्य महिषलालायां सरस्त्वज्ञानम्, तच्च महिषे कृष्णप्रस्तरत्वप्रकारकभ्रममूलमिति ज्ञातव्यम्।

क्वचिदेकस्मिन्नेवानेकप्रकारको यथा मम—

'मन्दाकिन्यां वलक्षोद्दलकमलधिये केलिवाप्यां मराल-
भ्रान्त्यै शंभोः कपोले मुकुलितपुलके स्वीयवक्त्रभ्रमाय।
हाराग्रे हीरबुद्ध्यै भुजगपतिफले दीपरत्नोपलब्ध्यै
पार्वत्याः कल्पमाने प्रतिफलिततया पातु पीयूषरश्मिः ॥'

अत्रैकस्मिंश्चन्द्रे पार्वत्यास्तत्तत्स्थानभेदेनानेकप्रकारकं ज्ञानम्।

क्वचिदनेकेषामेकस्मिन्ननेकप्रकारको यथा ममैव—

---

१. 'प्रोञ्छिताः कर्णाभरणेन्द्रनीलकिरणाहताः शशिमयूखाः।
मानिनीवदने सकज्जलाश्रुशङ्कया दयितेन ॥' (गाथा० ४।२)

२. 'नदीस्रोत इति भुजंगं महिषो जिह्वया लेढि संतप्तः।
महिषस्य कृष्णप्रस्तरसर इति सर्पः पिबति लालाम् ॥' (इति च्छाया।)

'संकेतकुञ्जगमनं प्रति संचलन्ती-
मालोक्य सुभ्रु भवतीं गहनेऽन्धकारे ।
चाम्पेयकोरकमयी स्रगिति द्विरेफाः
सौदामिनीति कलयन्तु मुदं मयूराः ॥'

एतेन—उक्तस्थले उल्लेखालंकारस्वीकारात् भ्रान्तिमत्येकत्वं विवक्षणीयम्—इत्यपास्तम् । तद्वृत्त्यनेकधर्मप्रकारकानेकसमवेतज्ञानस्थले तत्सत्वात् ।

'गजत्रातेति वृद्धाभिः श्रीकान्त इति यौवतैः ।
यथास्थितश्च बालाभिर्दृष्टः शौरिः सकौतुकम् ॥'

इत्यादिवत् । एतेन—'चन्द्र इति चकोराः, कमलमिति चञ्चरीकाः, त्वन्मुखमभिधावन्ति' इत्युल्लेखः—इति चित्रमीमांसाप्यपास्ता ।

व्यङ्ग्यो यथा—

'कर्णोत्पलान्नयनमाप गतच्युता[त्]ते
तस्मिन्निमीलति मुखं सखि यो द्विरेफः ।
तं येन वारयितुमुद्यमसुद्यतासि
तस्मिन्करेऽपि न किमम्बुजसाम्यदोषः ॥'

अत्रोत्तरोत्तरं नयनमुखादिसंयोगात् भृङ्गभ्रान्तिप्रतीतिः । अनेकेष्वनेकप्रकारकत्वं चात्र विशेषः ।

भिन्नकर्तृकोत्तरोत्तरभ्रान्तौ यथा चित्रमीमांसायाम्—

'शिञ्जानैर्मञ्जरीति स्तनकलशयुगं चुम्बितं चञ्चरीकै-
स्तत्रासोल्लासलीलाः किसलयमनसा पाणयः कीरदष्टाः ।
तल्लोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकै-
रित्थं चोलेन्द्रसिंह त्वदरिमृगदृशां नाप्यरण्यं शरण्यम् ॥'

अत्रान्यनिष्ठभ्रान्तिजन्यस्वानर्थपरिहारार्थयत्नेनान्यस्य भ्रान्तिरिति रीतिः। अत्राद्ये मन्दारमञ्जरीप्रकारकनायिकाविशेष्यज्ञानम् । तज्जन्यं चुम्बनं तु स्तनकलशावच्छेदेनेत्यन्यदेतत् । द्वितीयेऽपि कीरदष्टा जाता इति दो(शे)-षात् 'सविशेषणे हि—इति न्यायेन दंशांशे विधेयत्वासिद्धिः । तृतीयेऽपि

नायिकास्वरविशेष्यककोकिलकूजितप्रकारकभ्रान्तिजन्यनायिकाविशेष्यककोकिलप्रकारकज्ञानेन ताडनकर्मत्वम् ॥

एतेन—स्तनयोर्मञ्जरीसादृश्यं न कविसमयप्रसिद्धम्, येन तन्मूला भ्रान्तिः स्यात्, दोषान्तरमूला तु सा नालंकारः । कलशसादृश्यावच्छिन्नस्तनानुमानेन मञ्जरीभ्रान्तौ 'मुखकमलं तव चन्द्रवत्प्रतीमः' इत्यादिवत्सादृश्यमूलकैकालंकारावच्छिन्ने तन्मूलकालंकारान्तरस्य चमत्कारकत्वाभावाच्च । कीरदष्टा इत्यत्र विधेयाविमर्षो जाता इत्यध्याहारेऽपि विवक्षितस्याविधेयत्वतादवस्थ्यम् । तृतीये पिकनिनदानां ताडनायोग्यत्वं तासु पिकबुद्ध्युत्पादनद्वारा तथा प्रतीत्यभावः प्र(श)स्तः । 'चोरबुद्ध्या हतः साधुः—' इत्यादौ

'दन्तिबुद्ध्या हतः शूरैर्वराहो वनगोचरः' ।

इत्यादौ [च] बुद्धिविशेष्यवृत्तिहननकर्मत्वस्यैव बोधादित्यादिदूषणान्यलग्नकानि भवन्तीत्यवधेयम् ।

सादृश्यमूलकेत्यादिकं तु चिन्त्यम् । तथाहि । मुखकमल इत्यादौ रूपकस्वीकारे तत्र कमलविशेष्यकबोधस्यैव नियमात्तत्र चन्द्रसादृश्याप्रसिद्धिः । मनसा ज्ञाने तु तदुत्तरं यद्यपि मुखमपि विशेष्यतया भासत इत्युक्तम्, तथापि शब्दोपात्तसादृश्यान्वयानुपपत्तिरेव । मालोपमायाः सर्वसंमतत्वात् । दृश्यते च

'कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदकान्तः कपोलः ।'

इत्यादौ उपमालंकारावच्छिन्नेऽपि कपोले सादृश्यमूलकनिदर्शनालंकारसमावेशः चमत्कारश्चेत्यादिकम्(ति दिक्) ॥

इति भ्रान्तिमान् ।

---

प्रतीपं निरूपयति—

**उपमानानर्थक्यं प्रतीपमस्योपमेयत्वम् ।**

उपमानकार्यस्योपमयैव निर्वाहाद्वोपमानवैयर्थ्योक्तिः उपमानस्योपमेय-

कल्पनं चेति द्विविधं प्रतीपम् ॥ सामान्यलक्षणं तु यन्निष्ठसादृश्यप्रतियोगितानाश्रयत्वाभिमतोपमानकत्वमेव । अभिमानश्च क्वचिदन्यनिष्ठः क्वचिदुपमाननिष्ठश्चेति लक्ष्येषु व्यक्तीभविष्यति ।

यथा—

'[1]दूरे किज्जदु चम्पअस्स कलिआ कज्जं हरिद्दाअ किं
संतत्तेण वि कञ्चणेन गणणा का णाम जच्चेण वि ।
लावण्णस्स णवुग्गदेन्दुमहुरच्छाअस्स तिस्सा पुरो
पच्चग्गेहिं वि केसरस्स कुसुमक्केरेहिं किं कारणम् ॥'

अत्र कर्पूरमञ्जर्या लावण्येन पङ्ककलिकादीनामाक्षेपः । क्वचिदेकधर्मिनिष्ठधर्मद्वयेन धर्मिद्वयनिष्ठोभयधर्मकार्यनिर्वाहात्तदाश्रयधर्मिद्वयाक्षेपो यथा—

'तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा ।
तनोति भानोः परिवेषकैतवात्तदा विधिः कुण्डलनां विधोरपि ॥'

अत्र नलीयप्रतापकीर्तिभ्यां सूर्याचन्द्रमसोर्वैफल्यम् । द्वितीयविधस्तु द्वेधा । उपमितेरनिष्पत्त्या तन्निष्पत्त्या च ।

आद्यं यथा—

'[2]तुज्झ मुहसारिच्छं ण लहइ संपुण्णमण्डलो विहिणा ।
अण्णवमज्जं व घडेउं पुणो वि खण्डिज्जइ मिअङ्को ॥'

अत्र चन्द्रस्य मुखप्रतियोगिकसादृश्या निष्पत्तिर्वाच्या। व्यङ्ग्या यथा—

'अस्याः करस्पर्धनगर्धिऋद्धिर्बालत्वमापत्खलु पल्लवो यः ।
भूयोऽपि नामाधरसाम्यगर्वं कुर्वन्कथं वास्तु न स प्रवालः ॥'

---

१. 'दूरे क्रियतां चम्पकस्य कलिका कार्यं हरिद्रायाः किं
संतप्तेनापि काञ्चनेन गणना का नाम जात्येनापि ।
लावण्यस्य नवोद्गतेन्दुमधुरच्छायस्य तस्याः पुरः
प्रत्यग्रैरपि केसरस्य कुसुमोत्करैः किं कारणम् ॥' (कर्पूर० ३।१)

२. 'तव मुखसादृश्यं न लभते संपूर्णमण्डलो विधिना ।
अन्यमयमिव घटयितुं पुनरपि खण्ड्यते मृगाङ्कः ॥' (इति च्छाया ।)

अत्र किसलयस्य भैमीकराधरप्रतियोगिकसादृश्यसिद्धिर्बालत्वप्राप्तिद्योत्या ।

यथा वा—

'परभृततरुणीनां सम्यगायाति गातुं
न तव तरुणि वाणीयं सुधासिन्धुवेणी ।
कति न रसिककण्ठे कर्तुमभ्यस्यतेऽसा-
वुपवनविपिनाम्रे नाश्रिताम्रेडितेन[1] ॥'

अत्र पिकगिरां भैमीवाक्सादृश्यासिद्धिर्व्यङ्ग्या ।

'आरब्धे दयितामुखप्रतिसमे(?)निर्मातुमस्मिन्नपि
व्यङ्ग्यं जन्मसमानकालमिलितामंशुच्छटां वर्षति ।
आत्मद्रोहिणि रोहिणीपरिवृढे पर्यङ्कपङ्केरुहः
संकोचादतिदुःस्थितस्य न विधेस्तच्छीलमुन्मीलितम् ॥'

अत्र चन्द्रस्य मुखानुपमत्वं व्यङ्ग्यम् । प्रथमयोः कार्यपूर्वकमत्र कारणपूर्वकम् ।

द्वितीयं यथा हरिवंशे—

'तवाननाभो वरगात्रि चन्द्रो न दृश्यते सुन्दरि पूर्णबिम्बः ।
त्वत्केशपाशप्रतिमैर्निरुद्धो बलाहकैश्चारुनिरन्तरोऽभूत् ॥'

यथा वा—

'यत्पीयूषमयूखमालिनि तमस्तोमावलीढायुषां
नेत्राणामपमृत्युहारिणि पुनः सूर्योढ एवातिथौ ।
अम्भोजानि पराञ्चि तं निजमघं दत्त्वेव तेभ्यस्ततो
गौराङ्गीवदनोपमासुकृतमादत्ते पतिर्यज्वनाम् ॥'

यथा वा—

'गोत्रे साक्षादजनि भगवानेष यत्पद्मयोनिः
शय्योत्थायं यदखिलमहः प्रीणयन्ति द्विरेफान् ।

1. 'ताभिराम्रेडितेन' इति नैषधीयपाठः.

एकाग्रं यद्दधति भगवत्युष्णभानौ च भक्तिं
तत्प्रापुस्ते सुतनु वदनौपम्यमम्भोरुहाणि ॥'

अत्र सादृश्यहेतूक्तिविशिष्टं तदिति विशेषः ।

क्वचिदुपमानस्योपमेयत्वाभिमतनिष्ठसादृश्यप्रतियोगितानिषेधव्यञ्जनया यथा—

'कलयति कमलोपमानमक्ष्णोः प्रथयति वापि सुधारसस्य साम्यम् ।
सखि कथय किमाचरामि कान्ते समजनि तत्र सहिष्णुतैव दोषः ॥'

अत्र सहिष्णुतादोषकीर्तनेन यथोक्तनिषेधो व्यङ्ग्यः ।

स एव वाच्यो यथा—

'अनल्पं जल्पन्तु प्रतिहतधियः पल्लवतुलां
रसज्ञामज्ञानां क इव कमले मन्थरयतु ।
वयं तु श्रीभिक्षावितरणवशीभूतजगतां
कराणां सौभाग्यं तव तुलयितुं पङ्गुरसनाः ॥'

क्वचिदन्यस्य स्वप्रतियोगिकसादृश्याश्रयान्तराभावज्ञानवतस्तदुपमेयदर्शनेन ।

यथा मम—

'आत्मीयप्रचलाकमाश्रितवता रूपातिभारेण किं
बर्हिस्तादृशतद्विभिन्नविरहज्ञानान्नरीनृत्यसे ।
एतद्वृत्तिमनोज्ञधर्मनिवहाधारः कुरङ्गीदृशो
मन्ये केशकलाप ईक्षणपथं न प्राप्तवाञ्जाल(ल्म) ते ॥'

इति प्रतीपम् ।

---

सामान्यं निरूपयति—

**स्वगुणसजातीयगुणाश्रयैकरूप्यं तु सामान्यम् ।**

यत्र कस्यचिद्वस्तुनोऽपरित्यक्तस्वगुणस्यैव स्ववृत्तिगुणसजातीयगुणाश्रयेण सहाभिन्नतया भानं तत्सामान्यम् । तद्गुणे व्यभिचारवारणाय अपरि-

१. 'ञोलता' ख.

त्यक्तेति । अत्र स्वगुणसाजात्यं रूपवत्त्वव्याप्यधर्मेण शुक्लत्वादिना बोध्यम् । अन्यथा गुणत्वादिधर्मभिन्नरूपाणां साजात्यं नैव स्यात् । समानस्य भावः सामान्यमिति व्युत्पत्त्या उभयोरेकधर्मवत्ताप्रतिपादनादित्यर्थः ॥

यथा—

'सितारविन्दप्रचयेषु लीनाः संसक्तफेनेषु च सैकतेषु ।
कुन्दावदाताः कलहंसमालाः प्रतीयिरे श्रोत्रसुखैर्निनादैः ॥'

अत्र कुसुमसैकते हंसानामेकगुणतया अभेदेन भानम् । न च शब्देन हंसानां पृथक्प्रतीतिरस्त्येवेति वाच्यम् । तत्पूर्वकाले अभेदभानस्य निर्बाधतया तदभिप्रायेणैवोदाहृतत्वात् । उत्तरकालीनभेदज्ञानेन पूर्वकालीनाभेदज्ञानबाधाभावात् । अत एव—

'वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि ।
भृङ्गाः सहेलं यदि नापतिष्यन्को वेदयिष्यन्नवचम्पकानि ॥'

इत्युदाहृतम् ॥

यत्तु—नैतद्युक्तम्, उत्तरप्रतिपत्त्या तिरस्कृतत्वात्पूर्वप्रतीतेर्न चमत्कारकत्वम्, किंतूत्तरप्रतीतेरेवेति तयैव व्यपदेशस्य युक्तत्वात् । अन्यथा व्यतिरेकेऽप्युपमाया एवापत्तेरिति ॥ तच्चिन्त्यम् । भेदप्रतीतेर्वर्णनीयोत्कर्षानाधायकत्वेन तथानापत्तेः तिरस्कारातिरस्कारयोश्चाप्रयोजकत्वात् । अन्यथा विरोधाभासस्याप्युच्छेदापत्तेः । विरोधस्य तत्राप्यप्रविष्टनात् ॥

एतेन मीलितसामान्योभयप्रतिद्वन्द्विभूतमुन्मीलितविशेषात्मकं दीक्षितालंकारद्वयं प्रत्याख्यातम् । वर्णनीयोत्कर्षानाधायकत्वेन प्रथमवृत्तिकाभ्यां मीलितसामान्याभ्यामेवान्यथासिद्धेः ।

भेदज्ञानाभावविशिष्टं यथा—

'सममेणमदैर्यदापणे तुलयन्सौरभलोभनिश्चलम् ।
पणिता न जनारवैरवैदपि गुजन्तमलिं मलीमसम् ॥'

'गन्तुं यदि व्यवसितासि घनान्धकारे
नीलाञ्चलेन तनुमावृणु मुग्धशीले ।

विद्युल्लता यदि पथि प्रतिरोधिनी स्या-
दप्रावृतैव कनकद्रवगौरि गच्छेः ॥'

इत्यादौ व्यङ्ग्यसामान्यम् । आवरणाभावे विद्युदभावे तव ज्ञानं भविष्यतीति प्रतीतेः ॥

ननु भ्रान्तिमदपेक्षया नेदमतिरिक्तम् । अत्रापि यावत्स्वविशेष्यांवृत्तिधर्मप्रकारकत्वसत्त्वात् । तथा हि । इयं कस्तूरी इति ज्ञानविशेष्यमत्र कस्तूरी भृङ्गश्च । तत्र यद्यप्येकविशेष्ये कस्तूर्यां तद्वृत्तिकस्तूरीत्वप्रकारकं ज्ञानं न भ्रान्तिस्तथापि भृङ्गरूपविशेष्यावृत्ति यत्कस्तूरीत्वं तत्प्रकारकत्वस्यापि सत्त्वेन भ्रान्तित्वानपायात् । यथा शुक्तिरजतयोः इदं रजतम् इति ज्ञानं रजतांशे प्रमारूपमपि शुक्त्यंशे भ्रान्तिरिति चेत् ॥ सत्यम् । अस्तुनामास्य भ्रान्तित्वं तथापि तस्या नालंकारत्वम् । तदभाववन्मात्रविशेष्यकतद्धर्मावच्छिन्नप्रकारताकज्ञानस्यैवालंकारत्वेन स्वीकारात् । किं च । चमत्कारकारणतावच्छेदकरूपस्यैवालंकारविभाजकोपाधित्वम् । इह च भ्रान्तित्वावच्छिन्नकारणतानिरूपितकार्यताको न चमत्कारो विवक्षितः । किं तु अत्यन्तसाधर्म्येण एकधर्मिणोऽन्यधर्मिप्रतियोगिकभेदवत्तयानुपस्थितिजन्य एवेति विभाजकोपाधिभेदात् ।

केचित्तु—भ्रान्तिमति स्मर्यमाणारोपोऽभिमतः, अत्र त्वनुभूयमानारोपणमेवेति[1] सांकर्यमित्याहुः ॥

अथ तथापि मीलितालंकारादस्य भेदकं दुर्वचम् ।

यत्तु दीक्षिताः—मीलितालंकारे एकेनापरस्याभिन्नस्वरूपानवभासरूपं मीलनं क्रियते । सामान्यालंकारे तु भिन्नस्वरूपावभासेऽपि व्यावर्तकविशेषो नोपलभ्यत इति भेदः ।

'रसो नालक्षि लाक्षायाश्चरणे सहजारुणे ।'

इत्यत्र हि चरणाद्यपेक्षया वस्त्वन्तरत्वेनागन्तुकं यावकादि न भासते इति तन्मीलितम् ॥

'पद्माकरप्रविष्टानां मुखं नालक्षि सुभ्रुवाम् ।'

---

१. 'रोपएवे' ख.

इत्यत्र तु पद्मव्यक्तीनां मुखव्यक्तीनां च प्रत्येकं प्रतीतिरस्त्येव । परं तु इदं मुखम् इदं पद्मम् इति विविच्य निर्णयो नास्ति, तस्माद्व्यक्तिभेदतिरोधाने मीलितम् । भासमानेऽपि व्यक्तिभेदे व्यावर्तकधर्मानवभासे सामान्यमित्याहुः ॥ तच्चिन्त्यम् । व्यक्तिभेदप्रतीतिरित्यस्य किं वस्तुतो भिन्नाया व्यक्तेर्यथा कथंचित्प्रतीतिरभिमता, उत व्यक्त्यन्तरनिष्ठाभावप्रतियोगित्वधर्मेण॥ नाद्यः । मीलितसाधारण्यात् । न द्वितीयः । सामान्येऽप्यभावात् । व्यावर्तकधर्मानवभासे व्यक्तिभेदप्रतीतेर्दुर्घटत्वात् ।

अथात्र उक्तधर्मावच्छिन्नप्रतियोगिताको भेदो न विवक्षितः । किं तु तत्तद्व्यक्तिप्रतियोगिक एव । स च सामान्येऽप्यस्ति । तत्र मुखत्वपद्मत्वादिरूपेणानिर्णयेऽपि 'इयं व्यक्तिरेतद्व्यक्तिभिन्ना' इति ज्ञानस्य निर्बाधत्वात्। मीलिते तु यावकव्यक्तौ चरणव्यक्तिप्रतियोगिकभेदस्याप्यभानेन तदभावेन दोषाभावादिति चेत् ॥ सत्यम् ।

'मलयजरसविलिप्ततनवो नवहारलताविभूषिताः
सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः ।
शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः ॥'

इत्यादौ तदभावात् । अत्र नायिकाव्यक्तिभिन्नत्वेन भानाभावात् ॥ एवम्—

'क्रीडानटस्य प्रलयान्धकारैः कण्ठे निपीते तव नीलकण्ठ ।
पृथक्कबन्धः पृथगुत्तमाङ्गं नृत्यन्मया चैक्ष्यत कालरात्रिः (?) ॥'

इत्यत्र भगवत्कण्ठप्रतीतेः पृथगप्रतीतिरवधेया ॥ न च तन्मते—

'मल्लिकाधारवाहिन्यः सर्वाङ्गीणार्द्रचन्दनाः ।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥'

इत्यस्य मीलितोदाहरणत्वेन लिखनादिष्टापत्तिरिति वाच्यम् । सामान्योदाहरणतया लिखद्भिः काव्यप्रकाशादिभिर्विरोधप्रसङ्गात् ॥ किं च यद्येतावदेव तस्य भेदकमङ्गीक्रियते तर्हि

---

१. 'योगिधर्मवत्त्वेन' ख.

'क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ।'

इत्यस्य

'पद्माकरप्रविष्टानां मुखं नालक्षि सुभ्रुवाम्' ।

इत्यस्य च केन विशेषेण आद्ये मीलितत्वम्, द्वितीये सामान्यत्वं वर्ण्यते ॥

ननु तद्व्यक्तिभेदभानाभ्यामेवेत्युक्तं भेदकमिति चेत् ॥ मैवम् । आद्येऽपि तत्तद्व्यक्तिभेदभानसंभवात् । तथा हि । एकधर्मानवच्छिन्नत्वेऽप्येकधर्मावच्छिन्नतया व्यक्तिभेदभानं सामान्यमिति त्वन्मते पर्यवसितार्थः । अन्यथा पद्मेष्वेव पद्माकारप्रतीतेरपि तथात्वप्रसङ्गात् । तच्च क्षौमवत्य इत्यत्राप्यविशिष्टम् । चन्द्रिकात्वाभाववत्यामभिसारिकायां चन्द्रिकात्वेन देशान्तरीयचन्द्रिकाव्यक्तिप्रतियोगिकभेदवत्त्वेन ज्ञानस्य सत्त्वात् । एवं च यथामुखस्य पद्मान्तरभिन्नत्वेन भानादत्र सामान्यमभ्युपैषि तथा अभिसारिकायामियं चन्द्रिका चन्द्रिकान्तरभिन्नेति भिन्नव्यक्तिकतया भानमस्त्येवेति तत्रापि कथं सामान्यमङ्गीकुर्याः । पद्मत्वेन भासमानायां मुखव्यक्तावेव व्यक्त्यन्तरतया भानं न तु चन्द्रिकात्वेन भासमानायामभिसारिकायामिति ब्रह्मणापि दुर्घटत्वात् ॥

यत्तु मतम्—वस्तुद्वयस्य लक्षणद्वयसाम्यात्केनचिद्बलीयसा स्वरूपतिरोधाने मीलितम्, स्वरूपप्रतीतावपि गुणसाम्याद्भेदतिरोधाने सामान्यम्—इति । तदप्यसत् ।

'[1]गंम्मिहिसि तस्स पासं सुन्दरि मा तुरअ वड्ढउ मिअङ्को ।
दुद्धे दुद्धं चिअ चन्दिआइ को पेच्छइ मुहं दे ॥'

इत्यादौ स्वरूपप्रतीतेरभावात् । 'मलयजरस–' इत्यादावपि नियमेन स्वरूपप्रतीतेरभावात् 'एकात्म्यं बध्यते योगात्तत्सामान्यम्' इति प्रकाशलक्षणविसंवादाच्च ॥ किं च मीलिते व्यक्तिरेव न प्रतीयते इत्यस्य

---

१. 'गमिष्यसि तस्य पार्श्वं सुन्दरि मा त्वरस्व वर्धतां मृगाङ्कः ।
दुग्धे दुग्धमिव चन्द्रिकायां कः प्रेक्षते मुखं ते ॥' [गाथा० ७।७]

कोऽर्थः किं तस्य ज्ञानविषयतैव नास्ति, किं वा स्ववृत्तिधर्मप्रकारकज्ञानविषयता नास्तीति। नाद्यः। स हि विषयाभावात्संनिकर्षाभावाद्वा प्रतिबन्धकसत्वाद्वा। नाद्यद्वितीयौ। त्वयाप्यनभ्युपगमात्। अन्यथा 'सहजारुणे—' इत्यादेरपि मीलितत्वापत्तेः। मुखावच्छेदेनासंनिकर्षे पद्ममात्रविशेष्यकपद्मत्वप्रकारकज्ञानस्यापि तत्त्वापत्तेश्च। न तृतीयः। यावकमात्रविशेष्यकज्ञानप्रतिबन्धकस्य तदाप्यभावात्॥ न द्वितीयः। सामान्यसाधारण्यात्। तत्रापि मुखादेर्मुखत्वप्रकारकज्ञानाविषयत्वात्। चरणत्वप्रकारकबोधविषयतायाश्च यावकेऽपि बाधकाभावात्॥

एतेन—

'भेदाग्रहेण लिङ्गानां लिङ्गैः प्रत्यक्षवस्तुनः।
अप्रकाशो ह्यनध्यक्षवस्तुनस्तन्निमीलितम्॥'

अत्र सामान्यवारणायानध्यक्षेति। तत्राध्यक्षस्यैव वस्त्वन्तरस्याग्रहणमिति प्रत्यक्षविषयस्यापि वस्तुनो बलवत्सजातीयग्रहणं तद्भिन्नत्वेनाग्रहणं सामान्यम्। मीलिते तु निगूह्यमानवस्तु न प्रत्यक्षविषय इति नातिव्याप्तिरिति रसगङ्गाधरोक्तमपि परास्तम्। स्ववृत्तिधर्मप्रकारकत्वेन वस्तुनि उभयत्राप्यनवभासादन्यथा नोभयत्रापि भानात्॥ किं च—'स्फुटमुपलभ्यमानस्य कस्यचिद्वस्तुनो लिङ्गैरतिसाम्याद्भिन्नत्वेनागृह्यमाणानां वस्त्वन्तरलिङ्गानां स्वकारणाननुमापकत्वं मीलितम्—' इत्युक्त्वा—

'सरसिरुहोदरसुरभावधरितबिम्बाधरे मृगाक्षि तव।
वद वदने मणिरदने ताम्बूलं केन लक्षयेम वयम्॥'

इत्युदाहरणमयुक्तम्। द्रव्यादिविषयकरूपचाक्षुषस्याप्रसिध्या वस्त्वन्तरग्रहणं विना विजातीयरूपादिस्वरूपाणां तदीयलिङ्गानामपि चाक्षुषानुपपत्तेः। तदर्थं चाक्षुषविषयतायास्त्वयैवाभ्युपगमादिति चेत्, उच्यते—यत्र तिरोधायकधर्मविशेष्यको बोधस्तत्र मीलितम्। यत्र तादृशधर्माश्रयको बोधस्तत्र सामान्यमिति विभागः। तथा हि।

'अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम्।

इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया
तदत्र न मनोदयः(?)कृतपदोप(?)संलक्ष्यते ॥'

इत्यादौ 'इदं तारल्यादिकं स्वभावजन्यम्' इति बोधो न त्वयं स्वभाव इत्यादिरूपः । 'मलयजरस—' इत्यादौ तु इयं चन्द्रिकेत्यादि[रीति]गतिरोधायकधावल्यादिकरूपधर्माश्रयविशेष्यक एव बोधो न त्विदं धावल्यं चन्द्रिकीयमित्यादिरूपः । आश्रयत्वं चात्र कारणतारूपं ग्राह्यम् । अतस्तारल्यादीनां स्वभावानाश्रितत्वेऽपि न दोषः । बोधश्चात्र यन्निष्ठज्ञानविषयत्वाभावोऽन्यधर्मस्य प्रतिपाद्यस्तदात्र समवेतो विवक्षितस्तस्यैवालंकारताप्रयोजकचमत्काराधायकत्वात् । न तु प्रतिपादकशब्दजन्य इति उदाहृतेषु तथाविधबोधविरहेऽपि न क्षतिरिति कृतं पल्लवितेन ॥

इति सामान्यम् ।

---

विशेषं निरूपयति—

**स्थितिराधाराभावे वृत्तिरनेकेषु युगपदेकस्य ।**
**एककरणेन दुष्करकार्यान्तरसिद्धिरिति विशेषः ॥ १ ॥**

आधारपदस्य संबन्धिसापेक्षतया स्थितिराधेयस्य । सर्वथैवाधाराभावे कार्यस्यावस्थानासंभवाच्च । आधारपदं प्रसिद्धाधारपरम् । तथा च । प्रसिद्धमाधारमन्तरेणाप्याधेयस्य सिद्धिर्यत्रोक्ता स एको विशेषः इति पर्यवस्यति ।

यथा—

'[1]रूअं अच्छीसु ठिअं फरिसो अङ्गेसु जम्पिअं कण्णे ।
हिअअं हिअए णिहिअं विओइअं किं त्थ देव्वेण ॥'

अत्र नायिकानिष्ठरूपस्य नायिका आधारः प्रसिद्धः तत्समवायिकारणत्वात् । तां विनापि अक्ष्णोस्तदवस्थानमुक्तम् । तज्जन्योपनीतविषयत्वाभिप्रायेणेत्युपपत्तिः ।

---

१. 'रूपमक्ष्णोः स्थितं स्पर्शोऽङ्गेषु जल्पितं कर्णे ।
हृदयं हृदये निहितं वियोजितं किमत्र दैवेन ॥' [गाथा० २।३२]

यथा वा मम—

'श्रीवाजचन्द्रवसुधेश्वरशेखरेण
सिंहासने शतमुखस्य परिष्कृतेऽपि।
चित्रं गुणा अविषया वचसां तदीयाः
सद्यो जनस्य हृदयान्यवमानयन्ति ॥'

प्रथमे कार्यकाले आधारात्यन्ताभावः, इह तु ध्वंस इति विशेषः।

यत्र चैकमेव वस्तु युगपदनेकत्र वर्तते स द्वितीयः। पर्यायवारणाय युगपदिति।

यथा—

'चिंत्ते विहुट्टदि ण खुट्टदि सा गुणेसुं
सेज्जासु लोट्टदि विसप्पदि दिम्मुहेसु।
बोलम्मि वट्टदि पअट्टदि कव्वबन्धे
झाणेण टुट्टदि चिरं तरुणी तरट्टी ॥'[1]

अत्रैकस्या एव कर्पूरमञ्जर्या युगपदनेकत्र वृत्तिः।

यत्र चैककार्यारम्भयत्नेन दुष्करकार्यान्तरमपि समारभ्यते स तृतीयः।

यथा—

'परिहृतमयशः पातितमस्मासु हतोऽर्धराज्यहरः।
एकमपि नीतबीजं बहुफलतामेति यस्य तव ॥'

अत्र चाणक्येन।

'अस्मद्गोत्रमहत्तरः क्रतुभुजामद्यायमाद्यो रवि-
र्यज्वानो वयमद्य ते भगवती भूरद्य राजन्वती।
अद्यत्वं बहु मन्यते सहचरैरस्माभिराखण्डलो
येनैतावदरुन्धतीपतिरपि स्वेनानुगृह्णाति नः ॥'

---

१. 'चित्ते विघटते न त्रुट्यति सा गुणेषु
शय्यासु लुठति विसर्पति दिङ्मुखेषु।
वचने वर्तते प्रवर्तते काव्यबन्धे
ध्यानेन त्रुट्यति चिरं तरुणी प्रगल्भा ॥' (कर्पूर० २१४)

पर्वतकवधजनकारम्भादेव तद्वधजन्यायशःपरिहारः । अन्यस्यायशः-संबन्धः । अर्धराज्यभागिवधेन साभ्युदयश्चेति बहवोऽर्थाः साधिताः ।

यथा वा—

'भ्रूश्चित्रलेखा च तिलोत्तमास्या नासा च रम्भा च यदूरुसृष्टिः ।
दृष्टा ततः पूरयतीव मेनकानेकाप्सरःप्रेक्षणकौतुकानि ॥'

अत्र भैमीदर्शनेनैव बह्वप्सरसां दर्शनसिद्धिरुक्ता ॥

यथा वा मम—

'उदञ्चद्वक्षोजामतिसुरभिनिश्वासपवनां
नितान्तं रम्यास्यां सुतनु विधिना त्वां विदधता ।
सुमेरुः सृष्टोऽन्यो व्यरचि स परो मालयमरु-
द्विजातीयो भूमौ समजनि सुधादीधितिरपि ॥'

ननु—प्रथमतृतीयभेदौ विभावनायामेवान्तर्भावमर्हतः । आधाररूपे कार्यकारणभावोपस्थितेरुक्तत्वात् । साध्यत्वाख्यसंबन्धेन तद्विषयकप्रवृत्त्य-भावेऽपि तत्कार्योक्तेश्चेति चैत्रेण (चेत्, न यत्र ?) कारणाभावेऽपि का-र्योत्पत्तिर्वर्ण्यते सैव विभावना । अत्र तु स्थितिरेव वर्ण्यत इति विशेषः ॥ किं च विभावनायां कारणतावच्छेदकानवच्छिन्नात्यन्ताभाव उच्यते, इह तु तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकोऽभावो ध्वंससाधारणः ॥ एवं न द्वितीयस्यावकाशः । तत्र स्वनिष्ठकार्यत्वप्रतियोगिककारणाभावादवच्छिन्न-कार्योत्पत्तिः, अत्र त्वन्यनिष्ठकार्यत्वप्रतियोगिककारणावच्छिन्नकार्योत्पत्ति-श्चमत्कारहेतुरिति वैषम्यात्कारणतावच्छेदकावच्छिन्नाभावानभिधानात् ॥ ननु त्रितयसाधारण्यानुगतलक्षणानुभावात्कथमेषां विशेषभेदत्वम् अन्यत-मत्वेन संग्रहे त्वलंकारान्तरभेदताया अपि वक्तुं शक्यत्वात् नियामकाभा-वात् । अत एवात्र पृथगलंकारत्वमेव कल्पयितुमुचितमिति चेत्, न । स्वनिरूपितव्यभिचारिप्रतियोगिकत्वस्यानुगतधर्मस्य वक्तुं शक्यत्वात् । आधाराधेयानां कार्यकारणानां च परस्परनिरूप्यनिरूपकभावसत्त्वात् ।

१. 'तत्र' ख.

आद्ये आधेयस्य प्रतियोगिन आधाररूपस्य निरूपकव्यभिचारात् । द्वितीयेऽप्येकवृत्तिरेवापरत्र वृत्त्या तद्व्यभिचारस्याविशेषात् । तृतीयेऽपि कारणरूपप्रतियोगिनः कार्यरूपनिरूपकव्यभिचारसत्त्वात् । न चैवं विभावनाविशेषोक्त्योरतिप्रसक्तं तत्रापि कार्यकारणव्यभिचारात् इति वाच्यम्, किंचिन्निरूपकसाहचर्यस्यापि विवक्षितत्वात् । अत्रैकत्राधेयस्याधारान्तरसंबन्धेऽप्याधारसाहचर्यं विवक्षितम् । एवं कारणस्य स्वप्रतियोगिककार्यसाहचर्यमपि तथा । विभावनायां तु कारणान्तराधीना यद्यपि कार्योत्पत्तिस्तथापि तस्याविवक्षितत्वान्न व्यभिचारः । कारणाभावेऽपि कार्योत्पत्तिप्रयोज्यचमत्कारस्य तत्रानुमतत्वात् । विशेषोक्तावपि कारणस्य कार्यव्यभिचारित्वे कार्यान्तरसाहचर्यानभिमतत्वात् । सत्यपि कारणे कार्यानुत्पादमात्रचमत्कारस्यैव तत्राभिमतत्वात् इत्यलमतिप्रसङ्गेन ॥

इति विशेषः ।

---

तद्गुणं निरूपयति—

**परकीयगुणतिरोहितगुणस्य भानं तु तद्गुणः प्रोक्तः ।**

बलवद्वस्त्वन्तरगुणप्रतिबद्धस्वगुणज्ञातस्य वस्तुनो भानं यत्र स तद्गुणालंकारः ॥ मीलितातिव्याप्तिवारणाय वस्तुनो भानमिति ॥ सामान्यातिव्याप्तिवारणाय ज्ञानस्येत्युक्तम् । तत्र तु तदीयगुणस्यापि ग्रहान्न दोषः ॥ न च भ्रान्तिमदतिव्याप्तिः । धर्मितावच्छेदकातिरिक्तप्रकारतांशे विषयतावैयधिकरण्यस्य विवक्षितत्वात् । अत्र हि विषयवृत्तिमेव धर्मितावच्छेदकीकृत्य धर्म्यन्तरगुणप्रकारकं ज्ञानम् । तत्र तु धर्मितावच्छेदकतया विशेषधर्मो न भासत इत्येव विशेषात् । एवं च धर्मितावच्छेदकत्वेन प्रकारता तदन्यप्रकारतांशे यत्र स तद्गुणः, अन्यत्र भ्रान्तिमानलंकार इति फलितम् ।

केचित्तु—भ्रान्तिमति स्मर्यमाणारोपो न त्वनुभूयमानारोप इत्येव विशेष इत्याहुः । यथा—

'[1]माणंसिणीअ पइणा ण कवोलाहरप्पहाभिण्णा ।
उज्जुअ सुरचावणिहा वाहो वाहाच्चिरं दिट्ठा ॥'

अत्र मनस्विनीबाष्पपूराणां नयनकपोलाधरप्रभाकरम्बितत्वेन सुखापसाद्दश्योन्मेषः ।

यथा वा—

'[2]मामि हिअअं व पीअं तेण जुआणेण मज्जमाणाए ।
ण्हाणहलिद्दाकडुअं अणुसोत्तजलं पिअन्तेण ॥'

अत्र जलरसतिरोधानेन हरिद्रारससंबन्धस्तत्रोक्तः ।

यथा वा—

'[3]सुहपुच्छिआइ हलिओ मुहपङ्कअसुरहिपवणणिव्वविअम् ।
तह पिअइ पअइकडुअं वि ओसढं जह ण णिट्ठाइ ॥'

मुखपवनसौरभ्येण औषधकटुत्वतिरस्कारादिसौरभ्यसंबन्धः ।

यथा वा—

'गाढाश्लेषविकीर्णचन्दनरजःपुञ्जप्रसङ्गादियं
शय्या संप्रति कोमलाङ्गि कठिनेत्यारोप्य मां वक्ष्य(क्ष)सि ।
गाढौष्ठग्रहपूर्वमाकुलतया पादाग्रसंदे(दं)शके-
नाकृष्याम्बरमात्मनो यदुचितं धूर्तेन तत्प्रस्तुतम् ॥'

अत्र शय्यास्पर्शतिरोधानेन चन्दनपरागीयकठिनस्पर्शसंबन्ध उक्तः । अत्र सर्वत्र तिरोधायकगुणस्य तिरोधेयगुणनिष्ठात्यन्ताभावप्रतियोगिगुणत्वव्याप्यजात्यवच्छिन्नत्वमवधेयम् ।

---

१. ........................................ ।
........................................ ॥ [इति च्छाया ।]

२. 'मातुलानि हृदयमिव पीतं तेन यूना मज्जन्त्याः ।
स्नानहरिद्राकटुकमनुस्रोतोजलं पिबता ॥' [गाथा० ३।४६]

३. 'सुखपृच्छिकाया हालिको मुखपङ्कजसुरभिपवननिर्वापितम् ।
तथा पिबति प्रकृतिकटुकमप्यौषधं यथा न तिष्ठति ॥' [गाथा० ४।१७]

तेन यच्चन्द्रालोके—

'प्राक्सिद्धि(द्ध)स्वगुणोत्कर्षोऽनुगुणः परसंनिधेः ।
नीलोत्पलानि दधते कटाक्षैरतिनीलताम् ॥'

अनुगुणाख्यमलंकारान्तरमुक्तम्, तन्निराकृतं भवति । तत्राप्युत्पलीयनीलगुण एवान्तर्भावसंभवात् । तिरोधेयगुणनिष्ठात्यन्ताभावप्रतियोगिगुणत्वसाक्षाद्व्याप्यजात्यवच्छिन्नत्वविवक्षयैवालंकारान्तरत्वेनानुगुणस्य तैर्लिखितत्वात्तथा विवक्षायां तु प्रयोजनाभावेनैक्यमेव स्वीकार्यमिति युक्तम् । न च त्वदुक्तविवक्षायां तद्गुणोदाहरणेषु लक्षणानुपपत्तिः,

'विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्तः ।'

इत्यादौ तिरोधेयसूर्यरथ्याश्वीयहरितत्वनिष्ठप्रतियोगिन्या अरुणीयरक्तत्वनिष्ठजातेर्गुणत्वव्याप्यत्वाभावादिति वाच्यम् । तत्र व्याप्यपदस्य भेदाभेदसाधारणव्याप्यतापरत्वेन गुणत्वव्याप्यं यद्गुणत्वं तद्व्याप्यतायाः सत्त्वेन दोषानवकाशात् । न चैवं गुणत्वव्याप्यं यद्गुणत्वं तद्व्याप्यताया गुणत्वेऽपि सत्त्वात्तस्य तिरोधेयगुणनिष्ठात्यन्ताभावप्रतियोगितानुपपत्तिरिति वाच्यम् । द्वितीयव्याप्यपदे भेदघटिताया एव व्याप्यताया विवक्षितत्वेन कस्यापि दोषस्यासंस्पर्शादिति दिक् ॥

एतेन—

'पुनः स्वगुणसंप्राप्तिर्विज्ञेया पूर्वरूपता ।
हरकण्ठांशुलिप्तोऽपि शेषस्त्वद्यशसा सितः ॥'

यथा वा—

'भूशक्रस्य यशांसि विक्रमभरेणोपार्जितानि क्रमा-
देतस्य स्तुमहे महेभदशनस्पर्धीनि कैरक्षरैः ।
लिम्पद्भिः कृतकं कृतोदकतया राज्ञां यशःपारदै-
रस्य स्वर्णगिरिप्रतापदहनैः स्वर्णः पुनर्निर्मितः ॥'

इति पूर्वरूपाख्यमलंका[रान्त]रमपास्तम् । तद्गुणद्वयरूपत्वात् । अत एव 'विभिन्नवाणी–' इत्यादिकं काव्यप्रकाशे तद्गुणोदाहरणत्वाल्लिखितम् । उक्तं च काव्यप्रदीपे—'तद्गुणद्वयं रवितुरगापेक्षया गरुडाग्रजस्य तदपेक्ष-

यात्र हरिन्मणीनां गुणतया प्रतीतिः' इति । न चानुगुणालंकारान्तरनिरासार्थत्वादुक्तविवक्षायामस्यालंकारत्वं दुर्वारम्, अत्र हरिन्मणिनिष्ठहरितत्ववृत्तिजातेस्तिरोधेयसूर्याश्वहरितत्वगुणनिष्ठात्यन्ताभावप्रतियोगित्वादिति वाच्यम् । यन्निष्ठतिरोधेयत्वप्रतियोगिकतिरोधे(धा)यकताशालित्वमभिमतं तन्निष्ठात्यन्ताभावप्रतियोगित्वस्यात्रापि सत्त्वात् । अत्र हि रक्तत्वनिष्ठतिरोधेयत्वनिरूपितमेव हरिन्मणिनिष्ठहरितत्वस्य तिरोधायकत्वं विवक्षितम्, रक्तत्वनिष्ठाभावप्रतियोगित्वं च हरित्तत्ववृत्तिजातेरस्त्येवेति । 'भूशक्रस्य–' इत्यादिकं तूदाहरणमप्युत्तरितमेव । धर्म्यन्तरगुणसंबन्धप्रयुक्तस्वगुणप्राप्तेरेव पूर्वरूपत्वात् । 'हर–' इत्याद्युदाहरणात्तथैवार्थप्रतीतेः लक्षणाया यद्यपि तादृशार्थस्यैव प्रत्ययात् तत्र च प्रतापसंबन्धिरूपसंबन्धप्रयुक्तस्य सुवर्णादेः स्वकीयरूपलाभस्याविवक्षितत्वात् । तद्रूपतिरोधायकद्रव्यान्तरसंबन्धापनायकत्वेनैवात्र वह्नेः पुरस्कारात् ॥

इति तद्गुणः ।

---

अतद्गुणं निरूपयति—

**अन्यगुणासंबन्धे प्रकृतस्यातद्गुणः प्रोक्तः ।**

स्वनिष्ठगुणस्यान्यगुणनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतानाश्रयत्वेऽतद्गुणः ।

यथा—

'[1]णज्जइ विहीसण तुहं सोम्यसहावपरिवड्ढिअं विण्णाणम् ।
दिट्ठिविसेहि व अमअं उअहिस्स णिसाअरेहिं वि अविद्दविअम् ॥'

यथा वा—

'ध्माता भालतलानलैः कवलिता कण्ठस्थहालाहलै-
रालीढाथ जटाटवी वलयितैराशीविषाणां गणैः ।
कीर्णा भस्मभिराहतास्थिपटलैर्विद्धा जटाग्रैरपि
स्वीयामुज्झति माधुरीं हरशिरोरत्नं किमिन्दोः कला ॥'

---

१. 'ज्ञायते विभीषण तव सौम्यस्वभावपरिवर्धितं विज्ञानम् ।
दृष्टिविषैरिवामृतमुदधेर्निशाचरैरप्यविद्रावितम् ॥' [सेतु० ४।६०]

यथा वा—

'विरोधिवर्णाभरणाश्मभासां मल्लाजिकौतूहलमीक्षमाणाम्।
सरस्व चापभ्रमचालिते नु भ्रुवौ विलासाद्वलिते वहन्तीम्॥'

अत्र प्रथमार्धे विजातीयरूपवदलंकाररत्नकान्तीनां मल्लयुद्धतया वर्णनात्तेषां परस्परगुणाननुविधानं व्यङ्ग्यम्। तद्गुणे एकस्योत्कर्षविवक्षा इह तूभयोः साम्यविवक्षेति फलविशेषः।

अत्राक्षिपन्ति—सत्यपि परगुणग्रहणहेतौ तद्रूपकार्याभावाद्विशेषोक्तितो नातिरिच्यत एवायम्। न चात्र कार्यकारणभावो न विवक्षितः, किं तु धर्म्यन्तरसंनिधानेऽपि तद्गुणग्रहणाभाव एवेति वाच्यम्। अपिशब्देन विरोधस्मरणात्। विरोधस्य च कार्यकारणभावविवक्षाया एव समुल्लासात्। अन्यथा कारणाभावेऽपि कार्यानुत्पत्तौ विरोधानुपपत्तिप्रसङ्गात् इति॥

अत्रोच्यते—कारणसत्त्वे कार्यानुपपत्तिसाम्येऽपि यत्राभावप्रतियोगितावच्छेदकस्य तद्धर्मावच्छिन्नकारणतावच्छेदकप्रतियोगिकार्यतावच्छेदकत्वं विवक्षितं तत्र विशेषोक्तिः। यत्र त्वभावप्रतियोगिनस्तन्निष्ठकारणतानिरूपितकार्यताशालित्वमात्रं तत्रातद्गुण इति विभागात्॥

इत्यतद्गुणः।

---

व्याघातं निरूपयति—

कार्यान्तरहेतुतयान्येनाभिमताद्विरुद्धकार्यं चेत्।
क्रियते परेण तस्माद्व्याघातोऽयं समाख्यातः॥ १॥

अभिमतकार्यनिरूपितकारणतावत्त्वेनान्यविवक्षितस्यार्थस्य यत्र तद्विरुद्धार्थनिष्ठकार्यतानिरूपितकारणताश्रयत्वं केनचित्प्रतिपाद्यते स व्याघातः। व्याहन्यते अन्याभिमतकार्यकारणभावोऽनेनेति व्युत्पत्तेः।

यथा—

'जितस्तवास्येन विधुः स्मरः श्रिया कृतप्रतिज्ञौ मम तौ वधे कुतः।
तवेति कृत्वा यदि तज्जितं मया न मोघसंकल्पचराः किलामराः॥'

अत्र भैम्या नलसंबन्धित्वबुद्धिः कामचन्द्रयोर्भैमीवधहेतुत्वेनाभिमता

भैम्यास्तु तस्या एव नलाप्राप्तिहेतुत्वं साधितम् इति व्याघातः। तदिच्छाविषयीभूतभैम्यनिष्टविरोधिभैमीष्टत्वस्वरूपो विरोधः ।

यथा वा—

'अदोषतामेव सतां विवृण्वते द्विषां मृषा दोषकणाधिरोपणाः ।
न जातु सत्ये सति दूषणे भवेदलीकमाधातुमवद्यमुद्यमः ॥'

अत्र दोषारोपस्य दोषवत्ताप्रतीतिं प्रति हेतुत्वमारोपकस्य विवक्षितम् । तस्यैव दोषत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वप्रतीतिहेतुत्वमुपन्यस्तम् । यत्किंचिद्दोषवत्ताप्रतीतिजननस्य सर्वदोषाभावधीहेतुत्वाच्चमत्कारः ॥ अत्रात्यन्ताभावस्य प्रतियोगिना समानदेशत्व एकसंबन्धावच्छिन्नासमानदेशत्वरूपो विरोधः ।

'कर्णोत्पलान्नयनमाप गतिच्युतस्ते
तस्मिन्निमीलति मुखं सखि यो द्विरेफः ।
तं येन वारयितुमद्य समुद्यतासि
तस्मिन्करेऽपि न किमम्बुजसाम्यदोषः ॥'

अत्र भ्रमरवारणहेतुत्वेनाभिमतस्य हस्तस्य तत्संबन्धहेतुत्वमुक्तम् । इच्छाविषयीभूताभावप्रतियोगित्वं विरोधः ।

'अम्भोधीनां तमालप्रभवकिसलयश्यामवेलावनाना-
मापारेभ्यश्चतुर्णां चटुलतिमिकुलक्षोभितान्तर्जलानाम् ।
मालेव म्लानपुष्पा तव नृपतिशतैरुह्यते या शिरोभिः
सा मय्येव स्खलन्ती कथयति विनयालंकृतिं ते प्रभुत्वम् ॥'

अत्र चाणक्ये चन्द्रगुप्तेनाशक्तिव्यञ्जकतया स्वाज्ञाभङ्गो दोषत्वेन प्रागुक्तः। स एवात्र चाणक्येन विनयव्यञ्जकतया गुणत्वेनोक्तः ॥

एतेन लेशो निरस्तः । एवं हि स परैरुक्तः—

'लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम् ।'
'अखिलेषु विहंगेषु हन्त स्वच्छन्दचारिषु ।
शुक पञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥'

अत्र चिरप्रोषितपुत्रदर्शनोत्सुकस्य पितुरप्रस्तुतप्रशंसारूपे वाक्ये शुक-

निष्ठवक्तृत्वगुणस्य स्वाच्छन्द्यविरोधित्वेन दोषत्वं तद्भिन्नपक्षिनिष्ठवक्तृत्वाभावदोषस्य च स्वाच्छन्द्यानुकूलत्वेन गुणत्वं कल्पितम्। न चात्र व्याजस्तुतिरिति वाच्यम्। शुकस्य निन्दाव्याजेन प्रशंसायां तदन्येषां स्तुतिव्याजेन निन्दायां वा प्रकृते तात्पर्यविरहस्य स्पष्टत्वात्। तत्राप्युपकारहेतुत्वेनाभिमताद्वक्तृत्वादुक्तस्वाच्छन्द्यप्रतिबन्धकरूपविरुद्धकार्यस्यानर्थहेतुत्वाभिमता कार्योत्पत्तिश्चाभिधानात् व्याघात एवान्तर्भावात्। एवमुदाहरणान्तरेऽपि योज्यम्।

अत्र वदन्ति—व्यतिरेक एवात्रालंकारः।

'दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः॥'

इति प्राचीनोदाहरणे जयिनीरित्यनेन तस्यैव प्रकाशनात्। न च व्याघातोऽप्यत्र व्यतिरेकोत्थापकत्वेन स्थित इति वाच्यम्। तथाप्यलंकारान्तरत्वसिद्धेः विविक्तविषयाभावादिति दिक्॥ तदसत्। सादृश्यविवक्षायामेव व्यतिरेक इत्यसकृद्व्यवस्थापितत्वात् अत्र च धर्मान्तरेणापि शिवनायिकयोः सादृश्यानभिमतेः स्पष्टत्वात्। न चैवमपि पूर्वोक्तेषु॥

इति व्याघातः।

---

एवं शुद्धालंकारा यथातथं निरूपिताः। यत्रैषां संवलितानां चमत्कारविशेषाधायकत्वं तत्राप्यलंकारत्वमनुभवानुरोधान्मन्तव्यम्। तत्र च द्वौ प्रकारौ—संसृष्टिः, संकरश्च। लोकेऽपि हि मणिहारस्वर्णालंकारादिनापि शोभा उभयघटितेनाङ्गदादिनापि तद्वदत्रापि।

तत्राद्यप्रकारमाह—

**संसृष्टिस्तु परस्परमनपेक्ष्यस्थितिरनेकस्य।**

अनेकपदेन द्वयोर्बहूनां चोपादानम्। संकरवारणाय अनपेक्ष्येति।

तत्र द्वयोर्यथा—

'गुम्फन्ती नयनोदबिन्दुनिवहैर्मुक्ताभिरामस्रजो
निश्वासग्लपिताऽरुणाधरतले निस्पन्दतामागता।

केलीमन्दिरदेहलीं मुखशशिज्योत्स्नाभिरालिम्पती
हस्तन्यस्तकपोलपाणि निभृतं कल्याणि कं ध्यायसि ॥'

अत्रोपमारूपकयोः ।

बहूनां यथा—

'एतैरेव यदा गजेन्द्रमलिनैराध्मातलम्बोदरै-
र्गर्जद्भिः सतडिद्बलाकशबलैर्मेघैः सशल्यं मनः ।
तत्किं प्रोषितभर्तृवध्यपटहो हा हा हताशो बकः
प्रावृट्प्रावृडिति ब्रवीति शठधीः क्षारं क्षते प्रक्षिपन् ॥'

अत्र गजेन्द्रमलिनेत्युपमा । यद्यपि तडिद्बलाकाभिः शबलेत्यत्र तृतीयासमासो न संभवति । बलाकापदे ह्रस्वत्वानुपपत्तेः, तथापि तडिद्बलाकाभिः सहिताः सतडिद्बलाका इति समासे उपसर्जनह्रस्वं कृत्वा 'सतडिद्बलाकाश्च ते शबलाश्च' इति कर्मधारयो वक्तव्यः । सतडिद्बलाकत्वविशेषणं हेतुगर्भम् । तद्गुणसंबन्धेन शाबल्यसिद्धेः । एवं चात्र तद्गुणः[1] । न च चित्ररूपमध्येऽत्र मेघगुणस्य श्यामत्वस्याप्यनुप्रवेशात्स्वगुणत्यागेनास्तीति वाच्यम् । चित्ररूपस्यातिरिक्तत्ववादिनां मते तस्य सुवचत्वात् । वध्यपटह इति रूपकम् । न च प्रोषितभर्तृ इत्यत्र बहुव्रीहित्वात् 'नद्यृतश्च' इति सूत्रेण नित्यस्य कपो दुर्वारत्वमिति वाच्यम् । पूर्वपदे कर्मधारयं कृत्वा तत्संबन्धिनीनां स्त्रीणां वध्यपटह इति मध्यमपदलोपिसमासाश्रयणेन कथंचित्समाधानात् । क्षारं क्षते प्रक्षिपन् इति निदर्शना । उद्विग्नेऽपि मनसि तदुद्वेगजनकव्यापाराः क्षते क्षारप्रक्षेप इत्युपमापर्यवसानात् । तस्मादत्रैषां निरपेक्षाणामेव सत्त्वात्संसृष्टिः ।

**एकमपेक्ष्यान्यस्य प्रादुर्भावे तु संकरः प्रोक्तः ।**

यत्रैकमलंकारमुपजीव्य अलंकारान्तरं स्वरूपमासादयति तत्राङ्गाङ्गिभावरूपः संकरः ।

१. 'तद्गुणालंकारः' ख.

सोऽपि द्वयोर्यथा—

'सिन्दूरद्युतिमु(र)क्तमूर्ध्नि निभृतस्कन्धावधिश्यामिके
व्योमान्तःस्पृशि सिन्धुरेऽस्य समरारम्भोद्धुरे धावति ।
जानीमो नु यदि प्रदोषतिमिरव्यामिश्रसंध्याधियै-
वास्तं यान्ति समस्तराजकभुजात्तेजःसहस्रांशवः ॥'

अत्र हस्तितिमिरसंवलितसंध्यात्वप्रकारकभ्रान्तिरभिमता । तत्र सिन्दूरजन्यमूर्धांशावच्छिन्नरक्तत्वविशेषणे तद्गुणालंकारमुपजीव्य भ्रान्तिमानुन्मिषति । अतस्तस्यानुग्राहकत्वं भ्रान्तिमतश्चानुग्राह्यत्वमिति संकरः । 'तेजःसहस्रांशवः—' इति रूपकं तु प्रसिद्धसाधर्म्यापेक्ष्यमेवेति न कस्यचिदनुग्राह्यत्वम् । यद्वा भ्रमस्यास्तां तद्धेतुत्वाभिधानभ्रान्तिमत्काव्यलिङ्गसंकरः ।

बहूनां यथा वा—

'जाने युष्मत्प्रयाणे क्षितितिलक रजोयोगदोषादशेषा
दिग्योषाः स्नान्ति सद्यस्त्वदरिनृपवधूनेत्रनीरापगासु ।
संगम्य त्वत्प्रतापैः सममुषसि दधौ दोहदं देवता सा
प्राची प्रातः प्रसूते यदियमुरुमहत्खण्डमार्तण्डबिम्बम् ॥'

अत्र रजोयोगेति श्लेषः, दिग्योषा इति रूपकम्, जाने इत्युत्प्रेक्षा, दिशां नेत्राम्बुसंयोगावर्तकस्ना(त्राम्बुसंयोगार्तवस्ना)नत्वप्रकारकसंभावनाविरह इत्यर्थात् । प्रतापे नायकव्यवहारारोपात्समासोक्तिः, दोहदवत्त्वहेतूक्त्या प्रातरित्यादिना वाक्यार्थहेतुकं काव्यलिङ्गम् । तत्र रूपकं श्लेषाङ्गम्, दिशां स्त्रीत्वारोपं विना रजोयोगेत्यत्रार्तवरूपद्वितीयार्थप्रतिपत्तिविरहात् । श्लेषेण च स्नानोत्प्रेक्षा निर्वहति, आर्तवबोधाभावे वारिसंबन्धे स्नानत्वप्रकारिकायाः संभावनाया अनुपपत्तेः । एवं दिशां स्त्रीत्वारोपः प्रतापस्य नायकव्यवहारविषयप्रतीतिरूपसमासोक्तिसमुत्थापकः, न हि नायिकासंगमकर्तृत्वभिन्नः प्रतापनायकयोः कश्चित्साधर्म्यविशेषः प्रसिद्धः । एवं काव्यलिङ्गमपि तदुत्थाप्यमेव दिशां स्त्रीत्वं विना गर्भजनकतायाः प्र-

१. 'प्रसिद्धं साधर्म्यमपेक्ष्यमेव' ख.

तिपादयितुमशक्यत्वात् । एवमन्येषामन्योन्यसापेक्षत्वादङ्गाङ्गिभावरूपः संकर इति दिक् ॥

संकरान्तरमाह—

**साधकबाधकमानाभावाच्चैकस्य निर्णयाभावे ।**

यत्र कस्यचिदलंकारस्य साधकम्, अन्यस्य च बाधकं नास्ति तत्रान्यतमनिर्णयाभावात्संकरः ।

यथा—

'दे[1]व्वाअत्तम्मि फले किं कीरउ एत्तिअं उण भणामो ।
किङ्केल्लिपल्लवाणं ण पल्लवा होन्ति सारिच्छा ॥'

अत्र प्रकृष्टगुणनायकप्रतीतिः प्रकृताशोकवृत्तान्तेनेति समासोक्तिः । किं वा अप्रस्तुताशोकवृत्तान्तेन प्रस्तुतपुरुषप्रतीत्या अप्रस्तुतप्रशंसेत्युभयसंभवात्संदेहः । प्रकरणादेर्निर्वाहकस्याभावात् । अत एव

'अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः ।
केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः ॥'

इत्यत्र मृदुकठिनवृत्तान्तस्य प्रस्तुतत्वेन समासोक्तिबाधात् । अप्रस्तुतप्रशंसानिर्णयान्न संदेहः ॥

अनेकालंकारः कोटिकसंशयो यथा—

'नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति ।
अधुनापि निरुद्धाशमपि जीर्णमिदं तमः ॥'

अत्र हि कामोद्दीपककालस्य भङ्ग्यन्तरेण प्रतिपादनात्किं पर्यायोक्तम्, किं वा इन्दुबिम्बेन मुखस्य निगीर्णत्वादतिशयोक्तिः, आहोस्वित् एतदिति मुखं निर्दिश्य तस्येन्दुबिम्बेन सहाभेदवर्णनाद्रूपकम् । यद्वा प्रदोषवर्णने चन्द्रबिम्बस्य प्रकृतत्वेन साम्यविशेषणसाम्यान्मुखप्रतीत्या समासोक्तिः, उत मुखवर्णने प्रकृते चन्द्रस्याप्रकृतस्यैव वर्णनादप्रस्तुतप्रशंसेति संदेहः ।

---

१. 'दैवायत्ते फले किं क्रियतामियत्पुनर्भणामः ।
कङ्केलिपल्लवानां न पल्लवा भवन्ति सदृशाः ॥' [गाथा० ३।७९]

यत्तु काव्यप्रकाशकृता एतदिति मुखनिर्देशे चन्द्रमुखयोः प्रकृतत्वे अप्रकृतत्व एव वा प्रसीदतीत्यस्योभयान्वयित्वे तुल्ययोगिता । एकस्य प्रकृतत्वे एकस्य चाप्रकृतत्वेऽपि दीपकं चेति अलंकारद्वयमपि संदेहविषयत्वेन लिखितम् ॥ तत्र यद्यपि समुच्चयो नावगम्यते चकारादेस्तद्बोधकस्याभावात् । तथापि 'गामश्वं पुरुषं पशुम्' इत्यादाविव अध्याहृतचकारेण समुच्चयप्रतीतिरिति तद्व्याख्यातारः । संदेहश्चात्र कवितात्पर्यविषयकोटिक इति चेत्, तन्न । अलंकारानभिज्ञकविकल्पितकाव्ये 'अत्र कवेस्तात्पर्यमत्र वा' इत्येव[मा]कारकसंदेहसंभवात् । तस्मात् 'इदमत्र चमत्कारप्रयोजकमिदं वा' इवेति संदेहः । स च सर्वत्र विशिष्ट एव । प्रथमपक्षे संशयानुपपत्तिः, कोटिद्वयविरोधावगाहन एव ज्ञानस्य संशयात् अत्र चालंकारान्तरेण सहान्यालंकारविरोधासिद्धिरेव यत्रोभयसत्त्वेऽपि उपपत्तेः । इति चेत् ।

उच्यते—तत्तदलंकारजन्यतावच्छेदकीभूतानां चमत्कारनिष्ठवैजात्यानां परस्परविरुद्धत्वेन तज्जनकतावच्छेदकावच्छिन्नानामपि विरोधप्रतीतिसंभवात् ॥ तथा च स्वजन्यतावच्छेदकावच्छिन्नचमत्कारभेदव्यक्तिजनकत्वे संसृष्टिः, चित्ररूपवद्वैजात्यान्तरावच्छिन्नचमत्कारजनकत्वे संकरः । अगृह्यमाणवैजात्यावच्छिन्नचमत्कारजनकत्वे संदेह इति निष्कर्षः ॥

यत्रैककोटिनिश्चायकलिङ्गसद्भावस्तत्र तु न संदेहः ।

यथा—

'आनन्दमन्थरपुरंदरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु ते विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥'

यथा वा—

'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम् ।'

अत्र पादाम्बुजमित्यत्र उपमितसमासे च उपमारूपकयोः संभवात्सं-

देहः । तत्र रूपकसत्त्वे उत्तरपदार्थस्याम्बुजस्य प्राधान्यप्रसङ्गेन तत्र च मञ्जीरादिविशेषणानामन्वयानुपपत्तिरूपबाधकसत्त्वादुपमैवेति निर्णयः ॥

'यस्यातिशब्दविषयं चरणारविन्द-
मुत्तंसयन्त्यमितभक्ति····वराननाः ॥'

इत्यादौ तूत्तंसनकार्यस्यारविन्दनिरूपितत्वमेवेति । एवं 'राजनारायणम्–' इत्यत्र उपमायां राजप्राधान्ये लक्ष्मीसमागमानौचित्यापातात् राज्ञि तदुपपादकनारायणतादात्म्यसिद्ध्यर्थं रूपकमेवेति ।

अत्र केचित्—ईदृशस्थले पूर्वोत्तरपदवाच्यतावच्छेदकानवच्छिन्नयोरेवाभेदान्वयः, न तूत्तरपदार्थस्य सादृश्ये लक्षणा उक्तव्यवस्थानुपपत्तेः । पादाम्बुजमित्यत्र रूपकस्वीकारेऽपि अम्बुजसदृशत्वेनैव प्रतीत्या पूर्वपदार्थप्राधान्यस्य संभवेन बाधकाभावात् । गुणजात्योर्जातिप्राधान्यस्य नीलोत्पलादौ व्यवस्थापितत्वात् । अस्मन्मते त्वम्बुजत्वादिनैव बोधान्नानुपपत्तिः । एवं 'राजनारायणम्–' इत्यत्र नारायणसदृशत्वेन बोधे राज्ञः प्राधान्याविशेषणरूपस्वीकारेऽप्यनुपपत्तितादवस्थ्यापत्तिरापाद्येति ।

अन्ये त्वाहुः—रूपके उपमानतावच्छेदकरूपेणैव तत्सदृशप्रत्ययस्वीकारान्नारायणत्वेनैव रूपेण बोधादुक्तानुपपत्तिविरहः । पादाम्बुजमित्यत्र रूपकस्वीकारे तु अम्बुजसदृशस्याम्बुजत्वेनैव प्रतीत्या तत्र मञ्जीराद्यसंभवात् रूपकबाधकत्वस्याप्युपपत्तेः । तत्पदलक्षणाज्ञानस्य वाच्यतावच्छेदकप्रकारकलक्ष्यविशेष्यकशाब्दबोध[क]त्वस्यैव कार्यतावच्छेदकत्वकल्पनादिति । एतद्विचारस्तु रूपकप्रकरण एव पल्लवित इति दिक् ॥

केचित्तु—एककोटिसाधकमात्रं भवति न त्वितरकोटिबाधकमपि । यथा—'सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नैव हासद्युतिः' इति । अत्र हि यद्यपि ज्योत्स्नायाश्चन्द्र एव सत्त्वे तदभावात् मुखवृत्तिहासद्युतिनिष्ठोपमेयतानिरूपितोपमानशालिज्योत्स्नाया मुखनिष्ठोपमेयतानिरूपितोपमानताशालिचन्द्रवृत्तितया तत्रैव साधारणधर्मत्वसंभवात् वक्त्रं शशीवेत्यु-

पमितसमासोऽयमिति उपमाया मानमस्ति । तथापि सौभाग्यपदस्य शोभार्थपरतायां निर्णीतायामेव तथा । यदि तु हास एव द्युतिरिति पदेन प्रभा लक्ष्यते, तदा तु वक्रमेव शशीति रूपकमपि संभवत्येव चन्द्रे प्रभायाः संभवादिति न रूपककोटिबाधकत्वं निश्चितम् । एवम् 'वक्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते' इत्यत्राप्यपरत्वस्य शीतांशुविशेषणत्वात् । अन्यघटादिपदे च भेदानुयोगिवृत्तिधर्मावच्छिन्नप्रतियोगिकभेदस्यैव भानात् । शीतांश्वन्तरेत्यस्यान्यशीतांशुसापेक्षतया वक्रमेवेति रूपकानुगुणत्वम् । तथापि इन्दुतुल्ये मुखे विद्यमानेऽन्येन मुख्येनेन्दुना किमिति कथंचिदर्थपर्यवसानान्नोपमाबाधकम् । अतो न कोटिव्यतिरेकिनिर्णयजनकमेव बाधकमिति बोध्यम् ॥

संकरान्तरमाह—

**एकपदाच्छब्दार्थालंकृत्योरवगतावन्यः ।**

यत्राखण्डपद एव शब्दार्थालंकारयोर्भेदेन स्फुटा प्रतिपत्तिः तत्रैकाश्रयानुप्रवेशलक्षणः संकरः । स च शब्दालंकारे शब्दस्यालंकार्यत्वरूपेण, अर्थालंकारे च स्वबोधवाचकरूपेणाश्रयत्वेनेत्युभयोः सामानाधिकरण्यादिति भावः ॥ यत्र पदभङ्गं कृत्वा भिन्नावच्छेदेनालंकारद्वयप्रतीतिस्तत्र संसृष्टिरेवेत्यत उक्तम्—एकपदादिति ।

यथा—

'स्पष्टोल्लसत्किरणकेसरसूर्यबिम्ब-
विस्तीर्णकर्णिकमथो दिवसारविन्दम् ।
श्लिष्टाष्टदिग्दलकपालमुखावतार-
बद्धान्धकारमधुपावलि संचुकोच ॥'

अत्र रूपकानुप्रासावेकपदानुप्रविष्टौ स्पष्टौ ।

प्राञ्चस्तु—अर्थालंकारयोरप्युक्तरूपसंकरमङ्गीकुर्वन्ति । वाचकानुप्रवेशेत्यत्र वाचकत्व[स्य] वाच्यनिरूपितत्वाद्वाच्ययोरेवानुप्रवेशः प्रतिभाति ।

उदाहरणं यथा—

'सत्पुष्करद्योतितरङ्गशोभिन्यभेदमारब्धमृदङ्गवाद्ये ।
उद्यानवापीपयसीव यस्यामेणीदृशो नाट्यगृहे रमन्ते ॥'

अत्राद्यविशेषणे शब्दमात्रसाम्यं श्लेषः । द्वितीयेऽर्थसाम्यमुपमा । तदुभयमप्येकस्मिन् इवपदेऽनुप्रविष्टम् । नाट्यगृहवापीपयसोरुपमायामिवशब्देन तयोः साधारणधर्मतया बोधनादिति ।

अत्र दीक्षिताः—नैतद्युक्तम् । सत्पुष्करेत्यत्र श्लेषसत्त्वेऽपि तद्बोध्यार्थद्वयस्य भेदेऽप्यभेदरूपातिशयोक्तिः महिम्ना ऐक्यविवक्षया तत्रापि धर्मसाम्यस्य प्रतिपादितत्वेन शब्दसाम्यस्य तत्रानभिमतत्वात् । अन्यथा 'अहो रागवती संध्या—' इत्यादौ विशेषणसाम्याभावेन श्लिष्टविशेषणकसमासोक्त्यनुपपत्तेः । अस्तु वा शब्दसाम्यमिव प्रतिपाद्यम्, तथाप्युपमावाचकत्वात्तस्य श्लेषवाचकत्वमनुपपन्नमेव । तस्माद्यत्रैकस्मिन्नेवार्थे प्रतिपाद्यमानेऽलंकारद्वयलक्षणसंभवादलंकारप्रतीतिस्तत्रैकानुवाचकप्रवेशरूपसंकरः ।

यथा—

'विधुकरपरिरम्भादात्मनिस्यन्दपूर्णैः
शशिदृषदुपक्लृप्तैरालवालैस्तरूणाम् ।
विफलितजलसेकप्रक्रियागौरवेण
व्यरचि स हृतचित्तस्तत्र भैमीवनेन ॥'

अत्र समृद्धिमद्वस्तुवर्णनादुदात्तम् । असंबन्धे संबन्धकल्पनाच्चातिशयोक्तिः । न चोदात्तस्य यथोक्तातिशयोक्तिव्याप्यत्वेन विविक्तविषयाभावात्कथमेतदिति वाच्यम् । दिव्यलोकसंपद्वर्णने उदात्तस्यातिशयोक्तिव्यभिचारेण, शौर्यदारिद्र्यादिवर्णने चातिशयोक्तेरुदात्तव्यभिचारेण, प्रकृते द्वयोः समावेशात् । न चानयोरङ्गाङ्गिभावः एकस्यान्यानुपजीवकत्वात् । नापि समप्राधान्यम्, उदात्तप्रतिपादकशक्तेरेवातिशयोक्तिप्रत्यायनात् । नापि संदेहः । एककोटेरपरकोटिप्रतिक्षेपकत्वाभावादित्याहुः ॥ तदसत् । स्वस्वजन्यतावच्छेदकीभूतवैजात्यावच्छिन्नचमत्कारनिष्ठकार्यताप्रतियोगिककारण-

तावच्छेदकधर्मवत्तया प्रकृतेऽप्येककोटेस्तदन्यकोटिविरोधित्वेन संदेहस्योपपत्तेः। एतद्विलक्षणायाः प्रतिक्षेपकताया अलंकारमात्रेऽपि दुर्वचत्वात्।

प्राचां त्वयमाशयः—उपमाप्रकरणे यादृशधर्मोक्तौ श्लेषेण अनुगामित्वेन च तदुक्तिव्यवहारसादृश्यमेव, भेदमाश्रित्य सत्पुष्करेत्युदाहरणम्, तदुपादानं चेवशब्देन संभवत्येव, तस्य साधारणधर्मवाचकताया अप्यङ्गीकारात्॥ एतेन शब्दसाम्यस्य इवशब्दप्रतिपाद्यत्वेऽपि तस्योपमावाचित्वस्यैव प्राप्त्या श्लेषवाचकत्वाभावादित्यपास्तम्। श्लेषत्वेन रूपेण तस्यैव शब्दवाच्यत्वाभावेऽपि श्लेषवाच्यार्थद्वयस्य साधारणधर्मत्वेन इवपदबोद्धव्यत्वावश्यकत्वात् तावतैव प्रकृतोदाहरणोपपत्तेरिति दिक्॥

---

अधुना प्रसङ्गेन रसालंकारान्निरूपयति—

**रसभावतदाभासे रसवत्प्रेयऊर्जस्वी।**
**शमे तु समाहितमुदयेऽन्योऽप्यस्य शबलत्वे॥ १॥**

रसो नाम लौकिकैर्नायिकादिभिः कारणैः कटाक्षादिभिश्च कार्यैरप्युपमानवतां सामाजिकानामात्मनि संस्कारवर्तमानरूपत्वेन काव्यादौ नायिकादीनां संबन्धिविशेषीयत्वाभावोभयाभासराहित्येन नायिकात्वादिप्रतीतिबलादुद्बोधितो विषयो वैचित्र्यविशेषेण चमत्कारकारीत्यादिरिति। तत्स्वरूपमन्यत्र स्पष्टम्।

स यत्र प्राधान्येनावतिष्ठते तत्र ध्वनिरेवेत्यपि।

तथा। यत्र तु रसोऽन्यस्मिन्नर्थेऽङ्गत्वं भजति तत्रान्योपकारकत्वाद्रसवदलंकारो भवति। भावस्य तथात्वे प्रेयोऽलंकारः। तच्छब्देन रसभावयोः परामर्शः। रसाभासभावाभासयोस्तथात्वे ऊर्जस्विनामालंकारः। आभासत्वं चानौचित्यप्रवृत्तत्वाद्बोध्यम्। भावशान्तेरन्याङ्गत्वे समाहितालंकारः। एवं भावोदयभावशबलत्वयोरलंकारत्वं विशेषसंज्ञानभिधानात्स्वसंज्ञयैव ज्ञेयम्॥

तत्र रसस्यान्याङ्गत्वे यथा—

'अत्रैः कल्पितमङ्गलप्रतिसराः स्त्रीरक्तरक्तोत्पलव्यक्तोत्तंसभृतः पिनह्य शिरसा हृत्पुण्डरीकस्रजः।

एताः शोणितपङ्ककुङ्कुमजुषः संभूय कान्तैः पिब-
न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥'

अत्र श्रृङ्गारो बीभत्सस्याङ्गं पूर्वरसापेक्षया गुणीभावः मुख्यरसापेक्षया ध्वनित्वमेव । एवमन्यत्रापि द्रष्टव्यम् ॥

'वक्त्राणि पञ्च कुचयोः प्रतिबिम्बितानि
दृष्ट्वा दशाननसमागमनभ्रमेण ।
भूयोऽपि शैलपरिवृत्तिभयेन गाढ-
मालिङ्गितो गिरिजया गिरिशः पुनातु ॥'

'गुञ्जामालामुरसि रुचिरैः कञ्चुकं भूर्जपत्रै-
र्बाले भाले कलय तिलकं धातुघाताद्द्रवेण ।
इत्थं वैरिक्षितिपवनिता वाजचन्द्रक्षितीन्द्रो-
र्वारं वारं शबरसदृशः सादरं शिक्षयन्ति ॥'

अत्र शबरीनिष्ठवैरिस्त्रीविषयकभावः कविनिष्ठराजविषयकभावः कविनिष्ठराजविषयकरतिरूपभावस्येति प्रेयोऽलंकारः ।

तृतीयो यथा मम—

'देव त्वत्परिपन्थिपार्थिमसमालोकैकसत्तात्मनां
कान्तारेषु पुलिन्दराजनिवहप्राणप्रियाणामपि ।
तेषामेव तथावरोधनवधूलावण्यमुत्पश्यतां
तेषां चापि परस्परं कथमहो जातानुरागक्षतिः ॥'

अत्र शबरीनिष्ठवैरिराजविषयकः शबरीनिष्ठवैरिस्त्रीविषयकश्च रसाभासः कविनिष्ठराजविषयकभावस्य ।

'माणिक्यमण्डनरुचिप्रसरत्प्ररोहै-
रुद्भावयन्त इव रागविशेषमन्तः ।
सामन्तभूमिपतयश्चरणारविन्दे
नीराजयन्ति तव राजकुलाधिराज ॥'

अत्र वैरिनिष्ठराजविषयकभावाभासः कविनिष्ठराजविषयकभावस्येति ऊर्जस्वी ।

[चतुर्थो यथा—]

'अस्मिन्नेव जने विधेयमधुना व्यावर्तितेच्छं मनो
दूत्यं वा शशिनः कुले कथमिति क्षिप्तो विमर्षो मया ।
इत्येवं बहुदोषमाधिगहनं यत्कार्यमङ्गीकृतं
तन्मा भून्नमुचिद्विषो मयि मुधैवाभ्यर्थनाविस्तरः ॥'

अत्र विमर्षभावशान्तिर्नलनिष्ठेन्द्रविषयकभावस्येति समाहितम् ।

[पञ्चमो] भावोदयो यथा मम—

'नेत्रारविन्ददलयोर्लसतारुणिम्ना
मध्येललाटतटमुत्कटया भ्रुकुट्या ।
बिम्बाधरेण किमपि स्फुरतारुणेषु
कोपो विभाति भवतोऽभ्युदयन्द्विषत्सु ॥'

अत्र क्रोधोदयो राजविषयकभावस्य ।

षष्ठो यथा ममैव—

'अप्यादेर्जगतां नवो लवणिमा सीदन्ति गात्राणि किं
रज्यन्ते न हि मानसानि विषये प्रत्यङ्क्षिरुद्धात्मनाम् ।
धिग्वृत्तिं मनसः स्पृहातरलितां लभ्येत वायं मया
प्रेयानित्यचलाधिराजतनयाचिन्ता चिरं पातु वः ॥'

अत्र भगवदालोकनेन भगवत्याः सर्वमङ्गलाया विस्मयश्रममतिनिर्वेदोत्कण्ठानां शबलत्वं कविनिष्ठगौरीविषयकभावाङ्गमिति सर्वं शिवम् ॥

---

१. 'दुहितुश्चिन्ता' क.

अन्यैरुदीरितमलंकरणान्तरं य-
त्काव्यप्रकाशकथितं तदनुप्रवेशात् ।
संक्षेपतो बहुनिबन्धविभावनेना-
लंकारजातमिह चारु मया न्यरूपि ॥

विश्वेश्वरेण मननाचलेन साहित्यसिन्धुतः कृष्टः ।
पुरुषोत्तमहृदयगतः स्फुरत्वलंकारकौस्तुभः सुचिरम् ॥

वैधेयैर्यदि किंचिदत्र रभसादुद्भाव्यते दूषणं
तेनाधातुरपारमार्थिकतया काचिन्न शक्या क्षतिः ।
विद्वद्भिः पुनरुच्यते यदि च तत्स्यात्तेन शोभा परा
संतापोऽपि विभावयत्यतिशयं कार्तस्वरस्यानले ॥

इति श्रीलक्ष्मीधरसूनुविश्वेश्वरपण्डितकृतोऽलंकारकौस्तुभः संपूर्णः ।



## परिशिष्टम् १।

# अलंकारकौस्तुभमूलकारिकाः।

यद्यपि मूलकारिका ग्रन्थे स्फुटा एव, तथाप्यस्मद्दोषादक्षरयोजकदोषाद्वा कुत्रचिदशुद्धिः स्थिता जाता वा. तदुद्धाराय मूलकारिकाणामनायासलभाय च पृथग्मुद्रिताः.

विषयः। कारिकाः। पृष्ठे।

अलंकारोद्देशः— ३

[1]उपमानन्वय उक्तः स्यादुपमेयोपमोत्प्रेक्षा।
संदेहरूपकापह्नुतयः श्लेषः समासोक्तिः ॥ १ ॥
प्रोक्ता निदर्शनाप्रस्तुतप्रशंसा त्वतिशयोक्तिः।
प्रतिवस्तूपमया सह दृष्टान्तो दीपतुल्ययोगित्वे ॥ २ ॥
व्यतिरेकश्चाक्षेपो विभावनाप्यथ विशेषोक्तिः।
तदनु यथासंख्यार्थान्तरविन्यासौ विरोधभावोक्ती ॥ ३ ॥
व्याजस्तुतिः सहोक्तिर्विनोक्तिपरिवृत्तिभाविकान्यपि च।
अथ काव्यलिङ्गपर्यायोक्तोदात्ताः समुच्चयस्तद्वत् ॥ ४ ॥
पर्यायोऽप्यनुमानं परिकरकितवोक्तिपरिसंख्याः।
कारणमालान्योन्योत्तरसूक्ष्मं सार इत्यसंगत्या ॥ ५ ॥
ससमाधी समविषमावधिकाख्यं प्रत्यनीकमीलितवत्।
एकावलिस्मृतिभ्रमप्रतीपसामान्यवान्विशेषश्च ॥ ६ ॥
तदतद्गुणवान्स्याद्व्याघातः सृष्टिसंकरौ चेति।
कथ्यन्त एकषष्टिर्विद्वत्प्रवरैरलंकाराः ॥ ७ ॥

उपमानिरूपणम्— ४

तत्रैकवाक्यवाच्यं सादृश्यं भिन्नयोरुपमा।
वाचकधर्मसमत्वप्रतियोग्यनुयोगिनां ग्रहे पूर्णा ॥ ८ ॥
श्रौत्यार्थी सा द्विविधा [2]वाक्ये वृत्तौ च तद्धिते तद्वत्।
स्यादिवयथादियोगे [3]वैताविवार्थे च सा श्रौती ॥ ९ ॥

---

१. अलंकारोद्देशकारिका इमाः सप्तालंकारमुक्तावल्यां नोपलभ्यन्ते. २. 'वृत्तौ वाक्ये त्व' इत्यलंकारमुक्तावल्यां पाठः. ३. 'वतौ तदर्थेऽपि' मुक्ता०.

| विषयः । | कारिकाः । | पृष्ठे । |
|---|---|---|
| | स्याज्जन्यजनकपौर्वापर्यत्यागश्च सा त्वतिशयोक्तिः । | |
| प्रतिवस्तूपमा— | | २८५ |
| | सादृश्यपर्यवसिते यस्मिन्वाक्यद्वये धर्मः ॥ ३० ॥ | |
| | एकोऽपि द्विरुपात्तस्तां प्रतिवस्तूपमामाहुः । | |
| दृष्टान्तः— | | २८८ |
| | साधारणस्य साम्यप्रतियोग्यनुयोगिनोर्यत्र ॥ ३१ ॥ | |
| | निर्देशः स्याद्बिम्बप्रतिबिम्बतया स दृष्टान्तः । | |
| दीपकम्— | | २९० |
| | प्रकृताप्रकृतानां यद्येकान्वयितास्ति दीपकं तत्स्यात् ॥ ३२ ॥ | |
| | यत्रैकमेव कारकमन्वयमेति क्रियासु बह्वीषु । | |
| | माला तु पूर्वपूर्वे विध्यन्तरेणोत्तरान्वयिनि ॥ ३३ ॥ | |
| तुल्ययोगिता— | | २९५ |
| | प्रकृतानां तादृक्त्वे भिन्नानां वापि तुल्ययोगित्वे । | |
| व्यतिरेकः— | | २९७ |
| | उभयोः साम्यप्रोक्तौ विशेष उपमेयगो व्यतीरेकः ॥ ३४ ॥ | |
| | हानिप्रकर्षहेत्वोरुक्तौ त्रेधा च तदनुक्तौ । | |
| | शब्दार्थाक्षेपोत्थे साम्ये श्लेषे च दिग्युगमितः[1] सः ॥ ३५ ॥ | |
| आक्षेपः— | | ३०७ |
| | इष्टस्याप्यभिधातुं योऽर्थस्य विशेषबोधाय । | |
| | स्वयमेव प्रतिषेधः स वक्ष्यमाणोक्तविषय आक्षेपः ॥ ३६ ॥ | |
| विभावना— | | ३११ |
| | हेतुं विनापि कार्यं यत्रोक्तं स्याद्विभावना सा तु । | |
| विशेषोक्तिः— | | ३१५ |
| | हेतौ सत्यपि कार्यानुत्पत्तिः स्याद्विशेषोक्तिः ॥ ३७ ॥ | |

1. 'चतुर्विंशतिसंख्यः' इति व्याख्यानुरोधेन 'दृग्युगमितः' इति पाठो भवेत्. स पाठो गणितशास्त्रसंकेतानभिज्ञत्वं सूचयति. दिक्शब्दस्य द्वित्ववाचकत्वाभावाद्दशसमानोऽर्थकत्वाच्च. दृक्शब्दस्य द्विशब्दपर्यायत्वेऽपि 'अङ्कानां वामतो गतिः' इति गणकसमयेन द्विचत्वारिंशत्संख्याबोधकत्वापत्तिः.

| विषयः । | कारिकाः । | पृष्ठे । |
|---|---|---|
| यथासंख्यम्— | | ३१७ |
| | निर्देशक्रमतो यदि समन्वयस्तद्यथासंख्यम् । | |
| अर्थान्तरन्यासः— | | ३१८ |
| | यदि सामान्यविशेषौ समर्थयेते विशेषसामान्ये ॥ ३८ ॥ | |
| | साधर्म्याद्वैधर्म्यादपि वा सोऽर्थान्तरन्यासः । | |
| विरोधः— | | ३२१ |
| | अविरोधेऽपि विरोधो यत्रोक्तः स्याद्विरोधः सः ॥ ३९ ॥ | |
| | स्याज्जातेर्गुणकर्मद्रव्याणां स्वस्वपरयोगात् । | |
| स्वभावोक्तिः— | | ३२६ |
| | यो वस्तुनः स्वभावस्तस्य निरुक्तिः स्वभावोक्तिः ॥ ४० ॥ | |
| व्याजस्तुतिः— | | ३२७ |
| | व्याजस्तुतिर्विपर्ययपर्यवसानेऽस्तुतिस्तुत्योः । | |
| सहोक्तिः— | | ३३० |
| | सह समभिव्याहारात्सहोक्तिरुभयान्विते धर्मे ॥ ४१ ॥ | |
| विनोक्तिः— | | ३३१ |
| | यत्रान्येन विनान्योऽसाधुः सन्वा विनोक्तिः सा । | |
| परिवृत्तिः— | | ३३३ |
| | सदृशासदृशैरर्थैरर्थानां विनिमयस्तु परिवृत्तिः ॥ ४२ ॥ | |
| भाविकम्— | | ३३५ |
| | भाविकमध्यक्षं स्यात्सध्वंसप्रागभावानाम् । | |
| काव्यलिङ्गम्— | | ३३७ |
| | वाक्यपदार्थत्वाभ्यां हेतूक्तिः काव्यलिङ्गं स्यात् ॥ ४३ ॥ | |
| पर्यायोक्तम्— | | ३४१ |
| | पर्यायोक्तं कथितं वाच्यस्यैवान्यभङ्ग्योक्तिः । | |
| उदात्तम्— | | ३४५ |
| | वस्तुप्रचय उदात्तं महतामङ्गत्ववचनं वा ॥ ४४ ॥ | |
| समुच्चयः— | | ३४७ |
| | एकस्मिन्सति हेतौ हेत्वन्तरगीः समुच्चयः कथितः । | |
| | सदसत्सदसद्योगे गुणक्रियायौगपद्येऽन्यः ॥ ४५ ॥ | |

विषयः । कारिकाः । पृष्ठे ।

पर्यायः— ३४९

एकमनेकमनेकैकस्मिन्क्रमतोऽस्ति चेत्स पर्यायः ।

अनुमानम्— ३५२

अनुमानं व्याप्यबलाद्व्यापकधीर्धर्मिनिष्ठा स्यात् ॥ ४६ ॥

परिकरः— ३५४

साभिप्रायविशेषणविन्यासे परिकरः प्रोक्तः ।

व्याजोक्तिः— ३५७

व्याजोक्तिर्विशदीभवदर्थस्यापह्नुतिर्मिषतः ॥ ४७ ॥

परिसंख्या— ३५८

पृष्टमपृष्टं चोक्तं यद्व्यङ्ग्यं वापि वाच्यं वा ।
फलतीतरव्यपोहं परिसंख्या सा तु संख्याता ॥ ४८ ॥

कारणमाला— ३६०

कारणमाला पूर्वे पूर्वे कार्ये यथोत्तरं हेतौ ।

अन्योन्यम्— ३६०

अन्योन्यं वस्तूनां परस्परोत्कर्षहेतुत्वे ॥ ४९ ॥

उत्तरम्— ३६२

उत्तरमात्रात्प्रश्नोन्नयने स्यादुत्तरं नाम ।
प्रश्ने लोकाविदितोत्तरस्य तच्चासकृत्प्रोक्तौ ॥ ५० ॥

सूक्ष्मम्— ३६४

प्रतिभातिशयाज्ज्ञातो यद्याकारेङ्गितादर्थः ।
विशदीक्रियतेऽन्यस्मै तथैव तत्सूक्ष्ममित्युक्तम् ॥ ५१ ॥

सारः— ३६५

सारस्तु पूर्वपूर्वादुत्कर्षिण्युत्तरोत्तरे प्रोक्ते ।

असंगतिः— ३६

हेतुव्यधिकरणं स्यात्कार्यं चेत्सा त्वसंगतिः प्रोक्ता ॥ ५२ ॥

समाधिः— ३६

भवति समाधिः सुकरे हेत्वन्तरसमवधानतः कार्ये ।

समम्— ३७

अन्योन्यसंगमाद्यौ संबध्येते समं तत्स्यात् ॥ ५३ ॥

| विषयः । | कारिकाः । | पृष्ठे । |
|---|---|---|
| विषमः— | | ३७३ |
| | संबन्धानुपपत्ताविष्टार्थानाप्त्यनिष्टसंप्राप्तौ ।<br>जन्यजनकोभयगुणक्रियाविरोधे च विषमः स्यात् ॥ ९४ ॥ | |
| अधिकम्— | | ३७९ |
| | आधारस्याधेयादाधेयस्यापि वाधारात् ।<br>यदि वर्ण्यते महत्त्वं तत्कथयन्त्यधिकमधिकज्ञाः ॥ ९५ ॥ | |
| प्रत्यनीकम्— | | ३८० |
| | आत्मापकारजनकप्रत्यपकारासमर्थेन ।<br>तत्संबन्ध्यपकारे प्राज्ञतमैः प्रत्यनीकमित्युक्तम् ॥ ९६ ॥ | |
| मीलितम्— | | ३८३ |
| | सहजनिमित्तजधर्मोत्सदृशादन्येन वस्तुना वस्तु ।<br>अपिधीयते यदेतन्मीलितमाहुर्विशेषज्ञाः ॥ ९७ ॥ | |
| एकावली— | | ३८४ |
| | प्रथमं विशेषणं यद्विशेष्यमग्रे भवत्यसकृत् ।<br>विरहप्रतियोगी वा तद्वानेकावली सोक्ता ॥ ९८ ॥ | |
| स्मरणम्— | | ३८६ |
| | सदृशज्ञानोद्बोधितसंस्कारभवा मतिः स्मरणम् । | |
| भ्रान्तिमान्— | | ३८७ |
| | तदभाववति मतिस्तत्प्रकारिका भ्रान्तिमान्भवति ॥ ९९ ॥ | |
| प्रतीपम्— | | ३९० |
| | उपमानानर्थक्यं प्रतीपमस्योपमेयत्वम् । | |
| सामान्यम्— | | ३९३ |
| | स्वगुणसजातीयगुणाश्रयैकरूप्यं तु सामान्यम् ॥ ६० ॥ | |
| विशेषः— | | ३९९ |
| | स्थितिराधाराभावे वृत्तिरनेकेषु युगपदेकस्य ।<br>एककरणेन दुष्करकार्यान्तरसिद्धिरिति विशेषः ॥ ६१ ॥ | |

१. 'चेत्' मुक्ता०. २ 'लिः प्रोक्ता' मुक्ता०.

| विषयः । | कारिकाः । | पृष्ठे । |
|---|---|---|
| तद्गुणः— | परकीयगुणतिरोहितगुणस्य भानं तु तद्गुणः प्रोक्तः । | ४०२ |
| अतद्गुणः— | अन्यगुणासंबन्धे प्रकृतस्यातद्गुणः प्रोक्तः ॥ ६२ ॥ | ४०५ |
| व्याघातः— | कार्यान्तरहेतुतयान्येनाभिमताद्विरुद्धकार्यं चेत् । क्रियते परेण तस्माद्व्याघातोऽयं समाख्यातः ॥ ६३ ॥ | ४०६ |
| संसृष्टिः— | संसृष्टिस्तु परस्परमनपेक्ष्यस्थितिरनेकस्य । | ४०८ |
| अङ्गाङ्गिभावरूपसंकरः— | एकमपेक्ष्यान्यस्य प्रादुर्भावे तु संकरः प्रोक्तः ॥ ६४ ॥ | ४०९ |
| संदेहरूपसंकरः— | साधकबाधकमानाभावाच्चैकस्य निर्णयाभावे । | ४११ |
| एकाश्रयानुप्रवेशसंकरः— | एकपदाच्छब्दार्थालंकृत्योरवगतावन्यः ॥ ६५ ॥ | ४१४ |
| रसालंकाराः— | रसभावतदाभासे रसवत्प्रेय ऊर्जस्वी । भावशमे तु समाहितमुदयेऽन्योऽप्यस्य शबलत्वे ॥ ६६ ॥ | ४१६ |


---

आसु स्वकीयकारिकासु अनुद्दिष्टानां परैरङ्गीकृतानामलंकाराणां खण्डनायान्तर्भावाय वा स्वकीयग्रन्थे व्याख्यातानां नामानि निम्नलिखितानि ज्ञेयानि—


| | | | | | |
|---|---|---|---|---|---|
| अनुगुणम् ... ... | ४०४ | परिणामः ... ... | १६० | लेशः ... ... | ४०७ |
| अल्पम् ... ... | ३८० | पूर्वरूपता ... ... | ४०४ | विकस्वरः ... ... | ३२० |
| असंभवः ... ... | ३७४ | प्रस्तुताङ्कुरः ... | २७५ | विचित्रम् ... ... | ३७४ |
| आनुकूल्यम् ... | ३४५ | प्रहर्षणम् ... ... | ३७० | वितर्कः ... ... | २०० |
| उन्मीलितम् ... | ३९४ | प्रौढोक्तिः ... ... | २८४ | विशेषः ... ... | ३९४ |
| उल्लेखः ... ... | २८२ | मिथ्याध्यवसितिः | २८३ | विषादः ... ... | ३७७ |
| निमीलितम् ... | ३९८ | युक्तिः ... ... | ३५८ | संभावनम् ... ... | २८३ |
| निश्चयः ... ... | २३९ | ललितम् ... ... | २६६ | हेतुः ... ... | २९१ |
| परिकराङ्कुरः ... | ३५५ | | | | |

# परिशिष्टम् २ ।

# अलंकारकौस्तुभस्थोदाहरणानामकारादिक्रमेणानुक्रमणिका ।




अकुङ्कुममचन्दणं दह ३१३
अखिलेषु विहंगेषु ४०७
अग्घाइ छिवइ १०८, २९२
अग्निर्न ये भ्राजसो १५१
अङ्काधिरोपितमृग ४११
अङ्के विदर्भेन्द्रपुरस्य ३७९
अचला इव विद्वांसो १७७
अच्छीइ ता थइस्सं ३८
अजस्रमारोहति दूर ३६७
अज्ज व्वेअ पउत्थो ३४९
अज्जाइ णीलकञ्चुअ ३६
अण्णं लडहत्तणअं २७८
अण्णाणँ वि होन्ति मुहे २९८
अण्णेसु पहिअ पुच्छ ३६२
अतितरले रमणीये ३०१
अतितारुण्यविकासा १४४
अतिथिं नाम काकु० १५७
अतिनिविडस्य हताखि ३००
अतिसुकुमारः सौरभ ३९
अत्युक्तौ यदि न प्रकु ३४६
अत्युन्नतेन कठिनस्पर्श ३०५
अदोषतामेव सतां वि ४०७
अधर इवोक्तिर्मधुरा १४४
अधरदला स्तनगुच्छ ३०१
अनन्तरत्नप्रभवस्य १३, ३२०
अनल्पं जल्पन्तु प्रति ३९३
अनवरतकनकवित १३
अनायि देशः कतम २६७
अनुभवन्नवदोलमृदु १५३
अनुरागवती संध्या २४५
अनेन रहिता नैषा ३३२
अन्त्रैः कल्पितमङ्गल ४१६
अन्यासु तावदुपमर्द २७५
अन्येनानभिभूतं तारा ३०४
अपह्नुतः खेदभरः ३८३
अपाङ्गतरले दृशौ म ३९८
अपाणिपादो जवनो ३१५
अपारिजातां वसुधां ३६८
अपि तापोत्कर्षकृता ३०२
अपि लोकयुगं दृशा २४४
अप्यादेर्जगतां नवो ४१८
अभिहन्ति हन्त कथ १५६
अभेदेनोपास्ते कुमुद ३१९
अमअमअ गअणसेहर ३५४
अमअमअं विअ हिअ ३७९
अमुष्य धीरस्य जयाय १९६
अम्बाहरा विदूरे कामं २४३
अम्भोधीनां तमाल ४०७
अयं क इत्यन्यनि १३३
अयं दुग्धाम्भोधेः पति ३७५
अयमतिजरठा प्रका २४९
अयमुल्लङ्घितकर्णं ३०३
अयमैन्द्रीमुखं पश्य २५३, २५५
अरण्यानी क्वेयं धृत ३७५
अरविन्दतुन्दिलाङ्गी ३०४
अर्थं सप्रतिबन्धं प्रभु ३१९
अलक्षितगतागतैः १४३
अलससिरमणी धुत्ता २५९
अवहत्थिऊण साहि ३५१
अविन्दुसुन्दरी नित्यं २४८
असंभृतं मण्डनमङ्ग ३१३
असारे संसारे विषम १६३
असावुदयमारूढः २४९
असिमात्रसहायोऽपि २०
अस्ताचलेऽस्मिन्निकषो ३३३
अस्थानगामिभि ४२
अस्थिमालामयीं ३३३
अस्मद्गोत्रमहत्तरः ४००
अस्मिन्नेव जने विधे ४१८
अस्य क्षोणिपतेः परा २८३
अस्यां मुनीनामपि १९४
अस्याः करस्पर्धन ३९१
अस्याः स चारुर्मधु २८१
अस्याः सर्गविधौ १९९, २८२
अस्यारिप्रकरः शरश्च ३०६
अहं रथाङ्गनामेव १४६
अह गनिअ णिसा ३९
अहमेव गुरुः सुदा १५
अहर्निशा वेतिरताय ३६५
अह सरसदन्तमण्डल १३९
अहीनचन्द्रा लसता १६३
आकर्णय सरोजाक्षि २३
आकृष्टिर्हृदयस्य वि २८१
आघूर्णितं पक्ष्यलमक्षि १६८
आज्ञया च पितुरत २४१
आत्मनोऽस्य तपोदानै २२८
आत्मीयप्रचलाकमाश्रि ३९३
आदत्त दीप्तं मणि ३३३

आदाय चरणकिसलय ३३३
आदाय चापमचलं २४५
आनन्दमन्थरपुरंदर ४१२
आयाता मधुयामिनी ३४७
आरब्धं प्रथमं न किं २८१
आरब्धे दयितामुख ३९२
आलप्य तां विशाला १४४
आलोक्य चन्द्रमस १०७
आवर्ता इव मण्डली १४६
आविर्भवन्ती प्रथमं १०२
आसीदञ्जनमत्रेति ३३६
आस्ते दामोदरीयामिय ३७९
इअ णिअमिअसुग्गीवो ४०
इतराण्यपि रक्षांसि १५
इतरेतरशोभायै ३६१
इति विज्ञापितो राज्ञा १५२
इतीदृशैर्नैषधसूनृता १०१
इन्दुर्लिप्त इवाञ्जनेन २८७
इन्द्राणीमाघ्रु नारीषु ११३
इन्द्रियेभ्यः परा ह्यर्था ३६६
इन्द्रोपेन्द्रौ मिथस्तौ न २७२
इयं विद्युद्वल्ली किमु न १९८
इह नमय शिरः कलि २००
उअ णिच्चलणिप्पन्दा ३५
उक्खअदुमं व सेलं २८
उग्रग्राहमुदन्वतो ३२८
उच्चित्य प्रथममधः ३७१
उत्कण्टकाविलसद् ३७
उत्कलिकाकुलितास्ता ३०७
उत्क्षिप्तं सह कौशिक ३३०
उत्सारयद्वलकमलानि ४१२
उदञ्चद्वक्षोजामतिगुर ४०१
उद्गर्भहूणरमणीरमणो २१
उद्गाढदुर्दिनविसंष्ठुल १४५
उद्दामोत्कलिकां विपा ४२
उद्दीपितकुसुमशरा ३०२
उद्दच्छो पिअइ जलं ३६१
उद्वन्तमुदिताचिषं २९
उद्यन्मृगाङ्करुचिकन्दल ३५६
उद्यानमारुतोद्धूतचूत ३१२
उद्बृंहितमकरध्वज ३०५
उन्नतं पदमवाप्य यो २६४
उन्नतिमानतिकठिनः १०३
उन्निद्राब्जपरिष्कृत २४२
उन्मीलद्गुडपाकतन्तु २७९
उन्मेषं यो मम न सह ३८२
उपाददे तस्य सहस्र १३
उभौ यदि व्योम्नि १२
उल्लसितकुसुमहस्ता १७७
उल्लास्य कालकरवाल २५२
एकेनापाति लत्ता तव ३८१
एतस्मिन्नधिकपयः २५०
एतैरेव यदा गजेन्द्र ४०९
ओसहिअजणो पइणा ३८७
कण्ठस्य तस्याः स्तन ३६१
कथं विधातर्मयि पाणि ३७८
कथं सर्वगुणैर्हीना गुण ३७४
कन्दर्पद्विपकर्णकम्बु २३०
कन्या तस्य वधाय या ३७५
कपोले पत्राली करतल २६१
कम्मइ महिन्दसेलो ३२४
कर्णलम्बितकदम्ब २८०
कर्णारुंतुदमन्तरेण ३२०
कर्णेनेव विषाङ्गनै १४६
कर्णोत्पलान्नयनमाप ३८९, ४०७
कर्मण्यणावप्यनणौ २६२
कलयति कमलोपमान ३९३
कलयति च हिमांशो ३९०
कवीनां संतापो भ्रमण २४६
कस्त्वं भोः कथयामि २६७
कस्त्वं वानर रामराज ३२८
कहँ सा सोहग्गगुणं ३५०
कामेन भालनयनोपरि ३८१
कामो विमुञ्चति शरा २९३
कालिन्दि ब्रूहि कुम्भो २७४
काश्मर्याः कृतमाल ३२७
किं केतकीकुसुम कौ ३२७
किं क्रूरं स्त्रीहृदयं किं ३६३
किं तावत्सरसि सरोज १९७
किं पद्मस्य रुचिं न ३०८
किं शेषस्य भरव्यथा २८८
कियत्पचन्नोदनमान ३६५
किसलअकरचरणा ३२२
कीर्तिप्रतापौ भातस्ते ३१८
कुटिलगता सरसीरुह ४४
कुर्यात्कुत्र निजेष्टसा ३५९
कुर्वन्नाभुग्नकण्ठो मुख ३२७
कुसुमानि शराश्चन्द्रो ३२६
केनोत्तुङ्गशिखाकलाप २६२
केलीमन्दिरमागतस्य ३७०
केसेसु बलामोडिअ २३६
कैशोरे वयसि क्रमेण २३४
कोमलोल [illegible] ४६
कोशद्वन्द्वमियं दधाति २५६

क्रीडानटस्य प्रलयान्ध ३९६
क्व रुजा हृदयप्रमाथि ३७३
क्व शुक्तयः क्व मुक्ता ३७४
क्व सूर्यप्रभवो वंशः { २३२, २६७
क्वापि क्षीरनिधिच्छला २३७
क्षीणः क्षीणोऽपि शशी २९७
क्षीरोदवेलेव सफेन १५२
क्षौमवस्त्रो न लक्ष्यन्ते ३९७
खण्डक्षोदमृदि स्थले २७९
खला विनैवापराधं दह ३१४
खुडिउप्पडिअमुणालं ४०
खुहिअजलसिट्ठसारो ३३५
गच्छ गच्छसि चेत्का० ३१०
गजत्रातेति वृद्धाभिः { २८२, ३८९
गण्डं चुम्बति पाण्डिमा २६०
गते तव भ्रातरि वत्स ३२
गतेषु सैन्येषु सुशर्मे २४१
गन्तुं यदि व्यवसितासि ३९४
गमिआ कडम्बवाआ ३१६
गम्मिहिस्सि तस्स पा ३९७
गरयति वलयादीनि २४३
गर्वसंभाव्यमिमं लोचन २३
गाढाश्लेषविकीर्णचन्द. ४०३
गात्रेषु गन्धफलिका ३८३
गीर्भिर्गुणां परुषाक्ष २८६
गुञ्जामालामुरसि रुचि ४१७
गुणयुक्तेन श्रुतिपथ ३०२
गुणैरनर्घ्यैः प्रथितो १५७
गुणौ पयोधेर्निजकारण ३७३
गुम्फन्तीनयनो[illegible] ३०८

गेहं व वित्तरहिअं १४१
गोत्रे साक्षादजनि भग ३९२
ग्रथ्नामि काव्यशशिनं १५१
ग्रीवाभङ्गाभिरामं मुहु ३२७
घनप्रसवसंकुला ४१
घनसारसारविशदां ४५
घनविशदारुणकरया ३८
घरिणीअ महाणसक २६३
घर्मागमापगमकाल ११९
चकास्ति वदनस्यान्तः १५२
चकोरकाणामिव १४९
चक्राभिघातप्रसभा ३४२
चतुर्णां पुरुषार्थानां दा० ३५६
चत्तरघरिणी पिअदं ३४८
चन्दसरिसं मुहं से ११५
चन्दुज्जाए ण मए ३६१
चन्द्रबिम्बादिव विषं ११
चन्द्रवत्संप्रकाशन्ते १४३
चन्द्रश्चण्डकरायते ११९
चन्द्रारविन्दयोः कक्षा १९
चाञ्चल्ययोगि नयनं २५१
चाण्डालश्च दरिद्रश्च १५५
चाण्डालैरिव युष्माभिः १४९
चातकस्त्रिचतुरः पयः ३७०
चित्ते विहुट्टदि ण खु ४००
चित्रं तपति राजेन्द्र ३१२
चिन्तारत्नमिव च्युता १५१
चिरं जीवतु ते सूनु १५८
चिराद्विषहसे तापं १६४
चौरस्य [illegible] १९४

छज्जइ पहुस्स ललि २९१
जं तुज्झ सई जाआ १३५
जं घोअञ्जणसोण ३५२
जगत्त्रयत्राणधृतव्रत २९८
जटा नेयं वेणी कृत २४०
जनस्थाने भ्रान्तं कनक २९७
जम्बीरश्रियमतिलङ्घ्य ३६५
जम्मन्तरे वि चलणं ३३४
जलइ वडवाणलो १४२
जलणणिवहम्मि सलि २९४
जलदोदरादुदीता १०२
जलावलम्बाम्बुद १४३
जातस्ते निशि जाग ३६६
जाने युष्मत्प्रयाणे ४१०
जितमिह भुवने त्वया ११८
जितस्तवास्येन विधुः ४०६
जैमिनीयमलं धत्ते २५१
जो तीए अहरराहो ३४९
ज्योत्स्नायान्ते तव १४९
ज्योत्स्नेव नयनानन्दः १९
ढुण्ढोलन्तो मरिहिसि १३४
णइसाउ त्ति भुजंगं ३८८
णज्जइ विहीसण तुमं ४०५
णिद्दं लहन्ति कहिअं २६९
णिन्दइ मिअङ्ककिर २९१
तं जगत्यभजन्मर्त्य २२६
तं तस्य स्वरसंक्रमं ३३५
तं से गुणम्मि जाअं २६९

तत्तद्दोहदवद्धसौहृद २७१
तत्तद्व्याप्टृतिमग्नमानस ३७७
तदोजसस्तद्यशसः ३९१
तद्दर्शनोपायविमर्शना ३७१
तद्वल्गुना युगपद्ध १८
तद्वेषोऽसदृशोऽन्या १५७
तपोनिधे कौशिक रा ३१०
तरलयति मानसं ४४
तरलयसि दृशं किमु २५८
तव कोपोऽरिनाशश्च ३३१
तव कोपोऽरिनाशश्च ३३१
तव प्रसादात्कुसुमा ३५७
तव रूपमिदं तया विना ३३२
तवाननाभो वरगात्रि ३९२
तस्याः सान्द्रविलेपन २६९
तापत्रयौषधवरस्य २७३
तापिच्छनीलचिकुरां ३०४
तारामुक्ताहारा समु ४३
तिरस्कृतो रोषवशा ३७०
तीअ मुहाहिं तुह मुअं ३४९
तुज्झ मुहसारिच्छं ण ३९१
तुल्यन्ते शशिना १४३
तो चिरविओअतणु २७८
तो हरिवइज सपन्थो २८०
त्रपन्ते तीर्थानि त्वरित ३३८
त्वं जीवितं त्वमसि मे ३०८
त्वं विनिर्जितमनोभव ३८३
त्वंव्यापारितवान्प्रिया ३७६
त्वत्खड्गखण्डितसपत्न ३६९
त्वत्तो जन्म सुधांशु २८४
त्वत्पादनखरत्नानि २२९, २३३
त्वत्पादनखरत्नानां २२८
त्वत्प्रत्यर्थिकनरनायक २३८
त्वत्साक्षात्करणक्षणप्र ३०८
त्वदाननमधीराक्ष २०
त्वदालेख्ये कौतूहल २३८
त्वद्विप्रयोगदहन १३२
त्वन्नयनमुत्पलमिव १७६
त्वन्नेत्रयुगलं धत्ते २२९
त्वमिव कोऽपि पराप ११३
त्वयि कोपो महीपाल २२८
त्वयि दृष्ट एव तस्या २६५
त्वयि वीर परं विरा २८५
त्वय्यागते किमिति २५४
त्वां कृत्वा परतो १७२
दंष्ट्रान्तराल विषयत्व ३८१
दन्तिबुद्ध्या हतः शूरै ३९०
दम्पत्योर्निशि जल्पतो ३५८
दरस्फुरितकोमलाधर ४५
दशना मौक्तिकविशदा २४४
दशवदननिधनकारी ३४३
दानेन पाणिर्न तु क ३६०
दारिद्र्याद्ध्रियमेति ह्री ३६०
दिअहे दिअहे सूसइ ३३०
दिट्ठीअ जं ण दिट्ठो ३७७
दिव्यहरेर्मुखकुहरे १५६
दिव्यानामपि कृतविस्म ३८६
दीर्घा चन्दनमालिका ३५९
दीसइ विद्दुमअम्बं ११७
दूरे किज्जदु चम्पअस्स ३९१
दृशा दग्धं मनसिजं ४०८
दृशौ नीलाम्भोजे २२१
देवं वन्दे जलधिशर ३४३
देवः प्रतिविंद्रुषि नैव २४१
देवः स वाङ्मनसगोच ३२४
देव त्वत्परिपन्थिपा ४१७
देव त्वमेव पाताल २४६
देवस्यास्य त्रिभुवन २७२
देवी वाचमुपासते हि २९०
देव्वाअत्तम्मि फले ४११
दैवात्पश्येर्जगति २१६
दोःसंदोहवशंवदत्रि ३७४
दोलाखेलनमातनोति ३६६
दोषोद्भावनतः क्व या ३५९
द्युतीनां संदोहैर्बहु १०२
द्यौरत्र क्वचिदाश्रिता ३८०
द्वारं द्वारमटन्भिक्षुः १३
धन्यासि या कथयसि १६६
धीरेण णिसाआमा ३३०
धूलिमइलो वि पङ्क २७२
धृतैव या हाटकपट्ट २१८
ध्माता भालतलानलैः ४०५
ध्वान्तं विनाशयन्त्या २९९
न कठोरं न वा तीक्ष्णं ३१२
न खलु न खलु बाणः ३७३
न तज्जलं यन्न सुचारु ४८४
न नित्यमस्मिन्परि १२
नन्दकुलकालभुजगीं २१७
न पद्मं मुखमेवेदं १९
न पञ्चेषुः स्मरस्तस्य २३५
नमस्तस्मै कृतो येन ३४२
नमो राहुशिरश्छेद ३४४, ३४५
नयनानन्ददायीन्दो ४११
नरसिंह महीपाल ३१, ४७, १६३, ३५५

नलिन्या इव तन्वङ्ग्या १४९
नलेन भायाः शशिना ३६१
नवाङ्गनेवाङ्गनेऽपि १५३
न विषं विषमित्याहु २३८
न सा सभा यत्र न ३८५
नागच्छन्नुपहूयते न २९२
नाभ्यासो नभसि २७१
नारीणामनुरञ्जनानु २३७
नार्थः स यो न स्वहितं ३८५
नाल्पः कविरिव स्वल्प २४५
नाहूतापि पुरः पदं ३९
निःश्वासाः प्रथमं ववुः २७९
निःश्वासा मलयानिला १४७
निकामं क्षामाङ्गी सरस ३२४
निजदोषावृतमनसा २६४
निजांशुनिर्दग्धमदङ्ग ३७७
नितान्तपारिप्लवतार ४०
निद्रामन्दपरीताक्ष्यो १५०
निरीक्ष्य विद्युन्नयनैः २५४
निरुपादानसंभारमभि ३१५
निर्मुक्तशेषधवलैर १५४
निर्यान्ति तीक्ष्णमकर २९३
निर्लक्ष्मीकाभवत्रा २५६, २६०
निविष्टायाः कोपाद्गुरु १५४
निवेद्यन्तां हन्त समा ३४१
निशयेव विना सरो ३३२
निशामुखं चुम्बति च २५६
नीलोत्पलानि दधते ४०४
नीवीबन्धोच्छ्वसन ३४५
नृणां यं सेवमानानां २३३
नेत्रारविन्ददलयो ४१८
नेत्रैरिवोत्पलैः पद्मै १४८
नेदं कूजितमस्ति का २३६

नेयं मेघघटा परंतु २३६
न्यक्कृतसरोजशोभं ३०३
न्यस्ता न भ्रुकुटिर्न ३०९
पउज्जुरआणो गामो २९५
पङ्कोद्भवत्वपरिवादभ ३७६
पटालग्ने पत्यौ नम २९२
पढमाणिआहि सुइरं ३५१
पद्माकरप्रविष्टानां ३९५, ३९७
परं जोण्हा उण्डा गरल ३२२
परभृततरुणीनां सम्य ३९२
परस्पराक्षिसादृश्य १०५
परिहृतमयशः पातित ४००
पश्य नीलोत्पलद्वन्द्वा २६७
पश्यामि लोचने तस्याः १५५
पाअपडिअस्स पइणो ३६९
पाउसलच्छीपओहरे २१८
पाण्ड्योऽयमंसार्पित १४
पातालमिव नाभिस्ते १५०
पान्थ मन्दमते किं वा १६४
पीणपओहरलग्गं २१५
पुत्रं लभस्वात्मगुणा १५८
पुराणि यस्यां सवराङ्ग ३८४
पुसिआ कण्णाहरणेन्द ३८८
पूर्वं हिरण्यकशिपुं ३०७
पृथुकार्तस्वरपात्रं २४४
प्रचिताः कर्मारम्भा ३८४
प्रतिकूलतामुपगते २४२
प्रतिलवविवर्धमान त्व ३२४
प्रत्यग्रमज्जनविशेष १५८
प्रत्यग्रमेघवदियं १०३
प्रत्यग्रो नवपुण्डरीक [illegible]

प्रत्यूषकालरजनीकर १०७
प्रथमं चुम्बितचरणा ३५२
प्रथमश्रितकञ्जकोर ३६५
प्रदीपज्वालाभिर्दिवस २३२
प्रागेकत्र निषेवितः ३५०
प्राचीं वासकसज्जिका ३५०
प्राणानामनिलेन वृत्ति ३०६
प्राणेश्वरो गुरुजनेन ३२३
प्रियमेधवदत्रिव १०३
फणीन्द्रस्ते गुणान्वक्तुं ३५६
फलसंपत्तीअ समोण २९१
बन्धोन्मुक्त्यै खलु ३७४
बाणन्ति वारिधाराः १३३
बालेन्दुवक्राणि विका १९३
बुधजनकथा तथ्यैवेयं ३७८
ब्रह्माण्डं यातयामं ३४६
भङ्गाकीर्तिमषीमली २९६
भद्रात्मनो दुरधिरोह २४९
भयानकत्वादसि ३३८
भिण्णघडन्तावत्तो आ ३८४
भुवि भ्रमित्वानवलम्ब २१८
भूधरीयति पयोधर ११९
भूभृद्भवाङ्कभुविराज ३०३
भूमीनाथ सहावदीन १७४
भूशक्रस्य यशांसि ४०४
भृङ्गाङ्गने सखि मयापि ३०४
भैरभ्रे भासते चन्द्रो २८६
भ्रमाम्बुशिशिरीभव ३१४
भ्रूश्चित्रलेखा च वि ४०१
[illegible]लोर्मिका तेऽद्य ३८०

मध्ये निजस्खलनदोष ३५६
मन्दमभ्रिमधुरर्यमो २४९
मन्दाकिनीत्वमिह २२१
मन्दाकिन्यां वलक्षोद्दल ३८८
मम रूपकीर्तिमहरद्भुवि ३८३
मम्मह्घणुणिग्घोसा २१६
मरुद्गृहीतामलमालतीकः ४४
मलय इव भाति पाण्डु ३५
मलयजरसविलिप्त ३९६
मल्लानामशनिर्नृणां २८२
मल्लिकाधारवाहिन्यः ३९६
महर्षेर्व्यासशिष्यस्य १६१
मा गच्छेः कुसुमानि ३५८
माणंसिणीअ पइणा ४०३
माणदुमपरुसपवण २२१
माणिक्यमण्डनरुचि ४१७
मातेव रक्षति पितेव १४२
माद्यद्वेतण्डगण्डच्च्युत २७९
मानभारमवलम्ब्य २४३
मानमस्या निराकर्तुं ३७०
मा भवन्तमनलः पव० ३१७
मामि हिअअं व पीअं ४०३
मा यानमव्ययसमा २६१
मा याहीत्यपमङ्गलं ३०९
मालतीमुकुलकोमल ४१
मा संभावय मां १३३
मित्रं वीर तिरस्करोषि ३२७
मित्रस्यावह पक्षपात २७०
मुक्तसलिला जलहरा २९१
मुक्तं मुक्तागौरमिह १५४
मुखममृतद्युतिकल्पं १०८
मुखेन निष्कलङ्केन २०
मुदितजनमनस्कास्तु ३००
मुद्धत्तणं पढमसाहस २४७
मुहलघणविपइण्णं ४२
मृगमदपङ्कश्यामे १४७
मृणालमन्दानिलचन्द ३३२
मृधे निदाघघर्मांशु १३०
मोहं जगत्त्रयभुवा ३६९
मोहयति पिहित ४५
मौनं मयूरीषु नदीषु ३५०
म्लायन्मौलिरुचः ३४६
यं पश्यन्दीपदर्शे ११८
यं प्रासूत सहस्रपादु ३७८
यं प्रेक्ष्य चिररूढापि ३४२
यः कल्पित कुचतटे ३७६
यंः कौमारहरः स एव ३३६
यः प्रेर्यमाणोऽपि हृदा ३४५
यत्तुलनामधिरोहसि ११६
यत्पीयूषमयूखमालिनि ३९२
यत्प्रत्युत त्वन्मृदुबाहु ३८६
यत्रैता लहरी चलाचल ३५३
यथा प्रह्लादनाच्चन्द्रः १४, २४७
यदवधिविलासभवनं ३१४
यदा तु सौम्यता सेयं २३१
यदिन्दावानन्दं प्रण ३२३
यदि सन्ति गुणाः पुंसां २८६
यद्भक्तानां सुखमयः १३४
यद्वक्त्रं मुहुरीक्षसे न ३२८
यन्नेत्रस्य समानकान्ति ३३९
यन्मौलिरत्नमुदितासि १९३
यस्य रणान्तःपुरे करे २५३
यस्य व्यधायि जनकेन ३८०
यस्याकर्णनमात्रतोऽपि ३२१
यस्यातिशब्दविषयं ४१३
यस्मिन्क्षणे चकित २८०
यान्त्या मुहुर्वलित ३०, ४६
युधि निसर्गनिरर्गल १७७
युष्मच्छासनलङ्घना ३०९
येन ध्वस्तमनोभवेन २४७
येनानन्दमये वसन्त २७१
यो नन्दमौर्यनृपयोः ३०१
यौवनविजृम्भणेन ३४८
रक्तभावमपहाय चन्द्र ३१९
रक्तस्त्वं नवपल्लवैरह २९८
रक्षांसीति पुरापि ११२
रजोभिः स्यन्दनो १९, १७६, १७७
रण्णाउ तणं रण्णाउ २६९
रभसादभिसर्तुमुद्यता ३२२
रम्या इति प्राप्तवती २४९
रसजनकेन तिरस्कृत ३०५
रसभरसार्द्रावयवः ४४
रसिअ विअड्ढ विला २७०
रसो नालक्षि लाक्षाया ३९५
राजनारायणं लक्ष्मी ४१२
राज्ञः प्रियाय सुहृदे ३७३
राज्यं निर्जितशत्रु ३४८
राहुग्रासपराभवं न ३०६
राहुस्त्रीकुचनैष्फल्य ३४४, ३४५
रूअं अच्छीसु ठिअं २९५, ३९९
रूपं राजति केवला २६१
रुषारुणा सर्वगुणै १८२
लङ्कापुरादतितरां १३१
लतामूले लीनो हरिण २७७
लद्धासाएण चिरं १०८
लावण्येन भवत्कले २९४
लिम्पतीव तमोऽङ्गा १८३, १९४

लुब्धकधीवरपिशुना ३१४
लेखेव या चान्द्रमसी १४७
लोकं पश्यति यस्याङ्घ्रिः ३४३
लोकविलक्षणगुणगण ३००
लोकस्रजि द्यौर्दिवि ३६५
लोभाद्वराटकानां वि ३७१
लोलैर्लोचनवारिभिः ३१०
वक्त्राणि पद्म कुचयोः ४१७
वज्जभअं धरणिहरा ३८७
वडजक्खो जो मह ३५१
वणदवमसिमइलग्गो ४१
वदनमिदं न सरोजं २३९
वदनेनेन्दुना तन्वी { १६१, १६२
वनान्तः खेलन्ती शश ३७५
वर्षासु जाता नव ३६७
वर्षोदकमुद्गिरता १४७
वलमाणम्मि महुमहे ३४६
ववसाअरइ पओसो २२१
वहइव महिअल १८२
वह्निस्फुलिङ्ग इव १५०
वाएरिएण भरिअं ३३४
वागर्थाविव संपृक्तौ २९
वाणीकण्ठाभरण भव० ३८८
वांहि व्व वेज्जरहिओ १४२
विअसिअतमालणीलं ३८
विक्किणइ माहमासम्मि ३३४
विचरद्धाहसमूह १७७
विजितारविन्दकान्तेः ३००
विजृम्भमाणोन्नतकोरक ४३
विद्वन्मानसराजहंस २१९
विधुक[illegible]
विनिद्रपुष्पालिगतालि २३६
विनिन्द्यान्युन्मत्तैरपि ३३८
विपुलं नितम्बबिम्बे २७८
विभाति वदनं तस्या २६
विभिन्नवर्णा गरुडाग्र ४०४
विमलं वदनं तस्या ३६
वियोगे गौडनारीणां २३२
विरहे विसं व विसमा ३५१
विरोधिवर्णाभरणाश्म ४०६
विशन्तु वृष्णयः शीघ्रं १५०
विशदीकृताखिलभुवः ३०२
वृथा चरसि किं भृङ्ग २१
वेत्रत्वचा तुल्यरुचां व ३९४
वेलातिगस्त्रैणगुणाब्धि २८९
वैवस्वतो मनुर्नाम ३९
वैशद्यं भावयतो निखि २९९
व्यतिषजति पदार्था २८९
व्यास्थं नैकतया स्थितं ३३७
शतकोटिकठिनचित्तः ४७
शब्दायन्ते मधुरमनि २९३
शरकाण्डपाण्डुगण्ड ३७
शरच्चन्द्रस्फीता नियत ३१९
शरज्ज्योत्स्नाकान्तं कु ३७२
शरीरं क्षामं स्यादसति ३११
शर्वपर्वतमाश्लिष्ट ३६
शिञ्जानैर्मञ्जरीति स्तन ३८९
शुद्धान्तदुर्लभमिदं १५४
शृङ्गाणि द्रुतकनको २९५
शैत्यं नाम गुणस्तवैव २७३
श्यामात्मकं प्रकामं ३००
श्येनबर्हिणमांसानां १४२
श्रिय इव ममास्यापो १४६
श्रीमत्सेरनृपप्रताप ३१८
श्रीवाजचन्द्रवसुधेश्वर ४००
श्वश्रूः क्रुध्यतु विद्धि ३५७
सअलकरण परबीसा ११०
संकेतकुञ्जगमनं प्रति ३८९
संखोहिअकमलसरो ३९
संझाराउत्थइओ ३६
संनद्धे भगदत्तशङ्ख २४२
संन्यासमकृत काञ्ची ३६७
संप्रकाशितबलाहक ४०
संवाहणसुहरसतो ३६४
स कर्षन्महतीं सेनां २०
सकलकलं पुरमेत { १४, २४५
सकललोचनमानस २९९
सक्तवो भक्षिता देव १५१
स ग्राम्यः स विदग्ध ३६४
सच्चं जाणइ दट्ठुं ३०८
सज्जितकज्जलरेखो ३४९
सत्पक्षप्रसरः सतां १५५
सत्पुष्करद्योतितरङ्ग ४१५
सत्यं सन्ति गृहे गृहे १४५
सत्येव जगति बहवो १७२
सद्योमुण्डितमत्तहूण २२
स धर्मराजः खलु ध ३७२
सन्ति श्वान इवा १४५
स पण्डितो यः स्वहिता ३८५
स पुनः पार्थसंचारं १३०
सभा नलश्रीयमकै ३७
सममेणमदैर्यदापणे ३९४
समीरणोदञ्चितकिंचि ४४
स मुनिर्लाञ्छितो ११०
स ययौ प्रथमं प्राचीं १

